भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः

# श्रीमन्महाभारतलक्षालङ्कारः

## द्वितीयो भागः






महाभारतसंशोधनप्रतिष्ठानम्

Bhāvisamīra Śrī Vādirājapūjyacaraṇaviracitaḥ

# Mahābhāratalakṣālankāraḥ

(A critical edition of a rare commentary on the Mahābhārata)

## Volume -2

## (Udyogaparvan to Rājadharmaparvan in Śāntiparvan)

The publication of this book was made possible by generous grants given by the Ministry of Human Resources Department, Government of India under the Scheme of Development of Sanskrit Language

Mahābhārata Samśodhana Pratiṣṭānam

(Mahābhārata Research Foundation)

Bangalore - INDIA

**Mahābhāratalakṣālankāraḥ** is a commentary by Śrī Vādirājatirtha (1480-1600 CE) on The Mahābhārata of Bhagavān Śrī Vedavyasa. This critical edition has been prepared using 300 year old manuscripts from the Śrī Sode Vādirāja Matha, Udupi.

Printed in INDIA
2005-06

**Published by:**
**Mahābhārata Samśodhana Pratiṣṭānam**
(Mahābhārata Research Foundation)
#1/E, 3rd Cross, Girinagar,
Bangalore - INDIA.

www.mahabharata.org



Rs. 1800/-
(One Set of 3 Volumes)






International distributors Motilal Banarsidass Publications New Delhi.

Typeset by K. Subbanna

Coverpage and box design by K.M. Sheshagiri, Chandranathacharya

Printed by Aditya printers

भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः महाभारतलक्षालङ्कारः

श्रीमद्वेदव्यासविरचितश्रीमन्महाभारतस्य अपूर्वं व्याख्यानम् । ग्रन्थोऽयं उडुपि श्रीसोदा वादिराजमठे उपलब्धानां त्रिशतसंवत्सरेभ्योऽपि प्राचीनानां मातृकाणां साहाय्येन संशोध्य प्रकाशितः ।

भारतदेशे मुद्रितम्

प्रकाशकः

महाभारतसंशोधनप्रतिष्ठानम्

गिरिनगरम् , बेङ्गलूरु, भारतम्

# विषयानुक्रमणिका



----

# Contents

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः
श्रीमध्वेशहयवदनाय नमः
श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः
भाविसमीरश्रीवादिराजगुरुभ्यो नमः

# ।। अथ उद्योगपर्व ।।

## ।। अथ प्रथमोऽध्यायः ।।

यत्तु स्वयं पाण्डुसुतैर्विजित्य समाहृतं [१] भूमिषु तान् प्रमथ्य ।
तत्प्रार्थयन्ते पुरुषप्रवीराः कुन्तीसुता माद्रवतीसुतौ च ।।१७।।

भूमिषु तान् प्रमथ्य इत्यत्र तान् तत्तद्भूमिपतीन् ।

[२] बलाभिगुप्तैरविषह्यपीडैः सम्प्रार्थिता हन्तुममित्रसङ्घैः ।
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः सर्वं च तद्वो विदितं यथावत् ।।१८।।

बलाभिगुप्तैरविषह्यपीडैः इत्यत्र अविषह्या पीडा येभ्यस्तैः ।

तैर्विप्रकारं च निशम्य कार्ये सुहृज्जनास्तान्परिवारयेयुः ।
युद्धेन बाधेयुरिमांस्तथैवं तैर्बाध्यमाना युधि तांश्च हन्युः ।।२१।।

सुहृज्जनास्तान् परिवारयेयुः इत्यत्र तान् दुर्योधनादीन् परिवारयेयुः पार्थैर्वैरं माऽस्त्विति परितः निवारयेयुः ।

।। इति प्रथमोऽध्यायः ।।

---

१. 'भूमिपतीन् प्रपीड्य' इति कुं पाठः ।
२. 'बलाभियुक्तैर्विविधैरुपायैः' इति कुं पाठः ।

## ।। अथ द्वितीयोऽध्यायः ।।

**अर्धं हि राज्यस्य विसृज्य वीराः कुन्तीसुतास्तस्य कृते यतन्ते ।**
**प्रदाय चार्धं धृतराष्ट्रपुत्रः सुखी सहास्माभिरतीव मोदेत् ।।२।।**

**तस्य कृते यतन्त** इत्यत्र **तस्य** अर्धराज्यस्य ।

**[१]सर्वास्ववस्थासु च तेन कोपात् ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः**
**प्रियाभ्युपेतस्य युधिष्ठिरस्य द्यूते प्रसक्तस्य हृतं च राज्यम् ।।८।।**

**तेन कोपाद् ग्रस्तो हि** इत्यत्र **तेन** राज्यापहारेण ।

**हित्वा हि कर्णं च सुयोधनं च समाह्वयद्देवितुमाजमीढः ।**
**दुरोदरास्तत्र सहस्रशोऽन्ये युधिष्ठिरो यान्विषहेत जेतुम् ।।१०।।**

**दुरोदरास्तत्र सहस्रश** इत्यत्र **दुरोदराः** दुरोदरवन्तः द्यूतज्ञा इत्यर्थः ।

**उत्सृज्य तान्सौबलमेव चायं समाह्वयत्तेन जितोऽक्षवत्याम् ।**
**स दीव्यमानः प्रतिदेवनेन अक्षेषु नित्यं स्वपराङ्मुखेषु ।।११।।**

**स दीव्यमान** इत्यत्र **सः** धर्मराजः एनं शकुनिम् ।

।। इति द्वितीयोऽध्यायः ।।

## ।। अथ तृतीयोऽध्यायः ।।

**नाभ्यसूयामि ते वाक्यं [२]तेषु वै दारुणध्वज ।**
**ये तु श्रुण्वन्ति ते वाक्यं तानसूयामि माधव ।। ४ ।।**

---

१. $T_1$,$G_{(G3missing)}$ M; BORI पृ. ९; **'ते न कोप्या'** इति कुं पाठः ।
२. **'ब्रुवतो लाङ्गलध्वज'** इति कुं पाठः ।

**तेषु वै दारुणध्वज** इत्यत्र तेषु दुर्योधनादिषु । तालवृक्षस्य क्रूरत्वात् दारुणध्वजेत्युक्तम् ।

**यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह ।**
**अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत्** ॥ ७ ॥

**अभिगम्य जयेयुस्त** इत्यत्र ते वृष्णयः ।

**कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ।**
**निवृत्तवनवासांस्तान् ये [१] आहुर्विजिता इति** ॥ ११ ॥

**य आहुर्विजिता** इत्यत्र ये दुर्योधनादयः **विजिताः** त्रयोदश-वर्षापूर्तेः पुनरपि विजिता इत्याहुः ।

**गदप्रद्युम्नसाम्बांश्च कालसूर्यानलोपमान् ।**
**ते वयं धृतराष्ट्रस्य [२] पुत्रान् मत्वा ससौबलान्** ॥ २० ॥

**म(र्त्वा)त्वा** मर्दयित्वा ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**अमितौजसे तथोग्राय हार्दिक्यायान्धकाय च ।**
**दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो** ॥ १२ ॥

**उग्राय** उग्रसेनाय ।

॥ इति चतुर्थोऽध्यायः ॥

---

१. 'आहुर्विदिता' इति कुं पाठः ।
२. 'पुत्रं शकुनिना सह' इति कुं पाठः ।

## ॥ अथ पञ्चमोऽध्यायः ॥

**ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः ।**
**निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि ॥ ११ ॥**

**निष्ठामापत्स्यते मूढ** इत्यत्र 'निष्ठा निष्पत्तिनाशान्ता'[१] इत्यभिधानात् **निष्ठां** नाशम् ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

**भवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन् वचः ।**
**मनांसि तस्य योधानां[२] ध्रुवमार्जवयिष्यति ॥ ८ ॥**

**ध्रुवमार्जवायिष्यति** इत्यत्र **आर्जवयिष्यति** दुर्योधनेऽवक्रं करिष्यति ।

**अमात्येषु च भिन्नेषु योधेषु विमुखेषु च ।**
**[३]पुनरेकाग्र्यकरणं तेषां कर्म भविष्यति ॥ १० ॥**

**पुनरैकाग्र्यकरणम्** इत्यत्र एकाग्रस्य भावः **ऐकाग्र्यं** चित्तसमाधान तस्य करणं यस्मिन् ।

**एतत्प्रयोजनं चात्र [४]प्राप्यान्येनोपलभ्यते ।**
**सङ्गत्या धृतराष्ट्रश्च कुर्याद्धर्म्यं वचस्तव ॥१३॥**

---

१. अ.को. ३-३-४१
२. **'ध्रुवमावर्तयिष्यति'** इति कुं पाठः ।
३. $T_1$,$M_1$; BORI पृ. १९; **'पुनरेकत्र करणम्'** इति कुं पाठः ।
४. **'प्राधान्येनोपलभ्यते'** इति कुं पाठः ।

**प्राप्यान्येन** इत्यत्र **अन्येन** सन्धिकार्येण प्राप्य **एतत्प्रयोजनं** सेनाकर्माकरणम् **उपलभ्यते** प्राप्यते ।

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**ततः किरीटी तस्यानु प्रविवेश महामनाः ।**
**[1]पश्चार्धेन स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः ॥ ९ ॥**

**पश्चार्धेन स कृष्णस्य** इत्यत्र **पश्चार्धेन** पश्चात् पूर्वार्धाङ्गादधस्तात् यदङ्गार्धं तेन पादसमीपेनेत्यर्थः ।

**अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन ।**
**[2]पूर्वं चाभिगता सन्तो भजन्ते पूर्वसारिणः ॥ १४ ॥**

**पूर्वं चाभिगताः सन्त** इत्यत्र पूर्वं केनचिदभिगताः **सन्तः** सज्जनाः **पूर्वसारिणः** पूर्वागतानुसारिणः ।

**प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः ।**
**तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः ॥ १८ ॥**

**प्रवारणं च बालानाम्** इत्यत्र 'वृञ् वरणे' इति धातोः प्रकर्षेण वरणमङ्गीकारः **प्रवारणम्** ।

**मत्संहननतुल्यानां गोपानामर्बुदं महत् ।**
**नारायणा इति ख्याताः सर्वे सङ्ग्रामयोधिनः ॥१९॥**

---

१. $D_9$,$G_{4.5}$,M; BORI पृ. २०; **'पश्चार्धे तु'** इति कुं पाठः ।

२. $K_5$,$DS_2$,$S_{(except\ T2,G2,G3\ missing)}$; BORI पृ. २१; **'पूर्वं चाभिगतम्'** इति कुं पाठः ।

**गोपानामर्बुदं महत्** इत्यत्र सहस्राणि सहस्राणीति वक्ष्यमाणत्वात् अर्बुदं दशलक्षम् ।

**भवांश्च[1] कीर्तिमाँल्लोके तद्यशस्त्वां गमिष्यति ।**
**यशसां चाहमप्यर्थी तस्मादसि मया वृतः ॥ ३८ ॥**

**भवांश्च कीर्तिमाँल्लोक** इत्यत्र **कीर्तिमान्** नियतकीर्तिमान् । त्वं यत्र तिष्ठसि[2] तत्कीर्तिरिव भवतीति भावः ।

**सारथ्यं तु त्वया कार्यमिति मे मानसं सदा ।**
**चिररात्रेप्सितं कामं तद्भवान् कर्तुमर्हति ॥ ३९ ॥**

**चिररात्रेप्सितं कामम्** इत्यत्र चिररात्राय ईप्सितं **चिररात्रेप्सितम्** । 'चिराय चिररात्राय चिरस्याद्या'[3] इत्यमरः ।

**उपपन्नमिदं पार्थ यत्स्पर्धेथा[4] मया सह ।**
**सारथ्यं ते करिष्यामि कामः सम्पद्यतां तव ॥ ४० ॥**

**यत् स्पर्धेथा मया सह** इत्यत्र त्वमपि रिपुसंहरणे समर्थः, अहमपीत्याकारेण स्पर्धेथाः ।

॥ इति सप्तमोऽध्यायः ॥

* * *

---

१. $D_{2.8.9}$; BORI पृ. २३; **'भवांस्तु'** इति कुं पाठः ।
२. **'तत्तत्'** सो.मु.पा.
३. **अ.को. ३-४-१**
४. BORI पृ.२३; **'यत्स्पर्धसि'** इति कुं पाठः ।

## ।। अथ अष्टमोऽध्यायः ।।

**अज्ञातवासं घोरं च वसता दुष्करं कृतम् ।**
**दुःखमेव [१] कृतं सौख्यं राज्यभ्रष्टस्य भारत ।। ३९ ।।**

**दुःखमेव कृतं सौख्यम्** इत्यत्र वनवासादिषु **कृतं** समये समये उत्पन्नं दुःखं सौख्यमेव च परं केवलं सुखमेव कृतम् । दुःखस्य सुखरूपत्वं प्रारब्धदुष्कर्मक्षयरूपत्वादिति ज्ञेयम् ।

**धर्मास्ते विदिता राजन् बहवो लोकसाक्षिकाः ।**
**सर्वं जगदिदं तात [२] व्यथितं ते परन्तप ।। ४२ ।।**

**व्यथितं ते परन्तप** इत्यत्र ते तव राज्यभ्रंशनिमित्तेन ।

**तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः ।**
**अकर्तव्यमपि ह्येतत्कर्तुमर्हसि मातुल ।। ५० ।।**

**सौतेरस्मज्जयावह** इत्यत्र सूतस्यापत्यं पुमान् **सौतिः** कर्णः ।

**यथा स हतदर्पश्च हततेजाश्च पाण्डव ।**
**भविष्यामि सुखं हन्तुं सत्यमेतद् ब्रवीमि ते ।। ५४ ।।**
**[३] अहं तथा करिष्यामि यथा तात त्वमात्थ माम् ।**
**यच्चान्यदपि शक्ष्यामि तत्करिष्यामि ते प्रियम् ।। ५५ ।।**

**अहं तथा करिष्यामि** इत्यत्र **सः** कर्णः रणमूर्धनि **हतदर्पः** गततेजाः

---

१. M; BORI पृ. २७; **'कृतः'** इति कुं. पाठः ।
२. $S_{1(except\ G2)}$; BORI पृ. २८; **'विदितं'** इति कुं पाठः ।
३. **'एवमेतत्'** इति कुं पाठः ।

सन् **सुखं** सुखेन **हन्तुम्** अर्जुनस्य हन्तुं यथा भविष्यति तथा सङ्ग्रामे करिष्यामीति योजना।

**जटासुरात्परिक्लेशः कीचकाच्च महाद्युते।**
**द्रौपद्याऽधिगतं सर्वं दमयन्त्या यथाऽशुभम्** ॥ ५७ ॥

**दमयन्त्या यथाऽशुभम्** इत्यत्र **दमयन्त्याः अशुभं यथा** इति योजना।

॥ इति अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ॥

**तदरण्यं महाराज यत्रास्तेऽसौ निपातितः।**
**स भीतस्तत्र तक्षाणं घटमानं शचीपतिः** ॥ २९ ॥

**स भीतस्तत्र तक्षाणम्** इत्यत्र 'तक्षा तु वर्धकिस्त्वष्टा'[१] इत्यभिधानात् **तक्षा** विश्वकर्मा।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

**तस्माद् विनिश्चयमिमं श्रुणुध्वं त्रिदिवौकसः।**
**विष्णोः क्षयमुपागम्य समेत्य च महात्मना** ॥ ४ ॥

**विष्णोः क्षयमुपागम्य** इत्यत्र 'निवेशः शरणं क्षयः' इत्यमरः। विष्णोः **क्षयः** स्थानम्।

---

१. अ.को. २-१०-९

**गच्छध्वं सर्षिगन्धर्वा यत्रासौ विश्वरूपधृक् ।**
**साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ ॥ ११ ॥**

**यत्रासौ विश्वरूपधृक्** इत्यत्र विश्वव्यापिरूपधृक् वृत्रासुरः **विश्वरूपधृक्** ।

**सकृत्सतां सङ्गतमीप्सितव्यं ततः परं भविता भव्यमेव ।**
**नातिक्रामेत्सत्पुरुषेण सङ्गतं तस्मात्सतां सङ्गतमीप्सितव्यम् २३**

**ततः परं भविता भव्यमेव** इत्यत्र 'भव्यं कुशलं क्षेममस्त्रियाम्'[१] इत्यभिधानात् **भव्यं** क्षेमं भविता ।

॥ इति दशमोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

**नाहमिच्छामि नहुषं [२]पतिमन्वास्य तं प्रभुम् ।**
**शवणागतास्मि ते ब्रध्मंस्त्रायस्व महतो भयात् ॥ १५ ॥**

**पतिमन्वास्य तं प्रभुम्** इत्यत्र **अन्वास्य** अनुकूलतया स्थित्वा ।

**न तस्य बीजं रोहति रोहकाले न तस्य वर्षं वर्षति वर्षकाले ।**
**भीतं प्रपन्नं प्रददाति शत्रवे [३]न सोऽन्तरं लभते त्राणमिच्छन् १९**

**न सोऽन्तरं लभते त्राणमिच्छन्** इत्यत्र 'अन्तरमवकाशावधी'[४] इत्यभिधानात् **अन्तरं** त्राणावकाशं रक्षणावसरमित्यर्थः ।

---

१. अ.को. १-४-२६
२. BORI पृ ४६; **'पतिं देवर्षिसत्तम'** इति कुं पाठः ।
३. BORI पृ. ४६; **'न स त्रातारं लभते'** इति कुं पाठः ।
४. अ.को. ३-३-१८७

**मोघमन्नं विन्दति [१]चाप्रचेताः स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः ।**
**भीतं प्रपन्नं प्रददाति यो वै न तस्य हव्यं प्रतिगृह्णन्ति देवाः २०**

**मोघमन्नं विन्दति** इत्यत्र **अप्रचेताः** प्रकृष्टचित्तरहितः **मोघं** व्यर्थं कोद्रवाद्यन्नं विन्दति, न तु शाल्यन्नम् ।

**नहुषं याचतां देवी किञ्चित्कालान्तरं शुभा ।**
**इन्द्राणी हितमेतद्धि तथाऽस्माकं भविष्यति ॥ २५ ॥**

**किञ्चित्कालान्तरं शुभा** इत्यत्र अन्तरशब्दस्यावधिवाचकत्वात् **किञ्चित्कालान्तरं** किञ्चित्कालावधि ।

**[२]बहुविघ्नकरः कालः [३]कालः सन् नाशयिष्यति ।**
**गर्वितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ २६ ॥**

**बहुविघ्नकरः कालः कालः सन्** मृत्युः सन्नित्यर्थः ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोध्यायः ॥

**देवराजमथोवाच नहुषं घोरदर्शनम् ।**
**कालमिच्छाम्यहं [४]लब्ध्वा त्वत्तः कञ्चित् सुरेश्वर ॥ ४ ॥**

**कालमिच्छामि** इत्यत्र किञ्चित् **कालम्** अवधिं लब्ध्वा त्वामिच्छामीति सम्बन्धः ।

---

१. $K_2$,$D_{9-10}$,T,G; BORI पृ. ४६; **'चाप्यचेताः'** इति कुं पाठः ।
२. BORI पृ. ४७; **'बहुविघ्नाः सुराः कालः'** इति कुं पाठः ।
३. **'कालः कालं नयिष्यति'** इति कुं. पाठः ।
४. **'लब्धुं'** इति कुं पाठः ।

**न हि विज्ञायते शक्रः [1] कुतः प्राप्तः क्व वा गतः ।**
**तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो ॥ ५ ॥**

**ततोऽहं त्वामुपस्थास्ये सत्यमेतद् ब्रवीमि ते ।**
**एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥ ६ ॥**

**न हि विज्ञायते शक्र** इत्यत्र शक्रः कुतः कारणात् कुतः कुत्र प्राप्तो गतः, त्वं कुतः कारणादागत इति मया न हि विज्ञायते । **एतत्तत्त्वं** शक्रगमनकारणं तवागमनकारणं च विज्ञाय यदि शक्रः कुत्रापि न ज्ञायते **ततस्तर्हि** । अन्यत् स्पष्टम् ।

**मामेव यजतां शक्रः पावयिष्यति वज्रिणम् ।**
**पुण्येन हयमेधेन [2] मोचध्वं पाकशासनम् ॥ १४ ॥**

**मोचध्वं पाकशासनम्** इत्यत्र **मोचध्वं** ब्रह्महत्यायाः मोचध्वम् ।

**पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे ।**
**देवीं रात्रिं नमस्यामि सिद्ध्यतां मे मनोरथः ॥ २५ ॥**

**देवीं [3] रात्रिं नमस्यामि** इत्यत्र **रात्रिं** रात्र्यभिमानिनीं दुर्गाम् ।

**प्रयता च निशां देवीमुपातिष्ठत तत्र सा ।**
**पतिव्रतात्वात् सत्येन सोपश्रुतिमथाकरोत् ॥ २६ ॥**

**सोपश्रुतिमथाकरोत्** इत्यत्र **सा** रात्रिर्देवी **उपश्रुतिं** प्रतिध्वनिम् ।

---

१. BORI पृ. ४७; 'किं वा' इति कुं पाठः ।
२. 'मामिष्ट्वा पाकशासनः' इति कुं पाठः ।
३. 'रात्रीं' सा.मु.पा.

**यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे ।**
**इत्याहोपश्रुतिं देवीं सत्यं सत्येन दृश्यताम्** ॥ २७ ॥

**उपश्रुतिम्** उप श्रुतिः प्रतिशब्दश्रवणं यस्याः सकाशात् ताम् ।

**॥ इति त्रयोदशोऽध्यायः ॥**

## ॥ अथपञ्चदशोऽध्यायः ॥

**बृहस्पते न पश्यामि देवराजमिह क्वचित् ।**
**आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहम्** ॥ ३४ ॥

**आपः शेषा** इत्यत्र **आपः** उदकानि शिष्यन्ते अवशिष्यन्त इति **शेषाः** अवशिष्टाः । तदन्तः प्रविश्य न विचारितमिति भावः ।

**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति** ॥ ३७ ॥

**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति** इत्यत्र **तेषां** अग्निब्रह्माश्मनां मध्ये सर्वत्र **गं** गच्छत्तेजः **स्वासु** स्वसम्बन्धिषु **योनिषु** कारणभूतास्वप्सु ।

**॥ इति पञ्चदशोऽध्यायः ॥**

## ॥ अथ षोडशोऽध्यायः ॥

**[१] स्वां योनिं भजते सर्वो [२] विश्वस्यापोऽविशङ्कितः ।**
**अहं त्वां वर्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः** ॥ ८ ॥

---

१. $T_2$,$G_5$,M; BORI पृ. ५६.
२. 'विशस्वापो' इति कुं पाठः ।

**स्वां योनिं भजते सर्व** इत्यत्र सर्वोऽपि क्षत्रलोहादिः **स्वां योनिं** स्वकारणभूतं ब्रह्माश्मादिकं भजते । तस्मात्कारणात् **विशङ्कितः** जलप्रवेशे शङ्कायुक्तोऽपि त्वं **विश्वस्य** मम वचने विश्वासं कृत्वा **स्वां** स्वसम्बन्धिनीं **योनिं** कारणभूतमुदकं **भज** प्रविश । ते सर्वोऽपि प्रपञ्चः प्रवेशयोग्योऽस्तु ।

**[१]ततो भीताः शक्रमकामयन्त त्वया त्यक्तं महदैन्द्रं पदं तत् ।**
**तदा देवाः पितरोऽथर्षयश्च गन्धर्वमुख्याश्च समेत्य सर्वे ॥ २५ ॥**

**ततो भीताः शक्रमकामयन्त** इत्यत्र यत इति योग्यपदाध्याहारः ।

॥ इति षोडशोऽध्यायः ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

**पप्रच्छुर्नहुषं देव संशयं जयतां वर ।**
**य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ॥ ९ ॥**

**य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम्** इत्यत्र प्रोक्षणे तादर्थ्ये सप्तमी । प्रकृष्टज्ञानरसोक्षणाय **ब्रह्मणा** चतुर्मुखब्रह्मणा **प्रोक्ताः** 'स्वर्गेषु पशुवाग्वज्रे'त्यनुशासनात् **गवां** वेदरूपवाचां **य इमे मन्त्राः** मन्त्ररूपाः शब्दराशयः । गायत्र्यादिवेदवाक्यानां अङ्गीकरणादौ मन्त्रत्वेन दृष्टफलसद्भावात् प्रामाण्यमावश्यकमिति सूचनाय मन्त्रा इत्युक्तम् । स्वर्गादिषु प्रामाण्यसंशयायोगात् वेदा एवात्र गावः । वेदाप्रामाण्यकोटौ पदा स्वशिरसि ताडनेन शापदानाय, प्रामाण्यकोटौ च 'न स्त्रियमुपगच्छेत्' इत्यादिश्रुत्या शच्याख्यपरदारगमनप्रतिषेधरूप-

---

१. $T_1, G_{1.2.4.5}, M_{1.2}$; BORI पृ. ५८; **'देवा भीताः'** इति कुं पाठः ।

प्रकृतकार्याय चोपयोगित्वात् वेदप्रामाण्यसन्देह एव पृष्टो न तु तत्त्वान्तरसन्देह इति ज्ञेयम् । अत एव 'वेदप्रामाण्यविषये पृष्टो नेत्याह मूढधीः । प्रमाणमिति तेनोक्ते शिरस्येनं पदाऽहनत्'[१] इति तात्पर्यमाहुः ।

**तेनाभूद्धततेजाश्च निःश्रीकश्च महीपतिः ।**
**[२]ततस्तमहमाविग्नमवोचं भृशपीडितम्** ॥ १३ ॥

**ततस्तमहमाविग्नम्** इत्यत्र नहुषदृष्टिविषयस्य अगस्त्यस्य शापासमर्थत्वात् 'य इमे ब्रह्मणा प्रोक्ता मन्त्रा' इत्युक्त्या ब्रह्मप्रोक्तत्वेनोक्तमन्त्राणां निन्दने ब्रह्मणोऽपि कोप इति सूचनाय च 'तदा भृगुं तस्य जटासु लीनं कदाऽपि तस्याक्षिपथं न यातम् । आविश्य कञ्जप्रभवः शशाप'[३] इति तात्पर्यमाहुः ।

**दशवर्षसहस्राणि सर्परूपधरो महान् ।**
**विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि** ॥ १७ ॥

**दशवर्षसहस्राणि** इत्यत्र नहुषः स्वराज्यपरिपालनसमये देवैः स्वर्गे नीतः । स्वर्गपरिपालनकाले च बहूनि वर्षाण्यतिक्रान्तानि । अन्ते अगस्त्यशापात् सर्पत्वं दशवर्षसहस्रपर्यन्तमिति भावः ।

॥ इति सप्तदशोऽध्यायः ॥

* * *

---

१. म.भा.ता.नि. (२२-३४४)
२. BORI पृ. ६१; 'ततस्तं तमसा विग्नमवोचं'इति कुं पाठः ।
३. म.भा.ता.नि. (२२-३४५)

## ॥ अथ अष्टादशोऽध्यायः ॥

**युयुधानस्ततो वीरः सात्वतानां महारथः ।**
**महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ १ ॥**

**युयुधानस्ततो वीर** इत्यत्र **युयुधानः** सात्यकिः । यद्यपि सात्यकिः पूर्वमेवागतः । सेनासन्नाहप्रदर्शनाय पुनरुक्तिः ।

॥ इति अष्टादशोऽध्यायः ॥

## ॥ अथ विंशोऽध्यायः ॥

**प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।**
**शेषवन्तो न शकिता नेतुं वै यमसादनम् ॥ ७ ॥**

**शेषवन्तो न शकिता** इत्यत्र **शेषवन्तः** आयुःशेषवन्तः **शकिताः** शक्या नेति योजना ।

॥ इति विंशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

**चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् ।**
**[१]भगवान् प्रतियात्वद्य पाण्डवानामेव माचिरम् ॥ २१ ॥**

**'भगवान् प्रतियात्वद्य'** इति पुरोहितब्राह्मणं प्रति वचनम् ।

॥ इति एकविंशोऽध्यायः ॥

---

१. M; BORI पृ. ७२; 'स भवान्प्रतियात्वद्य' इति कुं पाठः ।

## ।। अथ द्वाविंशोऽध्यायः ।।

धृतराष्ट्र उवाच–

**प्राप्तानाहुः सञ्जय पाण्डुपुत्रा-**
**नुपप्लव्ये तान् विजानीहि गत्वा ।**
**अजातशत्रुं च सभाजयेथा**
**दिष्ट्या [1] भवान् ग्राममुपागतस्त्वम्** ।। १ ।।

**दिष्ट्या भवान् ग्राममुपागत** इत्यत्र **ग्रामं** त्वद्ग्रामादस्मद्ग्रामम् । **यो न गर्भेऽपि पार्थान्** इत्यत्र यो दोषः पार्थान्न स्पृशेदिति योजना ।

**पुत्रो मह्यं मृत्युवशं जगाम**
**दुर्योधनः सञ्जय रागबुद्धिः ।**
**[2] तेषां हि मेऽहीनसुखः प्रियाणां**
**महात्मनां सञ्जनयतो हि तेजः** ।। ७ ।।

**तेषां हि मेऽहीनसुखः प्रियाणाम्** इत्यत्र मे प्रियाणां तेषां **अहीन-सुखः** अमन्दबुद्धिः विवेकी महात्मनां तेषां भागं कर्तुं घटत इति योजना । **महात्मनां** दीप्ततेजसाम् ।

**उत्थानवीर्यः सुखमेधमानो**
**दुर्योधनः सुकृतं मन्यते तत् ।**
**[3] तेषामभागं यच्च मन्येत बालः**
**शक्यं हर्तुं जीवतां पाण्डवानाम्** ।। ८ ।।

---

१. $G_{3.4}$; BORI पृ. ७२; **'वनात्'** इति कुं पाठः ।
२. **'तेषां हिमौ हीनसुखप्रियाणाम्'** इति कुं पाठः ।
३. **'तेषां भागं'** इति कुं. पाठः ।

**उत्थानवीर्यम्**(**र्यः**) इत्यत्र **उत्थाने** ग्रामाद्वनं प्रत्युत्थाने सति वीर्यं यथा भवति तथा उत्थानवीर्यं, सुखं यथा भवति तथा एधमान इति योजना । **तत्** वनगमनमेव **सुकृतं** सुष्ठु कृतं न्यायेन कृतं मन्यत इति योजना । यद्यस्मात्कारणात् **तेषां** पाण्डवानाम् **अभागं मन्यते**, जीवितं हर्तुं शक्यं च मन्यते तस्माद्बालः ।

**यस्यार्जुनः पदवीं केशवश्च**
**वृकोदरः सात्यकोऽजातशत्रोः ।**
**माद्रीपुत्रौ सृञ्जयाश्चापि यान्ति**
**पुरा युद्धात्साधु तस्य प्रदानम्** ॥ ९ ॥

यस्याजातशत्रोः पदवी (मुप) मनुगच्छन्तीति योजना ।

**तिष्ठेत कस्तस्य मर्त्यः पुरस्ताद्यः सर्वलोकेषु वरेण्य एकः ।**
**पर्जन्यघोषान् प्रवपञ्शरौघान्पतङ्गसङ्घानिव शीघ्रवेगान्** ॥११॥

**पर्जन्यघोपान्** इत्यत्र शरानिति जनौघान् प्रतीति च योग्यपदाध्याहारः ।

**अवरुद्धा रथिनः केकयेभ्यो**
**महेष्वासा भ्रातरः पञ्च सन्ति ।**
**केकयेभ्यो राज्यमाकाङ्क्षमाणा**
**युद्धार्थिनश्चानुवसन्ति पार्थान्** ॥ २० ॥

**तान् केकयेभ्यो राज्यमाकाङ्क्षमाणान्** इत्यत्र **राज्यं** स्वराज्यम् ।

**उपाश्रिताश्चेदिकरूशकाश्च**
**सर्वोद्योगैर्भूमिपालाः समेताः ।**
**तेषां मध्ये सूर्यमिवातपन्तं**
**श्रिया वृतं चेदिपतिं ज्वलन्तम्** ॥ २५ ॥

**तेषां मध्ये सूर्यमिवातपन्तम्** इत्यत्र **तेषां** राजसूये मिलितानां राज्ञां मध्ये सूर्यमिवातपन्तं शिशुपालं लोको ददर्शेति समग्रश्लोकस्य योजना ।

**मतो हि मे शक्रसमो धनञ्जयः**
**सनातनो वृष्णिवीरश्च विष्णुः ।**
[१]**स धर्मराजो ह्रीनिषेधस्तरस्वी**
**कुन्तीपुत्रः पाण्डवोऽजातशत्रुः** ॥ ३३ ॥

**स धर्मराजो ह्रीनिषेध** इत्यत्र **ह्रिया** अधर्मस्य निषेधो यस्मिन् स तथोक्तः ।

**तस्य क्रोधं सञ्जयाहं समीक्ष्य**
**स्थाने** [२]**जातं भृशमस्म्यद्य भीतः ।**
**स गच्छ शीघ्रं प्रहितो रथेन**
**पाञ्चालराजस्य चमूनिवेशनम्** ॥ ३६ ॥

**स्थाने जातम्** इत्यत्र **स्थाने** कोपयोग्यस्थाने जातमिति क्रोधस्य विशेषणम् ।

---

१. $G_3$; BORI पृ. ७७; **'धर्मारामो'** इति कुं पाठः ।

२. $D_n, E_{3.4}, S_{(except\ G2)}$; BORI पृ. ७८; **'जानन् -'** इति कुं पाठः ।

**अनामयं मद्वचनेन पृच्छे-**
**धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः ।**
**न तस्य किञ्चिद्वचनं न कुर्यात्**
**कुन्तीपुत्रो वासुदेवस्य सूत ॥ ३८ ॥**

**त तस्य किञ्चिद्वचनं न कुर्यात्** इत्यत्र वचनं न कुर्यादिति नेति सम्बन्धः ।

**अनामयं मद्वचनेन पृच्छेः**
**सर्वांस्तथा द्रौपदेयांश्च पञ्च ।**
**यद्यत्तत्र प्राप्तकालं परेभ्यः**
**स त्वं मन्येथा भारतानां हितं च ।**
**तद्भाषेथाः सञ्जय राजमध्ये**
**न मूर्च्छयेद्यन्न [१] भवेच्च युद्धम् ॥ ४० ॥**

**न मूर्च्छयेद्यन्न भवेच्च युद्धम्** इत्यत्र **यत्** वाक्यं **न मूर्च्छयेत्** परशिरोव्यथां न जनयेत्, **यत्** यस्माद्वाक्यात् युद्धं न च भवेत् तद्भाषेथा इति योजना ।

॥ इति द्वाविंशोऽध्यायः ॥

## ॥ अथ त्रयोविंशोऽध्यायः ॥

**वैश्यापुत्रः कुशली तात कच्चित्**
**महाप्राज्ञो राजपुत्रो युयुत्सुः ।**

---

१. BORI पृ. ७८; 'च युद्धहेतुः' इति कुं पाठः ।

**कर्णो मानी कुशली तात कच्चित्**
**सुयोधनो यस्य मन्दो विधेयः　　॥ १३ ॥**

**सुयोधनो यस्य मन्दो विधेय** इत्यत्र 'विधेयो विनयग्राही वचनेस्थित आश्रव'[१] इत्यभिधानात् **विधेयः यस्य** कर्णस्य वचनेस्थितः, आश्रवश्च तदुक्तपैशुन्यवचनश्रोतेत्यर्थः।

**स्त्रियो वृद्धा भारतानां जनन्यो**
**[२]माहानस्यो दासभार्याश्च सूत।**
**वध्वः पुत्रा भागिनेया भगिन्यो**
**दौहित्रा वा कच्चिदप्यव्यलीकाः　　॥ १४ ॥**

**माहानस्यः** महानसे विद्यमानाः माहानस्यः।

**[३]एतज्ज्योतीरुत्तमं जीवलोके**
**सकलप्रजानां विहितं विधात्रा।**
**ते चेद्दोषं न नियच्छन्ति मन्दाः**
**कृत्स्नो नाशो भविता कौरवाणाम्　　॥ १७ ॥**

**एतज्ज्योतीरुत्तमं जीवलोक** इत्यत्र एतत् यथायोग्यं सकलप्रजापालनम्।

**कच्चिद्राज्ये धृतराष्ट्रं सपुत्रं**
**समेत्याहुः कुरवः सर्व एव।**

---

१. अ.को. ३-१-२४

२. $M_{1.2.4}$,$C_{ad}$; BORI पृ. ८०; **'महादास्यो'** इति कुं पाठः।

३. **'एतज्ज्योतिश्चोत्तमं शुक्लं प्रजानाम्'** इति कुं पाठः।

**कच्चिद् दृष्ट्वा दस्युसङ्घान्समेता-**
**न्स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ २० ॥**

**युधां प्रणेतुः** इत्यत्र **युधां** योधानां **प्रणेतुः** राज्ञः ।

[१] **मौर्वीं भुजाग्रेप्रहितां स्म तात**
**दोधूयमानेन धनुर्धरेण ।**
**गाण्डीवनुन्नांस्तनयित्नुघोषा-**
**नजिह्मगान्कच्चिदनुस्मरन्ति ॥ २१ ॥**

[२] **नतं दृष्ट्वा कच्चिदत्र प्रतीपं गत्वा गृहं युद्धरङ्गान्न जग्मुः ॥**

**मौर्वीं भुजाग्रे प्रहिताम्** इत्यत्र **दोधूयमानेन** चामराभ्यां वीज्यमानेन **धनुर्धरेण** अर्जुनेन भुजाग्रे निहितां आकर्णान्तमाकृष्टामित्यर्थः । **नतं दृष्ट्वा** इत्यत्र **नतम्** अवनतं **प्रतीपं** वैरिणं **तम्** अर्जुनं दृष्ट्वा पुरतो गत्वा युद्धरङ्गात् गृहं न जग्मुः कच्चित् । रङ्ग एव मृता इति भावः ।

**न चापश्यं कश्चिदहं पृथिव्यां**
**योधं समं वाऽधिकमर्जुनेन ।**
**यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः**
**सुवाससः समन्तो [३] हस्तवापाः ॥ २२ ॥**

**हस्तवापा** इत्यत्र हस्त एव शत्रुदेहेषु बीजावापकर्ता येषां ते शराः **हस्तवापाः** ।

---

१. $K_1$,$D_{n1}$,$D_{3.8}$; BORI पृ. ८१; **'मौर्वीभुजाग्रप्रहितान्स्म'** इति कुं पाठः ।

२. BORI पृ. ८१

३. $B_2$,$G_{2-4}$,$M_{1.3-5}$; BORI पृ. ८२; **'हस्तवापः'** इति कुं.पाठः,

**गदापाणिर्भीमसेनस्तरस्वी प्रवेपयञ्छत्रुसङ्घाननीके ।**
**नागः प्रभिन्न इव नड्वलेषु चङ्क्रम्यते कच्चिदेनं स्मरन्ति ।। २३ ।।**

**चङ्क्रम्यते** अतिशयेन पादविक्षेपं करोति ।

**न कर्मणा साधुनैकेन नूनं**
**सुखं शक्यं वै भवतीह सञ्जय ।**
**सर्वात्मना परिजेतुं वयं चे-**
**न्न शक्नुमो धृतराष्ट्रस्य पुत्रम् ।। २८ ।।**

**न कर्मणा साधुनैकेन** इत्यत्र वयं सर्वात्मना धृतराष्ट्रस्य पुत्रान् जेतुं न शक्नुमश्चेत्, **एकेन** षट्सु नीतिषु मुख्येन **साधुना कर्मणा** सन्धि-कर्मणा **कार्यम्** अस्मत्कार्यं शक्यं न भवति । **नूनं** निश्चयः ।

।। इति द्वात्रिंशोऽध्यायः ।।

## ।। अथ चतुर्विंशोऽध्यायः ।।

**यत्तद्[१] युष्मासु वर्ततेऽसावधर्म्य-**
**मदुग्धेषु[२] दुग्धवत्तन्न साधु ।**
**मित्रध्रुक् स्याद्धृतराष्ट्रस्य पुत्रो**
**युष्मान् द्विषन्साधुवृत्तानसाधुः ।। ३ ।।**

**यत्तद्युष्मापु वर्ततेऽसावधर्ममदुग्धेषु दुग्धवत्तन्न साधु** इत्यत्र **अदुग्धेषु** दुग्धानि न भवन्तीति **अदुग्धानि** भवद्द्वेषाख्यविषाणि तेषु **दुग्धवत्** दुग्धे यथा, तथा बुद्धिं करोति । तन्न साध्विति योजना ।

१. 'यद्युष्मासु' इति कुं पाठः । ; २. 'अद्रुग्धेपु' इति कुं. पाठः ।

स चापि जानाति भृशं च तप्यते
शोचत्यन्तः स्थविरोऽजातशत्रो ।
[१]मित्रद्रोहं ब्राह्मणानां समेत्य
श्रुणोति हि पापकेभ्यो गरीयः ॥ ४ ॥

**मित्रद्रोहं ब्राह्मणानां समेत्य** इत्यत्र ब्राह्मणानां सङ्घं समेत्य **पापकेभ्यः** पापेभ्यः **गरीयः** श्रेष्ठं मित्रद्रोहं शृणोतीति सम्बन्धः ।

माद्रीसुतौ चापि [२]रणाजिमध्ये सर्वा दिशः सम्पतन्तौ स्मरन्ति ।
सेनां वर्षन्तौ शरवर्षैरजस्रं महारथौ समरे दुष्प्रकम्पौ ॥ ६ ॥

**माद्रीसुतौ चापि रणाजिमध्य** इत्यत्र शत्रूणां रणं प्रति यो रणः स रणाजिः तस्य मध्ये ।

[३]नन्वेव मन्ये पुरुषस्य राजन् अनागतं [४]जायते [५]यत् भविष्यत् ।
त्वं चेत्तथा सर्वधर्मोपपन्नः प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ।
[६]त्वमेव चैतत्सर्वमतश्च भूयः समीक्ष्य कुर्याः प्रज्ञयाऽजातशत्रो ७

**नन्वेव मन्ये पुरुषस्य राजन्** इत्यत्र पुरुषस्य यज्जायते, यच्च भविष्यत् तत् स्वभावत एव जायते ननु इति योजना ।

---

१. **'मित्रद्रोहं पातकेभ्यो गरीयान्'** इति कुं पाठः ।
२. BORI पृ. ८४; **'तथाऽऽजिमध्ये'** इति कुं पाठः ।
३. **'न त्वेव'** इति कुं पाठः ।
४. $G_3$,$M_{1,3,4}$; BORI पृ. ८४; **'ज्ञायते'** इति कुं. पाठः ।
५. $D_{1,2,7}$,S; BORI पृ. ८४; **'यद्भविष्यम्'** इति कुं. पाठः ।
६. $S_{(except G1,2)}$; BORI पृ. ८४; **'त्वमेवैतत्कृच्छ्रगतश्च भूयः समीकुर्याः'** इति कुं पाठः ।

**त्वमेव चैतत्सर्वमतश्च भूय** इत्यत्र एतत्सर्वम् **अतः** अस्मात् **भूयः** उपरि भवच्च समीक्ष्य कुर्या इति सम्बन्धः ।

**॥ इति चतुर्विंशोऽध्यायः ॥**

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**सर्वक्षयो दृश्यते यत्र कृत्स्नः**
**पापोदयो भावसंस्थः कुरूणाम् ।**
**कस्तत्र कुर्याज्जातु कर्म प्रजानन्**
**पराजयो यत्र समो जयश्च** ॥ ७ ॥

**सर्वक्षयो दृश्यत** इत्यत्र **यत्र** यस्मिन् पापे सर्वक्षयो दृश्यते, स कृत्स्नः पापोदयः कुरूणां भावसंस्थः । यत्र पराजयो जयश्च समः एकवारं पराजयः पश्चाज्जयश्च[१] भविष्यति । **तत्कर्म** दुर्द्यूताख्यं कर्म कः कुर्यादिति सम्बन्धः ।

**ते [२]चेत्कुरूननुशिक्षामि पार्था**
**निर्णीय सर्वान्द्विषतो निगृह्य ।**
**समं वस्तज्जीवितं मृत्युना स्या-**
**द्यज्जीवध्वं ज्ञातिवधेन साधु** ॥ ९ ॥

**न चेत्कुरूननुशिक्षामि** इत्यत्र **न चेत्** उक्तस्वभावो न चेत् **निर्णीय** कुरूणां मनोगतं निश्चित्य **द्विषतः** सन्धिकार्यं द्विषतः निगृह्य **कुरून-नुशिक्षामि** सत्स्वभावमेवानुशिक्षामीति योजना ।

---

१. 'भवति' सां.मु.पा ।
२. 'ते चेत्कुरूननुशिष्याथ' इति कुं पाठः ।

कृताञ्जलिः शरणं वः प्रपद्ये
कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
[1]न ह्येवं मे वचनं वासुदेवो
धनञ्जयो वा जातु किञ्चिन्न कुर्यात् ॥ १४ ॥

**न ह्येवं मे वचनम्** इत्यत्र न कुर्यान्नेति नञोः सम्बन्धः ।

प्राणान्दद्याद्याचमानः कुतोऽन्य-
देतद्विद्वन्साधनार्थं ब्रवीमि ।
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ १५ ॥

**साधनार्थं** मयोच्यमानकार्यसाधनार्थम् ।

॥ इति पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

**कां नु वाचं सञ्जय मे शृणोषि युद्धैषिणीं येन युद्धाद्बिभेषि ।**
**अयुद्धं वै तात युद्धाद्गरीयः कस्तल्लब्ध्वा जातु युद्ध्येत सूत ॥१॥**

**कां नु वाचम्** इत्यत्र युद्धैषिणो मे कां नु वाचं शृणोषि । युद्धं कार्यमिति वाक् मया नोक्तैवेति भावः ।

**अकुर्वतश्चेत्पुरुषस्य सञ्जय सिद्ध्येत् सङ्कल्पो मनसा यं यमिच्छेत्**
**न कर्म कुर्याद् विदितं ममैतदन्यत्र युद्धाद्बहु यल्लघीयः ॥ २ ॥**

---

१. $B_5, D_{10}$; BORI पृ. ८७; 'न ह्येवमेवम्' इति कुं पाठः ।

**अकुर्वतश्चेत्** इत्यत्र 'अन्यत्र युद्धात्' इति वक्ष्यमाणत्वात् **अकुर्वतः** युद्धमकुर्वतः । **न कर्म कुर्यात्** इत्यत्र **कर्म** युद्धकर्म । युद्धादन्यत्र युद्धं विना **यल्लघीय** अल्पतरं लाभादिकं, तदेव बहु इति योजना ।

**धर्मोदयं सुखमशंसमानाः कृच्छ्रोदयं[1] तत्त्वतः कर्म दुःखम् ।**
**सुखं प्रेप्सुर्विजिघांसुश्च दुःखं कर्मारभेद्यच्च धर्मानपेतम् ॥ ४ ॥**

**धर्मोदयं** धर्मस्य उदयो यस्मात्तत्कर्म । **कृच्छ्रोदयं** कृच्छ्रस्य युद्धादि-सङ्कटस्य उदयो यस्मात् तत् **कर्म** परधनापहारादिकम् ।

**क इन्द्रियाणां प्रीतिवशानुगानां कर्माभिज्ञः स्वशरीरं दुनोति ।**
**यया प्रमुक्तो न करोति दुःखं तृष्णां त्यजेत्सर्वधर्मादपेताम् ॥५॥**

**क इन्द्रियाणाम्** इत्यत्र **कर्माभिज्ञः** कर्मकुशलः प्रीतिवशानु-गानामिन्द्रियाणामर्थे कः स्वशरीरं दुनोति ।

**यथेध्यमानस्य समिद्धतेजसो भूयो बलं वर्धते पावकस्य ।**
**कामार्थलाभेन तथैव भूयो न तृप्यते सर्पिषेवाग्निरिद्धः ।**
**सम्पश्येमं योगमयं[2] महान्तं सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥६॥**

**भूयो भूयो न तृप्यते** इत्यत्र **योग्यपदानुवृत्तिः । सम्पश्येमं योगमयं महान्तम्** इत्यादेरयमर्थः अस्माभिः सह धृतराष्ट्रस्य राज्ञः भोगमयं तस्य यादृशो भोगः तादृग्भोगमिति यावत् । महान्तम् **इमं** कृष्णं सम्यक्पश्य ।

---

१. '**कृच्छ्रोपायम्**' इति कुं पाठः ।
२. '**भोगचयम्**' इति कुं पाठः ।

**नाश्रेयसामीश्वरो विग्रहाणां**
**नाश्रेयसान् वै गीतशब्दं शृणोति ।**
**नाश्रेयसः सेवते माल्यगन्धा-**
**न्न चाप्यश्रेयाननुलेपनानि ।**
**नाश्रेयान् वै प्रावारान् संविवस्ते**
**कथं[१] न्वस्मान्सम्प्रणुदेत्कुरुभ्यः ॥ ७ ॥**

अश्रेयसां दरिद्राणां विग्रहाणां देहानां ईश्वरो न । कृष्णसेनस्थाः सर्वेऽपि सभाग्या इति भावः । किन्तु गन्धर्वाणां गीतशब्दं शृणोतीति भावः । **अश्रेयसां** दरिद्राणां गीतशब्दं न श्रुणोति । किन्तु गन्धर्वाणां गीतशब्दं शृणोतीति भावः । **अश्रेयसः** दरिद्रस्य प्रावरान् प्रावरणानि न वस्ते । **कथं न्वस्मान्** इत्यत्र सोऽयं कृष्ण इति योग्यपदाध्याहारः ।

**[२]अत्रैव सर्वानवधूय कामः । प्रायः शरीरे हृदयं दुनोति ॥ ८ ॥**

**अत्रैव सर्वानवधूय** इत्यत्र **शरीरे** कृष्णभक्तानां शरीरे यः **कामः** काम्यत इति कामो भोगः, स सर्वान् कुरूनवधूय हृदयं दुनोति ।

**आसन्नमग्निं तु निदाघकाले गम्भीरकक्षे गहने विसृज्य ।**
**यथा विवृद्धं वायुवशेन शोचेत्क्षेमं मुमुक्षुः शिशिरव्यपाये ॥१०॥**

**आसन्नमग्निम्** इत्यत्र **आसन्नं** स्वसमीपस्थम् । 'कक्षौ तु तृण-वीरुधौ'[३] इत्यमरः । **गम्भीरकक्षे** गम्भीरतृणे ।

---

१. $K_{1-3}$; BORI पृ. ८८; **'कथं त्वस्मान्'** इति कुं पाठः ।
२. **'अत्रैव स्यादबुधस्यैव कामः'** इति कुं पाठः ।
३. अ.को. ३-३-२१९

प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा लालप्यते सञ्जय कस्य हेतोः ।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं पुत्रं मन्दं मूढममन्त्रिणं तु ॥ ११ ॥

अनाप्तवच्चाप्ततमस्य वाचः सुयोधनो विदुरस्यावमत्य ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी सम्बुद्ध्यमानो विशतेऽधर्ममेव १२

**प्रगृह्य दुर्बुद्धिम्** इत्यत्र यो दुर्योधनः आप्ततमस्य विदुरस्य वाचमवमत्य अनाप्तः सन् तिष्ठति, तं **दुर्बुद्धिं** दुर्योधनं प्रगृह्य अधर्ममेव विशत इति योजना ।

मेधाविनं ह्यर्थकामं कुरूणां
बहुश्रुतं वाग्मिनं शीलवन्तम् ।
स तं राजा धृतराष्ट्रः [१]कुरूणां
[२]अवासृजत् विदुरं पुत्रकाम्यात् ॥ १३ ॥

**कुरूणामवासृजत्** इत्यत्र कुरूणां देशादिति योग्यपदाध्याहारः ।

अनेयस्याश्रेयसो दीर्घमन्यो-
र्मित्रद्रुहः सञ्जय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
[३]प्रदर्श्यमानः प्राजहाद्धर्मकामौ ॥ १५ ॥

**प्रदर्शमान** इत्यत्र **प्रदर्शमानः** प्रपश्यमान इत्यर्थः ।

---

१. $G_{3-5}$,M; BORI पृ. ८९; **'कुरुभ्यो'** इति कुं पाठः ।
२. T,$G_{1,3-5}$,M; BORI पृ. ९०; **'न सस्मार'** इति कुं. पाठः ।
३. **'प्रपश्यमानः'** इति कुं पाठः ।

आशंसते वै धृतराष्ट्रः सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलं नोपलभ्यः
[1]अत्यासन्नं मद्गतं मन्यतेऽर्थम् ॥ २० ॥

**अत्यासन्नं मद्गतं मन्यतेऽर्थम्** इत्यत्र **मद्गतं** मत्तो गतम् ।

यत्तत्कर्णो मन्यते पारणीयं
युद्धे गृहीतायुधमर्जुनं वै ।
आसंश्च युद्धानि पुरा महान्ति
कथं कर्णो नाभवद्द्वीप एषाम् ॥ २१ ॥

**यत्तत्कर्णो मन्यत** इत्यत्र युद्धे आयुधं गृहीत्वा अर्जुनेन वारणीयमात्मानं मन्यते इति योजना ।

[2]ततोऽर्थबन्धं मन्यते धार्तराष्ट्रः
शक्यं हर्तुं पाण्डवानां ममत्वम् ।
किरीटिना तालमात्रायुधेन
तद्वेदिना संयुगं तत्र गत्वा ॥ २४ ॥

**ततोऽर्थबन्धम्** इत्यत्र अर्थं बध्नतीति **अर्थबन्धं** राज्यं **ततः** अर्जुनात् मम हर्तुं शक्यमिति मन्यते ।

॥ इति षड्विंशोऽध्यायः ॥

---

१. BORI पृ. ९१; 'सर्वं स्वकं मद्गते' इति कुं पाठः ।

२. $S_{(except\ G2)}D_{s1}$-$D_{2.10}$;$S_{(except\ M3.4)}$; BORI पृ. ९१; 'तेनानुबन्धं' इति कुं पाठः ।

## ॥ अथ सप्तविंशोऽध्यायः ॥

**धर्मनित्या पाण्डव ते विचेष्टा　लोके श्रुता दृश्यते चापि पार्थ ।**
**[१]महास्रावं जीवितं चाप्यनित्यं सम्पश्य त्वं पाण्डव मा [२]विनङ्क्षीः १**

**महास्रावं जीवितम्** इत्यत्र **महान् स्रावः** नवद्वारेषु स्रवणं यस्य तत्तथोक्तम् । **मा विनङ्क्षीः,** अन्तर्णीतो णिच् । मा विनाशयेत्यर्थः ।

**अमात्यानां यदि कामस्य हेतो-**
**रेवं युक्तं कर्म चिकीर्षसि त्वम् ।**
**[३]अपाक्रमः [४]स्वपदा यस्त्वमेभ्यः**
**मागास्त्वं वै देवयानात्पथोऽद्य**　॥ २७ ॥

**अपाक्रमः स्वपदा यस्त्वमेभ्य** इत्यत्र यस्त्वं **स्वपदा अपाक्रमः** पादविक्षेपमकरोः, स त्वम् **एभ्यः** अमात्येभ्यः **मा** मा क्रमः । देवयानात्पथश्च माऽपगाः ।

॥ इति सप्तविंशोऽध्यायः ॥

## ॥ अथ अष्टाविंशोऽध्यायः ॥

**असंशयं सञ्जय सत्यमेतद्धर्मो वरः कर्मणां यत्त्वमात्थ ।**
**ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं यदि धर्मं यद्यधर्मं चरामि ॥ १ ॥**

---

१. BORI पृ. ९२; **'महाश्रावं'** इति कुं. पाठः ।
२. T,G; BORI पृ. ९२; **'व्यनीनशः'** इति कुं. पाठः ।
३. $K_2, T_1, M_{1.3.5}$; BORI पृ. ९७; **'अपक्रमेः '** इति कुं. पाठः ।
४. $K_{1.2}$; BORI पृ. ९७; **'स्वं प्रदायैव तेषां'** इति कुं. पाठः ।

**असंशयं सञ्जय** इत्यत्र **कर्मणः** युद्धकर्मणः ।

**यदि धर्मं चरामि** इत्यत्र यदि पाषण्डिवत् **धर्मम्** अधर्मं चरामि धर्मे अधर्मबुद्धिं करोमीति यावत् । यदि च **अधर्मं** धर्मं चरामि अधर्मे धर्मबुद्धिं करोमीत्यर्थः । तर्हि मां गर्हयेः । धर्म एव धर्मबुद्धिं कुर्वति,अधर्मे चाधर्मबुद्धिं कुर्वति मयि निन्देयमसङ्गतेति भावः ।

**यत्राधर्मो [१]धर्मरूपाणि बिभ्रत्**
**धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।**
**बिभ्रद्धर्मो धर्मरूपं तथा च**
**विद्वांसस्तं सम्प्रपश्यन्ति बुद्ध्या ॥ २ ॥**

**यत्राधर्मो धर्मरूपाणि बिभ्रत्** इत्यत्र **यत्र** पाषण्डिनां देशे **अधर्मः** भस्मधारणादिरूपः धर्मरूपाणि बिभ्रत्; **कृत्स्नो धर्मः** ऊर्ध्वपुण्ड्रधारणादिः अधर्मरूपः दृश्यते । **यत्र** विवेकिनां देशे धर्मः ऊर्ध्वपुण्ड्रधारणादिः धर्मरूपं धारयन् दृश्यते, उपलक्षणं चैतत् । अधर्मः अधर्मरूपं धारयन् दृश्यते, तत्र **विद्वांसः** ज्ञानिनः **तं** धर्ममधर्मं च बुद्ध्या सम्प्रपश्यन्ति । अयमधर्मः, अयं धर्म इति निश्चिन्वन्तीति भावः ।

**एवं तथैवापदि लिङ्गमेत-**
**[२]द्धर्माधर्मौ वृत्तिनित्यौ भजेताम् ।**
**आद्यं लिङ्गं यस्य तस्य प्रमाण-**
**मापद्धर्मं सञ्जय तं निबोध ॥ ३ ॥**

---

१. BORI पृ. ९७; 'धर्मरूपाणि धत्ते' इति कुं पाठः ।
२. BORI पृ. ९८; 'नित्यवृत्ती' इति कुं पाठः ।

**एवं तथैवापदि लिङ्गमेतत्** इत्यत्र **एवम्** उक्तरीत्या **वृत्तिनित्यौ** वृत्त्या स्थित्या **नित्यौ** नियतौ धर्माधर्मौ आपदि उक्तसाधूनामेव महापद्यागतायां सत्यां एतत्पाषण्डिनां लिङ्गं भजेताम् । म्लेञ्छदेशे तद्भयात् साधूनामपि स्वधर्मत्यागेन स्वशिरोमुण्डनश्मश्रुधारण-शून्यललाटत्वादितदधर्मलिङ्गस्यैव धर्मतया ध्रियमाणत्वात् यस्य साधोः **आद्यं लिङ्गं** पाषन्डिनां लिङ्गं **प्रमाणं** प्रमाणवदङ्गीकार्यमभूत्, **तस्य** साधोः तम् अधर्मम् आपद्धर्मं वदन्ति । अधर्मस्यापि तस्य आपदि धृतत्वेन नरकाद्यनर्थहेतुत्वात् धर्मप्रायतया धर्मत्वमिति भावः । एव-मस्माकमपि आपद्ग्रस्तत्वात् सुहृदां वधोऽपि धर्म एवेति भावः ।

**लुप्तायां तु प्रकृतौ [1]यो न कर्म**
**निष्पादयेत्तत्परीप्सेद्धिहीनः ।**
**प्रकृतिस्थश्चापदि वर्तमान**
**उभौ गर्ह्यौ भवतः सञ्जयैतौ ॥ ४ ॥**

**लुप्तायां तु प्रकृतौ** इत्यत्र दुर्जनसंसर्गवशात् प्रकृतौ स्वस्वभावे लुप्तायां सत्याम् आपदि **कर्म** आपद्धर्मरूपं कर्म यो न निष्पादयेत्; **प्रकृतिस्थः** स्वस्वभावस्थः पुरुषः अनापद्यपि, **वर्तमानः** आपद्धर्मे वर्तमानो यः एतावुभावपि हे सञ्जय गर्ह्यौ भवतः । **अहीनः** उत्तमः, पुरुषः तदुभयमपि **परीप्सेत्** विचारयेत् । आपद्यपि मया युद्धं न कृतं चेत् लोको मामपहसिष्यतीति भावः ।

**[2]अविलोपमिच्छतां ब्राह्मणानां**
**प्रायश्चित्तं विहितं यद्धिधात्रा ।**

---

१. $D_{1,9}$,$T_1$,$G_{1,2}$,$M_1$; BORI पृ. ९८; **'येन'** इति कुं पाठः ।
२. BORI पृ. ९८; **'अविनाशमिच्छतां'** इति कुं पाठः ।

सम्पश्येथाः कर्मसु वर्तमानान्
विकर्मस्थान् सञ्जय गर्हयेस्त्वम् ॥ ५ ॥

**अविलोपम्** इत्यत्र प्रमादात् कर्मविलोपे सतीति वाक्यमध्याहृत्य व्याख्येयम् ।

[१]तदर्थिनः पितरो ये च पूर्वे
पितामहा ये च तेभ्यः परेऽन्ये ।
यज्ञैषिणो ये च हि कर्म कुर्यु-
[२]र्नान्यत् ततो नास्ति नास्तीति मन्ये ॥ ७ ॥

**तदर्थिनः पितर** इत्यत्र **तदर्थिनः** अब्रह्मण्यक्षयार्थिनः । **नान्यत्तत** इत्यत्र **ततः** पितृपितामहाद्याचरात् अन्यत् न नास्ति नास्ति इति त्रिवाचा शपथः ।

यदि ह्यहं विसृजन्साम गर्ह्यो नियुध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु वासुदेवस्तूभयोरर्थकामः ॥ १० ॥

**यदि ह्यहम्** इत्यत्र **अस्य** कृष्णस्य शासनमिति योग्यपदाध्याहारः । **उभयोः** वंशयोः ।

काश्यो बभ्रुः श्रियमुत्तमां गतो लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान्वर्षति वासुदेवो ग्रीष्मात्यये मेघ इव प्रजाभ्यः
॥ १३ ॥

---

१. $D_2$,S; BORI पृ. ९९; 'तदध्वानः पितरो' इति कुं पाठः ।
२. $K_5$,$D_1$.T,$G_{1-4}$,$M_{1-4}$; BORI पृ. ९९: 'कुर्यर्नान्यं ततो नास्तिकोऽस्मीति' इति कुं पाठः ।

**काश्यो बभ्रुः** इत्यत्र **बभ्रुरिति** पौण्ड्रकवासुदेवानुजस्य नाम ।

॥ इति अष्टविंशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

**कामो हि मे सञ्जय नित्यमेव**
**नान्यद्ब्रूयां तान्प्रति शाम्यतेति ।**
**राज्ञश्च हि प्रियमेतच्छृणोमि**
**मन्ये चैतत् पाण्डवानां [१] समर्थम्** ॥ २ ॥

**पाण्डवानां समर्थम्** इत्यत्र सं समीचीनम् । **अर्थं** पुरुषार्थमित्यर्थः ।

**न त्वं धर्मं विचरं सञ्जयेह**
**मत्तश्च जानासि युधिष्ठिराच्च ।**
**अथो कस्मात्सञ्जय पाण्डवस्य**
**उत्साहिनः पूरयतः स्वकर्म** ॥ ४ ॥

**अथो कस्मात्** इत्यत्र अधर्मः कस्मादिति योग्यपदाध्याहारः ।

**कर्मणाऽऽहुः सिद्धिमेके परत्र**
**हित्वा कर्म विद्यया सिद्धिमेके ।**
**नाभुञ्जानो भक्ष्यभोज्यस्य तृप्ये-**
**द्विद्वानपीह विहितं ब्राह्मणानाम्** ॥ ६ ॥

**नाभुञ्जानो भक्ष्य भोज्यस्य** इत्यत्र भोजनविषयज्ञानवत् भोजन-कर्मवच्च ज्ञानकर्मणोरुभयोरप्यावश्यकतेति भावः ।

---

१. BORI पृ. १०० ; 'समक्षम्' इति कुं पाठः ।

[१]ते चेदिमं कौरवाणामुपायमवगच्छेयुरवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्या दार्ये वृत्ते [२]भैमसेनान्निगृह्य ॥१९॥

**ते चेदिमं कौरवाणाम्** इत्यत्र उपायं सामाख्योपायम् । **भैमसेनान्निगृह्य** इत्यत्र भीमसेनसम्बन्धिनो राज्ञः **निगृह्य** नितरामनुगृह्य अनाशयित्वेत्यर्थः ।

श्रेयांस्तस्माद्यदि विद्येत कश्चित्
अभिज्ञातः सर्वधर्मोपपन्नः ।
[३]सतां दुष्टाननुशिष्यन् प्रजानां
न वैतद् गृध्येदिति तस्मिन्नसाधु ॥ २९ ॥

**सतां दुष्टान्** इत्यत्र सतामर्थे, इति अनेन प्रकारेण वर्तमाने **तस्मिन्** राज्ञि असाधु अमङ्गलं **न गृध्येद्वै** नाकाङ्क्षेत् ।

यदा गृध्येत्परभूतौ नृशंसो [४]विधिप्रकोपाद्विधिं आदधानः ।
ततो राज्ञामभवद्युद्धमेतत्तत्र जातं वर्म शस्त्रं धनुश्च ।
इन्द्रेणैतद्दस्युवधाय कर्म उत्पादितं वर्म शस्त्रं धनुश्च ॥ ३० ॥

**विधिप्रकोपाद्विधिम्** इत्यत्र 'विधिर्विधाने दैवेऽपि'[५] इत्यभिधानात् विधिना परकृतसेनाविधानेन जातप्रकोपात् **विधिं** स्वभटान् प्रति एवं कुरु एवं कुर्विति कर्तव्यार्थोपदेशं **आदधानः** कुर्वन् ।

१. T,G$_{1,3}$,M; BORI पृ. १०५; 'ते चेदिमे' इति कुं पाठः ।
२. 'भीमसेनं निगृह्य' इति कुं पाठः ।
३. B$_4$,D$_{1,5,6}$,G$_5$; BORI पृ. १०५; 'स तं द्रष्टुमनु–' इति कुं पाठः ।
४. M$_{1,inf,lin}$; BORI पृ. १०५; 'विधिप्रकोपाद्बलमाददानः' इति कुं पाठः ।
५. अ.को. ३-३-१००

स्तेनो हरेद्यत्र धनं [१]प्रणष्टः
प्रसह्य वा यत्र हरेत दृष्टः ।
उभौ गर्ह्यौ भवतः सञ्जयैतौ
[२]किं पृच्छसे धृतराष्ट्रस्य पुत्रे ॥ ३३ ॥

**स्तेनो हरेत्** इत्यत्र **यत्र** यस्य राज्ञः देशे **प्रणष्टः** 'नश अदर्शने' इति धातोः प्रकर्षेणादर्शनं प्राप्तः । उभौ **एतौ** राजानौ । **किं पृच्छसे धृतराष्ट्रस्य पुत्र** इत्यत्र धृतराष्ट्रस्य पुत्र इति विषयसप्तमी ।

सोऽयं लोभान्मन्यते धर्ममेतं
यमिच्छति क्रोधवशानुगामी ।
भागः पुनः पाण्डवानां निविष्ट-
स्तं नः कस्मादाददीरन्परे वै ॥ ३४ ॥

**भागः पुनः** इत्यत्र पाण्डवानां भागः **निविष्टः** कौरवराज्ये प्रविष्टः । **परे** पाण्डवाः ।

[३]अस्मत्पदे युध्यतां नो वधोऽपि
श्लाघ्यः [४]पित्र्यः परराज्याद्विशिष्टः ।
एतान् धर्मान् कौरवाणां पुराणा-
नाचक्षीथाः सञ्जय राज्यमध्ये ॥ ३५ ॥

---

१. **'ह्यदृष्टः'** इति कुं पाठः ।
२. **'किं वै पृथक्त्वं'** इति कुं पाठः ।
३. **'अस्मिन् पदे'** इति कुं पाठः ।
४. BORI पृ. १०६: **'पित्र्यं परराज्याद्विशिष्टम्'** इति कुं पाठः ।

**अस्मत्पदे** अस्मदीयराज्यस्थानविषये । **पित्र्यः** भागः **परराज्यात्** परेण दत्तराज्यात् ।

**एते मदान्मृत्युवशाभिपन्नाः समानीता धार्तराष्ट्रेण मूढाः ।**
**इदं पुनः कर्म पापीय एव सभामध्ये पश्य वृत्तं कुरूणाम् ॥३६॥**

**एते** दुर्योधनसहायार्थमागता राजानः ।

**तां चेत्तदा ते सकुमारवृद्धा**
**अवारयिष्यन् कुरवः समेताः ।**
**मम प्रियं धृतराष्ट्रोऽकरिष्यत्**
**पुत्राणां च [१] कृतमस्मात् भविष्यत् ॥ ३८ ॥**

**पुत्राणां च कृतम्** इत्यत्र **अस्मात्** धृतराष्ट्रात् पुत्राणां **कृतं** शर्म कृतं **भविष्यत्** अभविष्यत् ।

**कार्पण्यादेव सहितास्तत्र [२] राजः**
**नाशक्रुवन्प्रतिवक्तुं सभायाम् ।**
**एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो**
**धर्मबुद्ध्या प्रत्युवाचाल्पबुद्धिम् ॥ ४० ॥**

**सहितास्तत्र राज** इत्यत्र 'राजा राट् पार्थिवो नृपः' [३] इत्यभिधानात् **राजः** राजानः ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

---

१. $M_{1,inf,lin}$; BORI पृ.१०६; **'कृतमस्याभविष्यत्'** इति कुं पाठः ।
२. **'भूपा'** इति कुं पाठः । ; ३. अ.को. २.८.१

## ।। अथ त्रिंशोऽध्यायः ।।

इतो गत्वा सञ्जय क्षिप्रमेव
उपातिष्ठेथा ब्राह्मणान् ये तदर्हाः ।
[१] विशुद्धकृत्यांश्चरणोपपन्नान्
कुले जाताः सर्वधर्मोपपन्नाः ।। ७ ।।

विशुद्धकृत्यांश्चरणोपपन्नान् इत्यत्र चरणमाचरणम् आचारः ।

आचार्य इष्टो नयगो विधेयो
वेदानभीप्सन् ब्रह्मचर्यं चचार ।
योऽस्त्रं चतुष्पात्पुनरेव चक्रे
द्रोणः प्रसन्नोऽभिवाद्यस्त्वयासौ ।। १२ ।।

योऽस्त्रं चतुष्पात् इत्यत्र चतुष्पात् चत्वारो धर्मपादा यस्य स तथोक्तः ।

वृन्दारकं कविमर्थेष्वमूढं
महाप्रज्ञं सर्वधर्मोपपन्नम् ।
न तस्य युद्धं रोचते वै कदाचि-
द्वैश्यापुत्रं कुशलं तात पृच्छेः ।। २९ ।।

वृन्दारकं कविम् इत्यत्र वृन्दं क्षत्रियवृन्दं सौजन्यादिना आ सम्यक् रमयतीति वृन्दारः, स्वार्थे कप्रत्ययः । वृन्दार एव वृन्दारकः ।

---

१. 'विशुद्धवीर्यांश्चरणोपपन्नाः' इति कुं पाठः ।
२. BORI पृ. ११३; 'कुरुमध्येष्वमूढं' इति कुं पाठः ।

**यस्य कामो वर्तते नित्यमेव**
**नान्यः शमात् भारतानामिति स्म ।**
**स बाह्लीकानामृषभो मनस्वी**
**पुरा यथा माभिवदेत्प्रसन्नः ॥ १९ ॥**

**यस्य काम** इत्यत्र शमादन्यः कामो न वर्तत इति योजना । **मा** मां प्रति प्रसन्नः यथा **अभिवदेत्** अभिमुखः सन् वदेत् तथा कुर्विति योजना ।

[1] **अन्तर्भूताः** सेनान्तर्विद्यमानाः ।

**कच्चित्पुत्रा जीवपुत्राः सुसम्य-**
**ग्वर्तन्ते वो वृत्तिमनृशंसरूपाः ।**
**इति स्मोक्ता सञ्जय ब्रूहि पश्चा-**
**दजातशत्रुः कुशली सपुत्रः ॥ ३५ ॥**

**कच्चित्पुत्रा** इत्यत्र जीविकादानेन गृहीताः पुत्राः **जीवपुत्राः** ।

[2] **या नो भार्याः सञ्जय वेत्थ तत्र**
**तासां सर्वासां कुशलं तात पृच्छेः ।**
**सुसङ्गुप्ताः [3] सुरतयोऽनवद्याः**
**कच्चिद्गृहानावसथाप्रमत्ताः ॥ ३६ ॥**

**या नो भार्या** इत्यत्र **भार्याः** स्वपतीनामभावे भर्तुं योग्याः दुर्योधनादीनां पत्नयः **सुरतयः** सुष्ठु रतिर्यासां ताः सुरतयः ।

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

२. '**राज्ञो**' इति कुं पाठः । ; ३. '**सुरभयोऽनवद्याः**' इति कुं पाठः ।

दास्यः स्पुर्या ये च दासाः कुरूणां
तदाश्रया बहवः कुब्जखञ्जाः ।
आख्याय मां कुशलिनं स्म तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम् ॥ ४१ ॥

खञ्जः एकपादः ।

अन्धाश्च सर्वे बधिरास्तथैव
[१]ध्वस्ता(ऽ)जीवा बहवो येऽत्र सन्ति ।
आख्याय मां कुशलिनं स्म तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम् ॥ ४३ ॥

**ध्वस्ता(ऽ)जीवा** इत्यत्र ध्वस्तः **आजीवः** जीविका येषां ते स्थविराः सेवका इत्यर्थः ।

[२]ये चान्यथा दुर्बलाः सर्वकाल-
मात्मन्येव प्रयतन्तेऽथ मूढाः ।
तांश्चापि त्वं कृपणान् सर्वथैव
ह्यस्मद्वाक्यात् कुशलं तात पृच्छेः ॥ ४७ ॥

**ये चान्यथा** इत्यत्र **अन्यथा** वैपरीत्येन प्रयतन्त इति सम्बन्धः ।

॥ इति त्रिंशोऽध्यायः ॥

* * *

---

१. **'ह्स्ताजीवा'** इति कुं पाठः ।
२. **'ये चानाथा'** इति कुं पाठः ।

## ॥ अथ एकत्रिंशोऽध्यायः ॥

**[१]अलं विज्ञापनाय स्यात् आचक्षीथा यथातथम् ।**
**अथ मन्त्रं मन्त्रयित्वा याथातथ्येन हृष्टवत् ॥ ३ ॥**

**अलं विज्ञापनाय** इत्यत्र विज्ञापनाय यत् **अलं** शक्यं भवति तदाचक्षीथा इति योजना ।

**तथा भीष्मं शान्तनवं [२]भारतानाममद्ध्यपम् ।**
**शिरसाऽभिवदेथास्त्वं मम नाम प्रकीर्तयन् ॥ ८ ॥**

**भारतानाममद्ध्यपम्** इत्यत्र राजानः प्रायो मद्यपा भवन्ति । भीष्मस्तु व्रतशीलत्वात् मद्यं न पिबतीति सूचनाय अमद्ध्यपमित्युक्तम् ।

॥ इति एकत्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

**धृतराष्ट्र उवाच –**

**आचक्ष्व मां [३]सुखिनं [४]काल्यमस्मै**
**प्रवेशयतां स्वागतं सञ्जयाय ।**
**न चाहमेतस्य भवाम्यकल्पः**
**स मे कस्माद्द्वारि तिष्ठेच्च सक्तः ॥ १४ ॥**

**आचक्ष्व मां सुखिनम्** इत्यत्र **काल्यं** कालः अवकलनं दर्शनं तस्य योग्यमाचक्ष्व ।

---

१. BORI पृ. ११८; **'बलं जिज्ञासमानस्य'** इति कुं पाठः ।
२. **'भारतानां पितामहम्'** इति कुं. पाठः ।
३. $B_{4\text{-}5}$,$D_5$,$D_{2\text{-}4.7.9}$,$G_5$; BORI पृ. १२२; **'कुशलिनं'** इति कुं. पाठः ।
४. K,$B_{4\text{-}5}$,D,$C_{(a.d.s)}$; BORI पृ. १२२; **'कल्पमस्मै'** इति कुं. पाठः ।

धृतराष्ट्र उवाच –

अभिनन्द्य त्वां तात वदामि सञ्जय
अजातशत्रुं च सुखेन पार्थम् ।
कच्चित्स राजा कुशली सपुत्रः
सहामात्यः सानुजः कौरवाणाम् ॥ १८ ॥

**अभ्येत्य त्वां तात वदामि** इत्यत्र अजातशत्रुं पार्थमभ्येत्य सुखेन आगतं त्वमिति योग्यपदाध्याहारेण योजना ।

सञ्जय उवाच–

सहामात्यः कुशली पाण्डुपुत्रो
भूयश्चाहो[1] यत्र तेऽग्रे मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमान् शीलवांश्च ॥ १९ ॥

**भूयश्चाहो यत्र तेऽग्रे मनोऽभूत्** इत्यत्र **अग्रे** विभागसमये **यत्र** राज्ये ते मनोऽभूत्, भूयश्च तदेवाकाङ्क्षते, अहो । 'बुभूषते' इति पाठे स्पष्टम् । **निर्णिक्तधर्मार्थकरः** 'निर्णिक्तं शोधितं मृष्टम्'[2] इत्यभिधानात् शुद्धधर्मार्थौ करोतीति स तथोक्तः ।

परो धर्मः पाण्डवस्यानृशंस्यं धर्मः परो वित्तचयात्मनोऽस्य ।
सुखप्रियेऽधर्महीनेऽनपार्थे नु रुध्यते भारत तस्य बुद्धिः ॥२०॥

---

१. $D_{2\text{-}4}$; BORI पृ. १२३; 'बुभूषते यच्च तेऽग्रे त्मनोऽभूत्' इति कुं. पाठः ।
२. अ.को. ३-१-५६

**धर्मः परो वित्तचयात्मनोऽस्य** इत्यत्र **वित्तचयात्मनः** वित्तसमूह-रूपस्य **अस्य** राज्यस्य मध्ये ।

**[१]नन्वेव मन्ये पौरुषं कर्मणो हि संवर्तते सुप्रयुक्तं यथावत् ।**
**मातुः पितुः कर्मणाभिप्रसूतः संवर्धते विधिवद्भोजनेन ॥ ३४ ॥**

**नन्वेव मन्य** इत्यत्र **यत्र** पुरुषे यत्कर्म यथावत् युक्तं भवति, तस्य पुरुषस्य तदेव कर्म सम्पद्यत इति मन्ये ननु इति पदयोजना । **पौरुषं कर्मणो हि** इत्यत्र कर्मणः **पौरुषं** सामर्थ्यं आहुः । मातुः पितुः सकाशात् । **कर्मणा** सिद्धेन भोजनेन ।

शुष्ककर्मैव नालम्, किन्तु हर्यनुग्रहोऽप्यपेक्षित इत्याह – **परेति** ।

**परप्रयुक्तः पुरुषो विचेष्टते सूत्रप्रोता दारुमयीव योषा ।**
**इमं च दृष्ट्वा नियमं पाण्डवस्य [२]मन्ये वरं कर्म दैवं मनुष्यात्**
**॥ २१ ॥**

**इमं च दृष्ट्वा तव कर्मदोषं पापोदर्कं घोरमवर्णरूपम् ।**
**यावत्परः कामयतेऽतिवेलं तावन्नरोऽयं लभते प्रशंसाम् ॥२२॥**

**परप्रयुक्तः** परमात्मना प्रयुक्तः । **मन्ये** [३]**वरं** इत्यत्र मनुष्यात् मनुष्य-प्रयत्नात् । इमं तव कर्मदोषं च दृष्ट्वा मनुष्यात् कर्म दैवं च वरं मन्ये इति पूर्वोणान्वयः ।

---

१. **'नत्वेव मन्ये पुरुषस्य कर्म'** इति कुं. पाठः ।
२. **'मन्ये परं'** इति कुं पाठः ।
३. **'परम्'** सो.मु.पा ।

[1]अङ्गात्मनः कर्म निबोध राजन् धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राजन् भूयश्च पापं प्रसजेदमुत्र ॥२४॥

**अङ्गात्मन** इत्यत्र 'अङ्गेत्यामन्त्रणेऽव्ययम्' इत्यमरः[2] । **अङ्गेति** धृतराष्ट्रस्य सम्बोधनम् । विशेषेण सृजन् **विसृजन्** **अमुत्र** इह च **उपक्रोशम्** उपक्रोशति रोदित्यनेनेति उपक्रोशो दुःखम्, गतोऽसीति योजना ।

हीनप्रज्ञो दौष्कुलेयो नृशंसो दीर्घं वैरी क्षत्रविद्यास्वधीरः ।
एवंधर्मा नापदः संश्रयेयुर्हीनवीर्यो यश्च भवेदशिष्टः ॥ २६ ॥

**एवंधर्मा नापद** इत्यत्र **एवंधर्मा** पूर्वोक्तपापमेव धर्मो विशेषणं यस्य स तथोक्तः ।

तव ह्यमी मन्त्रविदः समेत्य समासते कर्मसु नित्ययुक्ताः ।
तेषामयं बलवान्निश्चयश्च [3]कुरुक्षयार्थे निरयो व्यपायी ॥ २९ ॥

**व्यपायी** विशेषेण धर्मार्थयोः सम्भ्योदितमन्त्राणां च अपायोऽस्यास्तीति **व्यपायी** ।

अकालिकं कुरवो नाभविष्यन्
पापेन चेत्पापमजातशत्रुः ।
इच्छेज्जातु त्वयि पापं विसृज्य
निन्दा चेयं तव लोकेऽभविष्यत् ॥ ३० ॥

---

१. BORI पृ. १२३; **'हन्तात्मनः'** इति कुं पाठः ।
२. अयं मुद्रितकोशेषु नोपलभ्यते ।
३. BORI पृ. १२५; **'कुरुक्षये नियमेनोदपादि'** इति कुं पाठः ।

कालिकाः मृत्युकालवन्तो न भवन्तीत्यकालिकाः, अकालिका यथा भवन्ति तथा अकालिकम्, अजातशत्रुः त्वयि जातु **पापं** हिंसारूपपापं **विसृज्य** अकृत्वा पापे साक्षाद्दुर्द्यूताख्यपापकर्तरि दुर्योधने **पापं** तदैव हननाख्यपापं **इच्छेच्चेत्** चरेच्चेत् तदैव कुरवो नाभविष्यन् । यद्य-स्मात्कर्मणः त्वयि **निन्दा च** द्यूतं न निवारितवानिति अकीर्तिश्च तत् तदैवाभविष्यत् ।

**किमन्यत्र विषयात् ईश्वराणां**
**यत्र पार्थः परलोकं स्म द्रष्टुम् ।**
**अत्यक्रामत् स तथा सम्मतः स्यात्**
**न संशयो नास्ति मनुष्यकारः ॥ ३१ ॥**

**किमन्यत्र विषयात्** इत्यत्र **ईश्वराणां** समर्थानामर्जुनादीनां विषयात् अन्यत्र किं किं वीर्यमस्ति । यत्र यस्मात् **मनुष्यकारः** मनुष्यान् अधः करोतीति स तथोक्तः ।

**न त्वेव मन्ये पुरुषस्य कर्म संवर्तते सुप्रयुक्तं यथावत् ।**
**मातुः पितुः कर्मणाभिप्रसूतः संवर्धते विधिवद् भोजनेन ॥३४॥**

**नान्यप्रीत** इत्यत्र **अन्यप्रीतः** हरेरन्येषु विषयेषु प्रीतः । **तत्र** इन्द्रियेषु । मातुः पितुः सकाशात् । **कर्मणा** स्वकर्मणा । **भोजनेन** कर्मणा प्राप्त-भोजनेनैव ।

**स त्वां गर्हे भारतानां विरोधादन्तो नूनं भवितायं प्रजानाम् ।**
**नोचेदिदं तव कर्मापराधात् कुरून् दहेत्कृष्णवर्त्मेव कक्षम् ३६**

**प्रजानाम्** इत्यत्र **प्रजानां** सन्ततीनाम् । **नो चेत्** सन्ततिक्षयो नो चेत् ।

**त्वमेवैको जातु पुत्रस्य राजन् वशं गत्वा सर्वलोके नरेन्द्र ।**
**कामात्मनः श्लाघनो द्यूतकाले नागाः शमं पश्य विपाकमस्य ३७**

**नागाः शमम्** इत्यत्र शमं न अगा इति सम्बन्धः ।

॥ इति द्वात्रिंशोऽध्याय ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**धृतराष्ट्र उवाच–**

**प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम् ।**
**अहं हि विदुरस्यास्य [1]नाकाल्यो जातु दर्शने** ॥ ५ ॥

**नाकाल्यो जातुदर्शन** इत्यत्र **अकाल्यः** कालायोग्यः न ।

**विदुर उवाच–**

**अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।**
**हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः** ॥ १४ ॥

**आविशन्ति प्रजागरा** इत्यत्र **प्रजागराः** जाग्रदवस्थाः ।

**विदुर उवाच–**

**[2]राजलक्षणसम्पन्नस्त्रैलोक्यस्याधिपो भवेत् ।**
**प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः** ॥ १७ ॥

---

१. BORI पृ. १२७; **'नाकल्पो'** इति कुं पाठः ।
२. $G_{3-5}$,M; BORI पृ. १२९; **'राजा लक्षण–'** इति कुं पाठः ।

**राजलक्षणसम्पन्न** इत्यत्र त्रैलोक्यस्यापि प्रियः यः राजलक्षणसम्पन्नो भवति, तं युधिष्ठिरं प्रति दूताः प्रेषिताः, उपरि प्रेष्यन्ते च। राजलक्षण-सम्पन्ने युधिष्ठिरे राज्यादानात् दूतप्रेषणं व्यर्थमिति भावः। एतदेव सूचयितुं प्राक् तद्विशेषणम्।

**विपरीततरश्च त्वं भागधेये न सम्मतः।**
**अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ १८ ॥**

**विपरीतः** दुश्शीलदुर्योधनादिभ्यो विपरीतः धर्मराजः।

**एकस्माद्वृक्षाद्यज्ञपात्राणि राजन्**
**स्रुक् च द्रोणी [१]पीडिनी लोडिनी च।**
**एतस्माद्राजन्ब्रुवतो मे निबोध**
**एकस्माद्वै जायतेऽसच्च सच्च ॥ २२ ॥**

**एकस्माद्वृक्षात्** इत्यत्र **एकस्माद्वृक्षात्** अश्वत्थवृक्षात् यज्ञपात्राणि स्रुक् च काष्ठादिना जायते, तथा **पीडिनी** पीडाकर्त्री, **लोडिनी** विषादिरसानां लोडनकर्त्री, **द्रोणी** द्रोणाख्यः पात्रविशेषश्च जायते। एवं तव कुल एव सुपुत्रोऽपि जातः, दुष्पुत्रोऽपि जात इति भावः।

**क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।**
**[२]यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ २४ ॥**

**क्रोधो हर्ष** इत्यत्र **हर्षः** धनमदादिना हर्षः। **ह्रीः** पूज्यपूजने लज्जा।

---

१. 'पेठनीपीडने च' इति कुं पाठः।
२. 'यमर्थान् न अपकर्षन्ति' इति कुं पाठः।

**मान्यमानिता** 'मानश्चित्तसमुन्नतिः'[१] इति वचनात् अहं सर्वेभ्यो मान्य इति चित्तसमुन्नतिः । **अर्थाः** अर्थरूपा इमे पदार्थाः ।

**यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।**
**समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ २६ ॥**

**यस्य कृत्यं न विघ्नन्ति** इत्यत्र **विघ्नन्ति** विशेषेण घ्नन्ति विघ्नन्ति ।

**निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।**
**अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ ३१ ॥**

**नान्तर्वसति** इत्यत्र कर्मणः अन्तः मध्य एव न वसति, कर्माऽसमाप्य न तिष्ठतीत्यर्थः ।

**प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।**
**आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ ३५ ॥**

**प्रवृत्तवाक्** 'वृत्तं पद्ये चरित्रे च'[२] इति वचनात् प्रकृष्टानां वृत्तं चरित्रं वक्तीति प्रवृत्तवाक् ।

**अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।**
**अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३८ ॥**

**अश्रुतः** शास्त्रश्रवणरहितः ।

**स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।**
**मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३९ ॥**

---

१. अ.को. १-७-२२ ; २. अ.को. ३-३-७८

**स्वमर्थं यः परित्यज्य** इत्यत्र **स्वं** स्वकीयम् **अर्थं** स्नानजपादिकम्। **परार्थं** परेषां शूद्रादीनाम् अर्थं नीचसेवनादिकम्।

**अकामान् कामयति यः कामयानान् परित्यजेत्।**
**बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ४० ॥**

**अकामान्** कामायोग्यान् परदारादीन्। **कामयानान्** स्वदारान्।

**संसारयति कृत्यानि सर्वत्र विचिकित्सते।**
**चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ४२ ॥**

**संसारयति कृत्यानि** इत्यत्र **कृत्यानि** पुण्यकर्माणि **संसारयति** 'सृ गतौ' इति धातोः सर्वान् प्रति प्रापयति उपदिशतीत्यर्थः। स्वयं तु नाचरतीति भावः। **विचिकित्सते** संशयं करोति।

**एकः पापानि कुरुते फलं भुङ्क्ते महाजनः।**
**भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ४९ ॥**

**एकः पापानि कुरुत** इत्यत्र **फलं** तत्संसर्गवशात् ऐहिकानर्थरूपम्। मुच्यन्ते पारत्रिकनरकाद्यनर्थात्।

**एकया [1]द्वौ विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु।**
**पञ्च जित्वा [2]विजित्वा षट् सप्त हित्वा सुखी भव ॥ ५१ ॥**

**एकया द्वौ विनिश्चित्य** इत्यत्र **एकया** कर्मकाण्डब्रह्मकाण्डयोः अन्यतरया कर्मकाण्डरूपया वेदवाचा **द्वौ** प्रवृत्तिनिवृत्तिमार्गौ

---

१. **'द्वे'** इति कुं. पाठः; २. B₁; BORI पृ. १३२; **'विदित्वा'** इति कुं. पाठः

**विनिश्चित्य** विभागेन निश्चित्य पुनः 'अथातो धर्मजिज्ञासा' इति प्रथमसूत्रोक्तरीत्या 'अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्'[१] इति श्रुत्यर्थपर्यालोचनया ज्ञानद्वारा मोक्षसाधननिवृत्ति-धर्माणामेव सर्वत्र जिज्ञासितत्वान्निवृत्तिमार्गो विशिष्ट इति च निश्चित्य, **चतुर्भिः** फलमनपेक्ष्य केवलं कृष्णार्पणबुद्ध्या कृतैः 'त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति । प्रथमस्तप एव'[२] इति श्रुतेः 'यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः'[३] इति अत्रैव वक्ष्यमाणत्वाच्च यज्ञाध्ययनदानतपोरूपैश्चतुर्भिर्निवृत्तिधर्मैः **त्रीन्** धर्मार्थकामरूपान् प्रवृत्तिधर्मान् वशे कुरु तद्वशस्त्वं मा भूः । किन्तु तानेव वशीकृत्य प्राणधारणार्थं यावदेव भवेत् तावदेव कुरु, न तु तत्रैव श्रद्धां कुर्वित्यर्थः । 'कर्मणा ज्ञानमातनोति' इति श्रुतेः उक्तैर्निवृत्तिधर्मैः शुद्धान्तःकरणस्त्वं **पुनरेकया** ब्रह्मकाण्डरूपया वेदवाचा द्वौ 'द्वा सुपर्णा'[४] इत्यादिश्रुत्युक्तौ जीवपरमौ विनिश्चित्य प्रथमद्वितीयाध्यायोक्तैः 'भेदव्यपदेशात्'[५] 'स्थित्यदनाभ्यां च'[६] इत्यादिभेदप्रतिपादकसूत्रैः विलक्षणाविति निश्चित्य पुनः समन्वयाविरोधाध्यायद्वयोक्तगुणपूर्णत्वनिर्दोषत्वाख्य-धर्मबलात् तयोर्मध्ये विष्णुर्विशिष्ट इति च निश्चित्य पुनः साधनाध्यायोक्तरीत्या **चतुर्भिः** वैराग्यभक्त्युपास्त्यपरोक्षज्ञानाख्यै-श्चतुर्भिः साधनैः तदनन्तरं फलाध्यायोक्तरीत्या 'यत्र तत्परमं पदं विष्णोर्लोके महीयते । लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधि' इत्यादिश्रुतेः 'येनापवर्गाख्यम्' इति स्मृतेश्च त्रीन् अपवर्गाभिधान् वैकुण्ठश्वेतद्वीपानन्तासनाख्यान् **त्रीन्** विष्णुलोकान् वशे कुरु । यदा

१. ऋ.सं. ८-४८-३; अ.शिर. ३/२.

२. छां. २-२-१६ ; ३. उद्योग. ३५-६७

४. अथर्व (३-१-१), ऋ.सं. (१-१६४-२०); श्वेता (४-६)

५. ब्र.सू. १-३-५ ; ६. ब्र.सू. १-३-७

यस्मिन् लोके तिष्ठासा तदा तत्र स्थितिर्यथा भवेत् तथा हरेरनुग्रहं सम्पादयेति भावः । तदनन्तरं प्रारब्धकर्मभोगानां परिपाके सति **पञ्च** बाह्यज्ञानेन्द्रियाणि तथा पञ्च कर्मेन्द्रियाणि च जित्वा **षट्** काम-क्रोधादीन् अन्तःकरणधर्मान् विजित्वा सप्त त्वक्चर्मरुधिर-मांसमेदोमज्जास्थिरूपान् सप्तधातून् हित्वा सुखी आनन्दमीमांसोक्त-स्वरूपसुखानुभववान् भव । न तु तार्किकोक्तरीत्या आत्यन्तिकदुःख-निवृत्तिमात्रेण तुष्टो भव । नापि मायिमते विश्वासेन 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्'[१] इति श्रुतौ कात्स्न्येन जीवमनोवाचामप्यगोचरतयोक्तस्य अत एव जीवैरलभ्यस्य सामान्यतो जीवानां वेदनमात्रयोग्यस्य च ब्रह्मानन्द-स्याप्यनुभववान् भव । अनवच्छिन्नब्रह्मसुखस्य अलभ्यतया[२] ऽभवत्या-शीर्वादायोगात् स्वयोग्यसुखमेवात्रोच्यत इति भावः । सु शोभनानि प्रसन्नानि खानि येन भवन्ति **तत्सुख**मिति व्युत्पत्तेः स्वरूपभूतज्ञानेन्द्रियै-र्व्यज्यमानसुखवान् भव । न तु मायिरीत्या स्वरूपभूतचिद्रूपदेहस्या-प्यभाववान् भव । सुखीत्युक्त्या स्वरूपभूतदेहसुखादावपि विशेषशक्त्या अङ्गाङ्गिभावः सुखत्वं सुखित्वमित्यादिभेदव्यवहारोऽप्यस्तीति समग्र-वाक्यार्थो ज्ञेयः ।

**एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।**
**सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव** ॥ ५४ ॥

**एकमेवाद्वितीयं तत्** इत्यत्र **एकं** स्वगतभेदवर्जितम् । 'अस्य गोर्द्वितीयेन भवितव्यमित्युक्ते सदृशो गौरेवानीयते, नाश्वो न गर्दभः' इति वचनात् **अद्वितीयम्** असदृशम् ।

---

१. तैत्ति. २-७ ; २. 'अलभ्यतयाऽभवेत्याशीर्वादायोगात्' सो.मु.पा.

**द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।**
**राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ६० ॥**

**सर्पो बिलेशयानिव** इत्यत्र **बिलेशयान्** मूषिकान् ।

**वरप्रदानं राज्यं च पुत्रजन्म च भारत ।**
**शत्रोश्च मोक्षणं कृच्छ्रात् त्रीणि चैकं च तत्समम् ॥ ७४ ॥**

**शत्रोश्च मोक्षणम्** इत्यत्र शत्रोः सकाशात् ।

**स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।**
**महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ९९ ॥**

**महच्च दण्डपारुष्यम्** इत्यत्र राज्ञो दण्डदानसमये पारुष्यं **दण्डपारुष्यम्** । **अर्थदूषणं** दत्तस्य द्रव्यस्य दूषणम् ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुःस्त्रिंशोऽध्यायः ॥

**मिथ्योपेतानि कर्माणि सिद्ध्येयुर्यानि भारत ।**
**अनुतापप्रयुक्तानि[१] मा स्म तेषु मनः कृथाः ॥ ६ ॥**

**मिथ्योपेतानि** इत्यत्र **मिथ्योपेतानि** छद्मना सहितानि **अनु** अनन्तरं **तापप्रयुक्तानि** तापैः[२] तपस्तपनादितापैः प्रकर्षेण युक्तानि कर्माणि यदि सिध्येयुः तात्कालिकजयाख्यफलेन फलवन्ति भवन्ति । तेषु मनः मा स्म कृथा इति योजना ।

---

१. 'अनुपायप्रयुक्तानि' इति कुं पाठः ।; २. 'तमः पतनादितापैः' सो.मु.पा.

**तथैव योगविहितं यत्तु कर्म न सिध्यति ।**
**उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥**

**उपाययुक्तम्** **उप** समीपे कालान्तरे जन्मान्तरे वा **आयेन** फललाभेन युक्तं **योगविहितं** **योगः** नियोगः विधिः तेन विहितं कर्म यदि न सिध्येत्, **तत्र** तस्मिन् कर्मणि ।

**अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।**
**सम्प्रधार्य च कुर्वीत सहसा न समाचरेत् ॥ ८ ॥**

**अनुबन्धान्** इत्यत्र **अनुबन्धान्** सहायान् ।

**अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम् ।**
**उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९ ॥**

**उत्थानम्** अभिवृद्धिम् ।

**न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम् ।**
**श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२ ॥**

**वर्तितव्यमसाम्प्रतम्** इत्यत्र **असाम्प्रतम्** अयुक्तं यथा भवति तथा ।

**अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।**
**कृतः पुरुषकारोऽहि भवेध्येषु निरर्थकः ॥ २० ॥**

**केचिन्नित्यं तथागता** इत्यत्र **तथा आगताः** स्वप्रयत्नं विना दैवेनैव आगताः । **पुरुषकारः** पुरुषप्रयत्नः ।

**ऋजु पश्यति यः सर्वं चक्षुषा नु पिबन्निव ।**
**आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २४ ॥**

**आसीनमपि तूष्णीकम्** इत्यत्र 'तूष्णींशीलस्तु तूष्णीक'[१] इत्यभिधानात् **तूष्णीकम्** तूष्णींशीलम् ।

**सुव्याहृतानि महतां सुकृतानि ततस्ततः ।**
**सञ्चिन्वन्धीर आसीत शिलाहारी शिलां यथा** ॥ ३४ ॥

**शिलाहारी शिलां यथा** इत्यत्र **शिलाहारी** शिलाकणभक्षकः पारावतः ।

**यदतप्तं प्रणमते[२] न तत्सन्तापमर्हति ।**
**यच्च स्वयं नतं दारु न तत्सन्नामयेद्बुधः** ॥ ३७ ॥

**यदतप्तं प्रणमते** इत्यत्र **अतप्तम्** अयस्सारकृतशस्त्रादि ।

**मानेन रक्ष्यते धान्यमश्वान् रक्षेदनुक्रमात् ।**
**अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः** ॥ ४१ ॥

**अश्वान् रक्षेदनुक्रमात्** इत्यत्र **अनुक्रमात्** अनुकूलात् पादविक्षेपात् इतस्ततो धावनादित्यर्थः ।

**जिता सभा वस्त्रवता समाख्या गोमता जिता ।**
**अध्वा जितो यानवता सर्वं शीलवता जितम्** ॥ ४८ ॥

**समाख्या गोमता जिता** इत्यत्र **समाख्या** सं सम्यगाख्या प्रकथनं यस्याः सा विद्वत्सभा **गोमता** वाक्यवता वाग्मिनेत्यर्थः ।

---

१. अ.को. ३-१-३९
२. T,G$_{(except\ G2)}$; BORI पृ. १४३; **'प्रणमति'** इति कुं पाठः ।

**आढ्यानां मांसपरमं [१]मध्यमानां गोरसोत्तरम् ।**
**[२]लवणोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ५० ॥**

**आढ्यानां मांसपरमम्** इत्यत्र **आढ्यानां** स्थूलकायानां मदान्धानां इदानीं तव पुत्राणाम् । **मध्यमानाम्** ईषद्भाग्यवताम् । **दरिद्राणाम्** अर्थरहितानां पाण्डवानां **लवणोत्तरं** लवणसमुद्रा एव उत्तरा यस्य एतादृशं राज्यमेव भोजनम् ।

**सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।**
**क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५१ ॥**

**सम्पन्नतरमेवान्नम्** इत्यत्र **दरिद्राः** पाण्डवाः **सम्पन्नान्** सम्यग्युद्धाय प्राप्तान् तरन्त्यतिक्रामन्त्यनेनेति **सम्पन्नतरं** शौर्यं तदेव **अन्नं** अन्नमिव भुञ्जते 'भुज पालनाभ्यवहारयोः' इति धातोः पालयन्ति ।

**इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।**
**तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५५ ॥**

**नक्षत्राणि ग्रहैरिव** इत्यत्र गृह्णन्त्यप इति **ग्रहाः सूर्यकिरणाः तैः**।

**यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।**
**आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५६ ॥**

**यो जित** इत्यत्र **पञ्चवर्गेण** पञ्चेन्द्रियसमूहेन ।

**आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।**
**आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६५ ॥**

---

१. '**मध्यानां**' इति कुं पाठः ।
२. BORI पृ १४४; '**तैलोत्तरं**' इति कुं पाठः ।

**आत्मनाऽऽत्मानमन्विच्छेत्** इत्यत्र **आत्मानं** परमात्मानम् । **आत्मा** अन्तःकरणः ।

**बन्धुरात्मात्मनः तस्य येन एवात्मात्मना जितः ।**
**स एव नियतो बन्धुः स एव नियतो रिपुः ॥ ६६ ॥**

**तस्य** जीवस्य, **येन** पुरुषेण 'आत्मा देहे धृतौ यत्न'[१] इति वचनात् **आत्मना** प्रयत्नेन ।

**क्षुद्राक्षेणेव जालेन झषावपिहितावुरू ।**
**कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ६७ ॥**

**क्षुद्राक्षेण** क्षुद्रमनसा ।

**असन्त्यागात्पापकृतामपापां-**
**स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।**
**शुष्केणार्द्रं दह्यते मिश्रभावा-**
**त्तस्मात्पापैः सह सन्धिं न कुर्यात् ॥ ७१ ॥**

**शुष्केणार्द्रम्** इत्यत्र **शुष्केण काष्ठेन आर्द्रं** इन्धनम् ।

**निजानुत्पततः शत्रून्पञ्च [२]पञ्चप्रयोजनात् ।**
**यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७२ ॥**

**पञ्चप्रयोजनात्** इत्यत्र **पञ्च** इन्द्रियाणि **पञ्चप्रयोजनात्** रूप-रसादिपञ्चविषयानुभवप्रयोजनात् ।

---

१. अ.को. ३-३-१०९

२. 'पञ्चप्रयोजनान्' इति कुं पाठः ।

**आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।**
**वक्ता पापमुपादत्ते क्षममाणो विमुच्यते** ॥ ७५ ॥

अस्मानयं बाधत इति सर्वान् प्रति **रोदनमाक्रोशः** ॥

॥ इति चतुस्त्रिंशोऽध्यायः ॥

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**विरोचन उवाच –**

**प्राजापत्या [१] वयं श्रेष्ठा हि वै केशिनि सत्तमाः ।**
**अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः** ॥९॥

**प्राजापत्या वयम्** इत्यत्र **प्राजापत्याः** कश्यपप्रजापतेः पुत्राः ।

**अन्वालभे हिरण्मयं प्राह्लादे ते वरासनम् ।**
**एकत्वमुपसम्पन्नो [२] न त्वासेयं त्वया सह** ॥ १५ ॥

**न त्वासेयं त्वया सह** इत्यत्र त्वया सह न तु **आसेयं** नोपविशेयम् ।

**विदुर उवाच –**

**आदित्येन सहायान्तं प्रह्लादो हंसमब्रवीत् ।**
**[३] धृतराष्ट्रं महाप्राज्ञं सर्वज्ञं सर्वदर्शिनम्** ॥ ३२ ॥

**धृतराष्ट्रं महाप्राज्ञम्** इत्यत्र धृतराष्ट्रेति हंसस्य नाम ।

---

१. M, BORI पृ. १४९; **'हि वै श्रेष्ठा वयं'** इति कुं पाठः ।
२. BORI पृ १५०; **'नत्वासेऽहं'** इति कुं पाठः ।
३. **'धृतराष्ट्र महाप्राज्ञ'** इति कुं पाठः ।

हंस उवाच –

**पृष्टो धर्मं न विब्रूयाद्गोकर्णशिथिलं चरन् ।**

**धर्माद् भ्रश्यति राजंस्तु नास्य लोकोऽस्ति न प्रजाः ॥ ३६ ॥**

**पृष्टो धर्मं न विब्रूयात्** इत्यत्र **गोकर्णशिथिलं** गौः वाक् कर्णात् शिथिला स्रंसिता यथा भवति तथा गोकर्णशिथिलं **चरन्** आचरन् ।

**धर्म एतान् संरुजति यथा नद्यस्तु कूलजान् ।**

**ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ॥ ३७ ॥**

**धर्म एतान् संरुजति** इत्यत्र **अनुकूलजान्** कूलमनुसृत्य जातान् वृक्षान् नदी यथा ।

**श्रेष्ठोऽर्धं तु हरत्तत्र भवेत्पादश्च कर्तरि ।**

**पादस्तेपु सभासत्सु यत्र निन्द्यो न निन्द्यते ॥ ३८ ॥**

**भवेत्पादश्च कर्तरि** इत्यत्र **कर्तरि** निन्दायोग्यपापकर्तरि ।

हंस उवाच –

**यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।**

**यां च भाराभितप्ताङ्गो दुर्विवक्ता तु तां वसेत् ॥ ४१ ॥**

**यां रात्रिमधिविन्ना स्त्री** इत्यत्र **अधिविन्ना** अधि अधिकं विन्ना पतिवियोगाद्वेदनां प्राप्ता ।

**नगरे प्रतिरुद्धः [१] सन्बहिर्द्वारो बुभुक्षितः ।**

**अमित्रान्भूयसः पश्यन्दुर्विवक्ता तु तां वसेत् ॥ ४२ ॥**

---

१. $D_2$,$G_{(G4damaged)}$,M; BORI पृ. १५३; **'सन्बहिर्द्वारि'** इति कुं पाठः

**बहिर्द्वारो बुभुक्षित** इत्यत्र 'स्त्री द्वार्द्वारं प्रतीहार'[1] इत्यमरः । **द्वारः** द्वारस्य ।

**पञ्च [2]पश्वनृतं हन्ति दश हन्ति गवानृते ।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ४४ ॥**

**पञ्च पश्वनृतं हन्ति** इत्यत्र महिष्यादिपशोरर्थे अनृते उक्ते सति पञ्च पुरुषान् हन्ति ।

**प्रह्लाद उवाच –**

**मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।**
**मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥ ४६ ॥**

**सुधन्वा त्वद्विरोचन** इत्यत्र सुधन्वा त्वत् त्वत्तः श्रेयान् ।

॥ इति पञ्चत्रिंशोऽध्यायः ॥

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[3]सामुद्रिकं वणिजं चोरपूर्वं**
**[4]शालूकसूत्रं च चिकित्सकं च ।**
**अरिं च मित्रं च कुशीलत्वं च**
**नैतान् साक्ष्ये त्वधिकुर्वीत सप्त ॥ ५५ ॥**

**चोरपूर्वं** पूर्वं चोरश्चोरपूर्वः तम्, **शालू(शला)कसूत्रं** शलाके सूत्रं परिवेष्टयित्वा विक्रेता शलाकसूत्रः तम् ।

---

१. अ.को. २-३-१६ ; २. '**पश्वनृते**' इति कुं पाठः ।
३. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।; ४. '**शालाकधूर्तं**' कुं पाठः ।

[१]सुराप्रहापणो व्रात्यः कीनाशश्चात्मवानपि ।
रक्षेत्युक्तश्च यो हिंसात्सर्वे ब्रह्महभिः समाः ॥ ५९ ॥

**सुराप्रहापण** इत्यत्र पुष्पाग्रं छित्वा **हापयति** त्याजयतीति सुराप्रहापणः ।

तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः ।
शूरो भवेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रेष्वापत्सु सुहृदश्चारयश्च ॥६०॥

**तृणोल्कया ज्ञायते जातरूपम्** इत्यत्र **तृणोल्कया** तृणोपरि पतितकान्त्या **जातरूपं सुवर्णम्** ।

यज्ञे दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्य [२]चत्वार्येतान्यन्ववेतानि सन्तः ॥६७॥

**चत्वार्येतान्यन्ववेतानि** इत्यत्र **अन्ववेतानि** अनु अनुकूलतया **अवेतानि** ज्ञातानि । यज्ञादीनि चत्वारि स्वर्गसाधनत्वात् स्वर्गात् प्रागनुकूलतया ज्ञातानीति भावः । **अन्ववयन्ति** अनुकूलतया जानन्ति । स्वर्गेऽप्यपेक्षितत्वात् दमादीनि चत्वारि स्वर्गे वर्तमानाश्च अनुकूलतया जानन्तीति भावः ।

गुरुरात्मवतां शास्ता शास्ता रजा दुरात्मनाम् ।
अन्तः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ८३ ॥

**गुरुरात्मवताम्** इत्यत्र **आत्मवतां** वशीकृतचित्तानां मुनीनाम् ।

---

१. '**स्रुवप्रग्रहणो**' इति कुं पाठः ।

२. $D_2$; BORI पृ. १५६; '**चत्वार्येतान्यनुयान्ति सन्तः**' इति कुं पाठः ।

**बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।**
**तानि जङ्घाजघन्यानि भारप्रत्यवराणि च** ॥ ८७ ॥

**बुद्धिश्रेष्ठानि** इत्यत्र केवलं बुद्ध्यैव कृतत्वाच्छ्रेष्ठानि, आज्ञामात्रेण राज्यपरिपालनादीनि वीरक्षत्रियकर्माणि **बुद्धिश्रेष्ठानि** । बाहुभ्यां कृतत्वान्मध्यानि, कृषिवाणिज्यदीनि वैश्यकर्माणि **बाहुमध्यानि** । **भारप्रत्यवराणि** भारेण प्रत्यवराणि नीचानि यानि शूद्रादीनां काष्ठोद्वहनादिकर्माणि, अत एव जघन्यानि अधमानि तानि, 'सर्वं वाक्यं सावधारणम्' इति न्यायात् तान्येव जह्यात् । न तु प्रागुक्तमध्यमोत्तमकर्माणीति योजना ।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

[१]**नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी ।**
**न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुशतीं वर्जयेत**[२] ॥५॥

**रुशतीं वर्जयेत** इत्यत्र [३]'रुशती वागकल्याणी' इत्यमरः । **रुशतीं** अमङ्गलाम् ।

**परश्चेदेनमभिविद्ध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।**
[४]**विरिञ्चमानोऽप्यतिरिच्यमानो विद्यात्कविः सुकृतं मे दधाति** ॥ ९ ॥

१. कुं. ३६ अध्यायः ।
२. $K_1, D_{1,2,7}, G_{1,2}$; BORI पृ. १५९; 'वर्जयीत' इति कुं पाठः ।
३. अ.को. १-६-१८
४. 'विरिच्यमानः' इति कुं पाठः ।

**विरिञ्चमानोऽप्यतिरिच्यमान** इत्यत्र **विरिञ्चमानः** विशेषेण सृष्टिं कुर्वन्, अत एव **अतिरिच्यमानः** अतिशयं प्राप्नुवन् ब्रह्मादिरपि **बाणैः** वाग्बाणैः नाभिविध्येत, स कविरिति विद्यात् ।

**अतिवादं न प्रवदन्त वादयेत्**
**यो नाहतः प्रतिहन्यान्न घातयेत् ।**
**हन्तुं च यो नेच्छति पापकं वै**
**तस्मै देवाः स्पृहयन्त्यागताय ॥ ११ ॥**

**यो ना हतः प्रतिहन्यान्न** इत्यत्र **यो ना** पुरुषः ।

**अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।**
**प्रियं वदेद्व्याहृतं तत्तृतीयं धर्म्यं वदेत् व्याहृतं तच्चतुर्थम् ॥१२॥**

**सत्यं वदेद्व्याहृतम्** इत्यत्र सत्यं व्याहृतं वदेत् तत् द्वितीयं श्रेय इति सम्बन्धः । एवमुत्तरत्रापि द्रष्टव्यम् ।

**यतो यतो निवर्तते ततस्ततो विमुच्यते ।**
**निवर्तितात् तु सर्वतो न वेत्ति दुःखमण्वपि ॥ १४ ॥**

**निवर्तितात्तु सर्वत** इत्यत्र **निवर्तितात्** निवर्तनात् ।

**भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।**
**सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६ ॥**

**भावं** भद्रम् ।

---

१. $K_4$,$D_{3.7.9}$,$S_{(except\ T1,G2.5)}$; BORI पृ. १६० ; 'निवर्तनाद्धि सर्वतो' इति कुं पाठः ।

**न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।**
**निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९ ॥**

**परेभ्योऽप्यात्मशङ्कित** इत्यत्र **आत्मशङ्कितः** आत्मनि शङ्कितः, किं कुर्यादिति शङ्कावान् ।

**प्राप्नोति वै वित्तमसद्बलेन नित्योत्थानात्प्रज्ञया पौरुषेण ।**
**न त्वेव सम्यग्लभते प्रशंसं न वृत्तमाप्नोति महाकुलानाम् ॥२१॥**

**महाकुलानाम्** अतिशयेन कुलरहितानां वृत्तिं नाप्नोति ।

**ब्राह्मणानां परिभवात्परिवादाच्च भारत ।**
**कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ २७ ॥**

**न्यासापहरणेन च** इत्यत्र न्यस्यत इति न्यासो न्यस्तं द्रव्यम् ।

**कुलानि समवेतानि गोभिः पुरुषतोऽर्थतः ।**
**कुलसङ्ख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ २८ ॥**

**कुलानि समवेतानि** इत्यत्र **गोभिः** प्रियवचनैः, **पुरुषतः** पुरुष-सत्स्वभावात्, **अर्थतः** परोपकारकरणात् **समवेतानि** सदा युक्तानि कुलानि भवन्ति । वृत्ततः हीनानि **कुलसङ्ख्यां** कुलेषु सङ्ख्यां न गच्छन्ति ।

**मा नः कुले वैरकृत्कश्चिदस्तु राज्ञा वध्यो मा परस्वापहारी ।**
**मित्रद्रोही नैकृतिकोऽनृती वा पूर्वाशी वा पितृदेवातिथिभ्यः ३२**

---

१. 'समुपेतानि' इति कुं पाठः ।

२. $T_1$,G,$M_1$; BORI पृ. १६२; 'राजा बद्धो' इति कुं पाठः ।

**राज्ञा वध्य** इत्यत्र **राज्ञा** परराष्ट्राधिपेन ।

**यश्च नो [1]ब्राह्मणं हन्यात् यश्च नो ब्राह्मणान् द्विपेत् ।**
**न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृषिम् ॥ ३३ ॥**

**यश्च नो ब्राह्मणं हन्यात्** इत्यत्र **नः** अस्माकं मध्ये इत्युत्तरत्रापि । **समितिं** सभाम् ।

**तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।**
**सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३४ ॥**

**तृणानि भूमिरुदकम्** इत्यत्र **तृणानि** दर्भाद्यासनतृणानि, **भूमिः** उपवेशनाय स्थलम्, **उदकं** पानाय उदकम् ।

**श्रद्धया परया राजन् उपनीतानि सत्कृतिम् ।**
**प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मिणाम् ॥ ३५ ॥**

**श्रद्धया परया** इत्यत्र **पुण्यकर्मिणां** धर्मिणां **प्रवृत्तानि** प्रकृष्टानि वृत्तानि वर्तनानि परया श्रद्धया **सत्कृतिम्** अतिथ्यभ्यागतादीनां पूजां **उपनीतानि** उप उपपन्नतया नीतानि एभ्यस्तानि भवन्ति इति योग्य-क्रियया सम्बन्धः ।

**सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै**
**शक्तो वोढुं न तथाऽन्ये महीजाः ।**
**एवं युक्ता भारसहा भवन्ति**
**महाकुलीना न तथान्ये मनुष्याः ॥ ३६ ॥**

---

१. BORI पृ १६२; 'ब्राह्मणान् हन्यात्' इति कुं पाठः ।

**महीजाः** वृक्षाः । एवं **युक्ता** इत्यत्र **युक्ताः** अन्योन्यं स्नेहेन युक्ताः ।

**न तन्मित्रं यस्य कोपाद् बिभेति**
**यद्वै मित्रं [1] कोपने नोतशक्यम् ।**
**तद्वै मित्रं सङ्गतानीतराणि**
**यस्मिन् मित्रे पितरीवाश्वसीत ॥ ३७ ॥**

**यद्वै मित्रम्** इत्यत्र कोपने शक्यं नो ।

**चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।**
**परिप्लवमतेः नित्यमध्रुवो मित्रसङ्ग्रहः ॥ ३९ ॥**

**पारिप्लवमतेः** 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे'[2] इत्यभिधानात् चञ्चलबुद्धेः ।

**सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।**
**तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ४२ ॥**

**सत्कृताश्च कृतार्था** इत्यत्र **कृतार्थाः** तृप्ताः । अथवा कृतः **अर्थः** प्रतिप्रयोजनं यैस्ते कृतार्थाः ।

**अर्थयेदेव मित्राणि सति वाऽसति वा धने ।**
**नानर्थयन्प्रजानाति मित्राणां सारफल्गुताम् ॥ ४३ ॥**

**नानर्थयन्विजानाति** इत्यत्र **अनर्थयन्** द्रव्यस्याप्रदाने[3] अनर्थं कुर्वन् ।

---

१. $T_1$,$G_{(except\ G2)}$;$M_{(M2.om)}$; BORI पृ. १६३; **'शङ्कितेनोपर्यम्'** इति कुं पाठः ।

२. अ.को. ३-१-७४ ; ३. दानेन

**अनवाप्यं च शोकेन शरीरं चोपतप्यते ।**
**अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ४५ ॥**

**अनवाप्यं च शोकेन** इत्यत्र शोकेन प्रयोजनमनवाप्यं इति योग्य-पदाध्याहारेण योजना ।

**तनुरुच्चशिखी राजा मिथ्योपचरितो मया ।**[1]
**मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ४९ ॥**

**तनुरुच्चशिखी** इत्यत्र **तनुः** अल्पकः मया मिथ्या वृथा राजा राजेत्युपचरितः दुर्योधनः ।

**स्वास्तीर्णानि शयनानि प्रपन्ना**
**न वै भिन्ना जातु निद्रां लभन्ते ।**
**न स्त्रीषु राजन् रतिमाप्नुवन्ति**
**न मागधैः स्तूयमाना न सूतैः ॥ ५५ ॥**

**न वै भिन्ना** इत्यत्र **भिन्नाः** बुद्धिभेदं प्राप्ताः ।

**सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः ।**[2]
**सम्भाव्यं चापलं स्त्रीषु सम्भाव्यं ज्ञातितो भयम् ॥ ५८ ॥**

**सम्भाव्यं गोषु सम्पन्नम्** इत्यत्र **सम्पन्नं** क्षीरं गोषु सम्भाव्यम् ।

**अव्याधिजं कटुकं शीर्षरोगि**
**पापानुबन्धं परुषं तीक्ष्णमुष्णम् ।**

---

१. $K_{1.4}$,$D_{1.8.9}$; BORI पृ. १६४; **'तनुरुद्धः शिखी'** इति कुं पाठः ।
२. **'सम्पन्नं गोपु सम्भाव्यं'** इति कुं पाठः ।

**सतां पेयं यन्न पिबन्त्यसन्तो**
**मन्युं महाराज पिब प्रशाम्य ॥ ६८ ॥**

**सतां पेयं** संहर्तुं शक्यम् ।

**न तद्बलं यन्मृदुना विरुद्ध्यते सूक्ष्मो धर्मस्तरसा सेवितव्यः ।**
**प्रध्वंसिनी क्रूरसमाहिता श्रीः मृदुप्रौढा गच्छति पुत्रपौत्रान् ७१**

**मृदुप्रौढा गच्छति** इत्यत्र मृदुभिः प्रकर्षेण ऊढा श्रीः पुत्रपौत्रान् गच्छति ।

॥ इति सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**[१]वध्वा वासं श्वशुरोऽयश्च मन्यते वध्वाऽवसन्नभयो मानकामः ।**
**परक्षेत्रे निर्वपति यश्च बीजं स्त्रियं च यः परिवदतेऽतिवेलम् ॥५॥**

**वध्वा वासं श्वशुरोऽयश्च मन्यत** इत्यत्र 'वधूर्जाया स्नुषा स्त्री तु'[२] इत्यभिधानात् **वध्वा** स्नुषया सह वासम् ।

**उक्तं मया द्यूतकालेऽपि राजन्नेदं युक्तं वचनं प्रातिपेयम् ।**
**तदौषधं पथ्यमिवातुरस्य न रोचते तव वैचित्रवीर्य ॥ २० ॥**

**नेदं युक्तं वचनं प्रातिपेयम्** इत्यत्र प्र प्रकर्षेण अत्यन्तं **पेयं** पानयोग्यं तव नाभूत् ।

---

१. कुं. ३७ अध्यायः । 'वध्वाऽवहासं श्वशुरो मन्यते यो' इति कुं पाठः ।
२. अ.को. ३-३-१०२

**न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयानो विकाले ।**
**न चत्वरे निशि तिष्ठेन्निगूढो न राजकाम्यां योषितं प्रार्थयीत २८**

**चत्वरे** प्राङ्कणे ।

**न निह्नवं मन्त्रगतस्य गच्छेत्संसृष्टमन्त्रस्य कुसङ्गतस्य ।**
**न च ब्रूयान्नाश्वसिमि त्वयीति सकारणं व्यपदेशं च कुर्यात् २९**

**न निह्नवं मन्त्रगतस्य गच्छेत्** इत्यत्र 'अपलापस्तु निह्नव'[१] इत्यभिधानात् **निह्नवं** अपलापम्, **कुत्सङ्गतस्य** कुत्सितैः सह सङ्गतस्य **संसृष्टमन्त्रस्य** कुत्सितेषु स्वस्मिंश्च समानतया सृष्टमन्त्रस्य (श्रु)सृतमन्त्रस्येत्यर्थः, **मन्त्रगतस्य** राज्ञः **निह्नवम्** अपलापं **न गच्छेत्** न कुर्यात् । तादृशास्थले प्रियमेव कुर्यादिति भावः । **सकारणं व्यपदेशं च कुर्यात्** इत्यत्र **सकारणं** मध्ये नदी वर्तते, वर्षाकालः, कथमिदानीं राजकार्यमिति कारणेन सहितं कार्यव्यपदेशं कुर्यात् । न तु तूष्णीमेव वदेत् ।

**घृणी राजा पुंश्चली राजभृत्यः**
**पुत्रो भ्राता विधवा बालपुत्रा ।**
**सेनाजीवी चोद्धृतभूतिरेव**
**व्यवहारेषु वर्जनीयाः स्युरेते ॥ ३० ॥**

**विधवा बालपुत्रा** इत्यत्र बालाः बालकाः पुत्राः यस्याः सा, विधवा । साऽपि स्वपुत्रजीवनाशया उक्तं शृणोतीति भावः ।

---

१. अ.को. १-६-१७

गुणाश्च षण्मितभुक्तं भजन्ते
आरोग्यमायुश्च बलं सुखं च।
अनाविलं चास्य भवत्यपत्यं
न चैनमाद्यून इति क्षिपन्ति ॥ ३४ ॥

**न चैनमाद्यून इति क्षिपन्ति** इत्यत्र 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जितः'[१] इत्यमरः। **आद्यूनः** उदरम्भरः।

**अकर्मशीलं च महाशनं च लोकाद्विष्टं बहुमायं नृशंसम्।**
**अदेशकालज्ञमनिष्टवेषं एतान् गृहे न प्रतिवासयीत ॥ ३५ ॥**

**कदर्यमाक्रोशकमश्रुतं च वनौकसं धूर्तममान्यमानिनम्।**
**निष्ठूरिणं कृतवैरं कृतघ्नमेतान् भृशार्तोपि न जातु याचेत् ॥३६॥**

**अनिष्टवेषम्** इत्यत्र इष्टो न भवतीति **अनिष्टो, वेषः** अलङ्कारो यस्य वेश्यागन्तृवत् विकृताकार इत्यर्थः। 'स्यादर्यः स्वामिवैश्ययोः' इत्यभिधानात् **कदर्यः** कुत्सितस्वामी। **अश्रुतं** न विद्यते श्रुतं शास्त्रश्रवणं यस्य तम्। 'वनौकसं धूर्तम्' इति पाठे **वनौकसं** किरातम्। **अमान्यमानिनं** अमान्यान् मानयितुमयोग्यान् नीचान् मानयतीत्यमान्यमानी तम्। **निष्ठूरिणं** 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इति वचनात् निष्ठूरिणमित्युक्तम्।

**संक्लिष्टकर्माणमतिप्रमादं नित्यानृतं चादृढभक्तिकं च।**
**विसृष्टरागं पटुमानिनं चाप्येतान्न सेवेत नराधमान्षट् ॥ ३७ ॥**

---

१. अ.को. ३-१-२१

**संश्लिष्टकर्माणम्** इत्यत्र **संश्लिष्टं** संश्लेषः भावे क्तप्रत्ययः बहुजन-समागम इत्यर्थः, तस्मिन् सति **कर्म** सन्ध्यावन्दनादिकं यस्य तम्, डम्भमित्यर्थः ।

**सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।**
**अन्योन्यबन्धनावेतौ विनान्योन्यं न सिद्ध्यतः** ॥ ३८ ॥

**सहायबन्धना** इत्यत्र **अर्थाः** प्रयोजनानि **सहायबन्धनाः** जन-सहायनिमित्तकाः, सहायाश्च **अर्थबन्धनाः** स्वस्वप्रयोजननिमित्तकाः ।

**वृद्धिः प्रभावस्तेजश्च सत्वमुत्थानमेव च ।**
**व्यवसायश्च यस्य स्यात्तस्य वृत्तिभयं कुतः** ॥ ४१ ॥

**तस्य वृत्तिभयं कुत** इत्यत्र **वृत्तौ** वर्तने भयं कुतः ।

**भीष्मस्य कोपस्तव चैवेन्द्रकल्प द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।**
**उत्सादयेल्लोकमिमं प्रवृद्धः [१]श्वेतो ग्रहस्त्वापतन् वै यथैव** ॥ ४३

**श्वेतो ग्रहस्त्वापतन्** इत्यत्र **श्वेतो ग्रहः** धूमकेतुः उल्कापातो वा ।

**॥ इति अष्टत्रिंशोऽध्यायः ॥**

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

**[२]चिकित्सकः शल्यकर्तावकीर्णी-**
**स्तेनः क्रूरो मद्यपो भ्रूणहा च ।**

---

१. '**श्वेतो ग्रहस्तिर्यगिवापतन्खे**' इति कुं. पाठः ।
२. कुं. ३८ अध्यायः ।

**सेनाजीवी श्रुतिविक्रायकश्च**
**भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ४ ॥**

**शल्यकर्ताऽवकीर्णी** इत्यत्र 'अवकीर्णी हतव्रतः'[1] इत्यभिधानात् **अवकीर्णी** व्रतभ्रष्टः ।

**नीवारमूलेङ्गुदशाकवृत्तिः [2]सुसंयतात्माग्निकार्येष्वशोद्यः ।**
**वने वसन्नतिथिष्वप्रमत्तो धुरन्धरः पुण्यकृदेष तापसः ॥ ७ ॥**

**अग्निकार्येष्वशोध्य** इत्यत्र **अशोध्यः** करोति न वेति शोधनायानर्हः, निश्चयेन कर्तेत्यर्थः ।

**करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ।**
**धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥ १६ ॥**

**धर्मकामार्थकार्याणि** कृतान्येव दर्शयेदिति सम्बन्धः । **तथा** तथा सति मन्त्रो न भिद्यते ।

**गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।**
**अरण्ये निःशलाके[3] च तत्र मन्त्रोऽभिधीयते ॥ १७ ॥**

**अरण्ये निःशलाके च** इत्यत्र **निश्शलाके** तृणगुल्मादिशलाका-रहिते ।

**नापरीक्ष्य महीपालः कुर्यात् सचिवमात्मनः ।**
**अमात्येऽप्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥ १९ ॥**

---

१. अ.को. २-८-५४
२. '**सुसंयतात्माग्निकार्येषु चोद्यः**' इति कुं पाठः ।
३. '**निःशलाके वा**' इति कुं पाठः ।

**अमात्येऽप्यर्थलिप्सा च** इत्यत्र **अर्थलिप्सा** प्रयोजनलिप्सा ।

**अविसंवादनं दानं समयस्याव्यतिक्रमः ।**
**आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक्** ॥ ३६ ॥

**आवर्तयन्ति भूतानि** इत्यत्र **आवर्तयन्ति** पराङ्मुखान्यपि स्वाभिमुखीकुर्वन्ति ।

**यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता ।**
**मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव** ॥ ४३ ॥

**यत्र स्त्री यत्र कितव** इत्यत्र **बालो** मूर्खः ।

**प्रयोजनेषु ये सक्ता न विशेषेषु भरत ।**
**तानहं पण्डितान् मन्ये विशेषा हि प्रसङ्गिनः** ॥ ४४ ॥

**प्रयोजनेषु ये सक्ता** इत्यत्र प्रयुज्यते एभिः स्वकार्यमिति **प्रयोजनाः** स्वकार्यकारिणः । विशिष्यन्त इति **विशेषाः** अवशिष्टा जनाः ।

॥ इति एकोनचत्वारिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

धृतराष्ट्र उवाच –

[१]अनीश्वरोऽयं पुरुषो भवाभवे
सूत्रप्रोता दारुमयीव योषा ।
धात्रा तु दिष्टस्य वशे कृतोऽयं
तस्माद्वद त्वं श्रवणे धृतोऽहम् ॥ १ ॥

१. कुं. ३९ अध्यायः

**भवाभवे** शुभाशुभे ।

**विदुर उवाच –**

**प्रियो भवति दानेन प्रियवादेन चापरः ।**
**मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ३ ॥**

**द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।**
**प्रिये शुभानि कार्याणि द्वेष्ये पापानि चैव ह ॥ ४ ॥**

**यः प्रियः प्रिय एव स** इत्यत्र **यः** परमात्मा प्रियः । औपाधिकप्रियास्तु उपाध्यभावे अप्रिया अपि भवन्तीति भावः । **अन्यः** इन्द्रादिः । साधुः द्वेष्यो न भवति । मेधाव्यपि द्वेष्यो न भवति । पण्डितोऽपि द्वेष्यो न भवति । प्रिये शुभानि कर्माणि ज्ञापकानि । द्वेष्ये तु पापानि ज्ञापकानि ।

**युक्ताश्चान्यैर्महादोषैर्ये नरास्तान्विवर्जयेत् ।**
**निवर्तमाने [१]सौभाग्ये प्रीतिर्नीचे [२]विनश्यति ॥ १४ ॥**

**या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ।**
**यतते चापवादाय यत्नमारभते क्षये ॥ १५ ॥**

**निवर्तमाने सौभाग्य** इत्यत्र **निवर्तमाने** स्वस्मान्निवर्तमाने, **नीते** विनीते या **फलनिर्वृत्तिः** फलनिष्पत्तिः,सौहृदे च । यत्सुखं तच्च विनश्यतीति पूर्वेणान्वयः ।

---

१. S(except T2); BORI पृ. १८१; **'सोहार्दे'** इति कुं. पाठः ।
२. S(except T2); BORI पृ. १८१; **'प्रणश्यति'** इति कुं. पाठः ।

[१] स्वल्पेऽप्यपकृते मोहान्न शान्तिमधिगच्छति ।
तादृशैः सङ्गतं नीचैर्नृशंसैरकृतात्मभिः ।
निशाम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् ॥ १६ ॥

**स्वल्पेऽप्यपकृत** इत्यत्र **अपकृते** अपकारे सति । निपुणं तादृशैः सङ्गतं निशाम्येति सम्बन्धः ।

**श्रीमन्तं ज्ञातिमासाद्य यो [२] ज्ञातिमवसीदति ।**
**दिग्धहस्तात् मृग इव स एनस्तस्य विन्दति ॥ २७ ॥**

**यो ज्ञातिमवसीदति** इत्यत्र **अवसीदति** अवसादयति । 'विषाक्ते दिग्धपिप्तकौ' [३] इत्यभिधानात् **दिग्धहस्तात्** विषलिप्तहस्तात् पुरुषात् **मृगो** मृत्युमिव ।

**न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।**
**शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ ३० ॥**

**न कश्चिन्नापनयते पुमानन्यत्र भार्गवात्** इत्यत्र 'कुलालो भार्गवश्चैव कुम्भकारो निगद्यते' इत्यभिधानात् भार्गवात् कुम्भकारात् **अन्यत्र** कश्चित्पुमान् **शेषं** दत्तस्य शेषं **नापनयते** पुनः प्रत्यावृत्य न नयति । कुम्भकारो हि बहुतरब्राह्मणभोजनार्थं अल्पद्रव्याशया प्राग्दत्तमेव भाण्डादिकं पुनर्नीत्वा नवीकृत्य विक्रीणातीति लोकप्रसिद्धम् । **सम्प्रतिपत्तिः** दत्तस्य पुनरनपहारः ।

---

१. '**अल्पेऽप्यपकृत**' इति कुं पाठः ।
२. '...**ज्ञातिरवसीदति । दिग्धहस्तं** ....' इति कुं पाठः ।
३. अ.को. २-८-८८

**परिच्छदेन क्षेत्रेण वेश्मना [1] ब्रह्मचर्यया ।**
**परीक्षेत कुलं राजन्भोजनाच्छादनेन च ॥ ४४ ॥**

**ब्रह्मचर्यया** ब्रह्मचर्यधर्मेण वेदाभ्यासेन वा ।

**इन्द्रियाणामनुत्सर्गोऽमृत्युनापि विशिष्यते ।**
**अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतानपि ॥ ५२ ॥**

**इन्द्रियाणामनुत्सर्ग** इत्यत्र **अनुत्सर्गः** विषयेष्वप्रेषणम्, **अमृत्युना** मृत्युरहितमोक्षेण ।

**अपनीतं सुनीतेन योऽर्थं [2] प्रत्यानिनीषति ।**
**मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ॥ ५४ ॥**

**अपनीतं सुनीतेन** इत्यत्र **अपनीतम्** अविनीतं पुरुषं **सुनीतेन** सुनयेन **अर्थं प्रति** प्रयोजनं प्रति आनिनीषति ।

**आर्जवेन नरं [3] युक्तमार्दवात्सव्यपत्रपम् ।**
**अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ६३ ॥**

**मार्दवात्सव्यपत्रपम्** इत्यत्र अपगता त्रपा अपत्रपा सा न भवतीति **व्यपत्रपा** सम्यग्लज्जेत्यर्थः । तया सहितम् ।

**अत्यार्यमतिदातारं अतिशूरमतिव्रतम् ।**
**प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ६४ ॥**

---

१. $S_{(except\ T2)}$;BORI पृ. १८२; **'परिचर्यया'** इति कुं पाठः ।
२. K5,$S_{(except\ T2,G4)}$; BORI पृ. १८३; **'प्रत्यानिनीपते'** इति कुं पाठः ।
३. **'युक्तमार्जवात्सव्यपत्रपम्'** इति कुं पाठः ।

आर्याननतिक्रम्य वर्तमानः **अत्यार्यः** तम्, व्रतमतिक्रम्य वर्तमानः **अतिव्रतः** तम् ।

**अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम् ।**
**न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात्** ॥ ६७ ॥

**यः करोत्यौर्ध्वदेहिकम्** इत्यत्र **और्ध्वदेहिकं** देहादूर्ध्वं विद्यमान-स्वर्गादिफलसाधनं कर्म ।

**न तत्परस्य [1] सन्दिह्यात् प्रतिकूलं यदात्मनः ।**
**सङ्ग्रहेणैव धर्मः स्यात्कामादन्यः प्रवर्तते** ॥ ७२ ॥

**न तत्परस्य सन्दिह्यात्** इत्यत्र **तत्परस्य** उक्ताष्टविधधर्मपरस्य विषये ।

**अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।**
**मलं पृथिव्या बाह्लीकाः पुरुषस्यानृतं मलम्** ॥ ७९ ॥

**अनाम्नायमला वेदा** इत्यत्र 'म्ना अभ्यासे' इति धातोः **अनाम्नायः** अनभ्यासः ।

**सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।**
**ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम्** ॥ ८१ ॥

**सीसस्यापि मलं मलम्** इत्यत्र **मलं** मलोपमम् अमेध्यं वा ।

**सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।**
**धृतराष्ट्र विमुञ्चेच्छां न [2] कथञ्चन जीर्यति** ॥ ८४ ॥

---

१. **'सन्दध्यात्'** इति कुं पाठः ।
२. **'कथञ्चिन्न जीव्यते'** इति कुं पाठः ।

**न कथञ्चन जीर्यति** इत्यत्र या इच्छा कथञ्चन न जीर्यति, तामिच्छां विमुञ्चेत्यन्वयः ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

**विदुर उवाच –**

**[1]योऽह्यर्थितः सद्भिरसज्जमानः**
**करोत्यर्थं शक्तिमहापयित्वा ।**
**क्षिप्रं यशस्तं समुपैति सन्त-**
**मलं प्रसन्ना हि सुखाय सन्तः ॥ १ ॥**

**यो ह्यर्थितोऽसज्जमान** इत्यत्र **असज्जमानः** दुर्जनेष्वसज्जमानः । यः सद्भिरर्थितः सन् **अर्थं** तेषामर्थं करोति, सद्भिः प्रशस्तं फलं उपैति ।

**अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।**
**विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना ॥ १० ॥**

**विषमौदुम्बरम्** इत्यत्र **विषम्** उदकम् ।

**नित्यो धर्मः सुखदुःखे त्वनित्ये**
**जीवो नित्यो धातुरस्य त्वनित्यः ।**
**त्यक्त्वाऽनित्यं प्रतितिष्ठस्व नित्ये**
**संतुष्य सन्तोषपरा हि सन्तः ॥ १३ ॥**

---

१. कुं. ४० अध्यायः । 'योऽभ्यर्चितः' इति कुं पाठः । $M_1$; BORI पृ. १८६.

**नित्ये** धर्मे प्रतिष्ठस्व ।

**अस्माल्लोकादूर्ध्वममुष्य चाधो**
**महत्तमस्तिष्ठति ह्यन्धकारम् ।**
**तद्वै [१] महन्मोहनमिन्द्रियाणां**
**बुद्ध्यस्व मा त्वां प्रलभेत राजन्** ॥ १९ ॥

**तद्वै महन्मोहनमिन्द्रियाणाम्** इत्यत्र इन्द्रियाणां **महन्मोहनं** अज्ञानप्रदम्, **तत्** ऊर्ध्वाधोलोकगमनं बुध्यस्व । त्वां **मा प्रलभेत** न वञ्चयीत ।

**आत्मा नदी भारत पुण्यतीर्था**
**सत्योदया धृतिकूला दयोर्मिः ।**
**तस्यां स्नातः पूयते पुण्यकर्मा**
**पुण्यो ह्यात्मा नित्यमलोभ एव** ॥ २१ ॥

**आत्मा नदी** इत्यत्र **आत्मा** देहः **पुण्यतीर्था** पुण्यानि तीर्थानि शास्त्राणि यस्यां सा । पुण्यवन्तो जनाः **आत्मानं** परमात्मानं प्राप्य यथा पूयन्ते तथेति पूर्वेणान्वयः ।

**चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो**
**हेतुं चानुब्रुवतो मे निबोध ।**
**[२] क्षात्राद्धर्मादीयते पाण्डुपुत्र-**
**स्तं त्वं राजन् राजधर्मे नियुङ्क्ष्व** ॥ २९ ॥

---

१. **'महामोहनमिन्द्रियाणाम्'** इति कुं पाठः ।
२. **'क्षात्राद्धर्माद्धीयते'** इति कुं पाठः ।

**क्षात्राद्धर्मादीयत** इत्यत्र **ईयते** ज्ञायते ।

॥ इति एकचत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

**[१]ब्राह्मीं हि योनिमापन्नः सगुह्यमपि यो वदेत् ।**
**न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते** ॥ ६ ॥

**न तेन गर्ह्य** इत्यत्र **तेन** कारणेन एतत् न वदामीत्येतत् ।

**वैशम्पायन उवाच –**

**[२]ततो राजा धृतराष्ट्रो मनीषी**
**संपूज्य वाक्यं विदुरेरितं तत् ।**
**[३]सनत्कुमारं रहिते महात्मा**
**पप्रच्छ बुद्धिं परमां बुभूषन्** ॥ १ ॥

**सनत्कुमारं रहित** इत्यत्र **रहिते** जनरहिते स्थले परमां बुद्धिं बुभूषन् 'भू प्राप्तौ' इति धातोः **बुभूषन्** प्राप्तुमिच्छन् ।

**धृतराष्ट्र उवाच –**

**सनत्सुजात यदिमं शृणोमि न मृत्युरस्तीति तवोपदेशम् ।**
**[४]देवासुराभ्यान्तरचारिणस्तममृत्यवे तत्कतरन्नु सत्यम् ॥२॥**

---

१. कुं. ४१ अध्यायः ।
२. कुं. ४२ अध्यायः ।
३. 'सनत्सुजातं' इति कुं पाठः ।
४. 'देवासुरा ह्याचरन् ब्रह्मचर्यम्' इति कुं पाठः ।

**सनत्सुजात यदिमम्** इत्यत्र सनदिति पदेन सह सु सुष्ठु जातं प्रसिद्धं नाम कुमारेति नाम यस्य स तथोक्तः । अन्यथा 'सनत्कुमारं रहित' इत्युपक्रमविरोधात् । **देवासुराभ्यन्तरचारिणस्तम्** इत्यत्र देवानाम-सुराणां च **अभ्यन्तरे** अन्तर्हृदि **चारिणः** कामरूपेण सञ्चरत इत्यर्थः । अनेन मृत्योरभावे मृत्युपरिहाराय देवैरमृतपानं किमर्थं कृतम्, असुरैश्च अमृत्यवे रुद्रादीन् प्रति उग्रं तपः कस्मात्कृतमिति ध्वनयति ।

**सनत्सुजात उवाच –**

**अमृत्युः[१] कर्मणा केचिन्मृत्युर्नास्तीति चापरे ।**
**शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः** ॥ ३ ॥

**अमृत्युः कर्मणा केचित्** इत्यत्र केचित् अस्ति मृत्युः, **कर्मणा** पुण्यकर्मणा **अमृत्युः** मृत्युपरिहारो भवतीति वदन्ति ।

**उभे सत्ये क्षत्रियाद्य प्रवृत्ते**
**मोहो मृत्युः [२]सम्मतो यः कवीनाम् ।**
**प्रमादं वै मृत्युमहं ब्रवीमि**
**तथाऽप्रमादममृतत्वं ब्रवीमि** ॥ ४ ॥

**उभे सत्ये क्षत्रियाद्य प्रवृत्ते** इत्यत्र हे क्षत्रियाद्य धृतराष्ट्र **उभे** मृत्युरस्ति नास्तीति चोभे वाक्ये सत्ये । **मोहो मृत्युः सम्मतो यः कवीनाम्** इत्यत्र यो मोहः स मृत्युरिति कवीनां सम्मतः । अमोहश्चामृत्युरिति शेषः । अहं तु प्रमादं मृत्युं ब्रवीमि । सदा **अप्रमादं** अमृतत्वं ब्रवीमि । तस्मान्मतद्वयमपि प्रामाणिकमिति भावः ।

---

१. **'अमृत्युं'** इति कुं. पाठः । ; २. BORI पृ. १९३; **'समन्तोऽयं'** कुं पाठः

**प्रमादाद्वै असुराः पराभवन्नप्रमादाद्ब्रह्मभूताः सुराश्च ।**
**[१]न वै मृत्युर्व्याघ्र इवात्ति जन्तून्न ह्यस्य रूपमुपलभ्यते हि ॥५॥**

**अप्रमादाद्ब्रह्मभूताः सुराश्च** इत्यत्र **ब्रह्मणि** परमात्मनि **भूताः** जाताः तद्ध्याननिरता इत्यर्थः । 'बृह बृंह वृद्धौ' इति धातोः वृद्धिमन्तो जाता इति वा । तर्हि मारिका काचन मृत्युर्देवताऽस्तीति लोकप्रवादस्य का गतिरिति चेत्सत्यम्; तस्या अपि मूलभूतत्वात् सर्वैर्दृश्यमानत्वाच्च प्रमादाख्यमृत्यौ मृत्युः प्रबल इति स एवास्माभिरुक्तः । प्रसिद्धा मृत्युदेवता तु प्रमादाख्यमृत्यौ सत्येव मारयति, तत्रापि न प्रत्यक्षतो मारयतीत्युपेक्षितेति भावेनाह– **न वै मृत्युर्व्याघ्र इवात्ति जन्तून्** इति । अनेन व्याघ्रान्मृत इतिवत् मृत्योर्मृत इति लोकप्रवादाभावाच्च सा नोक्तेति सूचयति ।

**यमं त्वेके मृत्युमतोऽन्यमाहु-**
**[२]रात्मा वासीदमृतं ब्रह्मचर्यम् ।**
**पितृलोके राज्यमनुशास्ति देवः**
**शिवः शिवानामशिवोऽशिवानाम्** ॥ ६ ॥

इतोऽपि मृत्युदेवता उपेक्षितेत्याह– **यमं त्वेके मृत्युमतोऽन्यमाहुः** इति । एके मृत्योरपि प्रेरकत्वाद्यममेव मृत्युमाहुः । केचित्तु **अतः** यमात् अन्यं मृत्युदेवतामेव मृत्युमाहुः । एवञ्च परप्रेष्यत्वादपि सा नोक्तेति भावः । तर्हि उक्तैर्नानाविधैर्मृत्युभिरस्पृष्टं वस्तु किमित्यत आह– **आत्मा वासीदमृतं ब्रह्मचर्यम्** इति । 'आत्मा वा इदमेक एवाग्र

---

१. BORI पृ. १९३; **'नैव'** इति कुं पाठः ।
२. **'-रात्मावासममृतं'** इति कुं पाठः ।

आसीत्'[1] इति श्रुत्युक्तम्, **ब्रह्म** वेदः तेन 'चर गतिभक्षणयोः' इति धातोः **चर्यं**[2] अवगमनयोग्यं नारायणाख्यं वस्तु **अमृतं** मृतिपदोक्त-नानाविधमृत्युरहितम् । प्रलयेऽप्यवशिष्टत्वात् तस्यैवामृतत्वं शोभत इति सूचनाय श्रुतिप्रतीकग्रहणम् । युक्तिसिद्धं च तस्यामृतत्वमिति भावेनाह– **पितृलोक** इति । **शिवानां** शुभजीवानां **शिवः** शोभन-प्रदाता । **अशिवानां** अशुभजीवानां **अशिवः** अमङ्गलदाता । 'रामो यमसभातले' इति वचनात् रामचन्द्ररूपी देवो नारायणः पितृलोक-राज्यमनुशास्ति । सर्वमारकयमपूज्यत्वादपि तस्य न मृत्युरिति भावः ।

**अस्यादेशान्निःसरते नराणां क्रोधः प्रमादो लोभरूपश्च मृत्युः ।**
**अहं गतेनैव चरन्विमार्गान्न चात्मनो योगमुपैति कश्चित्[3] ॥७॥**

नारायणस्य क्रोधप्रमादमृत्युरहितत्वे युक्त्यन्तरं चाह– **अस्या-देशात्** इति । **अस्य** नारायणस्य **आदेशात्** आज्ञाशक्तेः । 'आस्यादेष' इति पाठे आस्ये भवमास्यं परुषवचनादिकं तस्मा-दित्यर्थः । तर्हि मृत्युतरणोपायः क इत्यतः परमात्मनो भक्तियोग एव मृत्युतरणोपायः । स चाविवेकिनां न लभ्य इत्याह– **अहं गतेनैव चरन्** इति । अहमिति गतं राजसभायां विद्वत्सभायां च गमनं येन सोऽहंगतः अहङ्कार इत्यर्थः । तेन **विमार्गानेव** विरुद्धमार्गानेव **चरन्** गुरुदेवताद्यवज्ञानमेव कुर्वन्नित्यर्थः । **आत्मनः** परमात्मनः **कश्चिद्योगं** कर्मयोगज्ञानयोग-भक्तियोगेषु एकमपि योगं नोपैति ।

---

१. मा.भा.ता.नि. २१-६७ ;
२. **अवगमनहेतुयोग्यं** सो.मु.पा. ।
३. **'कश्चित्'** इति कुं. पाठः ।

**ते मोहितास्तद्वशे वर्तमाना इतः प्रेतास्तत्र पुनः पतन्ति ।**
**ततस्तं[1] देवास्तं परिप्लवन्ते अतो मृत्युर्मरणादभ्युपैति ॥ ८ ॥**

तर्हि तेषां का गतिरित्यतः संसारचक्रे पौनःपुन्येन भ्रमणमेव गतिरित्याह - **ते मोहिता** इति । **तद्वशे** मोहवशे, **तत्र** यमलोके, **प्रेताः** पुनरितः अस्मिन् लोके पतन्तीत्यर्थः । तर्हि तत्वाभिमानिदेवाः तस्मिन् कुतो नोपकुर्वन्तीत्यत आह– **ततस्तं देवा** इति । **देवा**-स्तत्वाभिमानिदेवाः **तं** परमात्मानमनुसृत्य **तं** जीवं **ततः** मातुर्गर्भ-पतनान्तरं **परि** परितः **प्लवन्ते** आक्रमन्ति । पादघातेन करताडनेन च अयोग्यजीवं पीडयन्तीति सूचनाय प्लवन्त इत्युक्तम् । तत्करेण पापं कारयितुमेवायान्ति, न तु तदुपकारायेति सूचनायात्मनेपदं च । **ततः** देवताप्रवेशानन्तरं मरणात् तस्य मरणमुद्दिश्य ल्यब्लोपनिमित्ता पञ्चमी । मृत्युः **अभ्युपैति** अभितः उपैति । शिखास्थाने मारिकामृत्युः प्रमादमोहादयः स्वस्वस्थानेषु विशन्तीत्यर्थः ।

**कर्मोदये कर्मफलानुरागास्तत्रानु ते यान्ति न तरन्ति मृत्युम् ।**
**सदर्थयोगानवगमात्समन्तात्प्रवर्तते भोगयोगेन देही ॥ ९ ॥**

**कर्मोदये कर्मफलानुरागा** इत्यत्र **कर्मोदये** प्रारब्धकर्मपरिपाके सति **कर्मफलानुरागाः** स्रक्चन्दनवनितादिग्राम्यविषयभोगानुरागाश्च । तत्र अनुयान्ति । तेन कारणेन मृत्युं न तरन्ति । **सदर्थयोगानवगमात्** इत्यत्र सन् उत्तमोऽर्थः सदर्थः परमात्मा तस्य योगानवगमात् भोगयोगेन प्रवर्तते ।

---

१. **'ततस्तान्देवा अनुविप्लवन्ते'** इति कुं पाठः ।

**तद्वै महामोहनमिन्द्रियाणां**
**मिथ्यार्थयोगेऽस्य[१] गतिर्हि नित्या ।**
**मिथ्यार्थयोगाभिहतान्तरात्मा-**
**स्मरन्नुपास्ते विषयान्समन्तात्** ॥ १० ॥

**मिथ्यार्थयोगेऽस्य गतिर्हि नित्या** इत्यत्र 'मिथ्यैष व्यवसायस्त' इति वचनात् **मिथ्यार्थो** व्यर्थोऽर्थः । 'पदं मिथ्या कारयते, स्वरादिदोषदुष्टमसकृदुच्चारयति' इति वैयाकरणवचनात् दुष्टोऽर्थो वा मिथ्यार्थः ।

**अभिध्या वै प्रथमं हन्ति [२]चैनम्**
**कामक्रोधावनुगृह्याशु पश्चात् ।**
**एते बालान्मृत्यवे प्रापयन्ति**
**धीरास्तु धैर्येण तरन्ति मृत्युम्** ॥ ११ ॥

**अभिध्या वै प्रथमं हन्ति चैनम्** इत्यत्र **अभिध्या** अभितो दुर्विषयचिन्ता । **धीरास्तु धैर्येण** इत्यत्र **धीराः** परमात्मचिन्तारताः दुर्विषयाणामवशाश्च ।

**[३]योऽभिध्यायन् [४]प्रत्यभीक्षणं निहन्या-**
**दनादरेणाप्रतिबुध्यमानः ।**

---

१. $K_1, T_2, G_{1.2.4}$; BORI पृ. १९५; **'-योगस्य'** इति कुं. पाठः ।
२. BORI पृ. १९५; **'लोकान्'** इति कुं पाठः ।
३. BORI पृ. १९४; **'सोऽभिध्यायन्'** इति कुं पाठः ।
४. **'उत्पतिष्णन्निहन्या'** इति कुं. पाठः ।

**नैनं मृत्युर्मृत्युरिवात्ति भूत्वा**
**एवं विद्वान्यो विनिहन्ति कामान् ॥ १२ ॥**

**योऽभिध्यायन् प्रत्यभीक्ष्णं निहन्यात्** इत्यत्र **निहन्यात्** पशून्निहन्यात् । 'प्रेत्य खादन्ति ते च तान्' इति वचनात् स वै **मृत्युः** पशुमारणाख्यो मृत्युः मृत्युर्भूतानीव एनमत्ति । एवं विद्वान् यः सः इह कामान् निहन्ति ।

**तमोप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।**
**गृध्यन्त[1] एव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः ॥ १४ ॥**

**गृध्यन्त एव धावन्ति** इत्यत्र 'गृधु आकाङ्क्षायाम्' इति धातोः **गृध्यन्त एव** विषयाभिलाषां कुर्वन्त एव **धावन्ति** इतस्ततो धावन्ति । तेन तं नरकं गच्छन्ति स्म ।

**अमूढवृत्तेः पुरुषस्येह कुर्या-**
**त्किं वै मृत्युस्तार्ण इवास्य व्याघ्रः ।**
**अमन्यमानः क्षत्रियः [2]कश्चिदन्य-**
**[3]न्नाधीयीत [4]निर्नुदभिवास्य वायुः ॥ १५ ॥**

**अमूढवृत्तेः पुरुपस्येह कुर्यात् किं वै मृत्युस्तार्ण इवास्य व्याघ्र** इत्यत्र **अस्य** अमूढवृत्तेः पुरुषस्य मृत्युः **तार्णः** तृणमयो व्याघ्र इव

१. **'मुह्यन्त इव'** इति कुं पाठः ।
२. **'किञ्चिदन्य'** इति कुं पाठः ।
३. $K_{1.4}$,B,$_{(B3.om)}$,$D_n$,$D_{1.3\text{-}6.9}$,$G_{1.2}$,$C_{d.s}$ ; BORI पृ. १९५; **'-न्नाधीयते'** इति कुं. पाठः ।
४. BORI पृ. १४९; **'तार्ण इवास्य सर्पः'** इति कुं. पाठः ।

अकिञ्चित्कर इत्यर्थः । **अमन्यमानः क्षत्रियः कश्चिदन्यं नाधीयीत निर्नुदभि वाऽस्य वायुः** इत्यत्र यः क्षत्रियः कामादन्यं कश्चित्पुरुषार्थं अमन्यमानः **नाधीयीत** वेदाध्ययनादिकं न कुर्वीत । **निर्नुत्** नितरां नुत्, 'नुद प्रेरणे' इति धातोः रजस्तृणादिकं प्रेरयन् **अभिवायुः** अभितो विद्यमानो वायुः चक्रवायुरित्यर्थः । **अस्य** पुरुषस्य वा उपमा । [1]'वा विकल्पोपमानयोः' इत्यमरः । विषयान्धोऽसौ संसार एव भ्राम्यतीति भावः ।

**क्रोधाल्लोभान्मोहभयान्तरात्मा**
**स वै मृत्युस्त्वच्छरीरे य एषः ।**
**एवं मृत्युं जायमानं विदित्वा**
**ज्ञाने तिष्ठन्न बिभेतीह मृत्योः ।**
**विनश्यते विषये तस्य मृत्यु-**
**र्मृत्योर्यथा विषयं प्राप्य मर्त्यः** ॥ १६ ॥

**विनश्यते विषये तस्य मृत्युः** इत्यत्र मृत्योर्विषयं प्राप्य मर्त्यः यथा विनश्यते तथा अस्य ज्ञानिनो राज्ञः विषये मृत्युः स्वयमेव विनश्यते ।

**धृतराष्ट्र उवाच –**

**यानेवाहुरिज्यया साधुलोकान्**
**द्विजातीनां पुण्यतमान्सनातनात् ।**
**[2]तेषामपार्थान् कथयन्तीह वेदा**
**[3]एवं विद्वान्नैति कथं नु कर्म** ॥ १७ ॥

---

१. अ.को. ३-४-२४९
२. **'तेषां परार्थं'** इति कुं पाठः । ; ३. **'एतद्विद्वान्नैति'** इति कुं. पाठः ।

**तेषामपार्थान् कथयन्तीह वेदा** इत्यत्र **वेदाः** 'नान्यः पन्था अयनाय विद्यते'[१], 'नास्त्यकृतः कृतेन'[२], 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्याद्याः। तेषां लोकान् काम्यकर्मफलीभूतलोकान्। एवं विद्वान् **कर्म** काम्यकर्म कथयन्तीति (कथमेतीति) योजना।

**सनत्सुजात उवाच –**

**एवं [३]विद्वान् हि उपयाति तत्र तत्रार्थजातं च वदन्ति वेदाः।**
**स वेह आयाति परं परात्मा प्रयाति मार्गेण निहत्य मार्गान् १८**

**एवं विद्वान्** इत्यत्र **एवं विद्वान्** पूर्वोक्तप्रकारेण काम्यकर्मणां लोका अपार्था इति विद्वान् तत्र निष्कामकर्मस्वेव प्रतियाति। तथा प्रतियातानां **वेदाः** 'अपाम सोमममृता अभूम'[४] 'कर्मणा ज्ञानमा-तनोति' इत्याद्या वेदाः **अर्थजातं** ज्ञानमोक्षादिपुरुषार्थसमूहं च वदन्ति। सः पुनः **इह** काम्यकर्मसु नायाति। सर्वथा काम्यकर्म-सम्बन्धाभावं सूचयितुं विसन्धिकरणम्। **परात्मा** परमात्मनि चित्तवान् **मार्गेण** अर्चिरादिमार्गेण **परं** परमपुरुषमेव प्रयाति। मार्गान् गमयन्ति स्वर्गम्,पुनर्मारयन्तीति प्रवृत्तिमार्गाः तान्निहन्ति च।

**धृतराष्ट्र उवाच –**

**कोऽसौ नियुङ्क्ते तमजं पुराणं स चेदिदं सर्वमनुक्रमेण**
**स वास्य कार्यमथवा सुखं च तन्मे विद्वन्ब्रूहि सर्वं यथावत् १९**

---

१. चित्ति. उ.; २. भ.गी. ९-२१
३. $G_{1.4}$,$C_{\delta P}$; BORI पृ. १९७; **'ह्यविद्वानुपयाति'** इति कुं पाठः।
४. ऋ.सं. ८-४८-३

**कोऽसौ नियुङ्क्ते तमजं पुराणम्** इत्यत्र तम् अजं पुराणं परमपुरुषं कोऽसौ नियुङ्क्ते । न कोऽपि । अन्यैरनियतोपि **स** परमात्मा स्वेच्छयैव इदं सर्वम् **अनुक्रमेत चेत्** स्वेच्छया कर्तुमारभेत चेत् **अस्य** परमात्मनः जगत्करणेन **कार्यं** प्रयोजनं किम्, अथवा सुखं च किम्, तन्मे ब्रूहीति योजना ।

**।। इति द्विचत्वारिंशोऽध्यायः ।।**

## ।। अथ त्रिचत्वारिंशोऽध्यायः ।।

**सनत्सुजात उवाच –**

**अयं[1] महानत्र [2]बिभेद योगै-**
**ह्यनादियोगेन भवन्ति नित्याः ।**
**तथास्य नाधिक्यमपैति किञ्चि-**
**दनादियोगेन भवन्ति पुंसः** ।। २० ।।

**अयं महानत्र बिभेद योगैः** इत्यत्र **महान्** सर्वोत्तमः अवाप्त-सकलकाम इत्यर्थः । **अयं** परमात्मा **योगैः** लीलाख्योपायैः **अत्र** जगति **बिभेद** जीवादीन् पञ्चधा भिन्नानकरोत् । एते जीवादयः **अनादियोगेन** अनादिना स्वहृदि परमात्मनः सन्निधानयोगेन **नित्याः** स्वरूपतो नित्या भवन्ति । तथा **अस्य** पुंसः **अनादियोगेन** अनादिकालीनोपायेन **भवन्ति** देहयोगेनोत्पद्यन्ते । अत एव तेषां जीवानां मध्ये किञ्चिदपि जीवचैतन्यं आधिक्यं अस्मात् पुंसः आधिक्यम्, आधिक्यमित्युप-लक्षणं साम्यं च नोपैति ।

---

१. कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति । **'दोषो'** इति कुं पाठः ।
२. **'विभेदयोगे'** इति कुं पाठः ।

**य एतद्वा भगवान्स नित्यो**
**विकारयोगेन करोति विश्वम् ।**
**तथाच तच्छक्तिरिति स्म मन्यते**
**तथार्थयोगेन भवन्ति वेदाः** ॥ २१ ॥

प्रधानचेतनसृष्टिमुक्त्वा जडसृष्टिमाह – **यदेतदाह** इति । यदेतत् दृश्यमानं जडं जगत् **आह** 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्' इत्यादिवेदः सत्यतया आह । तद्विश्वं **स** भगवान् नित्यम् अनाद्यनन्तकालेषु **विकारयोगेन** प्रकृतेर्विकाराख्योपायेन करोति, न तु मायया करोति । तथा तस्य परमात्मनः शक्तिश्च **तथा** यथार्थजगन्निर्मातृतयैव इति मन्ये । अशक्तो हि मिथ्यासृष्टिं करोति, न तु शक्त इति भावः । तथा **अर्थयोगे** हरेर्विचित्रशक्त्याख्यपदार्थयोगे **वेदाः** 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च'[1] इत्यादिवेदाः **भवन्ति** प्रमाणं भवन्ति ।

**सनत्सुजात उवाच –**

**तस्मिन्स्थितौ वाप्युभयं हि नित्यं**
**ज्ञानेन विद्वान्प्रतिहन्ति सिद्धम् ।**
**तथान्यथा पुण्यमुपैति देही**
**तथागतं पापमुपैति सिद्धम्** ॥ २३ ॥

**तस्मिंस्थितो वाऽप्युभयम्** इत्यत्र **तस्मिन्** परमात्मनि **नित्यं स्थितः** स्थैर्यवान् भगवन्निष्ठ इत्यर्थः । **विद्वान**परोक्षज्ञानी **उभयं** पुण्य-

१. श्वेताश्व. ६-८

पापाख्यमुभयम्, **सिद्धिं वा** तस्य फलभूतस्वर्गनरकगमनाख्यकार्यसिद्धिं च, वाशब्दः समुच्चये। निहन्ति 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'[१] इति श्रुतेः। अतोऽन्यथा ज्ञानी न भवति चेत् **देही** देहाभिमानवान् जीवः पुण्यमुपैति, तथा आगतं पापं चोपैति, तयोः सिद्धिं फलं चोपैति।

**[२]स्थित्वोभयं कर्मणि भोज्यते स्थिरं**
**शुभस्य पापस्य स चापि कर्मणा।**
**धर्मेण पापं प्रणुदतीह विद्वान्**
**धर्मो बलीयानिति तत्र विद्धि ॥ २४ ॥**

**स्थित्वोभयं कर्मणि** इत्यत्र **सः** अविद्वान् एवंविधे कर्मणि स्थिरं यथा भवति तथा स्थित्वा शुभस्य पापस्य च कर्मणः उभयं फलं भोज्यते देवदूतैर्यमदूतैश्च बलात् **भोज्यते**। **इह** लोके विद्वान् कर्मकौशलं जानन् **धर्मेण** अत्युत्कटधर्मेण पापं प्रणुदति इति योजना।

**सनत्सुजात उवाच –**
**येषां [३]धर्मेषु विस्पर्धा बले बलवतामिव।**
**ते ब्राह्मणा इतः प्रेत्य स्वर्गे यान्ति प्रकाशताम् ॥ २६ ॥**

**येषां धर्मेषु विस्पर्धा** इत्यत्र **धर्मेषु** प्रवृत्तिधर्मेषु विशेषेण स्पर्धा **विस्पर्धा** तत्कृतपुण्यादपि मया अधिकं पुण्यं कर्तव्यमिति स्पर्धेत्यर्थः।

---

१. आथर्व. उप. ३-३
२. **'गत्वोभयं कर्मणा'** इति कुं पाठः।
३. **'व्रतेऽथ'** इति कुं पाठः।

**येषां धर्मे [1] न च स्पर्धा तेषां तज्ज्ञानसाधनम् ।**
**ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥ २७ ॥**

**येषां धर्मे न च स्पर्धा** इत्यत्र **येषां** ज्ञानिनां **धर्मे** प्रवृत्तिधर्मे स्पर्धा न च । किन्तु तमपि धर्मं फलाशां विहाय विष्णुप्रीत्यर्थमेव कुर्वन्ति । तेषां तद्धर्माचरणं ज्ञानसाधनम् । **इतः** प्रवृत्तिकर्मफलात् स्वर्गात् मुक्ताः ते ब्राह्मणाः **त्रिविष्टपं** त्रयः विष्टपाः वैकुण्ठादिलोकाः यस्मिन् तं **स्वर्गं** मोक्षं यान्ति ।

**तस्य सम्यक्समाचारमाहुर्वेदविदो जनाः ।**
**नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ २८ ॥**

**यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम् ॥ २९ ॥**

**नैनं मन्येत भूयिष्ठम्** इत्यत्र **आभ्यन्तरं** स्थितिमात्रेण जनान्तर्विद्यमानं **बाह्यं** चारित्रेण लोकबाह्यम् **एनं** ज्ञानिनं जनः **भूयिष्ठम्** उत्तमं न मन्येत । भूयिष्ठं बहुशो न मन्येतेति वा । विद्वांस्तु यत्र ज्ञानिनि दृष्टे सति तं प्रावृषि **तृणोदकमिव** तृणान्तर्निलीनोदकमिव **भूयिष्ठम्** उत्तमं मन्येत ।

**अन्नं पानं ब्राह्मणस्य [2] तज्जीवन्नानुसंज्वरेत् ।**
**यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ॥ ३० ॥**

**अन्नं पानं ब्राह्मणस्य तज्जीवन्नानुसंज्वरेत्** इत्यत्र यस्मात् अन्नं पानं च ब्राह्मणस्य भागः, **तत्** तस्माज्जीवनार्थी ज्ञानी **अनु**

१. S; BORI पृ. १९७; '**च विस्पर्धा**' इति कुं पाठः ।
२. BORI पृ. १९७; '**तज्जीवेन्नानुसंज्वरेत्**' इति कुं. पाठः ।

अन्नादिकमनुसृत्य न **संज्वरेत्** क्लेशं न कुर्यात् । **यत्र** ज्ञानिनि **अकथयमानस्य** आह्वानमकुर्वतः पुंसः **अशिवं** पापं कर्तृ भयं नरकभयं प्रयच्छति ।

**अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ॥ ३० ॥**

**अतिरिक्तम्** इत्यत्र यः आत्मानम् अकथयमानस्य नानुसंज्वरेत् । किन्तु **अतिरिक्तमिव** कोपाद्यतिरेकवन्तमिव आत्मानमकुर्वन् तिष्ठति, सः श्रेयान्, नेतरजनः ।

**नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।**
**ज्ञातीनां तु वसन्मध्ये नैवं विन्देत किञ्चन ॥ ३३ ॥**

**नित्यमज्ञातचर्या म** इत्यत्र मे नित्यम् **अज्ञातचर्या** कैरप्यज्ञाततया **चर्या** सञ्चरणम् अस्तु इति ब्राह्मणः मन्येत ।

[१]**को ह्यल्पतरमात्मानं ब्राह्मणो हन्तुमर्हति ।**
**निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ॥ ३४ ॥**

**को ह्यल्पतरमात्मानम्** इत्यत्र अल्पात् प्रयत्नात् तरति संसार-मित्यल्पतरः ।

**यथा स्वं वान्तमश्नाति श्वा वै नित्यमभूतये ।**
**एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात्**[२] **॥ ३२ ॥**

**स्ववीर्यस्योपभोजनात्** इत्यत्र **स्वं** द्रव्यं **तद्वीर्यस्य** तत्सामर्थ्य-लब्धान्नपानादेरुपभोजनात् एवं ते वान्तमश्नन्ति । सर्वं न्यस्तमिति

---

१. $D_{3,4}$; BORI पृ. १९८; **'को ह्येवमन्तरात्मानं'** इति कुं. पाठः ।
२. **'-सेवनात्'** इति कुं. पाठः ।

सन्न्याससमये त्यक्तं द्रव्यं पुनः सङ्गृह्य तेनोपभोजनं कुर्वन् यति-र्वान्तभुगिति भावः।

**सर्वान् स्विष्टकृतो देवान् विद्याद्य इह कश्चन।**
**न समानो ब्राह्मणस्य तस्मिन् प्रयतते स्वयम्** ॥ ३८ ॥

**सर्वान् स्विष्टकृतो देवान्** इत्यत्र **इह** लोके **यः** कश्चन पुरुषो वर्तते सः सर्वान् देवान् **स्विष्टकृतः** सुष्ठु स्वस्य अभीष्टं कुर्वन्तीति स्विष्टकृतः तान् विद्यात्। **न समान** इत्यत्र ब्राह्मणः **समानः** मानेन अहं करोमीत्यभिमानेन सहितो न स्यात्। यस्मिन्नभिमाने सति स्वयमेव प्रयतते, स्वोदरपूरणार्थं गृहे गृहे गच्छतीत्यर्थः।

**यमप्रयतमानं तु मानयन्ति समाहिताः।**
**न मान्यमानो मन्येत नावमानेऽतिसंज्वरेत्** ॥ ३९ ॥

**न मान्यमानो मन्येत** इत्यत्र **यम्** अप्रयतमानं मानयन्ति सः मान्यमानः **नाभिमन्येत** अहङ्कारं न कुर्यात्।

**लोकः स्वभाव एषो [१] हि निमेषोन्मेषवत्सदा।**
**विद्वांसो मानयन्तीह इति मन्येत मानितः** ॥ ४० ॥

**लोकस्वभाव एषो हि** इत्यत्र 'इषु इच्छायाम्' इति धातोः भावे पचाद्यचि कृते गुणे च कृते **एषः** इच्छा वित्तादेरीषणमित्यर्थः। **इह** लोके मानितः पुरुषः 'परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः' इत्यादिनीतिं विद्वांस एव मां मानयन्ति, न तु मयि गुणोऽस्तीति मन्येत।

---

१. '**स्वभाववृत्तिर्हि**' इति कुं पाठः।

**[1]अधर्मविदुषो मूढा लोके मायाविशारदाः ।**
**न मान्यं मानयिष्यन्ति एवं मन्येत मानितः ॥ ४१ ॥**

**अधर्मविदुष** इत्यत्र धर्मविदुषो न भवन्तीति **अधर्मविदुषः** ।

**न वै मानं च मौनं च सहितौ वसतः सदा ।**
**अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ॥ ४२ ॥**

**न वै मानं च मौनं च** इत्यत्र **मानम्** अभिमानः **मौनं** तूष्णीम्भावश्च इत्येतौ धर्मौ सहितौ सन्तौ न वसतो वै । अतः मानवता अवमाने कृते सति मौनं कर्तुं न शक्यमिति भावः । तर्हि मानः कस्य मौनं च कस्येत्यत उक्तम्– **अयं हि लोक** इति । अयं हि लोकः मानस्य स्थानम् । **असौ** मोक्षाख्यो लोकः मौनस्य स्थानम् । मोक्षार्थिनो मौनमेव प्रियम्, संसारिणां तु मानो न मुञ्चतीति भावः ।

**श्रीर्हि [2]मानार्थसञ्जाता सा चापि परिपन्थिनी ।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ४३ ॥**

**श्रीर्हि मानार्थसञ्जाता** इत्यत्र **श्रीः** सम्पत् **मानार्थसञ्जाता** अहङ्कारजननाय निर्मिता ।

॥ इति त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

**धृतराष्ट्र उवाच–**

१. **'अधर्मनिपुणा'** इति कुं पाठः ।
२. **'मानार्थसंवासा'** इति कुं पाठः ।

[१] कस्यैष मौनः कतरन्नु मौनं प्रब्रूहि विद्वन्निह मौनभावम् ।
[२] मानेन विद्वानुत याति मौनं कथं मुने मौनमिहाचरन्ति ॥१॥

**मानेन विद्वान्** इत्यत्र **मानेन** वेदाख्यप्रमाणेन ।

सनत्सुजात उवाच –

**यतो न वेदा [३] मनसैव हीनं अनुप्रविशन्ति ततोऽथ मौनम् ।**
**यत्रोत्थितो वेदशब्दस्तथायं स तन्मयत्वेन विभाति राजन् ॥२॥**

**यतो न वेदा मनसैव हीनम्** इत्यत्र यतः कारणात् वेदा एव **मनसा** ज्ञानेन सह हीनमेनं मनुष्यं **नानुप्रविशन्ति** अनुकूलतया न विशन्ति । ततः कारणात् मौनं च नास्ति । वेदं पठित्वाऽपि ज्ञानाभावात् तत्र तत्र कलहं करोतीति भावः । **यत्रोत्थितो वेदशब्दश्च** इत्यत्र **यत्र** यस्मिन् पुरुषे **वेदशब्दः** वेदेन शब्यत इति वेदशब्दो नारायणः **उत्थितः** उत्कर्षेण मनसि स्थितः ध्यानपदवीं गत इत्यर्थः । **स** पुरुषः **तन्मयत्वेन** भगवत् प्रधानत्वेन कारणेन **विभाति** मौनादिगुणविशिष्टो भाति इति योजना ।

धृतराष्ट्र उवाच –

**न चेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण ।**
**अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ६ ॥**

**अथ कस्मात्प्रलापोऽयम्** इत्यत्र **प्रलापः** अनर्थकवेदपाठः कस्मात् ।

---

१. कुं. ४३ अध्यायः । ; २. **'मौनेन'** इति कुं पाठः ।
३. **'मनसा सहैनं'** इति कुं पाठः ।

सनत्सुजात उवाच–

**तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानुभाव ।**
**निर्दिश्य सम्यक्प्रवदन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ति ॥७॥**

**तस्यैव नामादि** इत्यत्र **तस्य** परमात्मनः **नामादिविशेषरूपैः** नाम-वाक्यादिविशेषरूपैः वेदवाक्यैः **इदं** जगदपि भाति भगवतः समाकृष्य जगदपि सन्तो वेदैर्व्यवहरन्तीति भावः । **निर्दिश्य** भगवन्तं सम्यङ्निर्दिश्य भगवत उदाहरन्ति । तदर्थं भगवत्प्रीत्यर्थं एतत्तपः उक्तम्, इज्या च उक्ता । ताभ्यां भगवद्विषयकतपोयज्ञाभ्याम् । केवलं वेदपाठेन पापं न गच्छति । वेदोक्तकर्मानुष्ठानजनितपुण्यात्पापं नश्यतीति समुदायार्थः ।

**ब्राह्मणानां [१]तपस्यर्धमन्येषां तावदेव तत् ।**
**[२]एतत्समृद्धमत्यर्थं तपो भवति केवलम् ॥ ११ ॥**

**ब्राह्मणानां तपस्यर्धम्** इत्यत्र ब्राह्मणानां तपसि यदर्धम् **अन्येषां** क्षत्रियाणां तत्तपः **तावदेव** सम्पूर्णम् । शिलोञ्छवृत्त्यादिना पर-पीडाभावात् केवलपुण्यजनकमेतद्ब्राह्मणानां तपः क्षत्रियादितपसोऽपि अत्यर्थं समृद्धं भवति ।

**क्रोधः कामो लोभमोहौ विवित्सा-**
**ऽकृपाऽसूये मानशोकौ स्पृहा च ।**
**ईर्ष्या जुगुप्सा च मनुष्यदोषा**
**वर्ज्याः सदा द्वादशैते नराणाम् ॥ १७ ॥**

---

१. **'तपः स्वृद्धमन्येषां'** इति कुं पाठः ।; २. **'एतत्समृद्धमत्यृद्धं'** इति कुं पाठः ।

**लोभमोहौ विवित्सा** इत्यत्र 'विद्लृ लाभे' इति धातोः **विवित्सा** धनं लब्धुमिच्छा। अकृपा इति पदच्छेदः। **अकृपा** कृपाभावः।

**[१]एकैकमेतद्राजेन्द्र मनुष्यान्पर्युपासते।**
**लप्स्यमानोन्तरम् [२]एषां मृगाणामिव लुब्धकः ॥ १८ ॥**

**एकैकमेतत्** इत्यत्र एकैकं यथा भवति तथा एषां क्रोधादीनाम् **अन्तरम्** अवकाशं लप्स्यमानः पुरुषः मृगाणां **लुब्धक इव** हिंस्रः स्यात्।

**विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत्कोपं चपलो रोषणश्च।**
**एतान्पापाः षण्णराः पापधर्मान् प्रकुर्वते [३]नैव धर्मं सुधर्मम् १९**

**विकत्थन** इत्यत्र **मनस्स्वी** मनसि स्वं वित्तं वर्तत इति मनस्स्वी वित्ताकाङ्क्षीत्यर्थः। मानवानहङ्कारी वा। **नैव धर्मं सुधर्मम्** इत्यत्र **धर्मं** प्रवृत्तिधर्मम्। **सुधर्मं** निवृत्तिधर्मम्।

**[४]यस्त्वेभ्यः प्रवसेद्द्वादशभ्यः**
**सर्वामपीमां पृथिवीं स शिष्यात्।**
**त्रिभिर्द्वाभ्यामेकतो वाऽविशिष्ट**
**न सन्तरस्वीति च वेदितव्यम् ॥ २२ ॥**

**यस्त्वेभ्यः प्रवसेत्** इत्यत्र **एभ्यः** गुणेभ्यः प्रवसेत्। तादर्थ्ये चतुर्थी। एतद्गुणलाभाय प्रवसेत्। स्वगृहं विहाय गुरुकुले निवसेत्।

---

१. **'एकैकमेते राजेन्द्र'** इति कुं पाठः। ; २. **'तेषाम्'** इति कुं पाठः
३. **'नो त्रसन्तः सुदुर्गे'** इति कुं पाठः।
४. **'यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः'** इति कुं पाठः।

**त्रिभिर्द्वाभ्यामेकतो वाऽविशिष्ट** इत्यत्र उक्तगुणानां मध्ये **त्रिभिः** गुणैः **द्वाभ्यां** गुणाभ्याम् एकतो वा यः अविशिष्टः सः **संतरस्वी** संसारतरणवान् न स्यादिति वेदितव्यः ।

**[१]दमोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः ।**
**[२]विपर्ययात्स्मृता एते मददोषा उदाहृताः ।**
**दोषा दमस्य ये प्रोक्ताः [३]दोषान् त्यक्त्वैव विप्रियम् ॥ २७ ॥**

**त्यक्तैर्द्रव्यैर्यद् भवति नोपयुङ्क्ते च कामतः ।**
**नच द्रव्यैस्तद्भवति नोपयुक्तैश्च कामतः ॥ ३१ ॥**

**अप्रिये च समुत्पत्य[४] व्यथां जातु न गच्छति ।**
**इष्टान् पुत्रांश्च दाराश्च न याचेत कदाचन ॥ ३३ ॥**

**दमोऽष्टादशदोषः स्यात्** इत्यत्र अष्टादश दोषा यस्येति समासः । **विपर्ययात् स्मृता एते** इत्यत्र स्मृताः पूर्वश्लोकेन स्मारिताः एते प्रागुक्ता दमदोषा एव **विपर्ययात्** शमस्यापि विपरीतकरणात् शमदोषा उदाहृताः । **त्यक्त्वैव विप्रियम्** इत्यत्र **विप्रियं** कामं **त्यक्त्वैव** बाल्य एव त्यक्त्वा भूयः कामतः **नोपयुङ्क्ते** फलं नोपयुङ्क्ते । अप्रिये कामे **समुत्पत्य** सकृत्पतित्वा ।

**अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ।**
**[५]अप्रसादी भवेदेतैः स चाप्यष्टगुणो भवेत् ॥ ३४ ॥**

---

१. **'मदो'** इति कुं पाठः । ; २. **'विपर्ययाः स्मृता'** इति कुं पाठः ।
३. **'तान् दोषान् परिवर्जयेत्'** इति कुं पाठः ।; ४. **'समुत्पन्ने'** इति कुं पाठः ।
५. **'अप्रमादी'** इति कुं पाठः ।

**अप्रसादी भवेत्** इत्यत्र **एतैः** उक्तैः लोभमोहकामत्यागैः, **एतैः** एतत्पङ्क्तिपठितत्वादुक्तप्रायैः क्रोधमदमत्सरत्यागैश्चेति षड्भिस्त्यागैः । **स चापि** अप्रमादोऽपि ।

**सत्यं [1] न्यूनं समाधानं चोद्यं वैराग्यमेव च ।**
**अस्तेयं ब्रह्मचर्यं च तथाऽसङ्ग्रहमेव च ॥ ३५ ॥**

**एवं दोषा मदस्योक्तास्तान् दोषान् परिवर्जयेत् ।**
**तथा त्यागोऽप्रमादश्च स चाप्यष्टगुणो मतः ॥ ३६ ॥**

**सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।**
**तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥ ३८ ॥**

**सत्यं न्यूनम्** इत्यत्र 'हीनन्यूनावूनगर्ह्यौ' [2] इत्यभिधानत् **न्यूनम्** ऊनशब्दवाच्यगर्ह्यकर्मणो निवृत्तिर्न्यूनम् । **चोद्यं** कर्मसंशये प्राप्ते गुरून् प्रति विचारणा । **स चापि** दोषत्यागोऽपि । तानष्टविधान् दोषत्यागगुणान्, **सत्यमुखान्** प्रागुक्तसत्यादीनष्टगुणान् ।

**[3] निवृर्त्तन्नेव दोषेण तपो व्रतमिहाचरेत् ।**
**एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ३९ ॥**

**निवर्तन्नेव दोषेण** इत्यत्र **दोषेण** दोषात् ।

**इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।**
**अतीतानागतेभ्यश्च मुक्त्युपेतः सुखी भवेत् ॥ ३७ ॥**

---

१. **'ध्यानं'** इति कुं पाठः । ; २. अ.को. ३-३-१२८
३. **'निवृत्तेनैव'** इति कुं पाठः ।

**अतीतानागतेभ्यश्च** इत्यत्र **अतीतानि** नष्टद्रव्यमुद्दिश्य क्रियमाण-दुःखानि, **अनागतानि** अनागतद्रव्यलाभाय क्रियमाणदुःखानि तेभ्यः ।

**आख्यानपञ्चमैर्वेदैः भूयिष्ठं कथ्यते जनः ।**
**तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथा परे ॥ ४२ ॥**

**आख्यानम्** इतिहासपुराणः **पञ्चमः** पञ्चत्वसङ्ख्यापूरको येषां ते तथोक्ताः ।

**द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ।**
**तेषां तु कतरः सः स्यात् यमहं वेद वै द्विजम् ॥ ४३ ॥**

**अनृचश्च तथा पर** इत्यत्र अनृचः न विद्यन्ते **ऋचः** वेदा येषां ते **अनृचः** वेदश्रवणादिकं परित्यज्य ध्यानं गता इत्यर्थः । **ब्राह्मणं** विप्रम् ।

**सनत्सुजात उवाच –**
**एकवेदस्य[१] चाज्ञानात् वेदास्ते बहवः कृताः ।**
**सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥ ४४ ॥**

**य एनं वेद तत्सत्यं प्राज्ञो भवति नित्यदा ।**
**दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते ॥ ४५ ॥**

**एकवेदस्य चाज्ञानात्** इत्यत्र **अज्ञानात्** ज्ञानशक्त्यभावात् ।

**सत्यस्यैकस्य राजेन्द्र** इत्यत्र **एकस्यार्थ**क्रियाकारितया ब्रह्मणा सह

१. $D_{5.8.9,S(except T1)}$; BORI पृ. २०५; **'एकस्य वेदस्याज्ञानात्'** इति कुं पाठः ।

एकाकारस्य **सत्यस्य** पारमार्थिकसत्यस्य जगतः अज्ञानात् बहूनि सत्यानि पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन त्रीणि सत्यानि केचिदाहुः । **कश्चित्** 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः'[1] इत्यभिधानात् **कः** वायुरूपः **चित्** चेतयति सर्वमिति चित् ज्ञानि **सत्ये** एकस्मिन्नेव सत्ये अवस्थितः । तथा **सत्ये** सता जगता ईयत इति ये प्राप्ये नारायणे चावस्थितः ।

तत्तस्मात्कारणात् **एनं** प्रपञ्चं सत्यं यो वेद, स वायुदेवः **प्राज्ञः** प्रज्ञा-सम्बन्धित्वात् पूर्णप्रज्ञाख्यनामवान् भवति । यद्वा **एकस्य** ब्रह्मणि जगति चैकाकारतया स्थितस्य **सत्यस्य** भावप्रधानो निर्देशः । पारमार्थिकसत्यत्वस्य अज्ञानात् सत्ये उक्तविधया अनेकस्मिन् सत्यत्वे कश्चिद्वादी अवस्थितः । तस्मात्कारणात् **एनं** प्रपञ्चं **सत्यं** पारमार्थिक-सत्यं यो वेद स प्राज्ञो भवतीति योजना । **लोभात्** स्वर्गाख्यफल-लोभात् ।

**सत्यात्प्रच्यवमानानां सङ्कल्पो वितथो भवेत् ।**
**ततः[2] कर्म प्रभासेत सत्यस्यानवधारणात्** ॥ ४६ ॥

**सत्यात्प्रच्यवमानानाम्** इत्यत्र **सत्यात्** परब्रह्मणः । **ततः कर्म प्रभासेत** इत्यत्र **ततः** कारणात् **सत्यस्य** परमात्मनः अनवधारणात् कर्मैव **प्रभासेत** प्रकृष्टतया अज्ञानां मनसि भासेत ।

**छन्दांसि नाम द्विपदां वरिष्ठ स्वच्छन्दयोगेन भवन्ति तत्र ।**
**छन्दोविदस्तेन च तानधीत्य गता न वेदस्य न वेद्यमार्याः** ५२

---

१. अ.को. ३-३-५ ; २. 'ततो यज्ञः प्रतायेत' इति कुं पाठः ।

**छन्दांसि** इत्यत्र हे द्विपदां वरिष्ठ **स्वच्छन्दयोगेन** स्वेच्छानुसारतः पठनेन **नाम** इन्द्राग्न्यादीनां नामैव भवन्ति । तन्मुख्यार्थं गुरुमुखात् श्रवणाभावे कोऽपि न जानातीति भावः । **तेन** अभ्यासेन **तान्** वेदान्, **वेद्यं** वेदस्य मुख्यप्रतिपाद्यं **न गताः** नावगतवन्तः । **छन्दांसि नाम द्विपदां वरिष्ठ** इत्यत्र हे द्विपदां वरिष्ठ 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः'[१] इति वचनात् वस्तुगत्या छन्दांसि नाम भगवन्नामैव । एषोऽर्थः पुरस्तात् स्वर्गे देवैः ऋषिभिश्च निर्णीतः । **छन्दोविदस्तेन** इत्यत्र **छन्दोविदः** केवलच्छन्दोविदः ।

**न वेदानां वेदिता कश्चिदस्ति [२]वेदेन वेद्यं न विदुर्न [३]वेदम् ।**
**यो वेद वेदं स च वेद वेद्यं यो वेद वेद्यं न स वेद सत्यम्** ५४

**यो वेद वेदान् स च वेद वेद्यं नतं विदुर्वेदविदो न वेदाः ।**
**तथापि वेदेन विदन्ति वेदं ये ब्राह्मणा वेदविदो भवन्ति** ५५

**वेदेन वेद्यं न विदुर्न वेदम्** इत्यत्र ये वेदेन वेद्यं न विदुः ते वेदमपि न विदुः । **यः वेदं** केवलवेदं वेद । **यो वेद वेदान्** इत्यत्र **वेदान्** केवलवेदान् वेद, स च वेदवेद्यं **तं** नारायणं न वेद । वेदविदोऽपि न विदुः । **वेदाः** शुष्कवेदा अपि **न विदुः** न वेदयन्ति । **ये ब्राह्मणाः** ब्रह्ममीमांसोदितपरंब्रह्म अणन्ति पठन्ति[४] ते वेदविदोऽपि भवन्ति । वेदेन वेद्यं च विदन्ति ।

---

१. ना.उ.ता. ३-४. ; २. **'वेद्येन वेदं'** इति कुं. पाठः ।
३. **'वेदं'** इति कुं पाठः ।
४. **अवगच्छन्ति** सो.मु.पा.

**धार्मांशभाजोऽस्य तथा हि वेदा**
**यथा च शाखा हि महीरुहस्य ।**
**संवेदने चैव यथामनन्ति**
**तस्मिन्हि नित्ये[१] परमात्मनोऽर्थे ॥ ५६ ॥**

**धर्मांशभाजोऽस्य** इत्यत्र महीरुहस्य च शाखा च यथा, तथा वेदाः **परमात्मनः अर्थे** परमात्मप्रीत्यर्थमिति यावत् । **अस्य** परमात्मनः धर्मांशभाजोऽपि भवन्ति । एवं धर्मप्रतिपादनवत् तस्मिन्नेव **नित्ये** वेदभागे **अस्य** परमात्मनः **संवेदने** च सं सम्यक्पदसमन्वयेन वाक्य-समन्वयेन ज्ञापने च **आमनन्ति** तात्पर्यमामनन्ति । अन्यथा प्रलये कर्मणामभावेन नैरर्थक्यप्रसङ्ग इति सूचनाय नित्य इत्युक्तम् । अत एव 'क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः'[२] इति श्रुतिगीता । अजया महालक्ष्म्या आत्मना स्वेन च क्वचित्सृष्टिकाले कृष्णरामादिरूपेणा-वतीर्य अनुचरतः स्वानुकूल्येन यज्ञादिकमाचरतस्तव प्रीत्यर्थं निगमोऽपि अनुचरेत् अनु त्वच्चेष्टामनुसृत्य चरेत्, विधिनिषेधरूपेणापि सञ्चरेत् । अन्यदा त्वामेव वदेदिति हि तस्यार्थः ।

**तस्य पर्येषणं गच्छेत् प्रत्यर्थिषु कथञ्चन ।**
**अविचिन्वन्निमं वेदे तपः पश्यति तं प्रभुम् ॥ ५९ ॥**

**तस्य पर्येषणम्** इत्यत्र प्रत्यर्थिषु प्रतिवाक्यं एवमर्थो येषु तेषु ज्ञानिषु कथञ्चन गुरुशुश्रूषया विद्यया धनेन वा **तस्य** परमात्मनः **पर्येषणं** श्रवणमननध्यानरूपविचारं गच्छेत् ।

---

१. $C_S$; BORI पृ. २०६; **'सत्ये'**
२. **श्रुतिगीता १० स्कं ९३ अ. - भाग०**

**तूष्णीम्भूत उपासीत न चेष्टेन्मनसापि च ।**
**उपावर्तस्व तद्ब्रह्म अन्तरात्मनि विश्रुतम् ॥ ६० ॥**

**तूष्णीम्भूत उपासीत** इत्यत्र **अन्तरात्मनि** अन्तः आत्मा परमात्मा यस्य सः अपरोक्षज्ञानी योगीश्वरः तस्मिन्नभ्यागते सति **अस्य** हरेः **श्रुतं** वेदप्रतिपादितमहिमानं **बुद्ध्वा** तन्मुखाच्छ्रवणेन ज्ञात्वा अन्यदा तूष्णीम्भूत उपासीत । **अस्मै** अपरोक्षज्ञानाय ब्रह्म वेदं बहु यथा भवति तथा अभ्यावर्तेत । 'आवृत्तिरसकृदुपदेशात्'[1] इति हि सूत्रम् । **अनन्तरं** पश्चात् अनन्तरं केवलमन्तर एव न भवतीत्यनन्तरो व्याप्तः परमात्मा तं **आप्नुयात्** अपरोक्षतो जानीयात् । वैकुण्ठादिलोकगतं तमेव प्राप्नुयाच्च ।

**सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।**
**तन्मूलतो आकरणं व्याकरोतीति तत्तथा ॥ ६२ ॥**

**तन्मूलतो व्याकरणम्** इत्यत्र **तत्** परंब्रह्म **तथा**[2] यथाऽस्ति तथा व्याकरोतीति हेतोः **तत्** वेदात्मकं ब्रह्म **मूलतः** मूलमारभ्य व्याकरणं वदन्ति ।

**प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।**
**सत्ये वै ब्राह्मणस्तिष्ठंस्तद्विद्वान् सर्वविद्भवेत् ॥ ६३ ॥**

**सत्ये** परमात्मनि ।

॥ इति पञ्चचत्वारिंशोऽध्यायः ॥

---

१. ब्र.सू. ४-१-१. ; २. यथा यथाऽवस्थितं सो.मु.पा.

## ।। अथ षट्चत्वारिंशोऽध्यायः ।।

**धृतराष्ट्र उवाच –**

**[१]सनत्सुजात यमिमां परां त्वं**
**ब्राह्मीं वाचं वदसे विश्वरूपाम् ।**
**परां हि कामेन सुदुर्लभां कथां**
**प्रब्रूहि मे वाक्यमिदं कुमार ।। १ ।।**

**परां** अन्याम् । **कुमारः** कुत्सितः मारो यस्मात्स कुमारः, ब्रह्मणः कुमारो वा ।

**सनत्सुजात उवाच –**

**नैतद्ब्रह्म त्वरमाणेन लभ्यं**
**यन्मां [२]पृच्छन्नभिषङ्गेण राजन् ।**
**बुद्धौ विहीने मनसि प्रचिन्त्यं**
**[३]विद्याहिंसाब्रह्मचर्येण लभ्या ।। २ ।।**

**अभिषङ्गेण** स्नेहेन । अहिंसा च ब्रह्मचर्यं च अहिंसाब्रह्मचर्यं तेन ।

**आद्यां विद्यां वदसि हि सत्यरूपां**
**या प्राप्यते ब्रह्मचर्येण सद्भिः ।**[४]

---

१. कुं. ४४ अध्यायः ।

२. $D_n$,$D_s$,$D_{8-10}$,$T_2$,G,$C_s$; BORI पृ. २०७; 'पृच्छन्नतिहृष्यस्यतीव' इति कुं. पाठः ।

३. 'विद्या हि सा ब्रह्मचर्येण लभ्या' इति कुं. पाठः ।

४. BORI पृ २०९.

आद्यां विद्यां वदसि इत्यत्र वदसि वदेति वदसि ।

यः [१] आस्तृणोत्यवितथेन वर्णानृतं कुर्वन्नमृतं सम्प्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमस्य जानन् ॥९॥

य आस्तृणोति इत्यत्र आस्तृणोति ज्ञानं विस्तारयति । अमृतं नित्यं वेदम् ।

आचार्येणात्मकृतं विजानन् ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।
[२] यन्माद्यते तं प्रति हृष्टबुद्धिः स वै तृतीयो ब्रह्मचर्यस्य पादः ॥१४

यन्माद्यत इत्यत्र तं गुरुं प्रति 'मदी हर्षे' इति धातोः सन्तोषं करोति ।

एवं च सङ्गतं यदुपप्लवेद्धनं नाचर्यया कृतमिति चाभिमानात् ।
प्रज्ञो न मन्येत अहं करोमि सवै चतुर्थो ब्रह्मचर्यस्य पादः ॥१५॥

एवं च सङ्गतम् इत्यत्र यद्धनमुपप्लवेत् उपपन्नतया प्राप्नोति । आचर्यया आ सम्यक् चर्यया गुरुपरिचर्यया । प्राज्ञः एतत् अहं करोमीति न मन्येतेत्यन्वयः ।

कालेन पादं लभते तथार्थं ततश्च पादं गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छेच्छास्त्रेण पादं च ततोऽभियाति १६

गुरुयोगतः गुरुप्रसदाख्योपायतः । शास्त्रेण पादं च इत्यत्र शास्त्रेण स्वशिष्यं प्रति व्याख्यानरूपशासनेन ।

---

१. 'प्रावृणोत्यवितथेन' इति कुं पाठः ।
२. 'यन्मन्यते' इति कुं पाठः ।

[1]ज्ञानादयो द्वादश यस्य रूपमन्यानि चाङ्गानि तथा बलं च ।
आचार्ययोगे फलतीति चाहुर्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥१७॥

**ज्ञानादयो द्वादश** इत्यत्र **बलं** देवताबलं स्वयुक्तिबलं वा । **ब्रह्मार्थयोगेन** इत्यत्र **ब्रह्मार्थयोगेन** [2]परब्रह्मार्थज्ञानेन ।

[3]एतेनैव सगन्धर्वा रूपमप्सरसोऽजयन् ।
एतेन ब्रह्मचर्येण सूर्योऽप्यह्नाय जायते ॥ २१ ॥

गन्धर्वाः अप्सरसश्च **एतेन** ब्रह्मचर्येण रूपं 'जि प्राप्तौ' इति धातोः **अजयन्** प्राप्नुवन् ।

अन्तवन्तः [4]क्षत्रियास्ते जयन्ति
लोकान् जनाः कर्मणा निर्मलेन ।
ब्रह्मैव विद्वांस्तेन चाभ्येति
सर्वं नान्यःपन्था अयनाय विद्यते ॥ २४ ॥

**अन्तवन्तः क्षत्रियास्ते जयन्ति** इत्यत्र **अन्तवन्तः** निश्चयवन्तः ।

धृतराष्ट्र उवाच –
आभाति शुक्लमिव लोहितमिवाथो
कृष्णमथाञ्जनं काद्रवं वा ।

---

१. $T_2,G_{1.3.4},M_1$; BORI पृ. २११; **'धर्मादयो'** इति कुं पाठः ।
२. **परब्रह्माख्यार्थज्ञानेन** इति सो.मु.पा.
३. **'गन्धर्वाणामनेनैव रूपमप्सरसामभूत्'** इति कुं पाठः ।
४. BORI पृ. २१२; **'क्षत्रिय ते'** इति कुं पाठः ।

**[1]यद्ब्रह्मणः पश्यति [2]तद्धि विद्वा-**
**न्कथं रूपं तदमृतमक्षरं पदम् ॥ २५ ॥**

**यद्ब्राह्मणः पश्यति तद्धि विद्वान्** इत्यत्र विद्वान् ब्राह्मणः शुक्लादिषु यद्यद्रूपं पश्यति तद्रूपं कथमिति सम्बन्धः ।

**आभाति शुक्लमिव लोहितमि-**
**वाथो कृष्णमायसमर्कवर्णाम् ।**
**न पृथिव्यां तिष्ठति नान्तरिक्षे**
**नैतत्समुद्रे सलिलं बिभर्ति ॥ २६ ॥**

अप्राकृतत्वेन अनन्तसूर्यप्रतिमत्वेन च पृथिव्यादिरूपतो विलक्षणत्वात् स्वतन्त्रतया अन्याधारानपेक्षत्वाच्च **न तत्पृथिव्यां तिष्ठति** इत्याद्युक्तम् ।

**अपारणीयं तमसः परस्तात् तदन्तकोऽन्वेति विनाशकाले ।**
**अणीयो रूपं क्षुभ्धारया समं महच्च रूपं तद्वै पर्वतेभ्यः ॥ २१ ॥**

**तदन्तकोऽन्वेति विनाशकाल** इत्यत्र **अन्तकः** अन्ते पृथिव्यादितत्त्वानामवसाने विद्यमानः **कः** महत्तत्त्वाभिमानी ब्रह्म ।

**अनामयं तन्महदुद्यतं यशो वायोर्विकारं कवयो वदन्ति ।**
**यस्मिन् जगत् सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ३१**

**वायोर्विकारं वदन्ति** इत्यत्र वायोः **विकारः** विविधाकारः शास्त्रम् ।

---

१. $T_2$,$G_{1,2}$; BORI पृ. २१२; **'स ब्रह्मणः पश्यति'** इति कुं पाठः ।
२. **' योऽत्र विद्वान्'** इति कुं. पाठः ।

**तदेतदह्ना संस्थितं याति सर्वं तदात्मवित्पश्यति ज्ञानयोगात् ।**
**तस्मिन् जगत्सर्वमिदं प्रतिष्ठं ये तद्विदुरमृतास्ते भवन्ति ॥३२॥**

**तदेतदह्ना संस्थितम्** इत्यत्र **अह्ना** दिवसेन निमित्तेन ।

॥ इति षट्चत्वारिंशोऽध्यायः ॥

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

**[१] इष्टन् पुत्रान् विभवान् स्वांश्च दारान् अभ्यर्थितश्चार्हते शुद्धभावः ।**
**त्यक्तद्रव्यः संवसन्नेह कामाद्भुङ्क्ते कर्मस्वाशिषं बाधते च ॥१३॥**

**अभ्यर्थितश्चार्हते शुद्धभाव** इत्यत्र सौहार्दाद्दारदानेऽपि सा न नाशनीयेति सूचयितुं शुद्धभाव इत्युक्तम् ।

**एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ।**
**सत्वात् प्रच्यवमानानां सङ्कल्पेन समाहितम् ॥ १५ ॥**

**एतत्समृद्धमप्यृद्धम्** इत्यत्र समृद्धमपि एतद्द्रव्यं ततस्त्यागादेव ऋद्धम् अभिवृद्धं भवति । नो चेन्नष्टप्रायमिति भावः ।

**यतो यज्ञः प्रवर्धन्ते सत्यस्यैवावरोधनात् ।**
**मनसान्यस्य भवति वाचान्यस्याथ कर्मणा ॥ १६ ॥**

**सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधितिष्ठति ।**
**ब्राह्मणस्य विशेषेण किञ्चान्यदपि मे शृणु ॥ १७ ॥**

**मनसाऽन्यस्य भवति** इत्यत्र खलः मनसा अन्यस्य व्यापारस्य

१. कुं. ४५ अध्यायः ।

भवति । वाचा पुनरन्यस्य भवति । कर्मणा च ततोऽन्यस्य भवति । एवञ्च असङ्कल्पः मनोवाक्कर्मभिः समीचीनैकपक्षरहितः दुरात्मा सङ्कल्पसिद्धं पुरुषं **अधितिष्ठति** अधिकतया तिष्ठति । ततोऽप्यहमेव कुशल इति मन्यत इति भावः ।

**अध्यापयेन्महदेतद्यशस्यं**
**वाचो [1]विकारं कवयो वदन्ति ।**
**अस्मिन्योगे सर्वमिदं प्रतिष्ठितं**
**ये तद्विदुरमृतास्ते भवन्ति ॥ १८ ॥**

**वाचो विकारं कवयो वदन्ति** इत्यत्र 'एकमेकं सुशस्तिभिः' 'तयोर्जुष्टिं मातरिश्वा जगाम'[2]; 'त्रिपादूर्ध्व उदैत्पुरुषः'[3] 'चतुर्भिस्साकं नवतिं च'[4] 'विश्वतश्चक्षुः'[5] इत्यादिवेदवाचः विकारं प्रतिपादनयोग्यविविधाकारयुक्तं कवयः वदन्ति ।

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

**सनत्सुजात उवाच–**

**[6]यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।**
**तद्वै देवा उपासते तस्मात्सूर्यो विराजते ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १ ॥**

---

१. BORI पृ. ६६४; '**विकाराः**' इति कुं पाठः ।
२. ऋ.सं. १-११४-१ ; ३. ऋ.सं. १०-९०-४
४. ऋ.सं. १-१५५-६
५. महा नारा. २-२; श्वेता. ३-३
६. कुं. ४६ अध्यायः ; '**यत्तच्छुक्रं**' इति कुं पाठः ।

**यत्तच्छुक्रं महज्ज्योतिः** इत्यत्र **शुक्रं** शुभ्रं सूर्यमण्डलं **महज्ज्योतिः** ज्योतिःश्रेष्ठं **महद्यशः** महाकीर्तिसम्पन्नम् ।

**पूर्णात् [१] पूर्णमुद्धरन्ति पूर्णात् पूर्णानि चक्रिरे ।**
**हरन्ति पूर्णात् पूर्णानि पूर्णमेवावशिष्यते ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १० ॥**

**पूर्णात्पूर्णमुद्धरन्ति** इत्यत्र **पूर्णात्** हरेर्मूलरूपात् **पूर्णम्** अवतार-रूपम् ।

**आपोऽथाद्भ्यः सलिलस्य मध्ये**
**उभे देव्यौ शिश्रियातेऽन्तरिक्षे ।**
**[२] स सध्रीचिः स विषूचीर्वसानः**
**उभे बिभर्ति पृथिवीं दिवं च ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३ ॥**

**आपोऽथाद्भ्यः सलिलस्य मध्य** इत्यत्र अथ **अद्भ्यः** बाह्यावरणोदकेभ्यः **आपः** ब्रह्माण्डान्तस्स्थितगर्भोदकानि । तस्य सलिलस्य मध्ये **अन्तरिक्षे** जलान्तस्स्थिताकाशे **उभे देव्यौ** श्रीभूदेव्यौ शिश्रियाते । **सध्रीचीः** समीचीनाः **विषूचीः** विष्वग्वर्तमाना अपः **वसानः** वस्त्रवत्-परितो बिभ्राणः स परमात्मा ।

**[३] चक्रेणावर्त्य तिष्ठन्तं अध्रुवस्याव्ययकर्मणः ।**

---

१. **'पूर्णान्युद्धरन्ति'** इति कुं पाठः ।
२. BORI पृ २१५; **'अतन्द्रितः सवितुर्विवस्वानुभौ'** इति कुं. पाठः ।
३. BORI पृ २१५; **'चक्रे रथस्य तिष्ठन्तोऽध्रुवस्याव्ययकर्मणः'** इति कुं पाठः ।

**केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्** ॥ ५ ॥

**चक्रेणावर्त्य तिष्ठन्तम्** इत्यत्र अव्ययकर्मणः **ध्रुवस्य** ध्रुवमण्डलस्य सम्बन्धिना **चक्रेण** ज्योतिश्चक्रेण **आवर्त्य** ग्रह-नक्षत्रादीन् परितो भ्रामयित्वा तिष्ठन्तं **केतुमन्तं** ध्वजसहितं **तं** सूर्यरथनियामकं परमात्मानं **अश्वाः** सप्ताश्वाः वहन्ति ।

**न [१]सन्दृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**मनीषयाथो मनसा हृदा च**
**य एनं विदुरमृतास्ते भवन्ति ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्** ॥ ६ ॥

**न सन्दृशे तिष्ठति रूपमस्य** इत्यत्र **अस्य** परमात्मनः रूपं ज्योतिश्चक्रसूर्यमण्डलरथादिनियामकतया तिष्ठति । न **सन्दृशे** सम्यङ् न ददृशे ।

[२]**द्वादशधा दशधा** इत्यत्र **तस्य** परमात्मनः **मदिष्ठाः** अतिशयेन सन्तोषकराः **सरितः** गङ्गायमुनाद्या नद्यः **ईशते** [३]पापनिर्हरणाय समर्था भवन्ति । या नद्यः इह लोके **अरं** सम्यक् सञ्चरन्ति ।

[४]**तदर्प्यमाणमपिबन् सञ्चितं भ्रमरो मधु ।**

---

१. T,G$_{1.3.4}$,M$_{1(sup.lin)}$; BORI पृ. २१६; **'सादृश्ये'** इति कुं पाठः ।
२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
३. **पापनिर्हरणसमर्था** श्री. सो.मु.पा.
४. **'तदर्धमासं पिबति'** इति कुं. पाठः ।

**ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ८ ॥**

**तदर्प्यमाणमपिबन्** इत्यत्र **तेन** परमात्मना अर्प्यमाणं **सञ्चितं** स्वस्वकर्मणा आर्जितं **मधु** 'मदी हर्षे' इति धातोः 'तृतीयोऽतिशये' इति वचनाच्च आनन्दकरत्वान्मधुस्थानीयं सूर्यमण्डलं **भ्रमराः** आदित्या रुद्रा वसवो मरुतश्चेति चतुर्दिक्षु विद्यमानाः भ्रमरोपमा देवाः अपिबन् । **ईशानः सर्वभूतेषु** इत्यत्र **हविर्भूतं** प्राणाग्निहोत्रे हविर्भूतमन्नं अकल्पयत् ।

**हिरण्यवर्णमश्वत्थमभिपद्य ह्यपक्षकाः ।**
**ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ९ ॥**

**हिरण्यवर्णमश्वत्थम्** इत्यत्र **सपक्षकाः** पक्षसहिताः **ते** मुक्ताः पक्षिणः **अश्वत्थं** श्वेतद्वीपगतममृतस्रवणमश्वत्थम् **अभिपद्य** अभितो गत्वा यथासुखं **प्रभवन्ति** प्रकृष्टा भवन्ति ।

**अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।**
**आदित्यो गिरते चन्द्रमादित्यं गिरते परः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १३ ॥**

**अपानं गिरति प्राण** इत्यत्र संहारक्रमः कथ्यते । अत्र **प्राणः** अवान्तरो वायुः । **परः** परमात्मा ।

**एकं पादं [1] समुत्क्षिपति सलिलार्धं स उच्चरन् ।**

---

१. **'नोत्क्षिपति सलिलाद्धंस'** इति कुं पाठः ।

**तं चेत्सन्ततमूर्ध्वाय न मृत्युर्नामृतं भवेत् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १४ ॥**

**एकं पादं समुत्क्षिपति** इत्यत्र **सलिलार्धं** सलिलं गर्भोदकम् अर्धं यथा भवति तथा कृत्वा **उच्चरन्** ऊर्ध्वं चरन् **स** नारायणः एकं पादं 'पादोऽस्य विश्वा भूतानि'[१] इति श्रुतेः विश्वव्यापकं विश्वरूपाख्यं रूपं **समुत्क्षिपति** ऊर्ध्वाण्डखर्परपर्यन्तं सम्यगूर्ध्वं क्षिपति । **न मृत्युर्नामृतम्** इत्यत्र आ समन्तात् मृतं मरणं यस्मात्तदामृतं संसारः न ।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा लिङ्गस्य योगेन स याति नित्यम् ।**
**तमीशमीड्यमनुकल्पलमाद्यं पश्यन्ति मूढा न विराजमानम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १५ ॥**

**लिङ्गस्य योगेन** इत्यत्र **लिङ्गस्य** लिङ्गदेहस्य ।

**गूहन्ति सर्पा इव [२]गह्वरेषु [३]क्षयं नीत्वा स्वेन वृत्तेन मर्त्याः ।**
**ते गूहयन्त्यैव जना[४] विमूढा [५]तैर्दत्तं वै मोहयन्ते भवाय ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २१ ॥**

**गूहन्ति सर्पा इव** इत्यत्र मर्त्याः वृत्तेन श्रवणादीनामावर्तनेन यं परमात्मानं **क्षयं** हृदयगुहाख्यमन्दिरं नीत्वा **गूहयन्ति** आच्छादयन्ति । **गह्वरेषु** गुहासु **सर्पाः** मण्डलीभूय शयानाः सर्पाः इव स्वशिरोरत्नमिव **ते** ज्ञानिनः, **तैः** ज्ञानिभिः **दत्तम्** उपदिष्टं हरिं **भवाय** शोभनाय गूहयन्ति ।

---

१. ऋ.सं. १०-९०-३ ; २. 'गह्वराणि' कुं. पाठः ।
३. 'स्वशिक्षया' कुं. पाठः । ; ४. 'तेषु प्रमुह्यन्ति' कुं. पाठः ।
५. 'यथाध्वानं मोहयन्ते भयाय' कुं. पाठः ।

असाधना वाऽपि ससाधना वा
समानमेतद् दृश्यते मानुषेषु ।
समानमेतदमृतस्योत्तरस्य[१]
युक्तास्तत्र[२] मध्वनुत्तं समापुः
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १६ ॥

**असाधना वाऽपि** इत्यत्र **असाधनाः** मोक्षसाधनरहिता वा **ससाधनाः** मोक्षसाधनसहिता वा ये मानुषास्तिष्ठन्ति तेषु मानुषेषु तद्धृदय इत्यर्थः । एतद्ब्रह्म **समानं दृश्यते** योगिभिर्दृश्यते । **उत्तरस्य** अमृतस्य मोक्षस्य एतद्ब्रह्म **समानं** तद्योग्यतया समानं योग्याय दिशति । अयोग्याय न दिशतीत्यर्थः । तदेव विशदयति तत्र योग्यायोग्यजीवेषु **युक्ताः** योगयुक्ताः **मध्वनुत्तं** 'नुत्तनुन्नास्तनिष्ठ्यूत-विद्धक्षिप्तेरिताः समा'[३] इत्यमरः । गध्वरूपेण वायुना प्रेरितं ब्रह्म समापुरिति योजना ।

उभौ लोकौ विद्यया व्याप्य यान्ति[४]
तदा हुत्वा[५] चानुहुतमग्निहोत्रम् ।
मात्रे ब्राह्मीं[६] लघुतामादधीत
प्रज्ञानं स्यान्नाम धीरा लभन्ते ॥

---

१. 'समानमेतदमृतस्येतरस्य' कुं. पाठः ।
२. 'मुक्तास्तत्र मध्व उत्सं समापुः' कुं. पाठः ।
३. अ.को. ३-१-८७
४. 'याति' इति कुं पाठः ।
५. 'हुतं चाहुतमग्निहोत्रम्'
६. 'मा ते ब्राह्मी' इति कुं. पाठः ।

**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्** ॥ १७ ॥

**उभौ लोकौ विद्यया व्याप्य यान्ति** इत्यत्र **मात्रे**[१] पञ्चतन्मात्रके देहे **ब्राह्मीं** वेदसम्बन्धिनीं वेदप्रतिपादितामिति यावत्। **लघुताम्** असारतां आदधानाः कुर्वन्तः **अनुहुतम्** अनु ज्ञानानुकूलतया हुतं पूर्वैर्हुतं अग्निहोत्रं च हुत्वा धीराः अस्य प्रज्ञां लभन्ते नाम। ततः विद्यया उभौ लोकौ व्याप्य **यान्ति** इमं परमात्मानं यान्ति।

**एवंरूपो महात्मा स पावकं पुरुषोऽङ्गिराः**[२]।
**यो वै तं पुरुषं तस्येहार्थो न रिष्यते।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्** ॥ १८ ॥

**पावकं पुरुषोऽङ्गिरा** इत्यत्र **अङ्गिनि** अङ्गदेवतासहिते हरौ रमत इत्यङ्गिराः ज्ञानी ऋषिर्वा।

[३]**सदाध्वसात्कृतोऽस्यान्नं**
**मृत्युर्न चामृत्युरमृतं मे कृतः स्यात्।**
**सत्यानृते सत्यसममानुबन्धिनी**[४]
**सतश्च योनिरसतश्चैक एव ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्** ॥ २२ ॥

**सदाऽध्वसात्कृतोऽस्यान्नम्** इत्यत्र **सतः** सज्जनस्य **असतः** दुर्जनस्य

---

१. **पञ्चतन्मात्रात्मके** सो.मु.पा.
२. **'पुरुषो गिरन्'** इति कुं. पाठः।
३. **'नाहं सदाऽसत्कृतः स्यां न मृत्यु...'** इति कुं पाठः।
४. **'सत्यसमानुबन्धे'** इति कुं. पाठः।

च **योनिं** पोषकतया कारणम् **एकं** मुख्यम् **अन्नम्** अन्नस्थम् अन्न-नामकं परमात्मानं **सदा अध्वसात्** मोक्षमार्गतया **कृतः** कुर्वतः अल्पाहारं कुर्वत इति यावत् । **अमृतं** तदेवामृतप्रायं कुर्वतः अल्पाहारेऽपि चिन्तामकुर्वत इति यावत् । **सत्यसमानुबन्धिनी** सत्यस्यैव समाने **सत्यानृते** 'सत्यमोमिति सम्प्रोक्तं यन्नेत्याहानृतं हि तत्' इति वचनात् सत्यं सति वित्ते द्रव्यदानादौ ओमित्यङ्गीकार-वचनम्, **अनृतं** धनाभावे नेति वचनं च **कृतः** कुर्वतः **अस्य** ज्ञानिनः मृत्युर्न इति योजना ।

**यः सहस्रं सहस्राणां पक्षान्संतत्य संपतेत् ।**
**नान्तं[1] गच्छेत् कारणस्यापि चेत् स्यात् मनोजवः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १९ ॥**

**यः सहस्रं सहस्राणाम्** इत्यत्र सहस्राणां मासानां व्रजात् सहस्रं पक्षांश्च यः सम्यक् पतेत्, शतादुपरि विंशतिवर्षपर्यन्तं जीवेदित्यर्थः । **कारणस्य** सर्वोत्पत्तिमन्निमित्तकारणस्य कालस्य ।

**नास्यातिवादा हृदयं तापयन्ति**
**नानधीतं नाहुतमग्निहोत्रम् ।**
**मनो ब्राह्मी लघुतामादधीत**
**प्रज्ञां चास्मै नाम धीरा लभन्ते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २४ ॥**

**योगिनस्तं प्रपश्यन्ति** इत्यत्र तं तादृशकालनियामकं योगिनः प्रपश्यन्तीति योजना ।

---

१. 'मध्यमे मध्य आगच्छेदपि चेत् स्यान्मनोजवः' कुं. पाठः ।

**यथोदपाने महति सर्वतः संप्लुतोदके ।**
**एवं सर्वेषु वेदेषु आत्मानमनुजानतः ॥ २६ ॥**

**यथोदपाने महति** इत्यत्र **सर्वतस्संप्लुतोदके** महति समुद्रे यथा तृषितस्य **उदपाने** उदकपानमात्रे कृत्यम् ।

**[1]अहमेवास्मि ते माता पिता पुत्रोऽस्म्यहं पुनः ।**
**आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ २८ ॥**

**पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।**
**ममैव यूयमात्मस्था न मे यूयं न वो ह्यहम् ॥ २९ ॥**

**अहमेवास्मि ते माता** इत्यादिकं यज्जीवं प्रति परमात्मनो वचनम्, सनत्सुजातस्तु तदनुवादकः । **आत्मा** अन्तर्यामी । 'असङ्गो ह्ययं पुरुषः' इति श्रुत्यर्थसूचनाय **मे** यूयं **न**, **वः** अहं च नास्मीत्युक्तम् ।

**आत्मैव स्थानं मम जन्म चात्मा**
**ओतप्रोतोऽहमजरप्रतिष्ठः ।**
**अजश्चरो दिवारात्रमतन्द्रितोऽहं**
**मां विज्ञाय कविरास्ते प्रसन्नः ॥ ३० ॥**

**आत्मैव स्थानम्** इत्यत्र मम **आत्मा** देह एव स्थीयते अत्रेति व्युत्पत्त्या **स्थानम्** । मम आत्मैव जायते अस्मादिति **जन्म** ।

**अणोरणीयान् सुमनाः सर्वभूतेषु जाग्रति ।**
**पितरं सर्वभूतेषु पुष्करे निहितं विदुः ॥ ३१ ॥**

---

१. **'अहमेव स्मृतो माता'** इति कुं पाठः ।

पुष्करे हृदयकमले **निहितं** सन्निहितं विदुः ।

**॥ इति अष्टचत्वारिंशोऽध्यायः ॥**

**॥ सनत्सुजातीयं समाप्तम् ॥**

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

**[१]तस्यां रजन्यां व्युष्टायां राजानः [२]सर्वपार्थिवाः ।**
**सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया ॥ २ ॥**

**राजानः सर्वपार्थिवा** इत्यत्र **सर्वपार्थिवाः** सर्वपृथिवीसम्बन्धिनः ।

**प्राप्तोऽस्मि पाण्डवान् गत्वा मां विजानीत कौरवाः ।**
**यथावयः कुरून् सर्वान् प्रतिनन्दन्ति पाण्डवाः ॥ १५ ॥**

**प्राप्तोऽस्मि मां विजानीत** इत्यत्र प्राप्तोऽस्मीति विजानीतेति सम्बन्धः ।

**॥ इति एकोनपञ्चाशोऽध्यायः ॥**

## ॥ अथ पञ्चाशोऽध्यायः ॥

**सञ्जय उवाच –**

**[३]आगुल्फेभ्योऽपि संवीतः प्रयतोऽहं कृताञ्जलिः ।**
**शुद्धान्तं प्राविशं राजन्नाख्यातो नरसिंहयोः ॥ १९ ॥**

---

१. कुं. ४७ अध्यायः ।

२. **'सर्व एव ते'** इति कुं पाठः ।

३. **'आगुल्फेभ्योऽभिसंवीतः'** इति कुं पाठः । कुं पाठानुसारेण पूर्वाध्याय एवानुसरति ।

**आगुल्फेभ्योऽपि संवीत** इत्यत्र **संवीतः** वस्त्रेणाच्छन्नः । **शुद्धान्तः** 'शुद्धान्तश्चावरोधश्च'[१] इत्यभिधानात् अन्तःपुरम् ।

**सत्याङ्कमुपधानं तु कृत्वा शेते जनार्दनः ।**
**अर्जुनाङ्कगतौ पादौ केशवस्योपलक्षये ।**
**अर्जुनस्य च कृष्णायाः शुभायाश्चाङ्कगावुभौ ॥ २३ ॥**

**अर्जुनस्य च कृष्णाया** इत्यत्र मञ्चसमीपे अधस्तात्कनकमयपीठे स्थितायाः कृष्णाया इत्यर्थः ।

**काञ्चनं पादपीठं तु पार्थो वै प्रादिशन् मुदा ।**
**दासीभ्यामाहृतं मह्यं स्पृष्ट्वा भूमावुपाविशम् ॥ २४ ॥**

**काञ्चनं पादपीठं तु** इत्यत्र **पादपीठं** सञ्जयं दृष्ट्वा द्रौपद्युत्थानानन्तरं मञ्चादधस्ताल्लम्बमानयोः अर्जुनपादयोः आधारभूतं पीठम् ।

**ततोऽभ्यचिन्तयं तत्र दृष्ट्वा तौ पुरुषर्षभौ ।**
**सङ्कल्पो धर्मराजस्य नानवाप्योऽस्ति कश्चन् ।**
**निर्देशगाविमौ यस्य नरनारायणावुभौ ॥ २९ ॥**

**निर्देशगाविमौ** इत्यत्र **निर्देशः** शासनम् ।

**धनुर्धरोचितेनाथ पाणिनैकं सलक्षणम् ।**
**पादमानाययत्पार्थः केशवस्य यशस्विनः ॥ ३१ ॥**

**धनुर्धरोचितेन** इत्यत्र धनुषः **धरो** धारणं **तस्य** उचितेन ।

---

१. अ.को. २-२-१२

बहिश्चरस्य प्राणस्य प्रियस्य प्रियकारिणः ।
मतिमान्मतिमास्थाय केशवः सन्दधे वचः ॥ ३४ ॥

**बहिश्चरस्य प्राणस्य** इत्यत्र **बहिश्चरस्य प्राणस्य** बहिश्चरप्राण-समार्जुनस्य ।

श्रीभगवानुवाच –

सञ्जयैतद्वचो ब्रूयाः प्राप्य क्षत्रियसंसदम् ।
[१]छन्दतः कुरुवृद्धस्य आचार्यस्य च धीमतः ॥ ३६ ॥

**छन्दतः कुरुवृद्धस्य** इत्यत्र **छन्दतः** इच्छानुसारेण, **कुरुवृद्धस्य** भीष्मस्य ।

अर्थांस्त्यजत पार्थेषु सुखमाप्नुत कामजम् ।
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ ३७ ॥

**राजा हि त्वरत** इत्यत्र **राजा** धर्मराजः ।

॥ इति पञ्चाशोऽध्यायः ॥

## ॥ अथ एकपञ्चाशोऽध्यायः ॥

[२]अवित्रस्तो बाहुवीर्यं विजान-
न्नुपह्वरे वासुदेवस्य धीरः ।
अवोचन् मां योत्स्यमानः किरीटी
मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ॥ ३ ॥

---

१. 'भृण्वतः' इति कुं पाठः । ; २. कुं. ४८ अध्यायः ।

उपह्वरे वासुदेवस्य इत्यत्र उपह्वरे समीपे ।

**अस्ति नूनं कर्म कृतं पुरस्तात् अनिर्विष्टं पापकं धार्तराष्ट्रैः ।**
**येषां युद्धं भीमसेनार्जुनाभ्यां तथाश्विभ्यां वासुदेवेन चैव ॥ ८ ॥**

**अनिर्विष्टं पापकं धार्तराष्ट्रैः** इत्यत्र 'निर्वेश उपभोगः स्यात्'[१] इत्यमरः । **अनिर्विष्टम्** अभुक्तफलम् ।

**शैनेयेन ध्रुवमात्तायुधेन धृष्टद्युम्नेनाथ शिखण्डिना च ।**
**युधिष्ठिरेणेन्द्रकल्पेन चैव [२]योऽवध्यानान्निर्दहेद्द्यां दिवं च ॥ ९ ॥**

**योऽवध्यानान्निर्दहेद्द्यां दिवम्** इत्यत्र **अवध्यानात्** कोपेनावज्ञानात् ।

**तैश्चेद्योद्धुं मन्यते धार्तराष्ट्रो निर्वृत्तोऽर्थः सकलः पाण्डवानाम् ।**
**मा तत्कार्षीः [३]पाण्डवस्यार्थहेतोरपैहि युद्धं यदि मन्यसे त्वम्**
**॥१०॥**

**मा तत्कार्षीः पाण्डवस्यार्थहेतोरपैहि** इत्यत्र तत् तस्मात्कारणात् यदि त्वं मन्यसे तर्हि **पाण्डवस्यार्थहेतोः** द्रव्यार्थं युद्धं मा कार्षीः । **अपैहि** युद्धादपगतो भव ।

**[४]मायापदं प्रणिधानार्जवाभ्यां**
**तपोदमाभ्यां धर्मगुप्त्या बलेन ।**
**सत्यं ब्रुवन् प्रतिपन्नो नृपो न-**
**स्तितिक्षमाणः क्लिश्यमानोऽतिवेलम् ॥ १३ ॥**

---

१. अ.को. ३-२-२०। ; २. '**योऽपध्याना...**' इति कुं पाठः ।
३. '**पाण्डवस्यार्थहेतोरुपैहि**' इति कुं पाठः ।; ४. '**मायोपधं**' इति कुं. पाठः ।

**मायापदं प्रणिधानार्जवाभ्याम्** इत्यत्र **मायापदं** दुर्योधनमायया कृतामापदं तितिक्षमाण इति सम्बन्धः । **प्रणिधानं** चित्तसमाधानम् ।

**कृष्णवर्त्मेव ज्वलितः समिद्धो यथा दहेत् कक्षमग्निर्निदाघे ।**
**एवं दग्धा धार्तराष्ट्रस्य सेनां युधिष्ठिरः क्रोधदीप्तोन्ववेक्ष्य ॥१५॥**

**एवं दग्धा धार्तराष्ट्रस्य सेनाम्** इत्यत्र **दग्धा** दाहं कर्ता । 'दह भस्मीकरणे' इति धातोर्लुडन्तस्येदं रूपम् ।

**उपासङ्गानाचरेद्दक्षिणेन**
**वराङ्गानां नकुलश्चित्रयोधी ।**
**यदा रथाग्र्यान् रथिनः प्रवेप्ता[१]**
**तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २४ ॥**

**यदा रथाग्र्यान् रथिनः प्रवेप्ता** इत्यत्र **प्रवेप्ता** प्रवेपयिता ।

**यदा द्रष्टा द्रौपदेयान् महेषून् शूरान् कृतास्त्रान् रथयुद्धकोविदान्**
**[२]आशीविषः क्रुद्ध इवाचरेद्यदा तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ३१**

**आशीविषः क्रुद्ध इवाचरेद्यदा** इत्यत्र **आचरेत्** आ समन्ताद्रणरङ्गे चरेत् ।

**[३]ब्रूयाच्च मां प्रावृणीष्वेति लोके**
**युद्धेऽद्वितीयं सचिवं रथस्थम् ।**

---

१. $M_{(1.inf.lin)}$; BORI पृ. २२६; '**प्रचेता**' इति कुं पाठः ।
२. '**आशीविषान् घोरविषानिवातयत**' इति कुं पाठः ।
३. BORI पृ. २२९; '**इदं च ब्रूया मां वृणीष्वेति लोके**'

**शिनेर्नप्तारं प्रवृणीम सात्यकिं**
**महाबलं वीतभयं कृतास्त्रम्** ॥ ४४ ॥

**ब्रूयाच्च माम्** इत्यत्र मां प्रवृणीष्वेति यो ब्रूयात् तमित्युत्तरेण सम्बन्धः ।

**[१] स च स्रष्टा ज्यामुखाद्बाणसङ्घान्**
**गाण्डीवमुक्तानापततः शिताग्रान् ।**
**[२] हयान् गजान् रथिनश्चाददान-**
**स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत्** ॥ ५५ ॥

**स च स्रष्टा** इत्यत्र सोऽहमर्जुनः यदा स्रष्टा, नागान् हयान् रथिनश्च आददानः अयं दुर्योधनश्च यदा द्रष्टेति सम्बन्धः ।

**यदा मन्दः परबाणान्विमुक्ता-**
**[३] न्महेषुभिः क्रियमाणान् प्रतीपम् ।**
**[४] तिर्यग्विधांश्छिद्यमानान् क्षुरैश्च[५]**
**तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत्** ॥ ५६ ॥

**यदा मन्द** इत्यत्र **महेषुभिः** स्वसेनास्थरथिभिः विमुक्तान् **प्रतीपं** अर्जुनस्य प्रतिकूलं यथा भवति तथा क्रियमाणान् **तिर्यग्विधान्** तिर्यक्पतमानपक्षिसदृशान् **परबाणान्** अर्जुनवैरिभूतस्वसैनिकानां

---

१. **'यदा द्रष्टा'** इति कुं पाठः ।; २. **'हयान्गजान्वर्मिणश्चाददानां'** इति कुं. पाठः
३. $K_4$,B,$D_{5,6,8}$; BORI पृ. २३१; **'न्महेषुभिर्ह्रियमाणान्प्रतीपम्'** इति कुं. पाठः ।
४. $D_1$,$T_2$; BORI पृ. २३१; **'तिर्यग्विध्यच्छिद्यमानान्'** इति कुं पाठः ।
५. $G_4$,M; BORI पृ. २३१; **'पृषत्कैः'** इति कुं. पाठः ।

बाणान् **क्षुरैश्छिद्यमानान्** अर्जुनमुक्तक्षुराग्रशरौघैश्छिद्यमानांश्च यदा द्रष्टेति सम्बन्धः ।

**पदातिसङ्घान् रथसङ्घान् समन्ता-**
**द्व्यात्ताननः काल [1] इवागते तु ।**
**प्रणोत्स्यामि ज्वलितैर्बाणवर्षैः**
**शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ॥ ६० ॥**

**काल इवागते तु** इत्यत्र **आगते** मरणसमये प्राप्ते सति **कालो** मृत्युरिव ।

**यदा रथे गाण्डिवं वासुदेवं**
**दिव्यं शङ्खं पाञ्चजन्यं हयाश्च ।**
**तूणावक्षय्यौ देवदत्तं च मां च**
**द्रष्टा युद्धे धार्तराष्ट्रः [2] समेतान् ॥ ६४ ॥**

**द्रष्टा युद्धे धार्तराष्ट्रः समेतान्** इत्यत्र यदा द्रष्टा तदा तप्येदित्युत्तरवाक्यमावर्त्य योजनीयम् ।

**[3] रुद्रो वा ते हरिवान्वज्रहस्तः**
**पुरस्ताद्यातु समरेऽरीन्विनिघ्नन् ।**
**सुग्रीवयुक्तेन रथेन वा ते**
**पश्चात्कृष्णो रक्षतु वासुदेवः ॥ ६८ ॥**

---

१. **'इवाततेषु'** इति कुं पाठः ।
२. **'अन्वतपस्यत्'** इति कुं पाठः ।
३. **'इन्द्रो वा ते हरिवान्वज्रहस्तः'** इति कुं पाठः । ; ३. ह.को. १-५४

**रुद्रो वा ते हरिवान् वज्रहस्त** इत्यत्र रुद्रो वा, 'हरिवान् पाकशासनः'[१] इत्यभिधानात् **वज्रहस्तः** इन्द्रो वा ते पुरस्ताद्यातु । **सुग्रीवयुक्तेन रथेन वा त** इत्यत्र सुग्रीवयुक्तेन रथेन वा अदृश्य एव वा रक्षतु ।

**अयं गान्धारांस्तरसा सम्प्रमथ्य**
**जित्वा पुत्रान्नग्नजितः समग्रान् ।**
**बद्धं मुमोच [२]निनदन्तं [३]प्रगृह्य**
**सुदर्शनं वै देवतानां ललामम्** ॥ ७९ ॥

**निनदन्तं प्रगृह्य** इत्यत्र **निनदन्तं** वृषभम् ।

**निर्मोचने षट्सहस्राणि हत्वा**
**सञ्छिद्य पाशान् सहसा क्षुरान्तान् ।**
**मुरं हत्वा विनिहत्यौघरक्षो**
**निर्मोचनं चापि जगाम वीरः** ॥ ८३ ॥

**निर्मोचने षट्सहस्राणि हत्वा** इत्यत्र **निर्मोचने** पाशानां ग्रन्थिनिर्मोचने सति । **निर्मोचनं चापि जगाम** इत्यत्र निर्मोचनं पाशानां निर्मोचनं जगाम ।

**अस्मै वराण्यददंस्तत्र देवा**
**दृष्ट्वा भीमं कर्म कृतं रणे तत् ।**
**श्रमश्च ते युध्यमानस्य न स्या-**
**दाकाशे चाप्सु च ते क्रमः स्यात्** ॥ ८६ ॥

---

२. $D_9$,$T_2$,$G_{2,4}$,M; BORI पृ. २३४; **'विनदन्तं'** इति कुं पाठः ।
३. $D_1$,$G_3$,$M_{(except M2)}$; BORI पृ. २३४; **'प्रसह्य'** इति कुं. पाठः ।

**क्रमः** पादविक्षेपः स्यात् ।

**शस्त्राणि गात्रे न च ते क्रमेरन्-**
**[१]नित्यं च कृष्णश्च ततः कृतार्थः ।**
**एवंरूपे वासुदेवेऽप्रमेये**
**महाबले गुणसंपत्सदैव ॥ ८७ ॥**

**नित्यं च कृष्णश्च** इत्यत्र नित्यं च कृतार्थः कृष्णः **ततः** देववराच्च कृतार्थोऽभूदिति योजना ।

**न [२]चेदिदमपजयं कर्मबन्धं**
**न चेदस्मान्मन्यतेऽसौ विशिष्टान् ।**
**आशंसेऽहं वासुदेवद्वितीयो**
**दुर्योधनं सानुबन्धं निहन्तुम् ॥ ९४ ॥**

**न चेदिममपजयं कर्मबन्धम्** इत्यत्र इमं अस्माकमपजयं कर्मबन्धं दुर्द्यूताख्यकर्मणा[३] बन्धो यस्य तं न मन्यते चेत् ।

**प्रत्यक्षं वः कुरवो यद्ब्रवीमि**
**युद्ध्यमाना धार्तराष्ट्रा न सन्ति ।**
**अन्यत्र युद्धात्कुरवो यदि स्यु-**
**र्न युद्धे वै शेष इहास्ति कश्चित् ॥ ९६ ॥**

**अन्यत्र युद्धात्** इत्यत्र युद्धादन्यत्र कुरवो यदि स्युः तर्हि स्युरेव ।

---

१. '**नित्येत्रं**' इति कुं पाठः । ; २. '**चेदिदं पौरुपं कर्मबद्धं**' इति कुं पाठः ।
३. **दुर्द्यूताख्येन कर्मणा** सो.मु.पा.

**उच्चावचं दैवयुक्तं रहस्यं**
**[१]दैवप्रज्ञाग्रहचर्यामुहूर्ताः ।**
**क्षयं महान्तं कुरुसृञ्जयानां**
**निवेदयन्ते पाण्डवानां जयं च ॥ ९९ ॥**

**उच्चावचं दैवयुक्तं रहस्यम्** इत्यत्र **दैवप्रज्ञाः दैवात्** दैवबलात् प्रकर्षेण जानन्तीति दैवप्रज्ञाः ग्रहचर्या च मुहूर्तश्च येषु ते तथोक्ताः ।

**[२]स्वयं चाहं यानि पश्यामि नित्यं**
**भविष्यन्ति वै पूर्वरूपाणि युक्त्या ।**
**दृष्टिश्च मे न व्यथते पुराणी**
**स युध्यमाना धार्तराष्ट्रा न सन्ति ॥ १०१ ॥**

**पूर्वरूपाणि युक्त्या** इत्यत्र **पूर्वरूपाणि** पूर्ववद्राज्यार्हरूपाणि भविष्यन्ति ।

**गोमायुसङ्घाश्च नदन्ति रात्रौ**
**रक्षांस्यथो निष्पतन्त्यन्तरिक्षात् ।**
**मृगाः शृगालाः शितिकण्ठाश्च काका**
**गृध्रा [३]मृगाश्चैव तरक्षवश्च ॥ १०४ ॥**

**मृगाश्चैव तरक्षवश्च** इत्यत्र मार्गयन्तीति **मृगाः** ।

---

१. **'दिव्या प्रश्ना मृगचक्रा मुहूर्ताः'** इति कुं. पाठः ।
२. **'अहं तथैनं खलु भाविरूपं पश्यामि बुद्ध्या स्वयमप्रमत्तः'** इति कुं पाठः ।
३. **'बकाश्चैव'** इति कुं पाठः ।

**ये वैजय्याः समरे सूत लब्ध्वा**
**देवानपीन्द्रप्रमुखान् समेतान् ।**
**तैर्मन्यते कलहं संप्रसह्य**
**स धार्तराष्ट्रः पश्यतु मोहमस्य ॥ १०८ ॥**

**पश्यतु मोहमस्य** इत्यत्र अस्य मोहं भवान् पश्यत्विति सम्बन्धः ।

॥ इति एकपञ्चाशोऽध्यायः ॥

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

**[1]एतौ हि कर्मणा लोकं नन्दयामासतुर्ध्रुवम् ।**
**द्विधाभूतौ महाप्राज्ञौ विद्धि ब्रह्म परन्तपौ ।**
**असुराणां विनाशाय देवगन्धर्वपूजितौ ॥ ९ ॥**

**विद्धि ब्रह्म परन्तपौ** इत्यत्र **ब्रह्म** परब्रह्म ।

**एष भ्रान्ते रथे तिष्ठन् भल्लेनापाहरच्छिरः ।**
**जम्भस्य ग्रसमानस्य [2]तथा ह्यर्जुन आहवे ॥ १५ ॥**

**तथा ह्यर्जुन आहव** इत्यत्र तथा जम्भशिरश्छेदनवत् एष नरः **अर्जुनः** अर्जुनो भूत्वा ।

**तस्मात् कर्मैव कर्तव्यमिति होवाच नारदः ।**
**एतद्धि सर्वमाचष्ट वृष्णिचक्रस्य वेदवित् ॥ २२ ॥**

---

१. कुं. ४९ अध्यायः ।
२. 'तदा' इति कुं पाठः ।

**तस्मात्कर्मैव कर्तव्यम्** इत्यत्र **कर्मैव** सन्धिकर्मैव ।

॥ इति द्विपश्चाशोऽध्यायः ॥

## ॥ अथ त्रिपश्चाशोऽध्यायः ॥

**नभः सूर्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम् ।[1]**
**पाञ्चालाः प्रति नन्दन्ति तेजोराशिमिवोदितम् ॥ ६ ॥**

**यज्ञमाश्विनशंसिनम्** इति पाठे **यज्ञं** पञ्चमहायज्ञं कुर्विति **आश्विनं** अश्विनोः पुत्रं सहदेवं प्रति शंसिनम् ।

**शृणु यैर्हि [2]केनास्मान् पाण्डवा अभ्ययुञ्जत ।**
**दृष्टद्युम्नेन वीरेण युद्धे वस्तेऽभ्ययुञ्जत ॥ १६ ॥**

**केनास्मान् पाण्डवा अभ्ययुञ्जत** इत्यत्र **केन** बलेन **अस्मान्** प्रति पाण्डवाः **अभ्ययुञ्जत** युद्धाभियोगमकुर्वन् ।

**यो [3]वै रोषान्न तु भयान्न लोभान्नार्थकारणात् ।**
**न हेतु वादाद्धर्मात्मा सत्यं जह्यात् कदाचन ॥ १७ ॥**

**यो वै रोषात्** इत्यत्र यच्छब्दस्य तेन पाण्डवा अभ्ययुञ्जतेति सम्बन्धः ।

**यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन ।**
**यो वै सर्वान् महीपालान् वशे चक्रे धनुर्धरः ।**
**यः काशीनङ्गमगधान् कलिङ्गांश्च युधाजयत् ॥ १९ ॥**

---

१. कुं. ५० अध्यायः । ; २. 'महाराज' इति कुं पाठः ।
३. 'नैव रोषान्न' इति कुं पाठः ।

**पृथिव्यां नास्ति कश्चन** इत्यत्र सम इति योग्यपदाध्याहारः ।

॥ इति त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

[1] **झषग्रहगृहीतां ताम्** इत्यत्र झषग्रहाः मत्स्यग्राहिणो **भारसहाः** कैवर्ताः तैर्गृहीताम् ।

**[2] गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ।**
**सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः ॥ २९ ॥**

**बाष्पमुत्सृजतो मुहुः** इत्यत्र **बाष्पम्** ऊष्माणम् ।

॥ इति चतुःपञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

**[3] उभाभ्यां संशयो लोके न त्वस्ति विजयो मम ।**
**घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ॥ ५ ॥**

**उभाभ्यां संशयो लोक** इत्यत्र **उभाभ्यां** गताभ्यामपि **संशयः** जये संशयः स्यात् । लोके विजयार्दनस्तु नास्ति ।

**यथा कक्षं महानग्निः प्रदहेत् सर्वतश्चरन् ।**
**महार्चिरनिलोद्भूतस्तद्वद्धक्ष्यति मामकान् ॥ १८ ॥**

**[4] यतोऽब्रवीन्निशितान् बाणसङ्घांस्तानाततायी समरे किरीटी ।**
**गृ[illegible]ऽन्तकः सर्वहरो विधात्रा यथा भवेत्तद्वदपारणीयः ॥ १९ ॥**

---

१. [illegible]प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते । ; २. कुं. ५१ अध्यायः ।
३. कुं. ५२ अध्यायः । ; ४. 'यदोद्वमन्निशि....' इति कुं पाठः ।

**यतोऽब्रवीन्निशितान् बाणसङ्घान्** इत्यत्र समरे सव्यसाची यदा आसीत् तदा लोकः सृष्टोऽन्तक इत्यादि यतोऽब्रवीत् ततः कारणात् मामकान् धक्ष्यतीति पूर्वेणान्वयः ।

**।। इति पञ्चपञ्चाशोऽध्यायः ।।**

## ।। अथ षट्पञ्चाशोऽध्यायः ।।

**धृतराष्ट्र उवाच –**

**[1] यथैव पाण्डवाः सर्वे पराक्रान्ता जिगीषवः ।**
**तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः ।। १ ।।**

**तथैवाभिसरा** इत्यत्र अभितः सरन्तीत्यभिसरा भटाः ।

**तपन्तमभि को मन्दः [2] वहिष्यति पतङ्गवत् ।**
**पाण्डवाग्निमनावार्यं मुमूर्षुर्नष्टचेतनः ।। १२ ।।**

**वहिष्यति पतङ्गवत्** इत्यत्र [3] पतङ्गवत् ।

**।। इति षट्पञ्चाशोऽध्यायः ।।**

## ।। अथ सप्तपञ्चाशोऽध्यायः ।।

**[4] कुमारवच्च स्मयसे [5] ऋते विनिकृतेषु यत् ।**
**पाण्डवेषु वने राजन् प्रव्रजत्सु पुनःपुनः ।। १० ।।**

---

१. कुं. ५३ अध्यायः । ; २. 'पतिष्यति' इति कुं पाठः ।
३. अत्र व्याख्यानम् अधिकं भवेत् । परन्तु न दृश्यते ।
४. कुं. ५४ अध्यायः । ; ५. 'द्यूते' इति कुं. पाठः ।

**ऋते विनिकृतेषु यत्** इत्यत्र **ऋते** स(भ्य)त्यमृते ।

॥ इति सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

[१]**श्रुत्वा** [२]**चैतत् मयोक्तास्तु भीष्मद्रोणकृपास्तदा ।**
**ज्ञातिक्षयभयाद्राजन् भीतेन भरतर्षभ** ॥ ७ ॥

**श्रुत्वा चैतत् मयोक्ता** इत्यत्र एतत् पाण्डवसैनिकैरुक्तं वाक्यम् ।

**विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।**
**धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः** ॥ १३ ॥

**विरक्तराष्ट्राश्च वयम्** इत्यत्र **विरक्तं** स्नेहरहितं राष्ट्रं येषां ते तथोक्ताः ।

**एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान् ।**
**आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः** ॥ १९ ॥

**विनेष्यामो दर्पमेषां शितैः शरैः** इति भीष्मद्रोणादयः आहुः । इत्थं दुर्योधनोऽब्रवीदिति श्लोकत्रयस्य योजना ।

॥ इति अष्टपञ्चाशोऽध्यायः ॥

* * *

---

१. कुं. ५५ अध्यायः ।
२. BORI पृ: २६०; 'चैवं' इति कुं पाठः ।

## ।। अथ एकोनषष्टितमोध्यायः ।।

[१] तथा राज्ञो दन्तवर्णा बृहन्तो
रथे युक्ता भान्ति तद्वीर्यतुल्याः ।
[२] ऋष्यप्रख्या भीमसेनस्य वाहा
रथे वायोस्तुल्यवेगा बभूवुः ।। १४ ।।

**ऋश्यप्रख्या** इत्यत्र 'सारङ्ग ऋश्यः पृषतो रुरुश्च'[३] इत्यभिधानात् **ऋश्यः** सारङ्गः ।

कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा
भ्रात्रा दत्ताः प्रीयता फाल्गुनेन ।
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा
मुदा युक्ताः सहदेवं वहन्ति ।। १५ ।।

**कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा** इत्यत्र 'कल्माषः कृष्णपाण्डुरः'[४] इत्यभिधानात् कृष्णपाण्डुराङ्गाः, 'तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरकः'[५] इत्यभिधानात् चित्रनानावर्णः पक्षी **तित्तिरिः**, 'लाविगेहक्कि'[६] इत्यपभ्रंशभाषा । तद्वद्वर्णाः ।

।। इति एकोनषष्टितमोऽध्यायः ।।

---

१. कुं. ५६ अध्यायः ।
२. 'ऋक्षप्रख्या' इति कुं पाठः । ; ३. ह.को. २-२३०.
४. ह.को. ४-७३६ ; ५. अ.को. २-५-३५
६. कन्नडभाषायाम् । ; ६. कुं. ५७ अध्यायः । 'मुख्यम्' इति कुं पाठः ।

## ॥ अथ षष्टितमोऽध्यायः ॥

**सञ्जय उवाच –**

**मुखमन्धकवृष्णीनामपश्यं कृष्णमागतम् ।**[1]
**चेकितानं च तत्रैव युयुधानं च सात्यकिम् ॥ २ ॥**

**मुखमन्धकवृष्णीनाम्** इत्यत्र 'मुखं प्रधाने प्रारम्भे वक्त्रे निस्सरणेऽपि च'[2] इत्यमरः । प्रधानम् ।

**सहदेवस्तु माद्रेयः शूरः सङ्क्रन्दनो युधि ।**
**स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् ॥ २२ ॥**

सङ्क्रन्दयति सम्यक् क्रन्दयति आक्रोशयति शत्रूनिति **सङ्क्रन्दनः** ।

**मत्प्रियं पार्थिवाः सर्वे ये चिकीर्षन्ति भारत ।**
**ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना ॥ ४१ ॥**

**ऐणेयानिव तन्तुना** इत्यत्र ऐणेयान् एणशिशून् **तन्तुना** जालेन ।

**समर्थमेकं पर्याप्तं कौरवाणां विनिग्रहे ।**
**पुरस्तादुपयातानां कौरवाणां युयुत्सताम् ॥ ५३ ॥**

**पर्याप्तं** सम्पूर्णम् ।

**सबाह्लिकान् कुरून् ब्रूयाः [3]प्रतिवीरान् शरद्वतः ।**
**सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम् ॥ ५८ ॥**

---

२. अ.को. २-३-१९
३. 'प्रातिपेयान् शरद्वतः' इति कुं. पाठः ।

**प्रतिवीराञ्शरद्वत** इत्यत्र शरा एषां वर्तन्त इति **शरद्वन्तः** शरपाणय-स्तान् ।

॥ इति षष्टितमोऽध्यायः ॥

## ॥ अथ एकषष्टितमोऽध्यायः ॥

**ये[१] तु संप्रतितिष्ठेयुः कुरवः पीडिताः परैः ।**
**ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥ ८ ॥**

**ये तु सम्प्रति तिष्ठेयुः** इत्यत्र **परैः** पाण्डवैः **पीडिताः** पीडिता अपि ।

**प्रतीपमेति[२] मे सेना युयुधानेन भारती ।**
**व्यस्ता सीमन्तिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना ॥ २१ ॥**

**प्रतीपमेति मे सेना** इत्यत्र **व्यस्ता** विशेषेण **अस्ता** नाशिता मे सेनेति सम्बन्धः । दीर्घबाहुना पुरुषेण प्रमृष्टा बलाद्गृहीता **सीमन्तिनी** नारीव **प्रतीपं** विपरीतम् एति ।

॥ इति एकषष्टितमोऽध्यायः ॥

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

**बलाबलं[३] विनिश्चित्य याथातथ्येन बुद्धिमान् ।**
**यदा तु मेने भूयिष्ठं तद्वचो गुणदोषतः ॥ ३ ॥**

---

१. 'येषु' इति कुं. पाठः । ; २. BORI पृ. ५; **'प्रतीपमिव मे भाति'** कुं पाठः ।
३. कुं. ६० अध्यायः ।

**तद्वचोगुणादोषत** इत्यत्र **तस्य** सञ्जयस्य वचसि स्थितान् **गुण-दोषतः** पाण्डवेषु गुणान् स्वकीयेषु दोषांश्च सङ्ख्यातुमारेभे इत्यर्थः ।

**जातिगृद्ध्याऽभिपन्नाश्च पाण्डवानामनेकशः ।**
**धर्मादयः समेष्यन्ति समाहूता दिवौकसः ॥ १० ॥**

**जातिगृद्ध्याऽभिपन्नाश्च** इत्यत्र **जातिगृद्ध्या** जातेः स्वस्माज्जन्मनः देवजातेर्वा **गृद्ध्या** आकाङ्क्षया **अभिपन्नाः** प्राप्ता भविष्यन्ति ।

**भीष्मद्रोणकृपादीनां भयादशनिसन्निभम् ।**
**रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः ॥ ११ ॥**

**भीष्मद्रोणकृपादीनां भयात्** इत्यत्र **भयात्** गुरुत्वभयात् **रिरक्षि-षन्तः** तान् रक्षितुमिच्छन्तः अन्यत्र संरम्भं गमिष्यन्ति ।

**वानरश्च ध्वजे दिव्यः निस्सङ्गो धूमवद् गतिः ।**
**रथश्च चतुरन्तायां यस्य नास्ति समः त्विषा[१] ॥ १४ ॥**

**यस्य** ध्वजस्य **त्विषा** कान्त्या ।

**शतानि पञ्च चैवेषून्यो गृह्णन्नैव दृश्यते ।**
**निमेषान्तरमात्रेण मुञ्चन्दूरं च पातयन् ॥ १७ ॥**

**शतानि पञ्च चैवेषून्** इत्यत्र पञ्च शतानीति सम्बन्धः ।

**यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।**
**मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ १८ ॥**

---

१. BORI पृ. २८०; **'क्षितौ'** इति कुं पाठः ।

**युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।**
**अशक्यं रथशार्दूलं पराजेतुम् अरिन्दमम्** ॥ १९ ॥

**यमाह भीष्मो द्रोणश्च** इत्यत्र **यम्** अर्जुनं पराजेतुमशक्यमाहेति प्रत्येकं सम्बन्धः ।

॥ इति त्रिषष्टितमोऽध्यायः ॥

## ॥ अथ चतुःषष्टितमोऽध्यायः ॥

[१] **अकामद्वेषसंयोगात् मोहाल्लोभाच्च भारत ।**
**उपेक्षया च भावानां देवा देवत्वमाप्नुवन्** ॥ ३ ॥

**अकामद्वेषसंयोगात्** इत्यत्र स्वेषां कामद्वेषसंयोगाभावात्, **भावानां** मानुषादिलोकानां मोहलोभान्निमित्तात् मानुषकृतमोहादीनामुपेक्षया चेत्यर्थः ।

**यदा ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।**
**कामयोगात् [२] प्रवर्तेरन् अपार्था दुःखमाप्नुयुः** ॥ ६ ॥

**अपार्था दुःखमाप्नुयुः** इत्यत्र अपगतः अर्थो येषां ते देवाः दुःख-**माप्नुयुः** । स्वधर्मत्यागाद्दुःखमाप्नुयुरिति भावः ।

**अथ चेत्कामसंयोगाद्द्वेषो लोभश्च लक्ष्यते ।**
**देवेषु दैवप्रामाण्यान्नैव [३] तद्विक्रमिष्यति** ॥ ८ ॥

**तत्** देवप्रामाण्यं **नैव विक्रमिष्यति** शौर्यं न करोत्येव ।

---

१. कुं. ६१ अध्यायः । ; २. '**प्रवर्तेरन्न पार्था**' इति कुं पाठः ।
३. '**-नैषां**' कुं. पाठः ।

**यद्वा परमकं तेजो येन युक्ता दिवौकसः ।**
**ममाप्यनुपमं भूयो [1] मत्तेजो विद्धि भारत ॥ १० ॥**

**ममाप्यनुपमं भूय** इत्यत्र देवेभ्योऽपि भूयः **मत्तेजः** मन्त्रसामर्थ्यम् ।

**[2] भयानि विषये राजन् व्यालादीनि न सन्ति मे ।**
**मन्त्रगुप्तानि भूतानि न हिंसन्ति भयङ्कराः ॥ १६ ॥**

**भयानि विषये राजन्** इत्यत्र **भयानि** भयङ्कराणि ।

**अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा ।**
**धर्मश्चैव मया [3] रिष्टाः नोत्सहन्तेऽभिरक्षितुम् ॥ १८ ॥**

**मया रिष्टा** इत्यत्र **रिष्टाः** मन्त्रसामर्थ्येन नाशिताः स्तम्भिता इत्यर्थः ।

**यदभिध्याम्यहं शश्वच्छुभं वा यदि वाऽशुभम् ।**
**नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ २१ ॥**

**यदभिध्याम्यहं शश्वत्** इत्यत्र **अभिध्यामि** अभिध्यायामि ।

**॥ इति चतुःषष्टितमोऽध्यायः ॥**

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

**[4] प्रसादितं ह्यस्य मया मनोऽभू-**
**च्छुश्रूषया स्वेन च पौरुषेण ।**

---

१. 'देवेभ्यो' इति कुं. पाठः ।
२. BORI पृ. २८२; 'भयानकानि विषये' इति कुं पाठः ।
३. 'द्विष्टान्नोत्सहन्ते' इति कुं पाठः ।; ४. कुं. ६२ अध्यायः ।

तदस्ति चास्त्रं मम सावशेषं
तस्मात्समर्थोऽस्मि ममैष भारः ॥ ४ ॥

**शुश्रूषया स्वेन च पौरुषेण** इत्यत्र **पौरुषेण** भृत्यपुरुषस्वभावेन ।

एवं ब्रुवन्तं तमुवाच भीष्मः किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने हते हताः स्युर्धृतराष्ट्रपुत्राः ॥७॥

**न कर्ण जानासि** इत्यत्र **यथा** यथावत् **प्रधाने** प्रधानपुरुषे त्वयि ।

निहत्य पार्थान् सह पुत्रपौत्रैः लोकानहं [1]शत्रुजनान् प्रपत्स्ये ५

**शत्रुजनान्** शत्रूणां हननात् **जनं** जननं येषां तान् लोकान् प्रपत्स्य इति सम्बन्धः ।

कर्ण उवाच –

असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च [2]भूयश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किञ्चि-
त्पितामहस्तस्य फलं शृणोतु ॥ १२ ॥

**असंशयं वृष्णिपतिर्यथोक्त** इत्यत्र **वृष्णिपतिः** कृष्णः यथा त्वयोक्तं तथा भवति । **ततः** कृष्णादपि भूयश्च अहं महात्मा ।

॥ इति पञ्चषष्टितमोऽध्यायः ॥

---

१. **'शस्त्रजितान्'** इति कुं पाठः ।
२. BORI पृ. २८४; **'भूयांश्च'** इति कुं. पाठः ।

## ।। अथ षट्षष्टितमोऽध्यायः ।।

[१]ये तु सन्निधिमासाद्य दीना इव समासते ।
**श्रियं ते सम्प्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ।। १३ ।।**

**ये तु सन्निधिमासाद्य** इत्यत्र समीचीनो निधिः **सन्निधिः** ।

**तत्रापश्याम वै सर्वे मधु पीतकमाक्षिकम् ।**
[२]**महाप्रपाते विषमे निविष्टं कुम्भसंमितम् ।। १८ ।।**

**महाप्रपाते विषम** इत्यत्र 'प्रपातस्त्वत(टं)टो भृगुः'[३] इति वचनात् **प्रपाते** पर्वतशृङ्गे ।

।। इति षट्षष्टितमोऽध्यायः ।।

## ।। अथ सप्तषष्टितमोऽध्यायः ।।

[४]**एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।**
**आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः ।। ९ ।।**

**एकतो ह्यस्य दाराश्च** इत्यत्र **अस्य** कृष्णस्य ।

**अर्जुनस्तत्तथाकार्षीत्किं पुनः सर्व एव ते ।**
**सभ्रातॄनभिजानीहि वृत्त्या तं प्रतिपादय ।। १६ ।।**

---

१. कुं. ६४ अध्यायः । $K_1$,T,$G_5$,M; BORI पृ. २८७; **'येऽर्थं सन्तत-मासाद्य'** इति कुं पाठः ।
२. **'मरुप्रपाते'** इति कुं पाठः ।
३. अ.को. २-३-४
४. कुं. ६५ अध्यायः ।

**सभ्रातॄनभिजानीहि** इत्यत्र तव समानः भ्राता पाण्डुर्येषां पिता ते सभ्रातरः तान् सभ्रातॄन् ।

॥ इति सप्तषष्टितमोऽध्यायः ॥

## ॥अष्टषष्टितमोऽध्यायः ॥

**सञ्जय उवाच –**

**[१]न त्वां ब्रूयां रहिते जातु किञ्चि-**
**दसूया हि त्वां प्रविशेत राजन् ।**
**आनयस्व पितरं महाव्रतं**
**गान्धारीं च महिषीमाजमीढ ॥ ६ ॥**

**आनयस्व पितरम्** इत्यत्र **पिता** कृष्णद्वैपायनः ।

॥ इति अष्टषष्टितमोऽध्यायः ॥

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

**सञ्जय उवाच –**

**[२]अर्जुनो वासुदेवश्च धन्विनौ परमार्थितौ ।**
**कामादन्यत्र सम्भूतौ [३]पूर्वभावाय सम्मितौ ॥ १ ॥**

**कामादन्यत्र सम्भूतौ** इत्यत्र **कामादन्यत्र** कामं विनेत्यर्थः । **पूर्वेषां भावः** स्वभावः ।

---

१. कुं. ६६ अध्यायः । ; २. कुं. ६७ अध्यायः ।
३. '**सर्वभावाय**' इति कुं पाठः ।

**[1] जन्मान्तरं समास्थाय यथामुक्तं मनस्विनः ।**
**चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ २ ॥**

**जन्मान्तरं समास्थाय** इत्यत्र **मनस्विनः** वासुदेवस्य मायया इच्छया **तच्चक्रं** जगच्चक्रं जन्मान्तरं समास्थाय पुनःपुनरावर्तते ।

**पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।**
**मनसैव [2] विसृष्टात्मा नयत्यात्मवशं वशी ॥ ५ ॥**

**मनसैव विसृष्टात्मा** इत्यत्र विशेषेण सृष्टा आत्मानः जीवा येन स तथोक्तः ।

**[3] स यद्ध्रुवं पाण्डवेषु प्रतिराजसु सम्मतम् ।**
**सारासारबलं [4] ज्ञात्वा तत्समासेन मे शृणु ॥ ६ ॥**

**स यद्ध्रुवं पाण्डवेषु** इत्यत्र पाण्डवेषु प्रतिराजसु च सारासारबलं ज्ञात्वा स कृष्णः **यत्** यस्मात्कारणात् ध्रुवं पाण्डवेष्वेवास्ति तत् समासेन शृण्विति योजना ।

॥ इति एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

**[5] वर्धयन् दुर्हृदां प्रीतिं मां च शोकेन [6] रन्ध्रयन् ।**
**निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ १० ॥**

---

१. **'व्यामान्तरं'** इति कुं पाठः । ; २. **'मनसैव विशिष्टत्मा'** इति कुं पाठः ।
३. **'भूयो भूयो हि यद्राजन् पृच्छसे पाण्डवान् प्रति'** इति कुं. पाठः ।
४. BORI पृ. २९४; **'ज्ञातुं'** इति कुं.पाठः ।
५. कुं. ६८ अध्यायः । ; ६. **'वर्धयन्'** इति कुं पाठः ।

रन्ध्रयन् [1] तद्वत् ॥

**एष एकायनः पन्था येन यान्ति मनीषिणः ।**
**तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न [2] सज्जते ॥ १५ ॥**

**महांस्तत्र न सज्जत** इत्यत्र **महान्** मृत्युः तत्र भगवद्भक्ते ।

**इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।**
**बुद्धिश्च ते मा च्यवतु [3] नियच्छैतां यतस्ततः ॥ १९ ॥**

**नियच्छैतां यतस्तत** इत्यत्र **यतो** व्यथते **ततः** विषयात् नियच्छ ।

**॥ इति सप्ततितमोऽध्यायः ॥**

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

[4] **वसनात् सर्वभूतानां वसुत्वाद्देवयोनितः ।**
**वासुदेवस्ततो वेद्यो [5] विषुत्वाद्विष्णुरुच्यते ॥ ३ ॥**

**विषुत्वाद्विष्णुरुच्यत** इत्यत्र 'विष्लृ व्याप्तौ' इति धातोः **वि(ष्णुः)षुः** व्यापनशीलः ।

**मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।**
**सर्वतत्त्वलयाच्चैव मधुहा मधुसूदनः ॥ ४ ॥**

**मौनाद्ध्यानाच्च योगाच्च** इत्यत्र 'माङ् माने' इति धातोः **मा** मितवाणित्वम्, 'ध्यै चिन्तायाम्' इति धातोः **धं** ध्यानम्, 'वा

---

१. तद्वत् कुर्वन् सो.मु.पा । ; २. BORI पृ. २९६; **'सज्जति'** इति कुं पाठः ।
३. **'नियच्छैनां'** इति कुं पाठः । ; ४. कुं. ६९ अध्यायः ।
५. **'बृहत्त्वाद्विष्णुरुच्यते'** इति कुं पाठः ।

गतिगन्धनयोः' इति वचनात् वं ज्ञानयोगः अर्शवानर्शं इतिवत् तद्वान् **माधवः** । सर्वसत्त्वमयत्वात् मधुवत् सर्वसामर्थ्यसारसङ्ग्रहरूपत्वाच्च माधव इति पूर्वेणान्वयः ।

**कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।**
**विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ॥ ५ ॥**

**कृषिर्भूवाचकः शब्द** इत्यत्र कृष्यत इति कृषिर्भूः तस्यामपि णं सुखं यस्य स **कृष्ण** इत्यर्थः ।

**पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ।**
**तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ६ ॥**

**पुण्डरीकं परं धाम** इत्यत्र **पुण्डरीके** हृत्पुण्डरीके **अक्षः** क्षयरहितः, **अक्षं** क्षयरहितं **पुण्डरीकं** मुक्तानां हृत्पुण्डरीकं यस्य परं धामेति वा **पुण्डरीकाक्ष** इत्यर्थः ।

**न जायते जनित्राऽयमजस्तस्मादनीकजित् ।**
**देवानां स्वप्रकाशत्वाद्दमाद्दामोदरो विभुः ॥ ८ ॥**

**जनित्रा** जनकेन ।

**सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ।**
**सत्तासत्ते[१] च गोविन्दस्तस्मात्सत्योपि नामतः ॥ १२ ॥**

**सत्तासत्ते च** इत्यत्र **सत्** सत्ता, याति नश्यतीति **यम्** असत्ता, तदुभयं यस्मात् स **सत्य** इत्यर्थः ।

---

१. 'सत्यात्सत्यं' इति कुं पाठः ।

**विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ।**
**शाश्वतत्वादनन्तश्च [1]गोविन्दश्चेतनादभूत् ॥ १३ ॥**

**गोविन्दश्चेतनादभूत्** इत्यत्र **चेतनात्** ज्ञानात् 'गम्लृ गतौ' इति धातोः गां ज्ञानं विन्दतीति **गोविन्द** इत्यर्थः ।

**॥ इति एकसप्ततितमोऽध्यायः ॥**

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

**[2]ईरयन्तं भारतीं भारतानामभ्यर्चनीयां शङ्करीं सृञ्जयानाम् ।**
**बुभूषद्भिर्गर्हणीयामनिन्द्यां परासूनामग्रहणीयरूपाम् ॥ २ ॥**

**परासूनामग्रहणीयरूपाम्** इत्यत्र [3]'परासुप्राप्तपञ्चत्वपरेतप्रेत-संस्थिता' इत्यभिधानात् **परासूनां** प्राप्तमरणानां मुमूर्षूणामिति यावत् । तेषामग्रहणीयरूपाम् ।

**ऋषिं सनातनतमं विपश्चितं वाचःसमुद्रं कलशं यतीनाम् ।**
**अरिष्टनेमिं गरुडं सुपर्णं हरिं प्रजानां भुवनस्य धाम ॥ ५ ॥**

**वाचः समुद्रं कलशं यतीनाम्** इत्यत्र यतीनां वाचः **समुद्रं** समुद्रमिव स्थितं **कलशं** कलशमिव च स्थितम् । कैश्चिद्बहुवाचा स्तुत्यं कैश्चि-दल्पवाचा स्तुत्यमिति यावत् । **अरिष्टनेमिम्** अरिष्टा अनष्टा नेमिः सुदर्शनचक्रम् आज्ञाचक्रं वा यस्य तम् ।

**॥ इति द्विसप्ततितमोऽध्यायः ॥**

---

१. **'गोविन्दो वेदनाद्भवाम्'** इति कुं पाठः ।
२. कुं. ७० अध्यायः । ; ३. अ.को. २-८-११७

## ।। अथ त्रिसप्ततितमोऽध्यायः ।।

**श्रीभगवानुवाच –**

**[१]अयमस्मि महाबाहो ब्रूहि तत्ते विवक्षितम् ।**
**करिष्यामि हि तत्सर्वं यत्त्वं वक्ष्यसि भारत ।। १२ ।।**

**अहमस्मि महाबाहो** इत्यत्र **अस्मि** तव वशो अस्मि ।

**तन्मतं धृतराष्ट्रस्य [२]सोऽन्यात्मा विवृतान्तरः ।**
**यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ।। १५ ।।**

**सोऽन्यात्मा विवृतान्तर** इत्यत्र **सः** धृतराष्ट्रः **अन्यात्मा** अन्यादृशे स्वपुत्रे आत्मा चित्तं यस्य स तथोक्तः ।

**ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ।**
**श्रीर्हता पुरुषं हन्ति [३]पुरुषश्च हतः स्वताम् ।। २७ ।।**

**[४]अस्वतो हि निवर्तन्ते ज्ञातयः सहृदो द्विजाः ।**
**अपुष्पफलाद् वृक्षाद् यथा कृष्ण पतत्रिणः ।। २४ ।।**

**पुरुषश्च हतः स्वताम्** इत्यत्र अर्शवानर्श इतिवत् स्ववान् धनवानेव स्व इत्युच्यते तस्य भावः **स्वता** तां हन्ति । **अस्वतः** अधनात् ।

---

१. कुं. ७१ अध्यायः ।
२. '**सोऽस्यात्मा**' इति कुं पाठः ।
३. '**पुरुषस्याधनं वधः**' इति कुं पाठः । एतत्प्रतीकः मुद्रितकोशेषु नोपलभ्यते ।
४. N($K_{2.om}$; $K_{3.missing}$)$C_s$; BORI पृ. ३०२; '**अधनाद्धि**' इति कुं पाठः ।

**एतच्च मरणं तात [१] यदस्मात्पतितादिव**
**ज्ञातयो विनिवर्तन्ते प्रेतसत्वादिवासवः ॥ २९ ॥**

**यदस्मात्पतितादिव** इत्यत्र **अस्मात्** मदादिजनात् **पतितात्** पुरुषात् इव । एतच्च मरणम् ।

**नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् ।**
**[२] यच्च नैवोद्यतः प्रातर्भोजनं प्रतिदृश्यते ॥ ३० ॥**

**यच्च नैवोद्यतः प्रातर्भोजनं प्रतिदृश्यत** इत्यत्र **उद्यतः** सन्नद्धः ।

**तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।**
**यद्वयं कौरवान् हत्वा तानि [३] शास्त्राण्यधीमहि ॥ ५१ ॥**

**तानि शास्त्राण्यधीमहि** इत्यत्र तानि राष्ट्राणि प्राप्य वेदशास्त्राण्यधीमहीति योजना ।

**युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे ।**
**बलं तु नीतिमाधाय [४] भवे जयपराजयौ ॥ ५७ ॥**

**भवे जयपराजयौ** इत्यत्र 'भू प्राप्तावात्मनेपदम्' इति वचनात् **भवे** प्राप्नोमि ।

**जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः ।**
**तथैवापचयो दृष्टो व्यपयाने [५] व्ययाव्ययौ ॥ ६० ॥**

---

१. BORI पृ. ३०३; '**उन्मत्तपतितादिव**' इति कुं पाठः ।
२. '**यत्र नैवाऽद्य न**' इति कुं पाठः । ; ३. '**राष्ट्राण्यवाप्नुमः**' इति कुं. पाठः ।
४. $D_{n1}$, $D_{3.4.9}$; BORI पृ. ३०५; '**युद्धे जयपराजयौ**' इति कुं पाठः ।
५. '**क्षयव्ययौ**' इति कुं पाठः ।

**व्यपयाने व्ययाव्ययौ** इत्यत्र **व्यपयाने** पलायने ।

**त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः ।**
**हत्वाऽप्यनुशयो नित्यं परानपि जनार्दन ॥ ६५ ॥**

**हत्वाऽप्यनुशय** इत्यत्र यस्य परान् हत्वाऽपि नित्यम् **अनुशयः** अनुकूलः शयः आशयो बुद्धिः तत्पुत्रादिषु आनुकूल्यकरणम् अस्य ।

**[१]अनुबन्धप्रलापोऽत्र शेषश्चाप्यवशिष्यते ।**
**शेषो हि बलमासाद्य न [२]शेषमवशेषयेत् ॥ ६६ ॥**

**अनुबन्धप्रलापः** तत्काले स्नेहवार्ता **शेषः** शत्रुशेषश्च अवशिष्यते । **न [३]शेषमवशेषयेत्** इत्यत्र **शेषं** स्वपितृहन्तुः शेषम् ।

**अन्तरं लिप्समानानामयं दोषो निरन्तरः ।**
**पौरुषे यो हि बलवानाधिर्हृदयबाधनः ।**
**तस्य त्यागेन वा शान्तिर्मरणेनापि वा भवेत् ॥ ७३ ॥**

**दोषः** वैराख्यदोषः **निरन्तरः** निरवकाशः । **तस्य त्यागेन वा शान्तिः** इत्यत्र **त्यागेन** देशत्यागेन प्राणत्यागेन कलहकारणीभूत-वित्तत्यागेन वा ।

**अथवा मूलघातेन द्विषतां मधुसूदन ।**
**[४]फलं निवृत्तिरर्थस्य तन्नृशंसतरं भवेत् ॥ ७४ ॥**

---

१. '**अनुबद्धश्च पापोऽत्र**' इति कुं पाठः । ; २. '**शेषमनुशेषयेत्**' इति कुं. पाठः ।
३. दोषं सो.मु.पा.
४. '**फलनिर्वृत्तिरिद्धा स्यात्**' इति कुं पाठः ।

**फलं निवृत्तिरर्थस्य** इत्यत्र **अर्थस्य** स्वस्मादपहृतवित्तस्य **निवृत्तिः** पुनः स्वात्मानं प्रत्यागमनम् ।

**प्रतिघातेन सान्त्वस्य दारुणं सम्प्रवर्तते ।**
**तच्छुनामिव [१] गोपाते पण्डितैरुपलक्षितम्** ॥ ७८ ॥

**तच्छुनामिव गोपात** इत्यत्र **गोपाते** गोर्मरणे ।

॥ इति त्रिसप्ततितमोऽध्यायः ॥

## ॥ अथ चतुःसप्ततितमोऽध्यायः ॥

**[२] न हि नः प्रीणयेद्द्रव्यं न देवत्वं कुतः सुखम् ।**
**न च सर्वामरैश्वर्यं तव [३] रोधेन माधव** ॥ ९२ ॥

**न देवत्वं कुतः सुखम्** इत्यत्र **देवत्वं** राजत्वं तव **रोधेन** निरोधेन निर्बन्धकरणेनापीत्यर्थः ।

**श्रीभगवानुवाच –**

**जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम् ।**
**अवाच्यास्तु भविष्यामः सर्वलोके महीक्षिताम्** ॥ ९३ ॥

**अवाच्यास्तु भविष्याम** इत्यत्र **अवाच्याः** अनिन्द्याः ।

॥ इति चतुःसप्ततितमोऽध्यायः ॥

---

१. **'सम्पाते'** इति कुं पाठः ।
२. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।
३. BORI पृ. ३०९; **'द्रोहेण'** इति कुं पाठः ।

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

[१]न पर्यायोऽस्ति यत्साम्यं त्वयि कुर्युर्विशाम्पते ।
**बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ७ ॥**

**एतदेव निमित्तं ते धार्तराष्ट्रो यथा त्वयि ।**
**नान्वतप्यन्त कोपेन तत्कृत्वापि च दुष्करम् ॥ १० ॥**

**न पर्यायोऽस्ति** इत्यत्र 'अय पय गतौ' इति धातोः 'गत्यर्था ज्ञानार्थाः' इति वचनात् **पर्यायो** निश्चयः । तव **दुष्करम्** अपराधं कृत्वाऽपि त्वयि नान्वतप्यन्तेति यावत् । तत्र **ते** तव **तत्** मार्दवमेव निमित्तमित्यन्वयः ।

**वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वां सहानुजम् ।**
**[२]नाथ्यमानः [३]प्रहृष्टात्मा भ्रातृभिः सह भाषते ॥ १५ ॥**

**नाथ्यमानः प्रहृष्टात्मा** इत्यत्र **नाथ्यमानः** याच्यमानः **भाषते** यत्किञ्चिद्भाषते ।

**ईषत्कारो वधस्तस्य यस्य चारित्रमीदृशम् ।**
**[४]प्रस्कन्दनः प्रतिस्तब्धश्छिन्नमूल इव द्रुमः ॥ २६ ॥**

**ईषत्कारो वधस्तस्य** इत्यत्र **ईषत्कारः** तुच्छीकरणम् । **प्रस्कन्दनः प्रतिस्तब्ध** इत्यत्र **प्रस्कन्दनः** प्रकर्षेण रेतस्स्कन्दनशीलः स्त्रैण इत्यर्थः ।

---

१. कुं. ७२ अध्यायः । ; २. '**श्लाघमानः**' इति कुं पाठः ।
३. $S_{except\ T2}$; BORI पृ. ३११; '**प्रहृष्टः सन्**' इति कुं. पाठः ।
४. $D_{1,2}$,$G_{3,5}$,$C_{a,d}$; BORI पृ. ३१२; '**प्रस्कुन्देन**' इति कुं पाठः ।

**वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।**
**जह्येनं त्वममित्रघ्न मा राजन्विचिकित्सथाः** ॥ २७ ॥

**मा विचिकित्सथाः** संशयं मा कुरु ।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

[१]**अनित्यं किल मर्त्यस्य पार्थ चित्तं चलाचलम् ।**
**वातवेगप्रचलिता अष्ठीला शाल्मलेरिव** ॥ १९ ॥

**अष्ठीला शाल्मलेरिव** इत्यत्र **अष्ठीला** दृढा शाखा ।

**तवैषा विकृता बुद्धिर्गवां वागिव मानुषी ।**
**मनांसि पाण्डुपुत्राणां** [२]**अञ्जयस्यस्रवानिव** ॥ २० ॥

**अञ्जयस्यस्रवानिव** इत्यत्र **अस्रवान्** नयनजलवान् शिशुरिव **अञ्जयसि** अञ्जमञ्जनं तद्वत्करोषि, श्यामीकरोषि आर्द्रीकरोषि वा ।

॥ इति सप्तसप्ततितमोऽध्यायः ॥

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

[३]**वेत्सि दाशार्ह सत्यं मे दीर्घकालं सहोषितः ।**
**उत वा मां न जानासि प्लवह्रदमिवाप्लवम्** ॥ ३ ॥

---

१. कुं. ७४ अध्यायः । ; २. '**मञ्जयत्यप्लवानिव**' इति कुं पाठः ।
३. कुं. ७५ अध्यायः ।

**प्लवद्ध्रदमिवाप्लवम्** इत्यत्र **अप्लवं** नौकानपेक्षं प्लववत् ह्रदं **प्लवत्** ह्रदात् प्लवमानं जलमिव मां न जानासि ।

**अचले चाप्रतिष्ठे चाप्यनन्ते सर्वमातरौ ।**
**यदि[१] मे सहसाऽऽकृष्टे समेयातां शिले इव ॥ ८ ॥**

**यदि मे सहसाऽऽकृष्टे** इत्यत्र **मे** मया यदि **सहसा** सत्वेन आकृष्टे, तर्हि शिले इव **समे** सत्यौ **याताम्** आयाताम्, द्यावापृथिव्यौ सत्वेनाकृष्य शिलाद्वयवत् सङ्घट्टयामीत्यर्थः ।

**॥ इति एकोनाशीतितमोऽध्यायः ॥**

## ॥ अथ अशीतितमोऽध्यायः ॥

**किन्तु[२] पर्यायधर्मस्य सन्दिग्धस्य वृकोदर ।**
**पर्यायं [३] न व्यवस्यन्ति देवमानुषयोर्जनाः ॥ ९ ॥**

**किन्तु पर्यायधर्मस्य** इत्यत्र **पर्यायधर्मस्य** प्रातरादिकालक्रमेण क्रियमाणधर्मस्य **सन्दिग्धस्य** 'उदिते जुहोति, अनुदिते जुहोति' इत्यादिवाक्यैः सन्दिग्धस्य, प्रकृतेऽपि अस्मिन् काले युद्धं वा कर्तव्यं सन्धिर्वा कर्तव्या इति सन्दिग्धस्य **पर्यायं** क्रमं न व्यवस्यन्ति । दुर्जनैः सह काले प्राप्ते युद्धमेव कर्तव्यम्, सन्धिस्तु साधुभिरेव इत्याद्याकारेण न निश्चिन्वन्ति ।

---

१. $K_4$,$B_{2.4.5}$,$D_{1.7.10}$,T,$G_{2.5}$,M; BORI पृ. ३१९; '**यदीमे सहसा कृष्टे**' इति कुं पाठः ।

२. कुं. ७६ अध्यायः । '**जिज्ञासन्तो हि धर्मस्य**' इति कुं पाठः ।

३. BORI पृ. ३२१; '**नाध्यवस्यन्ति**' इति कुं. पाठः ।

**स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु ।**
**विनाशेऽपि स एवास्य सन्दिग्धं कर्म पौरुषम् ॥ ६ ॥**

**सन्दिग्धं कर्म पौरुषम्** इत्यत्र **पौरुषं** पुरुषसम्बन्धि कर्म पौरुषं शौर्यं वा ।

**सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।**
**[१]यत्कृतं मानुषं कर्म दैवेनापि विरुद्ध्यते ॥ ८ ॥**

**[२]तथा दैवकृतं कर्म पौरुषेण विरुद्ध्यते ।**
**शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ ९ ॥**

**यत्कृतं मानुषं कर्म** इत्यत्र **मानुषं** विनयादिमनुष्यप्रयत्नेन कृतं कर्म व्याघ्रेण सह सन्धिरूपं कर्म **दैवेन** व्याघ्रजातेरतिनिष्ठुर-स्वभावघटकदैवेन, तथा दैवकृतम् अनावृष्ट्यादिकं कर्म पौरुषेण कृषीवलपुरुषप्रयत्नेन विरुद्ध्यते । इदं द्वयमपि मिथो विरुद्धम्, [३]तत्र चैवमेव जायत इति भावः ।

**यदन्यद्दिष्टभावस्य पुरुषस्य स्वयं कृतम् ।**
**तस्मादनुपरोधश्च [४]भिद्यते तत्र लक्षणम् ॥ १० ॥**

**भिद्यते तत्र लक्षणम्** इत्यत्र **लक्षणं** फलजनकत्वलक्षणं **भिद्यते** दैववशाद्भिद्यते, शीतोष्णादिसेवया यत्सुखादिकं भवेत् तदेव दैववशाद्दुःखकारणं भवतीति भावः ।

---

१. $T_2$,$G_2$; BORI पृ. ३२१; '**कृतं मानुष्यकं**' इति कुं पाठः ।
२. $T_2$,$G_2$; BORI पृ. ३२१; '**दैवमप्यकृतं**' इति कुं पाठः ।
३. **तच्चैवमेव ज्ञायत इति भावः** सो.मु.पा. ; ४. '**विद्यते**' इति कुं पाठः ।

**लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः ।**
**एवंबुद्धिः प्रवर्तेत फलं [१]स्यादुभयान्वयात् ॥ ११ ॥**

**कर्मणः** दैवकृतकर्मणः । **उभयान्वयात्** दैवमानुषयोरुभयोरनुकूलत्वात् ।

**[२]नातिप्रणीतबुद्धिः स्यात्तथा भावविपर्यये ।**
**[३]विवृद्धिमिच्छेद्धानिं वाप्येतमर्थं ब्रवीमि ते ॥ १४ ॥**

**नातिप्रणीतबुद्धिः स्यात्** इत्यत्र **भावविपर्यये भावस्य** वैरिपदार्थस्य **विपर्यये** वैपरीत्ये सति **नातिप्रणीतबुद्धिः** अति अत्यन्तं प्रकर्षेण नीता नीतियुक्ता बुद्धिर्यस्य स न स्यात् । गृहदाहे सति विषघटिकादिकं न पश्येदिति भावः । **विवृद्धिमिच्छेद्धानिं वा** इत्यत्र स्वगृहस्य **विवृद्धिम्,** दाहकाग्नेर्हानिं इच्छेद्वै ।

**ते [४]चेदभिनिवेक्ष्यन्ति नाभ्युपैष्यन्ति मे वचः ।**
**कुरवो युद्धमेवात्र घोरं कर्म भविष्यति ॥ १७ ॥**

**ते चेदभिनिवेक्ष्यन्ति** इत्यत्र **अभिनिवेक्ष्यन्ति** अभिनिवेशं गर्वं प्राप्स्यन्ति तर्हि ।

**अहं हि यन्ता बीभत्सोर्भविता संयुगे सति ।**
**धनञ्जयस्यैष [५]कार्यो न हि युद्धं न कामये ॥ १९ ॥**

---

१. BORI पृ. ३२२; **'स्यादुभयान्वये'** इति कुं पाठः ।
२. $D_{3,4}$,S; BORI पृ. ३२२; **'नातिप्रहीणरश्मिः'** इति कुं. पाठः ।
३. **'विपादमर्च्छेद् ग्लानिं'** इति कुं पाठः ।
४. BORI पृ. ३२२; **'चेदभिनिवेक्ष्यन्ते'** इति कुं पाठः ।
५. **'कामो'** इति कुं पाठः ।

**धनञ्जयस्यैष कार्य** इत्यत्र **एष** सहायः ।

**॥ इति अशीतितमोऽध्यायः ॥**

## ॥ अथ एकाशीतितमोऽध्यायः ॥

**अर्जुन उवाच –**

**[१]उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।**
**तव वाक्यं तु मे श्रुत्वा प्रतिभाति परन्तप** ॥ १ ॥

**प्रतिभाति परन्तप** इत्यत्र **प्रतिभाति** युक्तमिति प्रतिभाति ।

**अफलं मन्यसे [२]चाऽपि पुरुषस्य पराक्रमम् ।**
**न चान्तरेण कर्माणि पौरुषेण बलोदयः** ॥ ३ ॥

**अफलं मन्यसे चापि** इत्यत्र **पराक्रमं** सन्धिकरणपराक्रमम् । **कर्माणि** दैवकृतकर्माणि **अन्तरेण** विना **पौरुषेण** पुरुषप्रयत्नेन फलोदयः न ।

**[३]यदिदं भाषितं वाक्यं तथाचन तथैव तत् ।**
**न चैतदेवं द्रष्टव्यमसाध्यमपि किञ्चन** ॥ ४ ॥

**यदिदं भाषितं वाक्यम्** इत्यत्र **यदिदं** तव वाक्यं तत्तथैव । **तत्** धर्मराजवाक्यं तथैव न, तथा वा भवति अन्यथा वा भवतीत्यर्थः ।

**॥ इति एकाशीतितमोऽध्यायः ॥**

---

१. कुं. ७७ अध्यायः ।
२. $T_1$,$G_3$; BORI पृ. ३२३; **'वाऽपि'** इति कुं पाठः ।
३. **'तदिदं'** इति कुं पाठः ।

## ।। अथ द्व्यशीतितमोऽध्यायः ।।

**[1]न स नार्हति दुष्टात्मा वधं समुतबान्धवः ।**
**येन धर्मसुते दृष्टा न सा [2]श्रीर्नापकर्षिता ।। १२ ।।**

**येन धर्मसुते दृष्टा** इत्यत्र धर्मसुते या श्रीर्दृष्टा सा येन दुर्योधनेन नापकर्षिता बलात्कारेण नापकर्षिता । **'अपमर्षिता'** इति पाठे स्पष्टोऽर्थः ।

**[3]या येनापश्यतोपायं धर्मिष्ठान् मधुसूदन ।**
**उपायेन नृशंसेन हृता दुर्द्यूतदेविना ।। १३ ।।**

**या येनापश्यतोऽपायम्** इत्यत्र **या** सम्पत् अपायमपश्यतः **धर्मिष्ठात्** धर्मराजात् ।

**अधर्मेण जितान् दृष्ट्वा वने प्रवृजितांस्तथा ।**
**वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ।। १५ ।।**

**वध्यतां** वध्यत्वं **निर्गतः** नितरां गतः ।

।। इति द्व्यशीतितमोऽध्यायः ।।

## ।। अथ त्र्यशीतितमोऽध्यायः ।।

**[4]श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन ।**
**[5]किमिवार्थं निवर्तेथा स्थापयेतां न वर्त्मनि ।। १८ ।।**

---

१. कुं.पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति; २. **'श्रीरुपमर्षिता'** इति कुं पाठः
३. **'यञ्चाप्यपश्यतोपायं'** इति कुं पाठः ।; ४. कुं. ७९ **अध्यायः** ।
५. **'निवर्तन्तं'** इति कुं पाठः ।

**किमिवार्थं निवर्तेथा** इत्यत्र **अर्थं** तेषां मनोगतमर्थं किमिव विचार्य निवर्तेथाः। तान् वर्त्मनि न स्थापयेथाः।

॥ इति त्र्यशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

**[1]यदि प्रशममिच्छेयुः [2]विनाशे पाण्डवाः सह।**
**तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः ॥ २ ॥**

**विनाशे पाण्डवाः सह** इत्यत्र **विनाशे** जीविताशां विना वर्तमानः विनाशः सङ्ग्रामः तस्मिन्।

**[3]अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात्।**
**गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ १७ ॥**

**ब्राह्मणः प्रसृताग्रभुक्** इत्यत्र प्रकर्षेण सृतं प्राप्तम् अग्रं ग्रासाग्रभागः तं भुनक्तीति **ग्रासाग्रभुक्**।

**इत्युक्त्वा [4]मृदुसम्भारं वृजिनाग्रं सुदर्शनम्।**
**सुनीलमसितापाङ्गी सर्वगन्धादिवासितम् ॥ ३३ ॥**

**इत्युक्त्वा मृदुसम्भारम्** इत्यत्र सम्यग्भारो यस्य सः **सम्भारः** मृदुश्चासौ सम्भारश्च मृदुसम्भारः तं **वृजिनाग्रं** कुटिलाग्रम्।

॥ इति चतुरशीतितमोऽध्यायः ॥

---

१. कुं. ८० अध्यायः।; २. 'कुरवः' इति कुं पाठः।; ३. कुं. ८१ अध्यायः।
४. $D_1$; BORI पृ. ३३२; 'मृदुसंहारं' इति कुं पाठः।

## ॥ अथ षडशीतितमोऽध्यायः ॥

[1] कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतसस्यसुखे काले कल्यः सत्ववतां वरः ॥ ७ ॥

कौमुदे मासि इत्यत्र कौमुदे कुमुदोत्पत्तिहेतुभूते कार्तिके मासि ।

[2] ऊढात् प्रभृति दुःखानि श्वशुराणामरिन्दम ।
[3] निकारानऽतदर्हा च पश्यन्ती दुःखमश्नुते ॥ ६ ॥

निकारानतदर्हा च इत्यत्र निकरन् न्यक्कारान् ।

[4] प्रव्रजत्यन्वधावत् सा कृपणां पुत्रगृद्धिनीम् ।
रुदतीमपहायैनामगच्छाम वयं वनम् ॥ ८ ॥

प्रवजत्यन्वधावत् इत्यत्र मयि प्रव्रजति सति ।

॥ इति षडशीतितमोऽध्यायः ॥

## ॥ अथ सप्ताशीतितमोऽध्यायः ॥

वैशम्पायन उवाच –
तस्य [5] प्रयातो यान्यासन्निमित्तानि महात्मनः ।
तानि मे शृणु सर्वाणि दैवान्यौत्पातिकानि च ॥ २ ॥

---

१. कुं. ८२ अध्यायः ।; २. कुं. ८३ अध्यायः ।
३. BORI पृ. ३३७; 'निराकाराऽतदर्हा' इति कुं पाठः ।
४. 'प्रव्रजन्तोऽनुधावन्तीं' इति कुं पाठः ।
५. 'प्रयाणे' इति कुं पाठः ।

**तस्य प्रयातो यान्यासन्** इत्यत्र प्रकर्षेण **यान्** गच्छन् प्रयान् तस्य प्रयातः ।

**प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः ।**
**विपरिता दिशः सर्वा न प्राज्ञायत किञ्चन ॥ ४ ॥**

**प्रत्यगूहुर्महानद्य** इत्यत्र **प्रत्यक्** पश्चिमस्यां दिशि ऊहुः, उवाह ऊहतुः ऊहुः प्रापुरित्यर्थः । **सिन्धुः** समुद्रः सत्तमो यासां तास्तथोक्ताः ।

**[१]सञ्छन्नो ब्राह्मणैर्गीर्भिस्तत्र तत्र सहस्रशः ।**
**अर्च्यते मधुपर्कैश्च वसुभिश्च वसुप्रदः ॥ ११ ॥**

**सञ्छन्नो ब्राह्मणैः** इत्यत्र **सञ्छन्नः** सम्यक् छन्नः आच्छन्नः परितः पुञ्जीभूय प्राप्त इत्यर्थः ।

**नित्यं हृष्टाः सुमनसो भारतैरभिरक्षिताः ।**
**नोद्विग्नाः परचक्राणां [२]अनयानामकोविदाः ॥ १५ ॥**

**अनयानामकोविदा** इत्यत्र अनयानामन्यायानामकोविदाः अकुशलाः अन्यायानभिज्ञा इत्यर्थः ।

**[३]कुशस्थलं समासाद्य केशवः परवीरहा ।**
**प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति ॥ १८ ॥**

---

१. '**संस्तुतो**' इति कुं पाठः ।
२. BORI पृ. ३४२; '**व्यसनानामकोविदाः**' इति कुं पाठः ।
३. S; BORI पृ. ३४२; '**वृकस्थलं**' इति कुं पाठः ।

**कुशस्थलं समासाद्य** इत्यत्र **कुशस्थलं** वृकस्थलमित्यत्रोक्त-कुशस्थलम् ।

**दारुकोऽपि हयान्मुक्त्वा [१] परिवार्य च शास्त्रतः ।**
**मुमोच सर्वं योक्त्रादि मुक्त्वा चैतानवासृजत् ॥ २२ ॥**

**मुक्त्वा परिवार्य च शास्त्रत** इत्यत्र **परिवार्य** तानेव हयान् प्रदक्षिणीकृत्य ।

**तान्प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः ।**
**अभ्येत्य चैषां वेश्मानि पुनरायात्सहैव तैः ॥ २६ ॥**

**कृतमित्युक्त्वा** इत्यत्र कृतं सम्यक्कृतम् ।

॥ इति सप्ताशीतितमोऽध्यायः ॥

## ॥ अथ अष्टाशीतितमोऽध्यायः ॥

**[२] तस्मिन् हि यात्रा लोकस्य भूतानामीश्वरोऽहि सः ।**
**तस्मिन्धृतिश्च वीर्यं च प्रज्ञा चौजश्च माधवे ॥ ६ ॥**

**तस्मिन् हि यात्रा लोकस्य** इत्यत्र यान्ति यस्यामिति **यात्रा** मर्यादा ।

॥ इति अष्टाशीतितमोऽध्यायः ॥

* * *

---

१. 'परिचर्य' इति कुं पाठः ।

२. कुं. ८५ अध्यायः ।

## ॥ अथ नवतितमोऽध्यायः ॥

**[१]यत्त्वमेवं गतं ब्रूयाः पश्चिमे वयसि स्थितः ।**
**शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरः स्थविरो ह्यसि ॥ २ ॥**

**यत्त्वमेवं गतं ब्रूया** इत्यत्र **गतम्** आगतं कृष्णं **शासनात्** शास्त्रशासनात् कारणात् स्वयोग्यताख्यकारणात् ।

**[२]लेखाऽश्मनीव भाः सूर्ये महोर्मिरिव सागरे ।**
**धर्मस्त्वयि तथा राजन्निति व्यवसिताः प्रजाः ॥ ३ ॥**

**लेखाऽश्मनीव भाः सूर्य** इत्यत्र **अश्मनि** शिलायां **लेखा** लेखनमिव ।

**अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि ।**
**अनेन चाप्युपायेन पाण्डवेभ्यो विभेत्स्यसि ॥ १० ॥**

**वार्ष्णेयं त्वं जिहीर्षसि** इत्यत्र **जिहीर्षसि** पाण्डवेभ्यः अपहर्तुमिच्छसि ।

**न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया ।**
**अन्यो धनञ्जयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ११ ॥**

**अन्यो धनञ्जयात्कर्तुम्** इत्यत्र धनञ्जयात् **अन्यः** भिन्नः वियोजित इत्यर्थः ।

॥ इति नवतितमोऽध्यायः ॥

---

१. कुं. ८७ अध्यायः । $T_2$,$G_{1.2}$,$M_{1(inf.lin)}$; BORI पृ. ३४७; 'यत्त्वमेवं गते' इति कुं पाठः ।
२. BORI पृ. ३४७; 'लेखा शशिनिभाः' इति कुं पाठः ।

## ।। अथ एकनवतितमोऽध्यायः ।।

**दुर्योधन उवाच –**

**[१]यदाह विदुरः कृष्णे सर्वं तत्सत्यमच्युते ।**
**[२]अनुरक्तोऽप्यसंहार्यः पार्थान्प्रति जनार्दनः ।। १ ।।**

**अनुरक्तोऽप्यसंहार्य** इत्यत्र **अनुरक्तोऽपि** पूजादिसत्कारेण अनुरागं प्रापितोऽपि ।

**न तु तस्मै प्रदेयं स्यात्तथा कार्यगतिः प्रभो ।**
**विग्रहः समुपारब्धो न हि [३]शाम्यति विग्रहात् ।। ६ ।।**

**न हि शाम्यति विग्रहात्** इत्यत्र ल्यब्लोपनिमित्ता पञ्चमी । विग्रहं विहायेत्यर्थः ।

**स यद्ब्रूयान्महाबाहुस्तत्कार्यमविशङ्कया ।**
**वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः ।। १० ।।**

**वासुदेवेन तीर्थेन** इत्यत्र 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ'[४] इत्यभिधानात् **तीर्थेन** गुरुणा **संशाम्य** सम्यक् शमय ।

**इदं तु सुमहत्कार्यं शृणु मे यत्समर्थितम् ।**
**परायणं पाण्डवानां [५]नियंस्यामि जनार्दनम् ।। १३ ।।**

---

१. कुं. ८८ अध्यायः । ;     २. 'अनुरक्तो ह्यसंहार्यः' इति कुं पाठः ।
३. $D_{5,6,8}$; BORI पृ. ३४९; 'शाम्यत्यविग्रहात्' इति कुं पाठः ।
४. अ.को. ३-३-८६
५. BORI पृ. ३५०; 'नियच्छामि' इति कुं पाठः ।

**नियंस्यामि जनार्दनम्** इत्यत्र **नियंस्यामि** बध्नामि ।

॥ इति एकनवतितमोऽध्यायः ॥

## ॥ अथ त्रिनवतितमोऽध्यायः ॥

[१]**निर्वासनं च नगरात्प्रव्रज्या च परन्तप ।**
**नानाविधानां दुःखानामावासोऽस्मि जनार्दन ॥ ५८ ॥**

**निर्वासनं च नगरात्** इत्यत्र यन्निर्वासनं या च प्रव्रज्या ततः जातानां दुःखानामिति सम्बन्धः ।

**अज्ञातचर्या बालानामवरोधश्च माधव ।**
**न मे क्लेपतमं तत्स्यात्पुत्रैः सह परन्तप ॥ ५९ ॥**

**अज्ञातचर्या बालानाम्** इत्यत्र पुत्रैः सह अज्ञातचर्या एकचक्रनगरे जाता ।

**स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।**
**नाभ्यगच्छत्तदा नाथं कृष्णा नाथवती सती ॥ ८७ ॥**

**स्त्रीधर्मिणी वरारोह** इत्यत्र 'स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि'[२] इत्यभिधानात् **स्त्रीधर्मिणी** रजस्वला ।

**अन्तं धीरा निपेवन्ते मध्यं ग्राम्यसुखप्रियाः ।**
**उत्तमांश्च परिक्लेशान् भोगांश्चातीव मानुषान् ॥ ९६ ॥**

**अन्तं धीरा निपेवन्त** इत्यत्र **अन्तम्** अनुलोमसङ्ख्यायां प्रतिलोम-

---

१. कुं. ९० अध्यायः ।; २. अ.को. २-६-२०

सङ्ख्यायां च अन्ते विद्यमानं धर्मं मोक्षं च, मध्यं तयोर्मध्ये वर्तमानमर्थेन सहितं कामम्, **उत्तमाः** धर्ममोक्षरताः **परिक्लेशान्** इह परिक्लेशान् निषेवन्ते परत्र अतिमानुषान् भोगानिति विवेकः।

**अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे।**
**अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः** ॥ ९७ ॥

**दुःखमन्तरमन्तयोः** इत्यत्र **अन्तयोर्धर्ममोक्षयोः अन्तरं** मध्यगम्।

॥ इति त्रिनवतितमोऽध्यायः ॥

## ॥ अथ चतुर्नवतितमोऽध्यायः ॥

**अनम्बूकृतमत्रस्तम्**[१] **अनिस्तमसकुण्डलः**[२]।
**राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमम्** ॥ ९८ ॥

**अनम्बूकृतमत्रस्तम्** इत्यत्र 'अम्बूकृतं सुनिष्ठीवमबद्धं स्याद्-नर्थकम्'[३] इत्यभिधानात् न विद्यते **अम्बूकृतम्** अबद्धं न भवतीति **अनम्बूकृतम्, अत्रस्तं** न विद्यते **त्रस्तं** त्रासो यस्य कथने तदत्र-स्तमिति च वाक्यस्य विशेषणम्। **अनिस्तमसकुण्डलः** न विद्यते नितरां **तमसम्** अन्धतमसं ययोस्ते कुण्डले यस्य स तथोक्तः।

**एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम्।**
**न युक्तं भवताऽस्मासु प्रतिवक्तुमसाम्प्रतम्**[४] ॥ २० ॥

१. कुं. ९१ अध्यायः। $S_{(exceptG4)}$; BORI पृ. ३६४; **'अलघूकृतमग्रस्तम्'** इति कुं. पाठः।; २. **'अनिरस्तमसङ्कुलम्'** इति कुं. पाठः।
३. अ.को. १-६-२०
४. S; BORI पृ. ३६४; **'प्रतिपत्तुमसाम्प्रतम्'** इति कुं पाठः।

**प्रतिवक्तुमसाम्प्रतम्** इत्यत्र सम्प्रति वक्तुमयोग्यम् **साम्प्रतम्** ।

**कामक्रोधानुवर्ती हि यो [१] मोहाद्विरुरुत्सते ।**
**गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम्** ॥ ३१ ॥

**विरुरुत्सते** विरोद्धुमिच्छति ।

**तानुवाच महातेजाः कौरवान् मधुसूदनः ।**
**सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता** ॥ ३९ ॥

**सर्वा मेऽपचितिः कृता** इत्यत्र 'पूजा नमस्याऽपचितिः सपर्या-र्चार्हणाः समा' [२] इत्यमरः । **अपचितिः** पूजा ।

**श्रद्धया परया युक्त इदं वचनमब्रवीत् ।**
**[३] सम्भ्रमैस्तुष्य गोविन्द एतन्नः परमं धनम् ।**
**अन्यथा हि विशेषेण कस्त्वामर्चितुमर्हति** ॥ ४४ ॥

**सम्भ्रमैस्तुष्य गोविन्द** इत्यत्र **सम्भ्रमैः** भक्त्युद्रेकादिसम्भ्रमैः तुष्य सन्तुष्टो भव । 'तुष तुष्टौ' इति धातोर्लोटि मध्यमपुरुषवचनम् । एतत् सम्भ्रमकरणम् ।

॥ इति चतुर्नवतितमोऽध्यायः ॥

* * *

---

१. BORI पृ. ३६५; **'मोहद्विरुरुत्सति'** इति कुं पाठः ।

२. अ.को. २-७-३४

३. $K_4$,S; BORI पृ. ३६६; **'संवृतैस्तुष्य'** इति कुं पाठः ।

## ।। अथ पञ्चनवतितमोऽध्यायः ।।

[1]भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे ।
[2]भूयसी वर्तते [3]वृत्तिः न शमे कुरुते मनः ।। ७ ।।

भूयसी वर्तते वृत्तिः इत्यत्र वृत्तिः धनदानादिना अनुवृत्तिः ।

[4]नेदमस्य युधा शक्यमिन्द्रेणापि सहामरैः ।
इति व्यवसिताः सर्वे धार्तराष्ट्रा जनार्दन ।। २० ।।

नेदमस्य युधा शक्यम् इत्यत्र अस्य दुर्योधनस्य इदं राज्यं युधा युद्धेन शक्यं अपहर्तुं शक्यं न इति योजना ।

मध्ये तिष्ठन् हस्त्यनीकस्य मन्दो
रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते [5]वीतमन्युः
कृत्स्ना मयेयं पृथिवी जितेति ।। २२ ।।

वीतमन्युः इत्यत्र विशेषेण इतः प्राप्तो मन्युर्यस्य स तथोक्तः ।

आशंसते वै धृतराष्ट्रस्य पुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।

---

१. कुं. ९७ अध्यायः ।
२. $D_{S1}$,$S_{(except\ G3)}$; BORI पृ. ३६७; 'भूयसीं' इति कुं पाठः ।
३. M; BORI पृ. ३६७; 'वृत्तिम्' इति कुं. पाठः
४. 'नेदमद्य' इति कुं पाठः ।
५. 'वीतभीतिः' इति कुं पाठः ।

**तस्मिन् शमः केवलो नोपलभ्यो**
**[1]यश्चाशमं [2]मन्यते प्राप्तमर्थम्** ॥ २३ ॥

**यश्चाशमं मन्यते प्राप्तमर्थम्** इत्यत्र **अशमम्** अशाममेव अर्थं प्रयोजनं प्राप्तं मन्यते ।

**पर्याप्तेयं पृथिवी कालपक्वा दुर्योधनार्थे पाण्डवान् योद्धुकामाः ।**
**समागताः सर्वयोधाः पृथिव्यां राजानश्च क्षितिपालैः समेताः २४**

**पर्याप्तेयं पृथिवी** इत्यत्र दुर्योधनार्थे ये योद्धुकामाः तैः पर्याप्तेति सम्बन्धः ।

**त्यक्तात्मानः सह दुर्योधनेन**
**हृष्टा योद्धुं पाण्डवान्सर्वयोधाः ।**
**मृत्युर्जयो वेति [3]कृते कृताशा**
**कामात्मानो मन्युवशाविनीताः ।**
**तेषां मध्ये प्रविशेथा यदि त्वं**
**न तन्मतं मम दाशार्हवीर** ॥ २६ ॥

**कृते कृताशा** इत्यत्र **कृते** युद्धकर्मणि कृताशाः । **मन्युवशाविनीता** इत्यत्र मन्युवशाश्च ते अविनीताश्चेति [4]विशेषणसमासः ।

॥ इति पञ्चनवतितमोऽध्यायः ॥

---

१. **'बद्धं सन्तं'** इति कुं पाठः ।
२. T,$G_{1-2}$; BORI पृ. ३६९.; **'मन्यते लब्धमर्थम्'** इति कुं. पाठः ।
३. **'कृतैकभावाः'** इति कुं पाठः ।
४. **विशेषणोभयसमासः** सो.मु.पा.

## ॥ अथ षण्णवतितमोऽध्यायः ॥

[१] ग्रहीतुं धार्तराष्ट्राणां पाण्डवानां तथैव च ।
**पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया ॥ १४ ॥**

**ग्रहीतुं धार्तराष्ट्राणाम्** इत्यत्र **ग्रहीतुं** ग्राहयितुम् ।

॥ इति षण्णवतितमोऽध्यायः ॥

## ॥ अथ सप्तनवतितमोऽध्यायः ॥

[२] **ब्रह्मादिवासुदेवान्तं वशं समनुकीर्तयन् ।**
**तुष्टुवुः केशवं तत्र बहवः सूतमागधाः ॥ १४ ॥**

**ब्रह्मादिवासुदेवान्तं वंशं समनुकीर्तयन्** इत्यत्र 'बहुलं छन्दस्यमाङ्योगेऽपि' इति वचनात् **समनुकीर्तयन्** सम्यगन्वकीर्तयन्नित्यर्थः ।

**पक्षि [३] पक्षवितानैश्च रुक्मजालकृताङ्गणैः ।**
**दण्डमार्गविभागैश्च सुकृतैर्विश्वकर्मणा ॥ १९ ॥**

**पक्षिपक्षवितानैश्च** इत्यत्र **पक्षी** गरुडः तस्य **पक्षौ** विस्तारदशायां वितानानीव तैः । कृत्रिमशुकहंसादिपक्षविलसितवितानैर्वा ।

**कार्तस्वरमयीभिश्च पद्मिनीभिरलङ्कृतः ।**
**शुशुभे स्यन्दनश्रेष्ठस्तपनीयैश्च [४] पादपैः ॥ २१ ॥**

---

१. कु. ९३ अध्यायः । **'हितं हि'** इति कुं पाठः ।
२. कु. ९४ अध्यायः ।; ३. 'ध्वजः' इति कुं पाठः ।
४. **'तापनीयैश्च'** इति कुं पाठः ।

**व्याघ्रसिंहवराहैश्च गोभिश्च मृगपक्षिभिः ।**
**ताराभिर्भास्करैश्चापि वारणैश्च हिरण्मयैः ॥ २२ ॥**

**तपनीयैश्च पादपैः । व्याघ्रसिंहवराहैश्चैव** इत्यादौ पादपादयः सर्वे तत्र कृत्रिमरूपा इति ज्ञेयम् ।

**ततः प्रयाते दाशार्हे [१]प्रवाद्यन्ते स्म पुष्कराः ।**
**शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥ ३३ ॥**

**प्रवाद्यन्ते स्म पुष्करा** इत्यत्र 'द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे । अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम्' इत्यभिधानात् **पुष्कराः** वाद्यविशेषाः ।

॥ इति सप्तनवतितमोऽध्यायः ॥

## ॥ अथ अष्टनवतितमोऽध्यायः ॥

**[२]ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ।**
**ते सत्यमाहुधर्म्यं च न्याय्यं च भरतर्षभ ॥ ५१ ॥**

**ते सत्यमाहुः** इत्यत्र पृष्टश्चेदाहुरिति [३]योग्याध्याहारेणान्वयः ।

**पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।**
**ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान् परन्तप ॥ ५४ ॥**

**पित्र्यं तेभ्यः प्रदाय** इत्यत्र **तेभ्यः** कौरवेभ्यः पित्र्यम् अंशं पाण्डवेभ्यः प्रदायेति पञ्चमीचतुर्थ्योरन्वयः । ॥ इति अष्टनवतितमोऽध्यायः ॥

---

१. 'प्रावाद्यन्तैकपुष्कराः' इति कुं पाठः ।; २. कुं. ९५ अध्यायः ।
३. योग्यपदाध्याहारेण योजना सो.मु.पा.

## ॥ अथ एकोनशततमोऽध्यायः ॥

**तं[1] स्म वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः ।**
**प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ९ ॥**

**तं स्म वैद्या अकृपणा** इत्यत्र **वैद्याः** विद्यासम्बन्धिनो विद्वांसः ।

**तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया ।**
**निमित्तवेधी स मुनिरिषिकाभिः समार्पयत् ॥ ३२ ॥**

**निमित्तवेधी स मुनिः** इत्यत्र यावन्निमित्तमस्ति तावदेव विध्यतीति निमित्तवेधी । अत एव चक्षुरादेः स्पर्शमात्रं न तु व्रणम् ।

**कङ्कुदीपं[2] कङ्कुलासमक्षिसन्तर्जनं[3] तथा ।**
**सन्तानं नर्तकं घोरं हास्यमौदकमष्टमम् ॥ ४२ ॥**

**कङ्कुदीपं कङ्कुलासम्** इत्यत्र कं शिरः कु कुत्सिततया दीपयति ज्वलयतीति **कङ्कुदीपम्**, कं शिरः कु कुत्सिततया लासयति नर्तयतीति **कङ्कुलासम्**, **आक्षेपम्** आ समन्तात् क्षेपः क्षेपणं यस्मात्तदाक्षेपम्, **सन्तानम्** एकशरप्रयोगेऽपि शतशः कोटिशः सन्तानो विस्तारो यस्मात्तत् **सन्तानम्**, **हास्यं** हासः अकारणतया सदा हासो यस्मात्तत् हास्यम्, **औदकं** सदा मूत्राद्युदकजनकमौदकम् ।

॥ इति एकोनशततमोऽध्यायः ॥

---

१ 'तं च' इति कुं पाठः ।
२ [illegible]; BORI पृ. ३८६; **'काकुदीकं शुकं'** इति कुं पाठः ।
३ '[illegible]समक्षि-' इति कुं. पाठः ।

## ।। अथ शततमोऽध्यायः ।।

**[१]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**मातलेर्दातुकामस्य कन्यां मृगयतो वरम्** ।। ११ ।।

**मातलेर्दातुकामस्य** इत्यत्र कन्यां दातुकामस्य वरं मृगयतः मातलेः इतिहासमुदाहरन्तीति सम्बन्धः ।

**मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।**
**कुलत्रयं संशयितं कुरुते कन्यका सताम्** ।। १६ ।।

**कुलत्रयं संशयितम्** इत्यत्र दातुं प्रतिग्रहीतुं च योग्यं न वेति संशययुक्तं कुरुते ।

**देवमानुषलोकौ द्वौ मानुषेणैव चक्षुषा ।**
**अवगाह्यैव विचितौ न च मे रोचते वरः** ।। १७ ।।

**अवगाह्यैव विचितौ** इत्यत्र **विचितौ** विचारितौ ।

।। इति शततमोऽध्यायः ।।

## ।। अथ एकाधिकशततमोऽध्यायः ।।

**[२]भवनं पश्य वारुण्यं यदेतत्सर्वकाञ्चनम् ।**
**[३]यां प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे** ।। १४ ।।

---

१. कुं. ९७ अध्यायः ।
२. कुं. ९८ अध्यायः ।
३. BORI पृ. ३९०; **'यत्प्राप्य'** इति कुं पाठः ।

**यां प्राप्य सुरताम्** इत्यत्र **यां** वारुणीमद्यरूपाम् । सुष्ठु रमन्त इति सुराः तेषां भावः **सुरता** ताम् ।

**एतानि हृतराज्यानां दैतेयानां स्म मातले ।**
**दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ॥ १९ ॥**

**एतानि हृतराज्यानाम्** इत्यत्र **हृतम्** आहृतं राज्यं येषां ते **हृतराज्याः** तेषाम् ।

॥ इति एकाधिकशततमोऽध्यायः ॥

॥अथ द्व्यधिकशततमोऽध्यायः ॥

[1]**सुरुचा पक्षिराजेन सुबलेन च मातले ।**
**वर्धितानि प्रसूत्या वै विनताकुलकर्तृभिः ॥ ३ ॥**

**वर्धितानि प्रसूत्या वै** इत्यत्र **प्रसूत्या** सन्ततिपरम्परया वर्धितानि पक्षिकुलानि ।

**कर्मणा क्षत्रियाश्चैते निर्घृणा भोगिभोजिनः ।**
**ज्ञातिसङ्क्षयकर्तृत्वाद् ब्राह्मण्यं न [2]भजन्ति वै ॥ ६ ॥**

**ज्ञातिसङ्क्षयकर्तृत्वाद्ब्राह्मण्यं न भजन्ति वै** इत्यत्र **ब्राह्मण्यं** ब्राह्मणजातेर्धर्मं दाक्षिण्यम् ।

**एते प्रादेशमात्रेण मयोक्ता गरुडात्मजाः ।**
**प्राधान्यतस्ते यशसा कीर्तिताः प्राणिनश्च ये ॥ १९ ॥**

---

१. कुं. १०१ अध्यायः ।; २. $K_{1.5}$; BORI पृ. ३९५; 'लभन्ति' कुं पाठः ।

**एते प्रादेशमात्रेण** इत्यत्र प्रकृष्टानाम् **आदेशः** कथनं तन्मात्रेणे-त्यर्थः ।

**।। इति द्व्यधिकशततमोऽध्यायः ।।**

## ।। अथ त्र्यधिकशततमोऽध्यायः ।।

**[१]अस्याश्चतस्रो धेन्वोऽन्या दिक्षु सर्वासु मातले ।**
**निवसन्ति दिशाम्पाल्यो धारयन्त्यो दिशःस्म ताः ।। ७ ।।**

**निवसन्ति दिशाम्पाल्य** इत्यत्र **दिशः** चतुर्दिशः धारयन्त्यः ताः धेनवः **दिशांपाल्यः** दिक्पाल्य इति स्मृताः । अलुक्समासोऽयम् ।

**सर्वकामदुघा नाम धेनुर्धारयते दिशम् ।**
**उत्तरां मातले धर्म्यां [२]तथैलिबिलिसंश्रयाम् ।। १० ।।**

**तथैलिबिलिसंश्रयाम्** इत्यत्र 'ऐलिबिलिः पौलस्त्यो वैश्रवणः किन्नरेश्वरो धनदः'[३] इत्यभिधानात् **ऐलिबिलिः** वैश्रवणः ।

**सुधाहारेषु च सुधां स्वधाभोजिषु च स्वधाम् ।**
**अमृतं चामृताशेषु सुरभी क्षरते पयः ।। १३ ।।**

**सुधाहारेषु च सुधाम्** इत्यत्र सुष्ठु धार्यन्ते अनया देवा इति **सुधा** देवाहारभूता स्वाहा ।

**।। इति त्र्यधिकशततमोऽध्यायः ।।**

---

१. कुं. १०२ अध्यायः ।
२. **'तथैलविलसंश्रिताम्'** इति कुं पाठः ।
३. ह.को. १-७८.

## ।। अथ चतुरधिकशततमोऽध्यायः ।।

**[१]इदमद्भिः समं प्राप्ता ये केचित् [२]ध्रुवजङ्गमाः ।**
**प्रविशन्तो महानादं नदन्ति भयपीडिताः ।। २ ।।**

**इदमद्भिः समं प्राप्ता** इत्यत्र **इदं** पातालतलं **अद्भिः** शुभोदकसमुद्रात् क्षीरोदकसमुद्राच्च प्रस्रवणरूपेण प्रविशन्तीभिरद्भिः समं प्राप्ताः **ध्रुवजङ्गमाः** स्थूलशरीराः स्थिरपृष्ठाः कूर्मकर्कटकमकरादयः **भयपीडिताः** परितः प्रस्रवज्जलोपान्ते ज्वलदग्निदर्शनात् भयपीडिताः सन्तः ।

**अत्रासुरोऽग्निः सततं दीप्यते वारिभोजनः ।**
**व्यापारेण [३]समात्मानं निबध्य [४]समबद्ध्यत ।। ३ ।।**

**अत्र** पाताले **आसुरोऽग्निः** असुरसंहरणार्थं परिकल्पितो दक्षिणोऽग्निः **व्यापारेण** परितो वनं सर्वभक्षणव्यापारेण **महात्मानं** वनान्तस्स्थितं कञ्चिदृषिं **निबध्य** परितो बद्ध्वा क्रुद्धेन तेन अधः पाताले पतेति शप्तः सन् **समबध्यत** परितोऽन्तःप्रविष्टबहुयोजनविस्तृतजलसमुद्रप्रान्तजले सम्यक् [५]सम्बन्धोऽभूत् ।

**अत्रामृतं सुरैः पीत्वा निहितं निहिताशिभिः ।**
**अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ।। ४ ।।**

---

१. कुं. ९९ अध्यायः ।
२. BORI पृ. ३९१; **'भुवि जङ्गमाः'** इति कुं. पाठः ।
३. T,$G_{1,2}$; BORI पृ. ३९१; **'धृतात्मानं'** इति कुं. पाठः ।
४. $G_{1,2,4}$; BORI पृ. ३९१; **'समबध्यत'** इति कुं. पाठः ।
५. **सम्बद्धोऽभूत्** सो.मु.पा.

**अत्र** पातालमध्यप्रदेशे **सोमस्य** भगवदाज्ञया पातालोपरिप्रदेशे सञ्चरत्सोमस्य अमावास्यापर्यन्तं बहुशोऽह्नि सञ्चरणेन सूर्य-किरणाभिभूतस्वकिरणानाम् अमृतस्पर्शाभावात् **हानिः** क्रमेण कलाहानिः, पुनः पौर्णमासीपर्यन्तं क्रमेण **निशि** निश्येव बहुशः सञ्चारात् अमृतस्पर्शस्याप्यभिवृद्धौ कलाभिवृद्धिश्च प्रदृश्यते । एवञ्च वृद्धिह्रासयोरमृतस्पर्शास्पर्शनिमित्तात् ततोऽमृतादित्युक्तम् ।

**[1]अत्र दिव्यो हयशिराः काले पर्वणि पर्वणि ।**
**उत्तिष्ठति सुवर्णाख्यो वाग्भिरापूरयञ्जगत्** ॥ ५ ॥

**अत्र दिव्यो हयशिरा** इत्यत्र **अत्र** पाताले **हयशिराः** बडबामुखो बडबाग्निः उत्तिष्ठति पौर्णमास्याममावास्यायां च अभिवृद्धजलपानाय पूर्वस्थिताग्नेरुत्तेजकतयोत्तिष्ठति ।

**[2]यस्मादत्र समस्तास्ताः पतन्ति जलमूर्तयः ।**
**तस्मात्पातालमित्येव ख्यायते पुरमुत्तमम्** ॥ ६ ॥

**यस्मादत्र** इत्यत्र **यस्मात्** कारणात् **ग्रस्ताः** जलचरैर्मिश्रिताः **जलमूर्तयः** जलराशयः । तस्माज्जलपातान्निमित्तात् **अम्** अकारवाच्यं नारायणं **लाति** स्वान्तर्गृह्णातीति **अलं** जलं तस्य पातो यत्रेति व्युत्पत्त्या **पातालमिति** भावः ।

**[3]ऐरावतोऽस्मात्सलिलं [4]प्रगृह्य जगतो हितः ।**
**मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति** ॥ ७ ॥

---

१. $K_2$; BORI पृ. ३९२; **'अत्रादित्यो'** इति कुं पाठः ।
२. BORI पृ. ३९२; **'यस्मादलं'** इति कुं पाठः ।
३. **'ऐरावणोऽस्मात्सलिलं'** कुं पाठः ।; २. BORI पृ ३९२; **'गृहीत्वा'** कुं पा

**ऐरावतोऽस्मात्सलिलं प्रगृह्य** इत्यत्र ऐरावतः **अस्मात्** पाताल-स्थजलाशयात् स्वशुण्डाद्वारा क्वचित्क्वचिदगाधतया पातालपर्यन्त-स्पर्शिलवणसमुद्रजले प्रक्षिप्य तद्वारा मेघेष्वामुञ्चते इति ज्ञेयम् ।

**ऐरावतो नागराजो वामनः कुमुदोऽञ्जनः ।**
**प्रसूताः सुप्रतीकस्य वंशे वारणसत्तमाः ॥ ८ ॥**

**ऐरावतो नागराज** इत्यत्र ऐरावतादयः चत्वारो दिग्गजाः सुप्रतीकस्य वंशे प्रसूताः । अन्ये वारणसत्तमाश्च ।

**अत्र नानाविधाकारास्तिमयो नैकरूपिणः ।**
**अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ॥ ९ ॥**

**अप्सु सोमप्रभाम्** अप्सु पतितचन्द्रप्रभां चन्द्रप्रभास्पर्शादमृतीभूत-जलमिति यावत् ।

**अत्र सूर्यांशुभिर्भिन्नाः पातालतलमाश्रिताः ।**
**मृता हि दिवसे सूत पुनर्जीवन्ति वै निशि ॥ १० ॥**

**अत्र सूर्यांशुभिर्भिन्ना** इत्यत्र **अत्र** पाताले भगवदाज्ञया निशि चन्द्र इव अह्नि सूर्योऽपि रूपान्तरेण तत्र तत्र चरति । दशयोजनाभ्यन्तरे सञ्चरतस्तस्य सूर्यस्यातिसमीपस्थत्वात् अत्युष्णकिरणैः भिन्नास्तप्ताः अत एव दिवसतः अह्नि मृताः निशि जीवन्ति चन्द्रस्याप्यति-समीपस्थामृतकिरणत्वात् शुक्लपक्षे चन्द्रकिरणैः, कृष्णपक्षे शीतल-वातानीतामृतशीकरैश्च जीवन्ति । ज्योतिश्चक्रे स्थितौ तु सूर्याचन्द्रमसौ 'अरोहन्नुत्तरां दिवम्' इति श्रुतेः इह उत्तरां दिशं गत्वा मेरोः

प्रादक्षिण्येनैव सञ्चरतः । रूपान्तरेण भगवदाज्ञया पातालेऽपि सञ्चरत इति विवेको द्रष्टव्यः ।

**अत्र तेऽधर्मनिरता बद्धाः कालेन पीडिताः ।**
**दैतेया निवसन्ति स्म वासवेन हृतश्रियः ॥ १२ ॥**

**अत्र तेऽधर्मनिरता** इत्यत्र अधर्मनिरताः **बद्धाः** चतुर्मुखाज्ञया मृत्युपाशैर्वरुणपाशैश्च बद्धाः । **अत्र** पातालस्थजलसमुद्रे मृत्युपाशैर्बद्धाः । **कालेन** मृत्युना ।

**अत्र भूतपतिर्नाम सर्वभूतमहेश्वरः ।**
**भूतये सर्वभूतानामचरत्तप उत्तमम् ॥ १३ ॥**

**भूतपतिर्नाम महेश्वरो** महादेवः, स किङ्करैर्भूतगणैरमृतरक्षां च करोतीति सूचनाय **भूतपतिर्नाम** इत्युक्तम् ।

**अत्र [1]गोप्रतिमा विप्राः स्वाध्यायाम्नायकर्शिताः ।**
**त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः ॥ १४ ॥**

**अत्र गोप्रतिमा विप्रा** इत्यत्र **गोप्रतिमाः** परमशान्ता इत्यर्थः । **त्यक्तप्राणाः** त्यक्तं **प्र** प्रकर्षेण **अनम्** अननं चेष्टा यैस्ते त्यक्तप्राणाः ।

**यत्र तत्र शयो नित्यं येनकेनचिदाश्रितः[2] ।**
**येनकेनचिदाच्छन्नः स गोव्रत इहोच्यते ॥ १५ ॥**

**यत्रतत्रशय** इत्यत्र इह स्थितो मुनिवर्गः **यत्रतत्रशयः** यत्रक्वचित् **शयः** शयनं तत्कुर्वन् । येनकेनचित्तृणपर्णादिना आहारेण **आश्रितः**

१. **'गोव्रतिनो'** इति कुं पाठः । २. $G_1$; BORI पृ.३९२; **'दाशितः'** कुं.पाठः

देहमाश्रितः देहं रक्षन्निति यावत् । येनकेनचित् [१]वल्कलादिना आच्छन्नः अत एव असङ्गः विरक्तः अप्रतिः प्रतिरहित इत्युच्यते ।

**[२]अंशमेतज्जले न्यस्तं दीप्यमानमिव श्रिया ।**
**अप्रजानात् [३]निसर्गाद्वा नोद्भियति न सर्पति ॥ १७ ॥**

**अंशमेतज्जले न्यस्तम्** इत्यत्र एतत् प्रागुक्तम् **अंशम्** अग्रेरंशभूतं तेजः जले न्यस्तम् । **अप्रजानान्निसर्गाद्वा** इत्यत्र **अप्रजानात्** प्रकर्षेण **जानो** जननम् इन्धनादिना उद्बोधनं तदभावात्, **निसर्गात्** स्वभावात् **नोद्भियति** ऊर्ध्वं न ज्वलति । **न सर्पति** ततोऽन्यत्र न सर्पति च ।

**नास्य जातिं निसर्गं वा कथ्यमानं शृणोमि वै ।**
**पितरं मातरं चापि नास्य जानाति कश्चन ॥ १८ ॥**

**अस्य** पातालस्थितजनस्य ।

**अतः किल महानग्निरन्तकाले समुत्थितः ।**
**धक्ष्यते मातले सर्वं त्रैलोक्यं सचराचरम् ॥ १९ ॥**

**अतः किल महानग्निः** इत्यत्र **अतः** अस्मात्पातालल्लोकात् ।

॥ इति चतुरधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चाधिकशततमोऽध्यायः ॥

**[४]मणिस्वस्तिकचक्राङ्कमण्डलुकलक्षणाः ।**

---

१. वल्कलाजिनादिना सो.मु.पा.; २. **'अण्डमेतज्जले'** इति कुं पाठः ।
३. S; BORI पृ. ३९३; **'निसर्गाद्वै'** इति कुं पाठः ।
४. कुं. १०३ अध्यायः । $K_{1,2}$; BORI पृ. ३९८; **'मणिस्वस्तिकचक्राङ्काः**

**सहस्रसंख्या बलिनः सर्वे रौद्राः स्वभावतः ॥ ५ ॥**

**मणिस्वस्तिकचक्राङ्कमण्डलुकलक्षणा** इत्यत्र **मणेः** फणामणेः स्वस्तिकचक्रयोश्च अङ्को येषां तानि कानि शिरांसि तेषां **मण्डलुकं** मण्डलीकरणशीलमेव लक्षणं येषां ते तथोक्ताः ।

**॥ इति पञ्चाधिकशततमोऽध्यायः ॥**

## ॥ अथ षडधिकशततमोऽध्यायः ॥

**गरुड उवाच –**

**[1]शेषेणैवास्य कार्यस्य प्रज्ञास्याम्यहमायुषः ।**
**सुवर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ २० ॥**

**शेषेणैवास्य कार्यस्य** इत्यत्र कार्यस्य **शेषेण** विशेषेण कार्य-विशेषेणेत्यर्थः । **अस्य** सुमुखस्य आयुषः महत् रूपं प्राप्तं स्यादि-त्यन्वयः ।

**सङ्गत्या तत्र भगवान् विष्णुरासीच्चतुर्भुजः ।**
**ततस्तत्सर्वमाचष्ट[2] नारदो मातलिं प्रति ॥ २३ ॥**

**सङ्गत्या तत्र भगवान् विष्णुः** इत्यत्र **सङ्गत्या** अनुजत्वाख्य-सम्बन्धेन । **नारदो मातलिं प्रति** इत्यत्र **मातलिं प्रति** मातलिमुद्दिश्य **आचष्ट** विष्णवे आचष्ट ।

**॥ इति षडधिकशततमोऽध्यायः ॥**

---

**कमण्डलुकलक्षणाः'** इति कुं पाठः ।
१. कुं. १०४ अध्यायः । ; २. S; BORI पृ. ४०२; **'आचख्यौ'** इति कुं पा

## ।। अथ सप्ताधिकशततमोऽध्यायः ।।

**[१] भगवान् [२] किमिवाज्ञानात् सुधां प्रति भये मम ।**
**कामकारवरं दत्वा पुनश्चलितवानसि ।। ३ ।।**

**भगवन् किमिवाज्ञानात्सुधां प्रति भये मम** इत्यत्र **सुधाम्** अमृतं प्रति उद्दिश्य भये सति मम **कामकारवरं** कामेन कारः कार्यकरणं तस्य वरं दत्त्वा ।

**त्यक्त्वा रूपं विवर्णस्तु सर्परूपधरोऽभवत् ।**
**गत्वा विष्णुसमीपं तु पादपीठं समाश्लिषत् ।। ८ ।।**

**त्यक्त्वा रूपम्** इत्यत्र **रूपं** मानुषाकारपत्नीप्रीत्यै धृतं मानुषरूपम् ।

**कोऽन्यो भारसहो ह्यस्ति कोऽन्योस्ति बलवत्तरः ।**
**मया [३] यो हि विशिष्टः सन्वहामीमं सबान्धवम् ।।१६।।**

**मया यो हि विशिष्टः सन्** इत्यत्र **मया** सम्पदा विशिष्टः सन् इति सम्बन्धः । **सबान्धवं** भार्याख्यबन्धुसहितम् ।

**क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः ।**
**बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः ।। ३० ।।**

**बलदाहविदग्धस्य** इत्यत्र **बलस्य** दानवसेनायाः दाहे **विदग्धस्य** निपुणस्य ।

।। इति सप्ताधिकशततमोऽध्यायः ।।

---

१. कुं. १०५ अध्यायः ।; २. **'किमवज्ञानात् वृत्तिः प्रतिहता'** इति कुं पाठः ।
३. $T_2$,$G_1$,$M_{2-5}$; BORI पृ. ४०४; **'योऽहं'** इति कुं पाठः ।

## ।। अथ अष्टाधिकशततमोऽध्यायः ।।

[१]विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा ।
**अभ्यगच्छत्स्वयं भूत्वा वसिष्ठो भगवानृषिः ।। ८ ।।**

**अभ्यगच्छत्स्वयं भूत्वा** इत्यत्र **वसिष्ठः** स्वयं अवशिष्टो भूत्वेत्यावृत्त्या योजना ।

**भक्तं प्रगृह्य मूर्ध्ना वै बाहूभ्यां संशितव्रतः ।**
**स्थितः स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः ।। १३ ।।**

**मारुताशनः** वाय्वाहारः ।

।। इति अष्टाधिकशततमोऽध्यायः ।।

## ।। अथ नवाधिकशततमोऽध्यायः ।।

[२]कुतः [३]पुष्णानि मित्राणि कुतोऽर्थाः सञ्जयः कुतः ।
**हयानां चन्द्रशुभ्राणां शक्तान्यष्टौ कुतो मम ।। ३ ।।**

**कुतः पुष्णानि मित्राणि** इत्यत्र पुष्णानीति लोटि उत्तमपुरुषवचनम् । पुष्टान् करवाणीत्यर्थः ।

**प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।**
**मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ।। ८ ।।**

---

१. कुं. १०६ अध्यायः ।
२. कुं. १०७ अध्यायः ।
३. 'पुष्टानि' इति कुं पाठः ।

**प्रतिश्रुत्य करिष्येऽति** इत्यत्र **अति** अतिशयेन प्रतिश्रुत्य करिष्ये इति सम्बन्धः ।

**विभवश्चास्ति मे विप्र वासवावरजो द्विज ।**
**पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन मे ॥ १८ ॥**

**वासवावरजो द्विज** इत्यत्र **वासवावरजः** विष्णुः । **तेन** विष्णुना **मे** कामश्च कृतः ।

॥ इति नवाधिकशततमोऽध्यायः ॥

## ॥ अथ दशाधिकशततमोऽध्यायः ॥

[१] **ओङ्कारस्यात्र जायन्ते सूतयो दशतीर्दश ।**
**पिबन्ति मुनयो यत्र हविर्धूमं स्म धूमपाः ॥ १४ ॥**

**ओङ्कारस्य** इत्यत्र याः **सूतयः** लोकाः दशतीर्दश ताः ओङ्कारस्य **सूतयः** स्वरप्रसूतयः जायन्ते ।

[२] **अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते ।**
**अत्रावृत्तो दिनकरः सुरसं क्षरते पयः ॥ १५ ॥**

**अत्र गत्वा सुखस्यान्तं दुःखस्यान्तम्** इत्यत्र सुखस्य **अन्तं** प्रदेशं प्रपद्यते ।

॥ इति दशाधिकशततमोऽध्यायः ॥

---

१. कुं. १०८ अध्यायः ।
२. कुं. १०९ अध्यायः ।

## ।। अथ एकादशाधिकशततमोऽध्यायः ।।

**[१]अत्र रात्रिश्च निद्रा च निर्गता दिवसक्षये ।**
**जायते जीवलोकस्य हर्तुमर्धमिवायुषः ।। ७ ।।**

**अत्र रात्रिश्च निद्रा च** इत्यत्र निर्गता पश्चिमदिङ्मध्यादुत्थिता ।

**अत्र मूलं [२]हि मरुतो मन्दरं याति शाश्वतम् ।**
**अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ।। ९ ।।**

**अत्र मूलं हि मरुत** इत्यत्र **अत्र** दिशि **मरुतः** वायोः **मूलं** उत्पत्ति-स्थानं अस्ति ।

**अतःप्रभृति सूर्यस्य तिर्यगावर्तते गतिः ।**
**अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् ।।१५।।**

**अतःप्रभृति सूर्यस्य** इत्यत्र **तिर्यक्** मेरोरुत्तरभागे ।

।। इति एकादशाधिकशततमोऽध्यायः ।।

## ।। अथ द्वादशाधिकशततमोऽध्यायः ।।

**[३]अत्र कामश्च रोषश्च शैलश्चोमा च सम्बभुः ।**
**अत्र राक्षस यक्षाणां गन्धर्वाणां च गालव ।। १० ।।**

**शैलो** मैनाकः ।

---

१. कुं. ११० अध्यायः । $T_2$,$G_2$; BORI पृ. ४१५; **'अतो'** इति कुं पाठः ।
२. **'हिमवतो'** इति कुं पाठः ।
३. कुं. १११ अध्यायः ।

धामा नाम महात्मानो मुनयः सत्यवादिनः ।
न तेषां ज्ञायते मूर्तिर्नाकृतिर्न [1] तु पश्चिमः ॥ १७ ॥

**नाकृतिर्न तु पश्चिम** इत्यत्र पश्चिमः पृष्ठभागः ।

यथा यथा [2] प्रवेक्ष्यन्ति तस्मात् परतरं नरः ।
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव ॥ १८ ॥

**यथा यथा प्रवेक्ष्यन्ति तस्मात्** इत्यत्र उत्तरदिग्भागात् ।

॥ इति द्वादशाधिकतमोऽध्यायः ॥

## ॥ अथ त्रयोदशाधिकशततमोऽध्यायः ॥

[3] स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः ।
तन्नियच्छ महावेगं गमने विनतात्मज ॥ १४ ॥

**स मे निर्वाप्य सहसा चक्षुषी** इत्यत्र सः अग्निः मे चक्षुषी **निर्वाप्य** निर्मथ्य ।

गुरवे [4] मच्छ्रुतानीह शतान्यष्टौ हि वाजिनाम् ।
एकतःश्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् ॥ १६ ॥

**गुरवे मच्छ्रुतानीह** इत्यत्र **मच्छ्रुतानि** मया प्रतिश्रुतानि प्रतिज्ञातानीत्यर्थः ।

---

१. $T_1$, $G_{(except\ G5)}$; BORI पृ. ३१७; **'तपश्चितम्'** इति कुं पाठः ।
२. **'प्रविशति'** इति कुं पाठः ।
३. कुं. ११२ अध्यायः ।
४. **'संश्रुतानीह'** इति कुं पाठः ।

**तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज ।**
**ततोऽयं जीविततत्यागे दृष्टो मार्गो मयाऽऽत्मनः ॥ १७ ॥**

**तेषां चैवापवर्गाय** इत्यत्र अपगतो वर्गो वर्जनं यस्मात् सः अपवर्गः आर्जनमित्यर्थः, तस्मै ।

**नातिप्रज्ञोऽसि विप्रर्षे योत्मानं त्यक्तुमिच्छसि ।**
**न चापि कृत्रिमः कालः कालो हि परमेश्वरः ॥ २० ॥**

**न चापि कृत्रिमः काल** इत्यत्र **कृत्रिमः** कृतः क्षणलवादिः ।

**किमहं [1] पूर्वमेवेदं भवता नाभिचोदितः ।**
**उपायोऽत्र महानस्ति येनैतदुपपद्यते ॥ २१ ॥**

**किमहं पूर्वमेवेदम्** इत्यत्र इदं गुरवे अश्वदानप्रतिश्रुतम् ।

॥ इति त्रयोदशाधिकशततमोऽध्यायः ॥

## ॥ अथ चतुर्दशाधिकशततमोऽध्यायः ॥

**[2] ग्रहीतुं हि मनश्चक्रे रूपात् साक्षादिव श्रियम् ।**
**अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः ॥ ५ ॥**

**अथ भ्रष्टतनूजाङ्ग** इत्यत्र [3] 'पतत्रं च तनूरुहम्' इत्यभिधानात् तनूजौ पक्षौ ।

**भवितासि यथापूर्वं बलवीर्यसमन्वितः ।**

---

१. $D_{n1}$; BORI पृ. ४२०; 'पूर्वमेवेह' इति कुं पाठः ।
२. कुं. ११३ अध्यायः । ; ३. अ.को. २-५-३६

नारद उवाच –

बभूवतुस्ततस्तस्य पक्षौ [1] द्रवणवत्तरौ ॥ २० ॥

पक्षौ द्रवणवत्तरौ इत्यत्र द्रवणं द्रुतगमनम् अतिशयेन तद्वन्तौ द्रवणवत्तरौ ।

॥ इति चतुर्दशाधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चदशाधिकशततमोऽध्यायः ॥

नारद उवाच –

[2] अथाह गालवं दीनं सुपर्णः पततां वरः ।
निर्मितं वह्निना भूमौ वायुना शोधितं तथा ।
यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ॥ १ ॥

यस्माद्धिरण्मयं सर्वम् इत्यत्र हिनोति रुजमिति हिरुक् सुखं तन्मयं हिरण्मयम् ।

नित्यं [3] प्रौष्ठपदाभ्यां च शुक्रे धनपतौ तथा ।
मनुष्येभ्यः [4] सदाऽऽदत्ते शुक्रश्चित्तार्जितं धनम् ॥ ३ ॥

नित्यं प्रौष्टपदाभ्यां च इत्यत्र प्रौष्ठपदाभ्यां पौर्णम्यां यस्य नक्षत्रस्य योगे सति भाद्रपदमासारम्भः तस्य नक्षत्रस्य तारे प्रौष्ठपदे, ताभ्यामुपलक्षितकाले वामनावतारे सति शक्रे तदेतद्धनं तिष्ठति । धनपतौ कुबेरे तदेतद्धनं तथा पूर्वं यथा हरिणा दत्तं तथैवास्ति ।

---

१. 'द्रविणवत्तरौ' इति कुं पाठः । ; २. कुं. ११४ अध्यायः ।

३. $D_{s2}$,$D_{3.4.6.7.9}$; BORI पृ. ४२३; 'प्रोष्ठपदाभ्यां' इति कुं पाठः ।

४. $D_{6}$,$T_2$,$G_2$; BORI पृ. ४२३; 'समादत्ते' इति कुं पाठः ।

**मनुष्येभ्यः सदाऽऽदत्त** इत्यत्र मनुष्येभ्य इति पञ्चमी । आदत्त इति पदच्छेदः ।

**अजैकपादहिर्बुध्न्यौ रक्ष्येते धनदेन च ।**
**एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ ।**
**ऋते [1] न धनमश्वानां नावाप्तिर्विद्यते तव ॥ ४ ॥**

**एवं न शक्यते लब्धुम्** इत्यत्र **एवम्** उक्तविधया अलब्धव्यमिन्द्र-कुबेरयोर्धनम् । **ऋते न धनम्** इत्यत्र धनमृते अश्वानामवाप्तिर्न विद्यते । धनं कुतश्चिद्याचितुं शक्यते । अश्वास्तु न लभ्यन्त इति भावः ।

**सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विजः ।**
**तमाह भगवान् किं ते ददानि गुरुदक्षिणाम् ॥ १२ ॥**

**उपकारेप्सया द्विज** इत्यत्र मया दत्तविद्यादिकं तव उपकार एवास्तु इति **ईप्सया** इच्छया **अभ्यनुज्ञातः** गच्छेत्याज्ञप्तः ।

**प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः ।**
**कृत्वाऽपवर्गं गुरवे चरिष्यति महत्तपः ॥ १७ ॥**

**कृत्वाऽपवर्गं गुरव** इत्यत्र **अपवर्गम्** ऋणमोचनम् ।

॥ इति पञ्चदशाधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तदशाधिकशततमोऽध्यायः ॥

**[2] द्वे मे शते सन्निहिते हयानां यद्विधास्तव ।**
**एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ १४ ॥**

१. 'च' इति कुं. पाठः । ; २. कुं. ११६ अध्यायः ।

**एष्टव्याः शतशस्त्वन्य** इत्यत्र **अन्ये** त्वदभिलषितवाजिभ्यः अन्ये मम वाजिनःशतशश्चरन्ति । **ते एष्टव्याः** त्वया प्राप्तव्याः ।

**नारद उवाच –**

**हर्यश्वः सत्यवचने [1] ततः स्थित्वा च पौरुषे ।**
**दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥ २६ ॥**

**ततः स्थित्वा च पौरुष** इत्यत्र पुरुषो नारायणः तदधीनत्वे स्थित्वा ।

॥ इति सप्तदशाधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टादशाधिकशततमोऽध्यायः ॥

**[2] गालवो विमृशन्नेव स्वकार्यगतमानसः ।**
**जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् ॥ २ ॥**

**द्रष्टुमौशीनरं नृपम्** इत्यत्र **औशीनर** एव उशीनरः, स्वार्थिकोऽण् ।

॥ इति अष्टादशाधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनविंशत्यधिकशततमोऽध्यायः ॥

**[3] अहमप्येकमेवास्यां जनयिष्यामि गालव ।**
**पुत्रवद्भिर्गतं मार्गं गमिष्यामि परैरहम् ॥ १२ ॥**

---

१. 'स्थितः' इति कुं पाठः ।; २. कुं. ११८ अध्यायः ।
३. कुं.पाठानुसारेणात्र पूर्वाध्याय एवानुसरति ।

**पुत्रगतं मार्गम्** इत्यत्र **परैः** अन्यैः पुत्रैर्निमित्तैः **गतं** प्राप्तं मार्गम् ।

**तथा तु वहुधा कन्यामुक्तवन्तं नराधिपम् ।**
**उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् ॥ १६ ॥**

**कन्यामुक्तवन्तं नराधिपम्** इत्यत्र कन्यामुद्दिश्य ।

[१] **प्रादाच्च तं राज्ञ** इत्यत्र तं शिबिम् ।

॥ इति एकोनविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ विंशत्यधिकशततमोऽध्यायः ॥

[२] **इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु ।**
**तेभ्यो [३] मे द्वे शते क्रीत्वा प्राप्ते तैः पार्थिवैस्तदा ॥ ७ ॥**

**तेभ्यो मे द्वे शते क्रीत्वा प्राप्ता** इत्यत्र **तेभ्यः** अश्वेभ्यः **द्वे शते** द्विशतसंख्याकास्ते अश्वाः पार्थिवैः क्रीत्वा मे **प्राप्ताः** प्रकर्षेण आ समन्तात् सम्पाद्य दत्ताः ।

**अपराण्यपि चत्वारि शतानि द्विजसत्तम ।**
**नीयमानानि सन्तारे हृतान्यासन्नितस्ततः ॥ ८ ॥**

**हृतान्यासन्** इत्यत्र **हृतानि** मया अपहृतानि ।

॥ इति विंशत्यधिकशततमोऽध्यायः ॥

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. कुं. ११९ अध्यायः । **'वनेषु मृगराजेषु'** इति कुं पाठः ।
३. 'द्वे' इति कुं पाठः ।

## ॥ अथ एकविंशत्यधिकशततमोऽध्यायः ॥

[१] **वनेष्वमृतकल्पेषु व्याघ्रविप्रोषितेषु च ।**
**दावाग्निविप्रयुक्तेषु शून्येषु गहनेषु च** ॥ १० ॥

**वनेष्वमृतकल्पेषु** इत्यत्र अमृतप्रायं कन्दमूलफलादिकं कल्पयन्तीत्यमृतकल्पानि तेषु ।

॥ इति एकविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्वाविंशत्यधिकशततमोऽध्यायः ॥

[२] **अदृश्यमानस्तान्पश्यन्नपश्यंश्च पुनःपुनः ।**
**शून्यः शून्येन मनसा प्रपतिष्यन्महीतलम्** ॥ ३ ॥

**अदृश्यमानस्तान् पश्यन्** इत्यत्र **अदृश्यमानः** तैरदृश्यमानः ।

॥ इति द्वाविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

[३] **यत्फलं दानशीलस्य क्षमाशीलस्य यत्फलम् ।**
**यच्च मे फलमाधाने तेन संयुज्यतां भवान्** ॥ ५ ॥

**आधाने** गर्भाधाने ।

॥ इति त्रयोविंशत्यधिकशततमोऽध्यायः॥

---

१ कुं. १२० अध्यायः । 'वनेषु मृगराजेषु' इति कुं. पाठः ।
२ कुं. १२१ अध्यायः । ; ३. कुं. १२२ अध्यायः ।

## ।। अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।।

[१]**नावमान्यास्त्वया राजन्नधमोत्कृष्टमध्यमाः ।**
**न हि मानप्रदग्धानां कश्चिदस्ति शमः क्वचित्** ।। १७ ।।

**न हि मानप्रदग्धानाम्** इत्यत्र मानः प्रदग्धो यैस्ते **मानप्रदग्धाः** निरहङ्कारिण इत्यर्थः ।

।। इति चतुर्विंशत्यधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।।

[२]**श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।**
**विपाकान्ते दहत्येनं किम्पाकमिव भक्षितम्** ।। २२ ।।

**किम्पाकमिव भक्षितम्** इत्यत्र अन्ते विपरीतफलत्वात् किं कुत्सितः क्षेपार्हो वा **पाकः** परिपाको यस्य सः **किम्पाकः** बिम्बफलम् । तद्धि तत्काले स्वादु, मरणकाले हरिविस्मरणनरकाद्यनर्थकारणम् । 'किम्पाकः स्यान्महाकाल ओष्ठि बिम्बा च तुण्डिका'[३] इति हलायुधः ।

**योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।**
**शृणोति प्रतिकूलानि द्विषतां वशमेति सः** ।। २५ ।।

**योऽर्थकामस्य वचनम्** इत्यत्र **अर्थकामस्य** स्वपुरुषार्थकामस्य हितोपदेष्टुः ।

---

१. कुं. १२३ अध्यायः । ; २. कुं. १२४ अध्यायः ।
३. ह.को. २-२०३

आत्मानं तक्षति ह्येष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु मिथ्या राजन् प्रवर्तते ।
[1] न सम्पन्नमभिच्छिन्द्याद्यस्य नेच्छेत्पराभवम् ॥ ४० ॥

आत्मानं तक्षति ह्येष इत्यत्र एषः अधिराज्यपदवीमनुभवन् तक्षति च्छिनत्ति । स सम्पन्नमभिच्छिन्द्याद्यस्य नेच्छेत् पराभवम् इत्यत्र अभिच्छिन्द्यात् बुद्धिच्छेदं कुर्यात् ।

[2] भिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ।
श्रेयस्ते दुर्जनात्तात पाण्डवैः सह सङ्गतम् ॥ ४३ ॥

भिद्यते ह्याततं सर्वम् इत्यत्र आततम् अत्युन्नतम् ।

किं ते जनक्षयेणेह कृतेन भरतर्षभ ।
यस्मिञ्जिते जितं ते स्यात्पुमानेकः स दृश्यताम् ॥ ५२ ॥

यस्मिन् जिते जितं स्यात् इत्यत्र जिते स्ववशीकृते सति ।

मद्वितीयं पुनः पार्थं कः [3] प्रापयितुमर्हति ।
युद्धे [4] प्रतीयमानं तं अपि साक्षात् पुरन्दरः ॥ ५६ ॥

पुनः पार्थं कः प्रापयितुमर्हति इत्यत्र पुनः प्रापयितुं परावृत्य प्रापयितुम् । प्रतीयमानं प्रति ईयमानम् आगच्छन्तम् ।

बाहुभ्यामुद्वहेद्भूमिं दहेत् क्रुद्ध इमाः प्रजाः ।
पालयेत्त्रिविधवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ५७ ॥

---

१. 'न तस्य हि मतिं छिन्द्याद्यस्य' इति कुं पाठः ।; २. 'छिद्यते' इति कुं पाठः
३. 'प्रार्थयितुमर्हति' इति कुं. पाठः ।; ४. 'प्रतीपमायान्तमपि' कुं. पाठः ।

**पातयेत् त्रिविधान् देवान्** इत्यत्र **त्रिविधान्** त्रयस्त्रिंशदादिभेदेन त्रिविधान् ।

॥ इति पञ्चविंशत्यधिकशततमोऽध्यायः ॥

॥ अथ षड्विंशत्यधिकशततमोऽध्यायः ॥

**[1]ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् ।**
**वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ १३ ॥**

**वैरं परेषां ग्रीवायाम्** इत्यत्र **परेषाम्** अन्येषामस्मदादीनाम् ।

**शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।**
**त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः ॥ २७ ॥**

**शमं चेद्याचमानं त्वम्** इत्यत्र **याचमानं** केशवं प्रति त्वं शमं नाख्यास्यसि चेदित्यन्वयः ।

॥ इति षड्विंशत्यधिकशततमोऽध्यायः ॥

॥ अथ सप्तविंशत्यधिकशततमोऽध्यायः ॥

**[2]यावत्कृष्णावसन्नद्धौ यावत्तिष्ठति गाण्डिवम् ।**
**यावद्धौम्यो न मेधाग्नौ जुहोतीह द्विषद्बलम् ॥ २ ॥**

**यावत्तिष्ठति गाण्डीवम्** इत्यत्र **तिष्ठति** तूष्णीं तिष्ठति ।

**कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ।**
**[3]अतिलक्षैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ॥ ११ ॥**

---

१. कुं. १२५ अध्यायः । ; २. कुं. १२६ अध्यायः ।

३. $S_{(except\ G3,M2.5)}$, $C_{a.d}$; BORI पृ. ४५० ; 'अभिलक्ष्यै' इति कुं. पाठः

**अतिलक्षैर्निपात्यन्त** इत्यत्र **अतिलक्षैः** अतिशायितं लक्षं येषां तैः लक्षवेधिभिरित्यर्थः ।

**ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते [१]सुदक्षिणम् ।**
**स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ ॥ १३ ॥**

सुष्ठु दक्षिणा यस्मात्सः तं **सुदक्षिणम्** ।

**रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च ।**
**उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु ॥ १४ ॥**

**रत्नौपधिसमेतेन** इत्यत्र विप्राणां दानसमये रत्नेषु व्रीहियवाद्योष(धी)धिषु च सम्बद्धेन ।

**शालस्कन्धो महाबहुस्त्वां [२]सजातो वृकोदरः ।**
**साम्नाऽभिवदतां चापि शान्तये भरतर्षभ ॥ १५ ॥**

**त्वां सजातो वृकोदर** इत्यत्र **स(स्व)जातः** समानतया जातः ।

**॥ इति सप्तविंशत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

**[३]प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन ।**
**जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ७ ॥**

**प्रियाभ्युपग(ते)तद्यूत** इत्यत्र **प्रियेण** प्रीत्यैव अभ्युपगते द्यूते ।

---

१. **'सुदक्षिणः'** इति कुं पाठः ।; २. **'स्वजानो'** इति कुं पाठः ।
३. कुं.१२७ अध्यायः ।

**केन वाऽप्यपवादेन विरुद्ध्यन्त्यरिभिः सह ।**
**अशक्ताः पाण्डवाः कृष्ण प्रकृष्टाः[1] सत्यमित्रवत् ॥१०॥**

**प्रकृष्टाः सत्यमित्रवत्** इत्यत्र प्रकर्षेण **कृष्टम्** आकृष्टं पणेन अपहृतं धनं येषां ते **प्रकृष्टाः** ।

**[2]यावत्तु राजा ध्रियते धृतराष्ट्रो जनार्दन ।**
**न्यस्तशस्त्रा वयं ते वाऽप्युपजीवाम माधव ।**
**[3]यद्धि देयं पुरा दत्तं राज्यं परवतो मम ॥ २३ ॥**

**यावत्तु राजा ध्रियत** इत्यत्र **ध्रियते** प्राणैर्ध्रियते । **यद्धि देयं पुरा दत्तम्** इत्यत्र पुरा दत्तं **परवतः** नाथवतः पराधीनस्येत्यर्थः , मम यद्राज्यं देयमित्युच्यते ।

॥ इति अष्टाविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

**[4]कथं नु ज्ञातयस्तात श्रेयांसः साधुसम्मताः ।**
**तथाऽन्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः ॥ ५ ॥**

**कथं नु ज्ञातय** इत्यत्र उपस्थातुं कथं नु योग्याः ।

**कश्चान्यो भ्रातृभार्यां वै विप्रकर्तुं तथार्हति ।**
**आनीय च सभां [5]वक्तुं यथोक्ता द्रौपदी त्वया ॥ ८ ॥**

---

१. **'प्रहृष्टाः प्रत्यमित्रवत्'** इति कुं पाठः ।

२. $K_{2-4}$, $B_5$, $D_{2-4,9}$, S; BORI पृ. ४५२; **'यावच्च'** इति कुं पाठः।

३. **'अप्रदेयं'** इति कुं पाठः । ; ४. कुं. १२८ अध्यायः । **'कथं च'** इति कुं पाठः

५. BORI पृ. ४५४; **'व्यक्तं'** इति कुं पाठः ।

**आनीय च सभां वक्तुम्** इत्यत्र **वक्तुं** दुर्वाक्यं वक्तुं सभामानीयेति सम्बन्धः ।

**नृशंसानामनार्याणां तथा परुषभाषणम् ।**
**कर्णदुःशासनाभ्यां च त्वया च बहुशः कृतम् ॥ १२ ॥**

**नृशंसानामनार्याणां** यथा तथेति सम्बन्धः ।

॥ इति एकोनत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिंशदधिकशततमोऽध्यायः ॥

**[१] दुर्योधन निबोधेदं वचनं मम पुत्रक।**
**हितं ते सानुबन्धस्य तथाऽऽयत्यां सुखोदयम् ॥ १९ ॥**

**तथाऽऽयत्यां सुखोदयम्** इत्यत्र **आयत्यां** दीर्घकाले सति उपर्युपरीत्यर्थः ।

**क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।**
**कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥ ३१ ॥**

**क्षुद्राक्षेणेव जालेन** इत्यत्र क्षुद्रम् अल्पीभूतम् अक्षं मत्स्यगलग्राहिशङ्कुविशेषो यस्य तत् **क्षुद्राक्षम्** । अक्षस्य क्षुद्रत्वात् मत्स्यौ जालमेव यथा विलुम्पतः तथेति भावः ।

**याभ्यां हि देवाः स्वर्यातुः स्वर्गस्य पिदधुर्मुखम् ।**
**बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥ ३२ ॥**

---

१. ४. १२९ अध्यायः ।

**बिभ्यतोऽनुपरागस्य** इत्यत्र **अनुपरागस्य** विषयोपरागरहितस्य पुंसः **वर्धितौ** स्वविषयाभ्यां वर्धितावपि स्वयमेव **बिभ्यतः** भीतौ भवतः।

**अमर्षवशमापन्नो मा कुरूंस्तात [1] जीवनः।**
**एषा हि पृथिवी कृत्स्ना मा गमत्त्वत्कृते वधम्** ॥ ५० ॥

**अमर्षवशमापन्न** इत्यत्र **जीवनः** जीवन् **कुरुः** कुरुकुलोत्पन्नः पुरुषः अमर्षवशमापन्नः मा भवेत्।

**राजपिण्डभयादेते यदि हास्यन्ति जीवितम्।**
**न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम्** ॥ ५३ ॥

**राजपिण्डभयात्** इत्यत्र **राजपिण्डं** राजदत्तान्नम्।

॥ इति त्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ एकत्रिंशत्यदधिकशततमोऽध्यायः ॥

**[2] उद्धर्षयन् महाबाहुं सर्वेषां शर्म वर्म च** ॥ ११ ॥

**उद्धर्षयन् महाबाहुम्** इत्यत्र उत्कर्षेण धर्षयन्निति पदच्छेदः।

॥ इति एकत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ द्वात्रिंशदधिकशततमोऽध्यायः ॥

**[3] यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्दन।**
**प्रत्यक्षं ते न ते किञ्चित्परोक्षं शत्रुकर्शन** ॥ ४१ ॥

---

१. '**जीघनः**' इति कुं पाठः।
२. कुं. १३० अध्यायः। '**अयं ह्येषां महाबाहुः**' इति कुं पाठः।
३. कुं. १३१ अध्यायः।

**यावद्बलं मे पुत्रेषु** इत्यत्र शममिच्छन्तं मे पुत्रेषु **यावद्बलं** यथाशक्ति यतमानं मां पश्यसि इति सम्बन्धः ।

**॥ इति द्वात्रिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

**[१]श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः ।**
**अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ६ ॥**

**अनुवाकहता बुद्धिः** इत्यत्र **अनुवाको** धर्मकाण्डस्थसूक्त-वाक्यम् ।

॥ इति त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

**[२]माऽऽत्मानमवमन्यस्व [३]मैवमल्पेन [४]भीभरः ।**
**मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ७ ॥**

**मैवमल्पेन भीभर** इत्यत्र अल्पेन भाग्येन आत्मानं मा भीभरः । 'भृञ् भरणे' इति धातोः यङ्लुङि मध्यमपुरुषवचनम् ।

**अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।**
**मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १४ ॥**

---

१. कुं. १३२ अध्यायः ।; २. कुं. १३३ अध्यायः ।

३. $B_{1.3.4}$,$D_S$,$D_7$,$G_{1.4}$,$M_{1.2.4}$,$C_a$; BORI पृ. ४७३; **'मैनमल्पेन'** इति कुं पाठः ।

४. **'बीभरः'** इति कुं. पाठः ।

**अलातं तिन्दुकस्येव** इत्यत्र **तिन्दुकस्य** वृक्षविषेषस्य । 'तुम्बुरु' इत्यपभ्रंशभाषा ।

**अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।**
**आनन्तर्यं [1] चारभन्ते न प्राणानां धनायते ॥ १७ ॥**

**आनन्तर्यं चारतभन्त** इत्यत्र अनन्तरं कर्तव्यं कार्यं **आनन्तर्यम्** ।

**शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।**
**[2] विपरिच्छिन्नमूलेन न विषीदेत्कथंचन ॥ २० ॥**

**विपरिच्छिन्नमूलेन** इत्यत्र विशेषेण परिच्छिन्नं मूलं यस्मात्तेन शत्रुणा न विषीदेत् ।

**राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ।**
**दाने तपसि सत्ये च यस्य नोच्चरितं यशः ॥ २३ ॥**

**राशिवर्धनमात्रं स** इत्यत्र **राशिवर्धनमात्रं** केवलं **राशिभिः** अन्न-राशिभिः **वर्धनम्** उदरपूरणं यस्य स राशिवर्धनमात्रम् ।

**विद्यायामर्थलाभे वा मातुरुच्चार एव सः ।**
**श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ॥ २४ ॥**

**मातुरुच्चार एव स** इत्यत्र 'मूत्रं प्रस्राव उच्चारावस्करं शमलं शकृत्'[3] इत्यमरोक्तेः **उच्चारः** मूत्रम् ।

---

१. **'चारभते'** इति कुं पाठः ।
२. **'विपरिच्छिन्नमूलोऽपि'** इति कुं पाठः ।
३. अ.को. २-६-६७

**जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ।**
**न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ॥ २५ ॥**

**न त्वेव जाल्मीं कापालीम्** इत्यत्र 'निहीनोऽपशदो जाल्मः'[१] इत्यमरवचनात् **जाल्मीं** हीनस्य विद्यमानाम् ।

**सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिञ्चनाः ।**
[२]**अवर्णकारिणं सत्सु कुलवंशस्य नाशनम् ॥ २९ ॥**

**अवर्णकारिणम्** इत्यत्र 'अवर्णाक्षेपनिर्वादपरिवादापवादकाः'[३] इत्यमरोक्तेः **अवर्णकारिणम्** अपवादकारिणम् ।

**अनुत्थानभये चोभे निरीहो नाश्नुते महत् ।**
**एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना ॥ ३४ ॥**

**अनुत्थानभये चोभे** इत्यत्र **अनुत्थानभये** उत्थानमभिवृद्धिस्तदभावोऽनुत्थानं तदेव भयं ययोस्ते ।

**दिष्टभावं गतस्यापि विषये मोदते प्रजा ।**
**य आत्मनः प्रियसुखे हित्वा मृगयते श्रियम् ॥ ३७ ॥**

**दिष्टभावं गतस्य** इत्यत्र **दिष्टभावं** मरणम् ।

पुत्र उवाच –

[४]**किन्तु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।**
**किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ३९ ॥**

---

१. अ.को. २-१०-१६
२. $K_3$,$D_n$,$D_{1.6.10}$,$C_a$; BORI पृ. ४७५; **'अवल्गुकारिणं'** इति कुं पाठः
३. अ.को. १-६-१३; ४. 'किं नु ते' इति कुं पाठः ।

**किन्तु ते मामपश्यन्त्या** इत्यत्र युद्धान्मरणे सति मामपश्यन्त्याः ।

**॥ इति चतुस्त्रिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

**[१]सृञ्जयो नामतश्च त्वं न च पश्यामि तत्त्वयि ।**
**अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ७ ॥**

**सृञ्जयो नामतश्च त्वम्** इत्यत्र [२]'सृ गतौ' इति धातोः [३]सरति शत्रून् जयति चेति **सृञ्जयः** ॥

**समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय ।**
**एवं विद्वान् युद्धमना भव मा प्रत्युपाहरः ॥ ११ ॥**

**समृद्धिरसमृद्धिर्वा** इत्यत्र मम सकाशात् पूर्वेषां समृद्धिरसमृद्धिर्वा भवतु एवं विद्वानिति सम्बन्धः ।

**यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बलाम् ।**
**न तदा जीवितेनार्थो भविता तव सञ्जय ॥ १६ ॥**

**मां चैव भार्यां च** इत्यत्र मां, तव भार्यां च भृशदुर्बले द्रष्टासि ।

**दासकर्मकरान् भृत्यानाचार्यर्त्विक्पुरोहितान् ।**
**[४]अभृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ १७ ॥**

**अभृत्याऽस्मान् प्रजहत** इत्यत्र **अभृत्या** अभरणेन ।

---

१. कुं. १३४ अध्यायः । **'सञ्जयो'** इति कुं पाठः ।; २. **'सृं गतौ'** सो.मु.पा. ।
३. **सृमति.** सो.मु.पा. ।; ४. **'अवृत्त्याऽ-'** इति कुं पाठः ।

**सर्वे ते शत्रवः सह्या[1] नो चेज्जीवितुमिच्छति।**
**अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥ २२ ॥**

**सर्वे ते शत्रवः सह्या नो चेत्** इत्यत्र शत्रवः सह्या नो चेदपि जीवितुमिच्छसि।

**इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत।**
**माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥ २४ ॥**

**माहेन्द्रं च ग्रहं लेभ** इत्यत्र गृह्यत इति ग्रहो यज्ञभागः तम्।

**राज्यं चाप्युग्रविभ्रंशं संशयो जीवितस्य वा।**
**प्रलब्धस्य[2] हि शत्रोर्निर्वेशं[3] कुर्वन्ति साधवः ॥ २८ ॥**

**प्रलब्धस्य हि शत्रोर्निर्वेशं कुर्वन्ति** इत्यत्र कर्तरि क्तः। **प्रलब्धस्य** वञ्चकस्य **निर्वेशं** प्रतिक्रियाम्। 'निर्वेश उपभोगः प्रतिक्रिया'[4] इत्यमरः।

॥ इति पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ षट्त्रिंशदधिकशततमोऽध्यायः ॥

**परिवाक्शल्यमाहुस्त्वं[5] निःसामर्थ्यमहेतुकम्।**
**सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ॥ ८ ॥**

---

१. BORI पृ. ४७८; **'शक्या न चेज्जीवितुमर्हसि'** इति कुं पाठः।
२. BORI पृ. ४७९; **'न लब्धस्य हि'** इति कुं पाठः।
३. **'शत्रोर्वै शेषं'** एतत्प्रतीकः मुद्रितकोशेषु नोपलभ्यते।
४. अ.को. ३-२-२०
५. कुं. १३५ अध्यायः। **'खरीवात्सल्यमाहुस्तन्निः'** इति कुं पाठः।

**परिवाक्शल्यमाहुस्त्वम्** इत्यत्र परिवादाख्यशल्यं यथा भवति तथा।

**प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम्।**
**ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम्** ॥ १८ ॥

**प्रियाभावाच्च पुरुष** इत्यत्र **प्रियाभावात्** सर्वथा प्रियाभावात्।

**अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि।**
**चोद्यं मां चोदयस्येतद्धृशं वै चोदयामि ते** ॥ २० ॥

**अतो मे भूयसी नन्दि** इत्यत्र **यत्** यस्मात् **एवमनुपश्यसि** अनुकूलतया मां पश्यसि, अतो मे भूयसी नन्दिः कार्यमपि करिष्यसीति हर्षः।

**अत ये नैव कुर्वन्ति नैव जातु भवन्ति ते।**
**ऐकगुण्यमनीहायामभावः कर्मणां फलम्** ॥ २७ ॥

**ऐकगुण्यमनीहायाम्** इत्यत्र **अनीहायाम्** इच्छाभावे कर्मैव न भवतीत्यवधारणमेको गुणः तस्य भावः **ऐकगुण्यम्**। तदेव दर्शयति – **कर्मणामभाव एव फलम्** इति।

**अथ द्वैगुण्यमीहायां फलं भवति वा नवा ।**
**यस्य प्रागेव विदिता सर्वार्थानामनित्यता** ॥ २८ ॥

द्वौ गुणौ फलभावाभावौ तयोर्भावः **द्वैगुण्यम्**।

[1]वदेद्वृद्धिसमृद्धी न प्रतिकूले नृपात्मज ।
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ॥ २९ ॥

**वदेद् वृद्धिसमृद्धी न** इत्यत्र प्रतिकूले अवृद्ध्यसमृद्धी न वदेत् ।

तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥ ३७ ॥

**अन्ततस्तद्भविष्यति** इत्यत्र तत् निर्वादफलम् ।

॥ इति षट्त्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

[2]नैव राज्ञा दरः कार्यो जातु कस्याञ्चिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ १ ॥

**नैव राज्ञा दरः कार्य** इत्यत्र दरः भयम् । 'दरत्रासौ भीतिर्भीः साध्वसं भयम्'[3] इत्यमरः ।

य एवात्यन्तसुहृदस्तम् एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत् सा [4]जला इव ॥ ४ ॥

**बद्धवत्सा जला इव** इत्यत्र जं जातं वत्सं लालयन्तीति **जलाः** गावः ।

---

१. '**नुदेद्वृद्धिसमृद्धी स-**' इति कुं पाठः ।
२. कुं. १३६ अध्यायः ।
३. अ.को. १-७-२१; दरस्त्रासो – श्री.सो.मु.पा ।
४. '**इला**' इति कुं पाठः ।

**उदके [१]धूरियं धार्या [२]सर्तव्यं प्रवणे मया ।**
**यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥ १३ ॥**

**उदके धूरियं धार्या** इत्यत्र **धार्या** धर्तुं शक्या । **सर्तव्यं** 'सृ गतौ' इति धातोर्गन्तुं शक्यम् । त्वद्बुद्ध्या असाध्यमपि करिष्यामीति भावः ।

**॥ इति सप्तत्रिंशदधिकशततमोऽध्यायः ॥**
**॥ विदुलोपाख्यानं समाप्तम् ॥**

## ॥ अथ अष्टत्रिंशत्यधिकशततमोऽध्यायः ॥

**[३]स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।**
**नाध्यगच्छत्तदानाथं कृष्णा नाथवती सती ॥ १९ ॥**

**स्त्रीधर्मिणी वरारोहा** इत्यत्र **स्त्रीधर्मिणी** रजस्वला ।

**प्रमूढा पृथिवी सर्वा मृत्युपाशवशीकृता ।**
**दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ॥ २८ ॥**

एतत् राज्यम् **अस्य** दुर्योधनस्य नास्तीत्यब्रुवन् ।

**॥ इति अष्टत्रिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

**[४]कुन्त्यास्तु [५]भारतीं श्रुत्वा भीष्मद्रोणौ महारथौ ।**
**दुर्योधनमिदं वाक्यं ऊचतुः शासनातिगम् ॥ १ ॥**

---

१. BORI पृ. ४८६; **'नौरियं'** इति कुं पाठः ।
२. BORI पृ. ४८६; **'वक्तव्यं'** इति कुं. पाठः ।; ३. कुं. १३७ **अध्यायः** ।
४. कुं. १३८ **अध्यायः** । ; ५. **'वचनं'** इति कुं पाठः ।

**भारतीं** वाचम् ।

॥ इति एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ चत्वारिंशदधिकशततमोऽध्यायः ॥

**[1]तं वै विमनसं दृष्ट्वा सम्प्रेक्ष्यान्योन्यमन्तिकान् ।**
**[2]पुनरेवोचतुर्वाक्यम् उक्तवन्तौ नरर्षभौ ॥ २ ॥**

**पुनरेवोचतुर्वाक्यमुक्तवन्तौ** इत्यत्र **उक्तवन्तौ** प्रशस्तवाक्यवन्तौ । 'उक्तं भाषितमुदितं जल्पितम्'[3] इत्यमरः ।

॥ इति चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

**[4]कानीनश्च सहोढश्च कन्यायां यश्च जायते ।**
**वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ८ ॥**

**कानीनश्च सहोढश्च** इत्यत्र कन्यायां जातो यः **कानीनः** तस्य पुरुषस्य, तया कन्यया सह यः ऊढः विवाहीकृतः तं **वोढारं** पितरं प्राहुरिति सम्बन्धः ।

॥ इति एकचत्वारिंशदधिकशततमोऽध्यायः ॥

---

१. कुं. १३९ अध्यायः ।
२. 'पुनरेवोत्तरं वाक्यम्' इति कुं पाठः ।
३. अ.को. ३-१-१०६
४. कुं. १४० अध्यायः ।

## ।। अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ।।

**[१]सोस्मि कृष्ण तथाजातः पाण्डोः पुत्रोस्मि धर्मतः ।**
**कुन्त्या [२]त्वहमवाकीर्णो यथा न कुशलं तथा ।। ४ ।।**

**कुन्त्या त्वहमवाकीर्ण** इत्यत्र कुलजो यथा न भवामि तथा **अवाकीर्णः** अप्सु विसृष्टः ।

**तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम् ।**
**धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ।। ७ ।।**

**तस्याः पिण्डव्यपनयम्** इत्यत्र **पिण्डव्यपनयं** पिण्डत्यागम् ।

**इष्टं च बहुभिर्यज्ञैः सहसूतैर्मयाऽसकृत् ।**
**आवाहाश्च विवाहाश्च सहसूतैर्मया कृताः ।। १४ ।।**

**आवाहाश्च विवाहाश्च** इत्यत्र **आवाहाः** 'वह प्रापणे' इति धातोः स्वगृहं प्रति प्रापणानि ।

**मन्त्रस्य नियमं कुर्यास्त्वमत्र मधुसूदन ।**
**एतदत्र हितं मन्ये सर्वं यादवनन्दन ।। २० ।।**

**मन्त्रस्य नियमम्** इत्यत्र **नियमं** नितरां यमं यमनमाच्छादनम् ।

**शामित्रं तौ [३]महात्मानौ सम्यक् तत्र भविष्यतः ।**
**[४]मैत्रावरुण आग्नीध्रौ महावीर्यौ भविष्यतः ।। ३६ ।।**

---

१. कुं. १४१ अध्यायः ।; २. '**त्वहमवाकीर्णो**' इति कुं पाठः ।
३. S; BORI पृ. ४९८; '**महावीर्यौ**' इति कुं पाठः ।
४. S; BORI पृ. ५०१; '**तौ मैत्रावरुणाग्नीध्रौ**' इति कुं पाठः ।

**शामित्रं तौ महात्मानौ** इत्यत्र शमिता पशुहिंसनकर्ता । तयोर्भावः **शामित्रम्** । **मैत्रावरुण आग्नीध्रौ** इत्यत्र मैत्रावरुणे कर्मणि **आग्नीध्रौ** 'आदेष्टा त्वध्वरे व्रती'[१] इत्यमरोक्तेः मित्रमुपब्रूहीत्यादिमन्त्रादेश-कर्तारौ ।

**कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः ।**
**यूपाः समुपकल्पन्तामस्मिन्यज्ञे जनार्दन ॥ ३७ ॥**

**कल्माषदण्डा** इत्यत्र 'कल्माषः कृष्णपाण्डुरः'[२] इत्यभिधानात् नानाविधरत्नकान्त्या कृष्णपाण्डुरा दण्डा यष्टयो यासां ताः ।

**प्रतिप्रास्थानिकं कर्म सात्यकिस्तु करिष्यति ।**
**दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ॥ ४२ ॥**

**घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।**
**अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ ४३ ॥**

**दीक्षितो धार्तराष्ट्रोऽत्र** इत्यत्र **दीक्षितः** दीक्षां प्रापितः पशुः । **अत्र** यज्ञे महाचमूरेव पत्नी । **अतिरात्रे यज्ञे** अतिरात्रनामकयज्ञे । रात्रियुद्ध इति ध्वनिः । तदा शामित्रं घटोत्कचः करोतु ।

**दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः ।**
**आनर्दं नर्दतः सम्यक् तदा [३]सूत्या भविष्यति ॥ ४७ ॥**

**तदा सूत्या भविष्यति** इत्यत्र **सूत्या** सोमस्रवणम् ।

॥ इति द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

१. अ.को. २-७-७ ; २. ह.को. ४- ७३६; ३. 'सूयं' इति कुं पाठः ।

## ।। अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः ।।

**[१]ध्रुवो जयः पाण्डवानामितीदं न संशयः कश्चन विद्यतेऽत्र ।**
**जयध्वजो दृश्यते पाण्डवस्य समुच्छ्रितो वानरराज उग्रः ।। ३ ।।**

**समुच्छ्रितो वानरराज उग्र** इत्यत्र वानरेण राजत इति **वानरराजः** ध्वजः ।

**प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम् ।**
**न तदा भविता त्रेता न कृतं द्वापरं न च ।। ११ ।।**

**न तदा भविता त्रेता** इत्यत्र युगत्रयेऽप्येतादृशा न सन्तीति भावः ।

।। इति त्रिचत्वारिंशदधिकशततमोऽध्यायः ।।

## ।। अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।।

**[२]प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।**
**शनैश्चरः पीडयति पीडयन् प्राणिनोऽधिकम् ।। ८ ।।**

**प्राजापत्यं हि नक्षत्रम्** इत्यत्र 'रोहिणीनक्षत्रं प्रजापतिर्देवता' इति श्रुतेः **प्राजापत्यं** प्रजापतिदेवताकं रोहिणीनक्षत्रमित्यर्थः ।

**सोमस्य लक्ष्मव्यावृत्तं राहुरर्कमुपैति च ।**
**दिवश्चोल्काः पतन्त्येताः सनिर्घाताः सकम्पनाः ।। ११ ।।**

---

१. कुं. १४२ अध्यायः ।
२. कुं. १४३ अध्यायः ।

**सोमस्य लक्ष्मव्यावृत्तम्** इत्यत्र सोमस्य **लक्ष्मणा** कलाख्यचिह्नेन **व्यावृत्तं** रहितं दर्शादन्यदिने स्थितमपीत्यर्थः ।

॥ इति चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

[1]**सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः ।**
**अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ॥ ३० ॥**

**सहस्रपादं प्रासादम्** इत्यत्र **पादाः** स्तम्भाः ।

॥ इति पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

[2]**अकरोन्मयि यत्पापं भवती सुमहात्ययम् ।**
[3]**अवकीर्णोऽस्मि यन्मातस्तद्यशःकीर्तिनाशनम् ॥ ५ ॥**

**अवकीर्णोऽस्मि यन्मातः** इत्यत्र **अवकीर्णः** अकालीनरेतोजातः । **तद्यशःकीर्तिनाशनम्** इत्यत्र **यशसः** कीर्तिः कीर्तनं तन्नाशयतीति तथोक्तम् ।

**कृष्णेन सहितात्को वै न व्यथेत धनञ्जयात् ।**
**कोद्य भीतं न मां विद्यात्पार्थानां समितिं गतम् ॥ ९ ॥**

---

१. कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२. कुं. १४६ अध्यायः ।
३. BORI पृ. ५१५; **'अपाकीर्णोऽस्मि'** इति कुं. पाठः ।

**समितिं गतम्** इत्यत्र **समितिं** सभाम् ।

॥ इति अष्टचत्वारिंशदधिकशततमोऽध्यायः॥

## ॥ अथ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

**[१]उक्तवान् हि भवान् सर्वं वचनं कुरुमुख्ययोः ।**
**धार्तराष्ट्रस्य तेषां हि वचनं कुरुसंसदि** ॥ ११ ॥

**वचनं कुरुमुख्ययोः** इत्यत्र **कुरुमुख्ययोः** धृतराष्ट्रभीष्मयोः पुरतः ।

॥ इति एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चाशदधिकशततमोऽध्यायः ॥

**[२]सर्वे निवारयामासुर्देवापेरभिषेचनम् ।**
**स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम् ।**
**[३]शास्त्रकर्णोऽभवद्राजा पर्यशोचत चात्मजम्** ॥ २३ ॥

**शास्त्रकर्णोऽभवद्राजा** इत्यत्र त्वग्दोषयुक्तेन राज्यं न कार्यमिति शास्त्रे कर्णौ यस्य स तथोक्तः ।

॥ इति पञ्चाशदधिकशततमोऽध्यायः ॥
॥ भगवद्यानपर्व समाप्तम् ॥

---

१. कुं. १४७ अध्यायः ।
२. कुं. १४९ अध्यायः ।
३. '**अश्रुकण्ठोऽभवद्राजा**' इति कुं पाठः ।

## ।। अथ द्विपञ्चाशदधिकशततमोऽध्यायः ।।

[१] **कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः ।**
**स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ।। ६१ ।।**

**कृत्वा मूलप्रतीकारम्** इत्यत्र **मूलप्रतीकारं** मूलस्य स्वमूलस्थानभूतोपप्लाव्यस्य **प्रतीकारं** रक्षाम् ।

[२] **जघनार्धे विराटश्च याज्ञसेनिश्च सौमकिः ।**
**सुधर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः ।। ६५ ।।**

**जघनार्धे विराटश्च** इत्यत्र **जघनार्धे** सेनाख्यनार्या जघनस्थानीये अर्धे मध्य इत्यर्थः ।

**विद्राव्य शतशो गुल्मान् धार्तराष्ट्रस्य सैनिकान् ।**
**पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ।। ५ ।।**

**विद्राव्य शतशो गुल्मान्** इत्यत्र 'सेनामुखं गुल्मगणौ'[३] इत्यमरोक्तेः **गुल्मान्** सेनामुखानि ।

**आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ।**
**सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ।। ७ ।।**

**सूपतीर्थां शुचिजलाम्** इत्यत्र सुष्ठु उप समीपे तीर्थानि यस्याः सा ताम् ।

।। इति द्विपञ्चाशदधिकशततमोऽध्यायः ।।

---

१. कुं. १५१ अध्यायः । ; २. कुं. १५२ अध्यायः ।
३. अ.को. २-८-८१.

## ।। अथ त्रिपञ्चाशदधिकशततमोऽध्यायः ।।

[१]**योगचन्द्रोदयोद्धूतः कुरुराजमहार्णवः ।**
**व्यदृश्यत तदा राजंश्चन्द्रोदय इवोदधिः** ।। २७ ।।

**योगचन्द्रोदयोद्धूत** इत्यत्र **योग** उपायः ।

।। इति त्रिपञ्चाशदधिकशततमोऽध्यायः ।।

## ।। अथ चतुःपञ्चाशदधिकशततमोऽध्यायः ।।

[२]**सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।**
[३]**सोमासङ्गाः सशक्तीकाः सनिषङ्गाः सहर्ष्टयः** ।। ३ ।।

**सोमासङ्गा** इत्यत्र तूणीरउपासङ्गनिषङ्गपदेन अवान्तरभेदाः कथ्यन्ते ।

।। इति चतुःपञ्चाशदधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ।।

[४]**बद्धारिष्टा बद्धकक्षा बद्धध्वजपताकिनः ।**
**बद्धाभरणनिर्यूहा बद्धचर्मासिपट्टिशाः** ।। १२ ।।

**बद्धारिष्टा बद्धकक्ष्या** इत्यत्र रिष्टं न भवतीत्य**रिष्टम्** अभेद्यं यत्कवचशिरस्त्राणादिकम् । **कक्ष्याः** हस्त्यश्वादीनाम् उदरबन्धन-रज्ज्वादयः ।

---

१. S(except T1); BORI पृ. ५३७; **'योधचन्द्रोदयोद्धूतः'** इति कुं पाठः ।
२. कुं. १५५ **अध्यायः** ।; ३. **'सोपासङ्गा'** इति कुं पाठः ।
४. कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।

**धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ।**
**तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा ॥ १४ ॥**

**धुर्ययोर्हययोरेक** इत्यत्र **धुर्ययोः** रथाग्रे धुरन्धरयोः **एकः** सारथिः ।

**यथा रथास्तथा नागा बद्धकक्षाः स्वलङ्कृताः ।**
**बभूवुः सप्तपुरुषा रत्नवन्त इवाद्रयः ॥ १६ ॥**

**बभूवुः सप्तपुरुषा** इत्यत्र **सप्तपुरुषाः** सप्तसेवकपुरुषाः ।

॥ इति पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

[1]**प्रयातु नो भवानग्रे देवानामिव पावकिः ।**
**वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥ १५ ॥**

**देवानामिव पावकिः** इत्यत्र **पावकिः** षण्मुखः । 'सेनानीरग्निभूर्गुहः'[2] इत्यमरः । **अभियाने** यात्रायाम् ।

॥ इति षट्पञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

**उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।**
**सम्बन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ २८ ॥**

**पुनः पुनरुपह्वर** इत्यत्र **उपह्वरे** एकान्ते ।

॥ इति सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

---

१. कुं. १५५ अध्यायः ।; २. अ.को. १-१-३९

## ।। अथ अष्टपञ्चाशदधिकशततमोऽध्यायः ।।

**पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप ।**
**स भोजराजः सैन्येन महता परिवारितः ।। १६ ।।**

**स भोजराज** इत्यत्र **भोजराजः**, रुग्मिणः प्रागेव बलरामेण मृतत्वात् रुग्मिणोऽनुजो रुग्मरथाख्यः कश्चिद्भीष्मकपुत्रः ।

**कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ।**
**द्रोणं व्यपदिशञ्छिष्यो वासुदेवसहायवान् ।। ३२ ।।**

**द्रोणं व्यपदिशन् शिष्य** इत्यत्र **द्रोणं** गुरुं व्यपदिशन् ।

**कथमस्मद्विधो ब्रूयाद्भीतोऽस्मीति यशोहरम् ।**
**वचनं [१]राजशार्दूल वज्रायुधसमस्वनम् ।। ३३ ।।**

**वचनं राजशार्दूल** इत्यत्र भीतोऽस्मीति वचनमिति पूर्वेण सम्बन्धः । वज्रायुधम् इन्द्रं प्रत्यपि ।

**वैशम्पायन उवाच –**

**तच्छ्रुत्वा वचनं तस्य विजयस्य च धीमतः ।**
**विनिवर्त्य ततो रुग्मी सेनां सागरसन्निभाम् ।**
**दुर्योधनमुपागच्छत्तथैव भरतर्षभ ।। ३५ ।।**

**विनिवर्त्य ततो रुग्मी** इत्यत्र रुग्ममिति पदमस्य नाम्नि वर्तत इति **रुग्मी** रुग्मरथाख्यः ।

**।। इति अष्टपञ्चाशदधिकशततमोऽध्यायः ।।**

---

१. D$_1$,S; BORI पृ. ५५१; **'नरशार्दूल'** इति कुं पाठः ।

## ॥ अथ षष्ट्यधिकशततमोऽध्यायः ॥

**अमित्राणां वशे स्थानं राज्यं च पुनरुद्धर ।**
**द्वावर्थौ युद्धकामस्य तस्मात्तत्कुरु पौरुषम् ॥ ८७ ॥**

**अमित्राणां वशे स्थानम्** इत्यत्र **वशे** स्ववशे **स्थानं** स्थापनम् ।

**अप्रियाणां च [१] वचने प्रब्रुवत्सु पुनः पुनः ।**
**अमर्षं दर्शयस्व त्वममर्षो ह्येव पौरुषम् ॥ ९१ ॥**

**अप्रियाणां तु वचन** इत्यत्र **अप्रियाणां** राज्यत्यागरूपपणानां वचने सति ।

॥ इति षष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्विषष्ट्यधिकशततमोऽध्यायः ॥

**[२] आज्ञापयत [३] राज्ञस्तान् बलं मित्रबलं तथा ।**
**यथा प्रागुदयात्सर्वे युक्तास्तिष्ठन्त्यनीकिनः ॥ ५५ ॥**

**आज्ञापयत राज्ञस्तान्** इत्यत्र **तान्** अस्मत्सेनागतान् सर्वान् राज्ञः प्रति **उदयात्** सूर्योदयात् प्राक् **योगः** सेनासन्नाहः कार्य इति आज्ञापयतेति योजना ।

॥ इति द्विषष्ट्यधिकशततमोऽध्यायः ॥

---

१. 'वचनं' इति कुं पाठः ।
२. कुं. १६३ अध्यायः ।
३. 'राज्ञश्च' इति कुं पाठः ।

## ।। अथ चतुःषष्ट्यधिकशततमोऽध्यायः ।।

**[१]यत्रायाने च युद्धे च तथा प्रशमनेषु च ।**
**[२]शृङ्गं वेद महाराज यथा वेद बृहस्पतिः ।। ९ ।।**

**शृङ्गं वेद महाराज** इत्यत्र **शृङ्गं** प्राधान्यम् । 'शृङ्गं प्राधान्य-सान्वोश्च'[३] इत्यमरः ।

**बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।**
**[४]पत्तीनां तव सेनायां [५]सहितान्यर्बुदानि च ।। १८ ।।**

**पत्तीनां तव सेनायां सहितान्यर्बुदानि च** इत्यत्र अर्बुदानि बहुसङ्ख्याकानि ।

।। इति चतुःषष्ट्यधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ।।

**[६]व्यलीकं पाण्डवेयेन भीमसेनानुजेन ह ।**
**दिशो विजयता राजञ्श्वेतवाहेन भारत ।। १२ ।।**

**व्यलीकं पाण्डवेयेन** इत्यत्र **व्यलीकम्** अप्रियं जातम् । 'व्यलीकं त्वप्रियेऽनृते'[७] इत्यमरः ।

।। इति पञ्चषष्ट्यधिकशततमोऽध्यायः ।।

---

१. कुं. १६५ अध्यायः । ; २. **'भृशं'** इति कुं पाठः ।
३. अ.को. ३-३-२६; ४. **'रथानां'** इति कुं पाठः ।
५. BORI पृ. ५७२; **'यथामुख्यं तु मे शृणु'** इति कुं. पाठः ।
६. कुं. १६६ अध्यायः ।; ७. अ.को. ३-३-१२

## ।। अथ षट्षष्ट्यधिकशततमोऽध्यायः ।।

[१]स्वेन सैन्येन महता प्रतपन् शत्रुवाहिनीम् ।
प्रधक्ष्यति स पाञ्चालान् कक्षं [२]कृष्णगतिर्यथा ।। २० ।।

**कृष्णगतिर्यथा** इत्यत्र **कृष्णगतिः** कृष्णवर्त्मा ।

।। इति षट्षष्ट्यधिकशततमोऽध्यायः ।।

## ।। अथ सप्तषष्ट्यधिकशततमोऽध्यायः ।।

[३]करणानां वियोगाच्च तेन मेऽर्धरथो मतः ।
नैष फल्गुनमासाद्य पुनर्जीवन्विमोक्ष्यते ।। ७ ।।

**करणानां वियोगाच्च** इत्यत्र **करणानां** कवचाद्युपकरणानाम् ।

[४]चरितब्रह्मचर्याश्च सर्वे तात तपस्विनः ।
[५]मौलाऽपि पुरुषव्याघ्र व्याघ्रा इव बलोत्कटाः ।। ९ ।।

**मौलाऽपि पुरुषव्याघ्र** इत्यत्र **मौला** धनमूलेन सम्पन्ना ।

।। इति सप्तषष्ट्यधिकशततमोऽध्यायः ।।

## ।। अथ अष्टषष्ट्यधिकशततमोऽध्यायः ।।

वैशम्पायन उवाच –

[६]एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा ।
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः ।। २७ ।।

---

१. कुं. १६७ अध्यायः ।; २. 'अग्निगतिर्यथा' इति कुं पाठः ।
३. कुं. १६८ अध्यायः ।; ४.कुं. १६९ अध्यायः ।
५. 'श्रीमन्तः पुरुषव्याघ्राः' इति कुं पाठः । ६. कुं. पूर्वाध्याय एवानुसरति ।

**राज्ञां दध्वंसिरे तदा** इत्यत्र **दध्वंसिरे** 'ध्वंस अधःपतने' इति धातोः ध्वस्ता अभूवन् बलह्रासोऽभूदिति भावः।

॥ इति अष्टषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःसप्तत्यधिकशततमोऽध्यायः ॥

**भीष्म उवाच –**

**[१]तामब्रवीत्साल्वपतिः स्मयन्निव विशाम्पते।**
**त्वयाऽन्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ॥ ६ ॥**

**त्वयाऽन्यपूर्वया नाहम्** इत्यत्र अन्यः पूर्वो यस्याः सा अन्यपूर्वा तया त्वया।

॥ इति चतुःसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षट्सप्तत्यधिकशततमोऽध्यायः ॥

**[२]त्वं हि भीष्मेण निर्जित्य नीता प्रीतिमती तदा।**
**[३]परामृष्टा महायुद्धे निर्जित्य पृथिवीपतीन् ॥ ८ ॥**

**परामृष्टा महायुद्ध** इत्यत्र परेण भीष्मेण **आमृष्टा** स्पृष्टा।

**प्रवृत्ते [४]वैशसे युद्धे साल्वार्थं नापतं पुरा।**
**तस्येयं फलनिर्वृत्तिर्यदापन्नाऽस्मि मूढवत् ॥ ३१ ॥**

---

१. कुं. १७५ अध्यायः। ; २. कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति।
३. **'परामृश्य'** इति कुं पाठः।
४. BORI पृ. ५९१; **'दारुणे'** इति कुं पाठः।

**प्रवृत्ते वैशसे युद्ध** इत्यत्र विशसनं हिंसा तत्सम्बन्धिनि **वैशसे** ।

॥ इति षट्सप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

[१]**केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।**
**केचिदस्मदुपालम्भे मतिं चक्रुर्हि तापसाः** ॥ २ ॥

**केचिदस्मदुपालम्भ** इत्यत्र **अस्मदुपालम्भे** कन्यापहर्तॄणामस्माकं हिंसने ।

**अकृतव्रण उवाच –**

**उषिताह्यन्यथा बाल्ये पितृवेश्मनि तापसाः ।**
**नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ।**
**तपस्तमुमभीप्सामि तापसैः परिरक्षिता** ॥ १३ ॥

**उचिता ह्यन्यथा बाल्य** इत्यत्र अन्यथा भर्तारं विना ।

**यथा परोऽपि मे लोके न स्यादेव [२]महात्ययम् ।**
**दौर्भाग्यं तापसश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः** ॥ १४ ॥

**न स्यादेवं महात्ययम्** इत्यत्र महानत्ययो हानिर्यस्य तत् ।

॥ इति सप्तसप्तत्यधिकशततमोऽध्यायः ॥

---

१. कुं. १७६ अध्यायः ।

२. $K_{4.5}$,B,$D_{n1}$,$D_s$,$D_{1-4.6.8.10}$,$G_5$,$M_{3-5}$,$C_{a.d}$; BORI पृ. ७९४; 'महात्ययः' इति कुं पाठः ।

## ।। अथ एकोनाशीतिशततमोऽध्यायः ।।

**दुःखं द्वयोरिदं भद्रे कतरस्य चिकीर्षसि ।**[१]
**प्रतिकर्तव्यमबले तत्त्वं वत्से वदस्व मे** ।। १ ।।

**दुःखं द्वयोरिदं भद्रे** इत्यत्र द्वयोः साल्वभीष्मयोः सकाशात् ।

**भीष्मः पुरुषमानी च जितकाशी तथैव च ।**
**तस्मात्प्रतिक्रिया युक्ता भीष्मे कारयितुं तव** ।। १२ ।।

**जितकाशी तथैव च** इत्यत्र **जितकाशी** जयाकाङ्क्षी ।

**।। इति एकोनाशीत्यधिकशततमोऽध्यायः ।।**

## ।। अथ अशीत्यधिकशततमोऽध्यायः ।।

**काश्ये न कामं गृह्णामि शस्त्रं वै वरवर्णिनि ।**[२]
**ऋते ब्रह्मविदां हेतोः किमन्यत्करवाणि ते** ।। २ ।।

**काश्ये कामं न गृह्णामि** इत्यत्र **कामम्** इच्छानुसारेण ।

**सज्जन्तीह शरीरिणाम्**[३] इत्यत्र इह लोके **शरीरिणां** शरीरवतां सतां न सज्जन्ति । मम शरघाते शरीरपात एव भवतीति भावः ।

**।। इति अशीत्यधिकशततमोऽध्यायः ।।**

---

१. कुं. १७७ अध्यायः ।
२. कुं. १७८ अध्यायः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

## ।। अथ एकाशीत्यधिकशततमोऽध्यायः ।।

**[१]इष्वस्त्रं मम बालस्य [२]त्वया चैव चतुर्विधम् ।**
**उपदिष्टं महाबाहो शिष्योस्मि तव भार्गव ।। ३९ ।।**

**त्वया चैव चतुर्विधम्** इत्यत्र **चतुर्विधं** शरप्रयोगः शरसन्धानं मन्त्रप्रयोगो मन्त्रोपसंहारश्चेति ।

।। इति एकाशीत्यधिकशततमोऽध्यायः।।

## ।। अथ षडशीत्यधिकशततमोऽध्यायः ।।

**[३]एवं राजन्नवहारो बभूव**
**ततः पुनर्विमलेऽभूत्सुघोरम् ।**
**[४]काल्यं काल्यं विंशतिर्वै दिनानि**
**तथैव चान्यानि दिनानि त्रीणि ।। ३० ।।**

**काल्यं काल्यं विंशतिर्वै दिनानि** इत्यत्र **काल्यं काल्यम्** उषःकालमुषःकालमारभ्य । 'काल्यमुषः प्रत्यूषः'[५] इति हलः ।

।। इति षडशीत्यधिकशततमोऽध्यायः ।।

* * *

---

१. कुं. पाठानुसारेण पूर्वाध्याय एवानुसरति ।
२. $K_{1,2,5}$, T, $G_{(except G3)}$; BORI पृ.६०४; **'भवतैव'** इति कुं. पाठः ।
३. कुं. १८२ अध्यायः ।
४. **'कल्यं कल्यं'** इति कुं पाठः ।
५. ह.को. १-१११ । 'कल्यमुषः' इति उपलब्धपाठः ।

## ।। अथ अष्टाशीत्यधिकशततमोऽध्यायः ।।

**[१] ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा ।**
**सा मामभ्यवधीत्तूर्णं जत्रुदेशे कुरूद्वह ।। १६ ।।**

**धिष्ण्यमाकाशगं यथा** इत्यत्र आकाशगं धिष्ण्यं देवतावासभूतं विमानम् ।

**अथास्रमस्रवद्धोरं गिरेर्गैरिकधातुवत् ।**
**रामेण सुमहाबाहो क्षतस्य क्षतजोक्षणम् ।। ७ ।।**

**क्षतस्य क्षतजोक्षणम्** इत्यत्र क्षतजस्य रक्तस्य उक्षणं यस्मिंस्तदासीत् इति सम्बन्धः ।

।। इति अष्टाशीत्यधिकशततमोऽध्यायः ।।

## ।। अथ एकोननवत्यधिकशततमोऽध्यायः ।।

**[२] कथं त्वद्य त्वया जेतुं रामः शक्यो निवर्त वै ।**
**अर्जुनः पाण्डवश्रेष्ठः पुरन्दरसुतो बली ।। १९ ।।**

**कथं त्वद्य त्वया जेतुं रामः शक्यो निवर्त वै** इति देवर्षीणां वचनात् शिष्येण त्वया गुरौ भार्गवे द्रोहकरणात् त्वमपि पौत्रेण मरिष्यसीति शापदानाच्च भीष्मजयादिकं रामस्य च्छेदभेदादिदर्शनं च असुरजनमोहनार्थम्, आगामिविपरीतफलसाधनार्थं चेति ज्ञेयम् ।

---

१. कुं. १८४ अध्यायः ।

२. कुं. १८५ अध्यायः । BORI पृ. ६२६; 'कथं शक्यस्त्वया जेतुं निवर्तस्वेह भार्गव' इति कुं पाठः ।

नरः प्रजापतिर्वीरः पूर्वदेवः सनातनः ।
सव्यसाचीति विख्यातस्त्रिषु लोकेषु वीर्यवान् ।
भीष्ममृत्युर्यथाकालं विहितो वै स्वयम्भुवा ॥ २० ॥

पूर्वदेवः सनातन इत्यत्र पूर्वदेवः देवानां पूर्वः ।

॥ इति एकोननवत्यधिकशततमोऽध्यायः॥

## ॥ अथ नवत्यधिकशततमोऽध्यायः ॥

[1]ततोऽगमद्वत्सभूमिं सिद्धचारणसेविताम् ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ २४ ॥

ततोऽगमद्वत्सभूमिम् इत्यत्र वत्सो नाम कश्चिदृषिः तस्य भूमिम् ।

॥ इति नवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकनवत्यधिकशततमोऽध्यायः ॥

[2]स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया ।
भीष्मे प्रतिचिकीर्षामि नास्मि वार्येति वै पुनः ॥ ६ ॥

नास्मि वार्येति वै पुनः इत्यत्र वार्या निवारयितुं योग्या नास्मि ।

॥ इति एकनवत्यधिकशततमोऽध्यायः ॥

---

१. कुं. १८६ अध्यायः ।
२. कुं. १८७ अध्यायः ।

## ॥ अथ द्विनवत्यधिकशततमोऽध्यायः ॥

[१] पुनः पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिवः ।
न तदन्यच्च भविता भवितव्यं हि तत्तथा ॥ ८ ॥

**दिष्टमित्यब्रवीच्छिव** इत्यत्र **दिष्टं** दत्तम् । 'दिश अतिसर्जने' इति धातुः ।

**कन्यां प्रवररूपां तु प्राजायत नराधिप ।**
**अपुत्रस्य तु राज्ञः सा द्रुपदस्य मनस्विनी ॥ १४ ॥**

**प्राजायत** जनयामास । अन्तर्णीतो णिच् ।

॥ इति द्विनवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुर्नवत्यधिकशततमोऽध्यायः ॥

[२] स तदा द्रुतमाज्ञाय [३] पुनःक्षत्तारमीश्वरः ।
प्रास्थापयत्पार्षताय निहन्मीति स्थिरो भव ॥ १० ॥

**क्षत्तारं** सारथिम् ।

॥ इति चतुर्नवत्यधिकशततमोऽध्यायः ॥
॥ अम्बोपाख्यानं समाप्तम् ॥

* * *

---

१. कुं. १८८ अध्यायः ।
२. कुं. १९० अध्यायः ।
३. BORI पृ. ६३८; 'पुनर्दूतान्नराधिपः' इति कुं पाठः ।

## ।। अथ सप्तनवत्यधिकशततमोऽध्यायः ।।

[1]योधानां दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकमेष [2]भागाधिकं मम ।। १२ ।।

**भागाधिकं मम** इत्यत्र मम **भागाधिकम्** एकदिनस्य दश-सहस्रात्मकभागे क्रियमाणे यदधिकं सैन्यं तद्दिवसे दिवसे भागान् कृत्वा हन्याम् । एवं भागे क्रियमाणे यावन्ति दिनानि भवन्ति तावद्भिर्हन्यामिति भावः ।

समागच्छसि राधेय तेनैवमभिमन्यसे ।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ।। २२ ।।

**समागच्छसि राधेय** इत्यत्र यावत् यदा समागच्छसि तावत् तदा त्वं [illegible]वमवमन्यसे ।

।। इति सप्तनवत्यधिकशततमोऽध्यायः ।।

## ।। अथ अष्टनवत्यधिकशततमोऽध्यायः ।।

[3]वेदान्तावभृथस्नाताः सर्व एतेऽपराजिताः ।
निहन्युः समरे सेनां देवानामपि पाण्डव ।। १७ ।।

**वेदान्तावभृथस्नाता** इत्यत्र वेदोक्तकर्मणामन्ते अवभृथस्नाता [illegible]र्थः ।

।। इति अष्टनवत्यधिकशततमोऽध्यायः ।।

---

१. भां. १९७ अध्यायः । ; २. 'भागो मतो' इति कुं पाठः ।
३. भां. १९८ अध्यायः ।

## ।। अथ एकोनद्विशततमोऽध्यायः ।।

ते[१] समेत्य यथान्यायं धार्तराष्ट्रा महाबलाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवातिष्ठन्त दंशिताः ।। ११ ।।

कुरुक्षेत्रस्य पश्चार्ध इत्यत्र पश्चाद्भागस्य अर्धे पूर्वभागे ।

।। इति एकोनद्विशततमोऽध्यायः ।।

## ।। अथ द्विशततमोऽध्यायः ।।

भाण्डं[२] समारोपयतां चरतां सम्प्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ।। १० ।।

भाण्डं समारोपयताम् इत्यत्र भाण्डं युद्धोपकरणम् ।

भीमधन्वायती सेना धृष्टद्युम्नेन पालिता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ।। १२ ।।

आयती आयामवती ।

।। इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां उद्योगपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायां द्विशततमोऽध्यायः ।।

।। समाप्तमुद्योगपर्व ।।

---

१. कुं. १९५ अध्यायः ।
२. कुं. १९६ अध्यायः ।

# ।। अथ भीष्मपर्व ।।

## ।। अथ प्रथमोऽध्यायः ।।

**[१]अन्येव पृथिवी सर्वा [२]वृद्धबालावशेषिता ।**
**[३]निरस्तपुरुषेवासीद्रथकुञ्जरवर्जिता ।। ७ ।।**

**अन्येव पृथिवी सर्वा** इत्यत्र पुरुषकुञ्जरादीनां सर्वेषां कुरुक्षेत्रे एव मिलितत्वात् निरस्तपुरुषेव वृद्धबालावशेषिता रथकुञ्जरवर्जिता कुरुक्षेत्रव्यतिरिक्ता सर्वा पृथिवी **अन्येव** प्राग्विद्यमानभूमितोऽन्येव आसीदिति योजना ।

**सञ्ज्ञाश्च [४]विविधास्तास्ताः तेषां चक्रे युधिष्ठिरः ।**
**एवंवादी वेदितव्यः पाण्डवेयोऽयमित्युत ।। ११ ।।**

**सञ्ज्ञाश्च विविधास्तास्ता** इत्यत्र सम्यग्ज्ञापयन्ति स्वकटकमिति सञ्ज्ञाः जयकृष्णजयरामेत्यादिसङ्केतनामानि चक्रे ।

**अभिज्ञानानि सर्वेषां सञ्ज्ञाश्चाभरणानि च ।**
**योजयामास कौरव्यो युद्धकाल उपस्थिते ।। १२ ।।**

---

१. $M_2$ ; BORI पृ.४; **‘शून्येव’ पृथिवी सर्वा**
२. $K_{0-3}$; $D_{1-3.7}$; BORI पृ.४; **‘बालवृद्धावशेषिता’** इति कुं पाठः ।
३. $T_2$; BORI पृ.४; **‘निरश्वपुरुषेवासीद्’** इति कुं पाठः ।
४. BORI पृ.४; **‘विविधास्तात तेषां’** इति कुं पाठः ।

**अभिज्ञानानि सर्वेषाम्** इत्यत्र **अभिज्ञानानि** बर्हपल्लवधारणादिचिह्नानि ।

**न सूतेषु न [१] धूर्येषु न च शस्त्रोपनायिषु ।**
**न भेरीशङ्खवादेषु प्रहर्तव्यं कथञ्चन ॥ ३२ ॥**

**न सूतेषु न धूर्येषु** इत्यत्र **सूतेषु** बन्दिषु, न **धूर्येषु** धूः युद्धधूः येषु न, तेषु न प्रहर्तव्यम् ।

**॥ इति प्रथमोऽध्यायः ॥**

## ॥ अथ द्वितीयोऽध्यायः ॥

**व्यास उवाच –**

**राजन् परीतकालास्ते पुत्राश्चान्ये च पार्थिवाः ।**
**ते हिंसन्तीव सङ्ग्रामे समासाद्येतरेतरम् ॥ ४ ॥**

**राजन् परीतकालास्त** इत्यत्र **परीतः** विपरीतः कालो येषां ते, परितः **इतः** प्राप्तः **कालो** मृत्युर्येषां ते इति वा ।

**अभ्यग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः ।**
**क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् ॥१८॥**

**द्विजाः** पक्षिणः ।

**[२] खेटा हाहेति वाशन्तो भैरवा वा भयवेदिनः ।**
**कङ्काः क्रोशन्ति मध्याह्ने दक्षिणामभितो दिशम् ॥१९॥**

---

१. $K_{2.3}$; BORI पृ.७; **'धुर्येषु'** इति कुं पाठः ।
२. **'कटाकटेति वाशन्तो'** इति कुं पाठः ।

**खेटा हाहेति वाशन्त** इत्यत्र **खेटाः** ग्रामाः । 'खेटकौ ग्राम-फलकौ'[१] इत्यमरः । **खे** आकाशे अटन्तीति **खेटाः** क्रूरपक्षिणः । क्षणे क्षणे नभसि उत्पतन्तः शिवा वा ।

**श्वेतलोहितपर्यन्ताः कृष्णग्रीवाः सविद्युतः ।**
**त्रिवर्णाः परिघाः सन्धौ भानुमावारयन्त्युत ॥ २१ ॥**

**त्रिवर्णाः परिघाः सन्धौ** इत्यत्र **त्रिवर्णाः** शुक्लरक्तकृष्णवर्णाः, **परिघाः** परिवेषाः । 'परिघः परिवेषः स्यात्'[२] इति हलः ।

**कोकिलाः शतपत्राश्च चाषा भासाः शुकास्तथा ।**
**सारसाश्च मयूराश्च वाचो मुञ्चन्ति [३]दक्षिणाः ॥ २८ ॥**

**कोकिलाः शतपत्राश्च** इत्यत्र **शतपत्रः** तुण्डेन दारुच्छिद्रं कुर्वन् पक्षिविशेषः । 'अथ स्याच्छतपत्रकः । दार्वाघाटः'[४] इत्यमरः । **मर-कुटक**[५] इत्यपभ्रंशभाषा । **चाषः** कलिङ्गः । 'अथ चाषः किकीदिविः । कलिङ्गभृङ्गधूम्याटाः'[६] इत्यमरः । **भासः** शकुन्तः । 'शकुन्तो भास उच्यते'[७] इति हलः । **दक्षिणाः** दक्षिणाभिमुखाः ।

**[८]गृहीतशस्त्रावरणा चर्मिणो वाजिपृष्ठगाः ।**
**अरुणोदये प्रदृश्यन्ते शतशः शलभव्रजाः ॥ २९ ॥**

---

१. अयं पाठः मुद्रितकोशेषु नोपलभ्यते ।
२. अयं पाठः मुद्रितकोशेषु नोपलभ्यते ।
३. 'दारुणाः' इति कुं पाठः; ४. अ.को. २-५-१६; ५. **मरकुट्टकः** सो.मु.पा.
६. अ.को. २-५-१६.; ७. ह.को. २-२४७
८. $K_{0\ 1.3.5}$; BORI पृ. ११; **'गृहीतशस्त्राः क्रोशन्ति'** इति कुं पाठः ।

**गृहीतशस्त्रावरणा** इत्यत्र **गृहीतशस्त्रावरणाः** आच्छादित-शस्त्रकोशाः । एवमुत्तरत्रापि ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः ।**
**द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥ ३ ॥**

**पञ्चपादा द्विमेहना** इत्यत्र **द्विमेहनाः** द्विमेढ्राः । 'मेढ्रो मेहन-शेफसी'[१] इत्यमरः ।

**स्त्रियः काश्चित्प्रजायन्ते चतस्रः पञ्च कन्यकाः ।**
**जातमात्राश्च नृत्यन्ति गायन्ति च हसन्ति च ॥ ७ ॥**

**स्त्रियः काश्चित्प्रजायन्ते चतस्रः पञ्च कन्यका** इत्यत्र **चतस्रः** चतसृः । युगपदेव कन्याचतुष्टयं कन्यापञ्चकं च जनयन्तीति भावः ।

**श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ।**
**अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥ १२ ॥**

**श्वेतो ग्रहस्तथा चित्राम्** इत्यत्र **श्वेतो ग्रहः** शुक्रः ।

**मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः ।**
**भाग्यं[२] नक्षत्रमाक्रम्य सूर्यपुत्रेण पीड्यते ॥ १४ ॥**

---

१. अ.को. २-६-७६
२. BORI पृ. १४; 'भगं' इति कुं पाठः ।

**भाग्यं नक्षत्रमाक्रम्य** इत्यत्र **भाग्यं** भगदेवताकं नक्षत्रम् ।

**शुक्रः प्रोष्ठपदे पूर्वे [1] समाहृत्य विरोचते ।**
**उत्तरे तु [2] समाक्रम्य सहितः प्रत्युदीक्षते ॥ १५ ॥**

**शुक्रः प्रोष्ठपदे पूर्वम्** इत्यत्र **प्रोष्ठपदे** भाद्रपदमासे **पूर्वं** पौर्णमास्यां विद्यमानं नक्षत्रं **समाहृत्य** पादेन ताडयित्वा **उत्तरे** तदुपरितननक्षत्रे **समाक्रम्य सहितः** तैर्नक्षत्रैः सहितः प्रत्युदीक्षते ।

**ध्रुवं प्रज्वलितो घोरमपसव्यं प्रवर्तते ।**
**रोहिणीं पीडयत्येवमुभौ च शशिभास्करौ ।**
**[3] चित्रास्वात्युत्तरे चैव विष्ठितः परुषग्रहः ॥ १७ ॥**

**ध्रुवं** ध्रुवतारम् । **चित्रास्वात्युत्तरे [4] चैव** इत्यत्र **चित्रासु** चित्रानक्षत्रतारासु, **अत्युत्तरे** स्वातिनक्षत्रे ।

**[5] श्वेतो ग्रहः प्रज्वलितः साधूम इव पावकः ।**
**ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥ १६ ॥**

**श्वेतो ग्रहः प्रज्वलित** इत्यत्र **श्वेतो ग्रहः** चन्द्रः । 'विधुः सुधांशुः शुभ्रांशुः' [6] इत्यमरः ।

---

१. **'समारुह्य'** इति कुं पाठः ।
२. **'परिक्रम्य सहितः समुदीक्षते'** इति कुं.पाठः ।
३. $K_{3-5}$,$D_2$; BORI पृ. १४; **'चित्रास्वात्यन्तरे'** इति कुं पाठः ।
४. चित्रास्वाभ्युत्तरे सो.मु.पा
५. N; BORI पृ. १४; **'श्यामो'** इति कुं पाठः ।
६. अ.को. १-३-१४

**वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ।**
**ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥ १८ ॥**

**ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थित** इत्यत्र **ब्रह्मराशिं** ब्राह्ममुहूर्तं, **लोहिताङ्गः** अङ्गारकः । 'लोहिताङ्गो महीसुतः'[१] इत्यमरः ।

**चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् ।**
**इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ।**
**चन्द्रसूर्यावुभौ ग्रस्तावेकाह्ना हि त्रयोदशीम् ॥ ३२ ॥**

**भूतपूर्वां तु षोडशीम्** इत्यत्र **भूतपूर्वां** पूर्वं जातां चतुर्दशीं, **पञ्चदशीं** पौर्णमासीं, **षोडशीं** प्रतिपदं च, इमां वर्तमानाम् अमावास्यां त्रयोदशीं, चशब्देन चतुर्दशीं च **नाभिजानीमः** पार्थक्येन न जानीमः पौर्णमासीचन्द्रस्यापि कान्तिरहितत्वात् अमावास्यापौर्णमासीसम्बन्धितिथित्रयस्यापि च साम्यमेवेति भावः ।

**विनिःसृत्य महोल्काभिस्तिमिरं सर्वतो दिशम् ।**
**अन्योन्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः ॥ ३६ ॥**

**अन्योन्यमुपतिष्ठद्भिः** इत्यत्र **महर्षिभिः** वालखिल्यैः ।

**महाभूता भूमिकम्पे चत्वारः सागराः पृथक् ।**
**[२]वेलाभूर्धमयन्ति स्म क्षोभयन्तो वसुन्धराम् ॥ ३८ ॥**

---

१. अ.को. १-३-२५
२. 'वेलामुद्वर्तयन्तीव' इति कुं पाठः ।

**वेलाभूर्धमयन्ति स्म** इत्यत्र **वेलाभूः** वेलाभूमीः, **धमयन्ति** ताडयन्ति ।

**[१]पच्छापच्छेति सुभृशम् वावाश्यन्ते वयांसि च ।**
**निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ॥ ४४ ॥**

**पच्छापच्छेति सुभृशम्** इत्यत्र पच्छापच्छेति ध्वनेरनुकारः । 'पचपच' इत्यपभ्रंशभाषा ।

**ध्यायन्तः प्रकिरन्तश्च [२]बालान् वेपथुसंयुताः ।**
**दीनास्तुरंगमाः सर्वे वारणाः सलिलाश्रयाः ॥ ४५ ॥**

**बालान्** बालानि पुच्छस्थानीयपत्राणि ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**[३]पुनरेवाब्रवीद् वाक्यं कल्पवादी महायशा ।**
**असंशयं पार्थिवेन्द्र कालः सङ्क्षिपते जगत् ॥**

**कल्पवादी महायशा** इत्यत्र **कल्पं** तत्तच्छिरसि लिखितकल्पनां वदतीति तथोक्तः ।

**[४]हन्यात् स एनं यो हन्यात् कुलधर्मं [५]स्वकां तनुम् ।**
**कालेनोत्पथगन्तासि शक्ये सति यथाऽऽपदि ॥ ५६ ॥**

---

१. **'पकापकेऽतिसुभृशं'** इति कुं पाठः ।
२. BORI पृ. १८; **'माला'** इति कुं पाठः । ; ३. BORI पृ. १९
४. कुं. पूर्वाध्याय एवानुसरति । ५. BORI पृ. १९; **'स्विकां तनुम्'** इति कुं पा

**कुलधर्मं स्वकां तनुम्** इत्यत्र स्वकां तनुं कुलधर्ममिति सम्बन्धः। **कालेनोत्पथगन्तासि** इत्यत्र शक्ये समे पथि सति विद्यमानेऽपि **कालेन** मृत्युना उत्पथगन्तासीत्यन्वयः।

**प्रसादये त्वामतुलप्रभावं त्वं नो गतिर्दर्शयिता च धीरः।**
**न चापि ते वशगा मे सुताश्च नातिग्रहं कर्तुमिहार्हसे मे**[१] ॥६२॥

**नातिग्रहं कर्तुमिहार्हसे म** इत्यत्र **अतिग्रहः** अत्याग्रहः, तम्।

**न वैनतेयो गरुडः प्रशंसति महाजनम्।**
**दृष्ट्वा सुपर्णोऽपचितिं महत्या अपि भारत** ॥ ८५ ॥

**दृष्ट्वा सुपर्णोऽपचितिम्** इत्यत्र अपगता **चितिः** सेनासमूहः, तं सेनायाः परितः पलायनमित्यर्थः।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥

[२]**एषां विंशतिरेकोना महाभूतेषु पञ्चसु।**
**चतुर्विंशतिरुद्दिष्टा गायत्री लोकसम्मता** ॥ १५ ॥

[३]**एषां विंशतिरेकोना** इत्यत्र एषां चतुर्दश जातयश्चराणां, पञ्च जातयः स्थिराणाम् मिलित्वा एकोनविंशतिः। पञ्चसु महाभूतेषु मिलितेषु सत्सु या चतुर्विंशतिः सा लोकसम्मता गायत्री उद्दिष्टा।

---

१. **'न चाधर्मं कर्तुमर्हो हि मे मतिः'** इति कुं पाठः।
२. BORI पृ. २६; कुं. ४ अध्यायः। **'तेषां'** इति कुं पाठः।
३. येषां सो.मु.पा.

चतुर्विंशत्यक्षरगायत्रीवत् स्मरणमात्रेण पुण्यदायकत्वात् गायतां त्राणकर्त्रीति व्युत्पत्त्या गायत्री ।

॥ इति पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

[१]**आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः ।**
**सर्वाण्यपरिमेयाणि तदेषां रूपमैश्वरम्** ॥ १० ॥

**तदेषां रूपमैश्वरम्** इत्यत्र **ऐश्वरम्** ईश्वराधीनम् ।

**अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।**
**प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्** ॥ १२ ॥

**तदचिन्त्यस्य लक्षणम्** इत्यत्र **अचिन्त्यस्य** नारायणस्य ।

**सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनन्दन ।**
**परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः** ॥ १३ ॥

**सुदर्शनं प्रवक्ष्यामि** इत्यत्र **सुदर्शनम्** दर्शनीयम्, वर्तुलाकार-सुदर्शनचक्रसन्निधानपात्रञ्च ।

**द्विरंशः पिप्पलस्तत्र**[२] **द्विरंशश्च कुशो महान् ।**
**सर्वौषधिसमापन्नः पर्वतैः परिवारितः** ॥ १७ ॥

**द्विरंशः पिप्पलस्तत्र** इत्यत्र **द्विरंशः** जम्बूद्वीपे बिम्बभूत एकोंऽशः चन्द्रमण्डले बिम्बभूतोऽपरोंश इति द्वावंशौ यस्य स द्विरंशः । एवं

---

१. कुं. ५ अध्यायः । ; २. BORI पृ. २९; '-तस्य' इति कुं. पाठः ।

महान् पिप्पलसमीपस्थः शशोऽपि द्विरंशः । उभयोरपि सुवर्णमयदिव्यदेहत्वात् द्विगुणितः प्रभाख्यांशो यस्येति वा ।

**॥ इति षष्ठोऽध्यायः ॥**

## ॥ अथ सप्तमोऽध्यायः ॥

**अरत्नीनां सहस्रं च शतानि दश पञ्च च ।**
**परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम् ॥ २२ ॥**

**अरत्नीनां सहस्रं च** इत्यत्र **अरत्नीनां** कनिष्ठं विना मुष्टीकृतहस्तानाम् । कनिष्ठाग्रपर्यन्तहस्तानामिति यावत् । 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना'[१] इत्यमरः । **परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम्** इत्यत्र **वृक्षस्य** जम्बूवृक्षस्य । फलानां **परिणाहः** वर्तुलता ।

**॥ इति सप्तमोऽध्यायः ॥**

## ॥ अथ अष्टमोऽध्यायः ॥

**[२]नाम्नां संवर्तको नाम कालाग्निर्भरतर्षभ ।**
**तथा माल्यवतः शृङ्गे पूर्वे पूर्वे तु गण्डका[३] ॥ २८ ॥**

**पूर्वे पूर्वे तु गण्डका**[४] इत्यत्र पूर्वपूर्ववाहिनी **गण्डका** गण्डकानाम्नी नदी ।

---

१. अ.को. २-६-८६

२. कुं. पाठानुसारेण अत्र पूर्वाध्याय एवानुसरति ।

३. **'पूर्वपूर्वानुगण्डिका'** इति कुं पाठः ।

४. **गण्डिका** इति. सो.मु.पा ।

**षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च ।**
**अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ॥ ३१ ॥**

**षष्टिस्तानि सहस्राणि** इत्यत्र वालखिल्याख्यऋषीणां षष्टि-सहस्राणीत्यर्थः ।

॥ इति अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ।

[1]**स प्रभुः सर्वभूतानां विभुश्च भरतर्षभ ।**
**सङ्क्षेपो विस्तरश्चैव कर्ता कारयिता तथा ॥ १७ ॥**

**सङ्क्षेपो** [2]**विस्तरश्चैव** इत्यत्र सङ्क्षिपति सर्वमिति **सङ्क्षेपः**, विस्तारयति सर्वमिति **विस्तरः** ।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

[3]**पूर्वं कृतयुगं नाम ततस्त्रेतायुगं प्रभो ।**
**सङ्क्षेपाद् द्वापरस्याथ ततस्तिष्यं प्रवर्तते ॥ ४ ॥**

**ततस्तिष्यं प्रवर्तते** इत्यत्र **तिष्य** इति नक्षत्रविशेषस्य नाम । तदारभ्य जातत्वात् **तिष्यं** कलियुगम् ।

॥ इति एकादशोऽध्यायः ॥

---

१. कुं. ८ अध्यायः । ; २. विस्तारः सो.मु.पा
३. कुं. १० अध्यायः ।

## ॥ अथ द्वादशोऽध्यायः ॥

**धृतराष्ट्र उवाच –**

**[१]जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सञ्जय ।**
**विष्कम्भमस्य प्रब्रूहि परिमाणं तु तत्त्वतः ॥ १ ॥**

**विष्कम्भमस्य प्रबूहि** इत्यत्र **अस्य** द्वीपस्य **विष्कम्भम्** ऊर्ध्वभागादारभ्य अवष्टम्भकाधोभागविस्तारं, द्वीपस्य घनीभावमित्यर्थः । 'स्याद्विष्कम्भो नाटकाङ्गे विस्तारे [२]प्रतिभान्धयोः' इति रत्नमाला । 'अयं द्वीपः सागरश्च लक्षयोजनविस्तृतः'[३] इति वचनात् जम्बूद्वीपस्यायामविस्तारस्तु लक्षयोजनपरिमित इति सुप्रसिद्धम् । अस्यैव द्वीपस्योर्ध्वाधोभागविस्ताररूपघनतां तत्प्रमाणं च ब्रूहीति भावः । 'स्कम्भु निरसने' इति धातोः अवष्टम्भभागविस्तार एव विष्कम्भः, न त्वायामविस्तारः । एवमुत्तरत्रापि । इत्थं घनीभूतद्वीपसमुद्राणां अधोभागे आधारभूतो लोकालोकपर्वतपर्यन्तं मण्डलाकारेण वर्तमानो भूप्रदेशः भूरित्येवोच्यत इति भावः ।

**देवर्षिगन्धर्वयुतः [४]परमो मेरुरुच्यते ।**
**प्रागायतो महाराज मलयो नाम पर्वतः ॥ १९ ॥**

**परमो मेरुरुच्यत** इत्यत्र शाकद्वीपे मेरुनामकः कश्चित्पर्वतः ।

---

१. कुं. ११ अध्यायः ।
२. प्रतिभासयोः इति कोशे पाठान्तरम् ।
३. म.भा.ता.नि. २१-४२
४. BORI पृ. ६४; 'प्रथमो' इति कुं पाठः ।

**ततः परं कौरवेन्द्र दुर्गशैलो महोदयः ।**[1]
**केसरी केसरयुतः यतो वातः प्रवर्तते ॥ २३ ॥**

**केसरी केसरयुत** इत्यत्र केसरयुतः **केसरी** केसरीनामकः सिंहाकारो वायुः ।

**परिवार्य तु कौरव्य दैर्घ्यं ह्रस्वत्वमेव च ।**
[2]**जम्बूद्वीपेन विख्यातस्तस्य मध्ये महाद्रुमः ॥ २७ ॥**

**जम्बूद्वीपेन विख्यात** इत्यत्र **जम्बूद्वीपेन** जम्बूद्वीपप्रमाणेन लक्ष-योजनेनेत्यर्थः ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**सञ्जय उवाच –**
[3]**उत्तरेषु च कौरव्य द्वीपेषु श्रूयते कथा ।**
**एवं तत्र महाराज ब्रुवतश्च निबोध मे ॥ १ ॥**

**उत्तरेषु तु कौरव्य द्वीपेषु श्रूयते कथा** इत्यत्र **उत्तरेषु** शाकद्वीपादितरेषु ।

**गौरस्तु मध्यमे द्वीपे गिरिर्मानः शिलो महान् ।**
**पर्वतः पश्चिमे कृष्णो नारायणसखो नृप ॥ ४ ॥**

---

१. BORI पृ. ६५; **'केसरः केसरयुतो'** इति कुं पाठः ।
२. BORI पृ. ६५; **'जम्बूद्वीपेन सङ्ख्यात'** इति कुं पाठः ।
३. कुं. १२ अध्यायः ।

**गौरस्तु मध्यमे द्वीप** इत्यत्र **मध्यमे** सप्तद्वीपानां मध्यस्थिते क्रौञ्चद्वीपे ।

**तेषामन्तरविष्कम्भो द्विगुणः सर्वभागशः ।**
**औद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम्** ॥ १२ ॥

**तेषामन्तरविष्कम्भो द्विगुणः सर्वभागश** इत्यत्र **तेषां** पर्वतानाम् **अन्तरस्य** मध्यप्रदेशस्य **विष्कम्भो** विस्तारः ।

**एको जनपदो राजन् द्वीपेष्वेतेषु भारत ।**
**उक्ता जनपदा येषु धर्मश्चैकः प्रदृश्यते** ॥ २८ ॥

**एको जनपदो राजन् द्वीपेष्वेतेषु भारत** इत्यत्र **एकः** एकविधः ।

**ततः परं समा नाम दृश्यते लोकसंस्थितिः ।**
**चतुरस्रा[१] महाराज त्रयस्त्रिंशत्तु मण्डलम्** ॥ ३२ ॥

**चतुरस्रा महाराज त्रयस्त्रिंशत्तु मण्डलम्** इत्यत्र **चतुरस्रा** पूर्वादिचतुर्दिक्षु सहिता । ततो बहिः दिक्षु विदिक्षु च **त्रयस्त्रिंशत्** त्रयस्त्रिंशत्सङ्ख्याकं **मण्डलं** मण्डलाकारा वर्तते । सुदर्शनचक्रस्य दलवत् भूमेः प्रान्तप्रदेशाः मण्डलाकारेण तिष्ठन्ति । तत्र त्रयस्त्रिंशत् प्रधानदेवा एव प्रायः सञ्चरन्ति । अत एव भूचक्रमित्याहुरिति भावः ।

**तत्र तिष्ठन्ति कौरव्य चत्वारो लोकसम्मताः ।**
**दिग्गजा भरतश्रेष्ठ वामनैरावतादयः** ॥ ३३ ॥

---

१. $K_{3.5}$,$D_{4}$.$D_{2.5}$; BORI पृ. ७१; 'चतुरश्रं' इति कुं पाठः ।

**तत्र तिष्ठन्तिकौरव्य** इत्यत्र **तत्र** चतुरस्रभागचतुष्टयेषु ।

**योजनानां सहस्राणि विष्कम्भो द्वादशास्य वै ॥ ४० ॥**

**[१]परिणाहे च षट्त्रिंशत् विपुलत्वेन चानघ ।**
**[२]षष्टिमाहुः सहस्राणि बुधाः पौराणिकास्तथा ॥ ४१ ॥**

**योजनानि सहस्राणि** इत्यत्र **विष्कम्भः** ऊर्ध्वभागादवष्टम्भकाधोभागविस्तारः । **परिणाहे** वर्तुलतायाम् । **विपुलत्वेन चानघ । षष्टिमाहुः सहस्राणि** इत्यत्र **विपुलत्वेन** प्रभाया विस्तारेण षष्टिसहस्राण्याहुः ।

**[३]एकोनषष्टिविस्तारः शीतरश्मेर्महात्मनः ॥ ४३ ॥**

**एकोनषष्टिविस्तार** इत्यत्र **विस्तारः** प्रभाविस्तारः ।

॥ इति त्रयोदशोऽध्यायः ॥

**॥ भीष्मपर्वणि भूमिपर्वणि जम्बूखण्डनिर्माणं समाप्तम् ॥**

## ॥ अथ चतुर्दशोऽध्यायः ॥

**[४]ककुदं [५]सर्वसैन्यानां धाम सर्वधनुष्मताम् ।**
**शरतल्पगतः सोऽद्य शेते कुरुपितामहः ॥ ४ ॥**

---

१. **'परिणाहेन'** इति कुं पाठः ।
२. **'षष्टिमाहुः शतान्यस्य'** इति कुं पाठः ।
३. $D_7$; BORI पृ. ७३; **'एकोनषष्टिविष्कम्भं'** इति कुं पाठः ।
४. **कुं. १३ अध्यायः ।**
५. $K_{3\cdot5}$,$D_{2\cdot6}$; BORI पृ. ७४; **'सर्वयोधानां'** इति कुं पाठः ।

**ककुदं सर्वसैन्यानाम्** इत्यत्र **ककुदं**, ककुत् वृषभस्योर्ध्वभूतो भुजः, तत्स्थानीयं श्रेष्ठमित्यर्थः ।

**यः स शक्र इवाक्षोभ्यो वर्षन् बाणान् सहस्रशः ।**
**जघान युधि योधानामर्बुदं दशभिर्दिनैः** ॥ १२ ॥

**अर्बुदं दशभिर्दिनैः** इत्यत्र **अर्बुदं** लक्षम् ।

॥ इति चतुर्दशोध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

[१]**अत्यन्यं पुरुषव्याघ्रं ह्रीमन्तमपराजितम् ।**
**पातयामास कौन्तेयः कथं तमजितं युधि** ॥ ११ ॥

**अत्यन्यं पुरुषव्याघ्रम्** इत्यत्र **अत्यन्यम्** अन्यानतिक्रम्य वर्तमानम् ।

**के वीरास्तममित्रघ्नमन्वयुः** [२]**शत्रुसन्निधम् ।**
**शंस मे तद्यथा चासीद्युद्धं भीष्मस्य पाण्डवैः** ॥ ५१ ॥

**शत्रुसन्निधम्** इत्यत्र शत्रून् सम्यक् निधापयतीति शत्रुसन्निधः, तम् ।

**मौर्वीघोषस्तनयित्नुः पृषत्कपृषतो महान् ।**
**धनुर्ह्लादमहाशब्दो महामेघ इवोन्नतः** ॥ २७ ॥

**पृषत्कपृषतो महान्** इत्यत्र **पृषत्काः** शरा एव **पृषताः** जलबिन्दवो यस्य । 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' [३]इत्यमरः ।

---

१. कुं. १४ अध्यायः । **'अनर्हं'** इति कुं पाठः ।
२. **'शत्रुसंसदि'** इति कुं. पाठः । ; ३. अ.को. १-९-६

**भीष्मो यदकरोत्कर्म समरे सञ्जयारिहा ।**
**[1]दुर्योधनकृतान्यहन् के तस्यास्य पुरोऽभवन्** ॥ ३३ ॥

**दुर्योधनकृतान्यहन्** इत्यत्र दुर्योधनकृतानि सैन्यानि को वा **अहन्** हतवान् ।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**सञ्जय उवाच –**

**[2]त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।**
**न तु दुर्योधने दोषमिममासङ्क्तुमर्हसि** ॥ १ ॥

**त्वद्युक्तोऽयमनुप्रश्नः** इत्यत्र तव युक्तः **त्वद्युक्तः** ।

**श्रुणु मे विस्तरेणेदं [3]निवृत्तं परमाद्भुतम् ।**
**भरतानामभूद्युद्धं यथा तद्रोमहर्षणम्** ॥ १० ॥

**निवृत्तं परमाद्भुतम्** इत्यत्र नितरां वृत्तं [4]निवृत्तं, दशादिन-पर्यन्तमतीतं वा ।

॥ इति षोडशोऽध्यायः ॥

---

१. **'दुर्योधनहितार्थाय'** इति कुं पाठः ।
२. कुं. १५ अध्यायः ।
३. $K_{3\text{-}5}$., $D_2$; BORI पृ. ८६; **'विचित्रं'** इति कुं पाठः ।
४. **प्रवृत्तं** सो.मु.पा ।

## ।। अथ सप्तदशोऽध्यायः ।।

**[१] गजाः पदाता रथिनस्तुरगाश्च विशाम्पते ।**
**[२] व्यतिष्ठद्वागुराकाराः शतशोऽथ सहस्रशः ।। १० ।।**

**व्यतिष्ठद्वागुराकारा** इत्यत्र **वागुरा** मृगबन्धनाय कृतं बहुदूरविस्तृतं जालम्, तद्वत् विस्तृताकारा । 'वागुरा मृगबन्धिनी'[३] इत्यमरः ।

**हृष्टा दुर्योधनस्यार्थे ब्रह्मलोकाय दीक्षिताः ।**
**[४] समृद्धा दश वाहिन्यः परिगृह्य व्यवस्थिताः ।। २० ।।**

**समृद्धा दश वाहिन्यः परिगृह्य व्यवस्थिताः** इत्यत्र दश **वाहिन्यः** वाहिनीः, सेनासङ्ख्याविशेषाः ताः परिगृह्य ।

।। इति सप्तदशोऽध्यायः ।।

## ।। अथ अष्टादशोऽध्यायः ।।

**[५] शत्रुगावसनः शैब्यः सहितः सर्वराजभिः ।**
**ययौ मातङ्गराजेन राजार्हेण पताकिना ।**
**पद्मवर्णस्त्वनीकानां सर्वेषामग्रतः स्थितः ।। २० ।।**

**शत्रुगावसनः शैब्य** इत्यत्र शत्रूणां **गां** भूमिमाक्रम्य वसतीति, पद्मवत् वर्णो यस्येति च शैब्यस्यैव विशेषणम् ।

---

१. कुं. १६ अध्यायः । ; २. **'व्यतिष्ठन् वागुराकारा'** इति कुं पाठः ।
३. अ.को. २-१०-२६
४. BORI पृ. ९०; **'समर्था'** इति कुं पाठः ।
५. कुं. १७ अध्यायः । **'स तु गोवासनः'** इति कुं पाठः ।

**अश्वत्थामा ययौ [१] तस्मिन् सिंहलाङ्गूलकेतुना ।**
**श्रुतायुधश्चित्रसेनः पुरुमित्रो विविंशतिः ॥ २१ ॥**

**अश्वत्थामा ययौ तस्मिन्** इत्यत्र **तस्मिन्** सेनामुखे ।

**स्यन्दनैर्वरवर्माणो भीष्मस्यासन् पुरोगमाः ।**
**तेषामपि महोत्सेधाः शोभयन्तो रथोत्तमान् ॥ २३ ॥**

**तेषामपि महोत्सेधाः** इत्यत्र **महोत्सेधाः** महोन्नतिमन्तः । 'उत्सेधः काय उन्नतिः' [२] इत्यमरः ।

**स रथानीकवान् व्यूहो हस्त्यंङ्गो नृपशीर्षवान् ।**
**वाजिपक्षः पतत्युग्रः प्रहसन् सर्वतोमुखः ॥ ३८ ॥**

**स रथानीकवान् व्यूह** इत्यत्र **व्यूहः** पक्ष्याकार इति ज्ञेयः ।

॥ इति अष्टादशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

**महर्षेर्वचनात्तात वेदयन्ति बृहस्पतेः ।**
**[३] संयतान् योधयेदल्पान्कामं विस्तारयेत् बहून् ॥ ४ ॥**

**सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ।**
**अस्माकं च तथा सैन्यमल्पीयः सुरतां परैः ॥ ५ ॥**

---

१. $K_{3-5}$,$D_2$; BORI पृ. ९३; **'यत्तः'** इति कुं पाठः ।
२. अ.को. ३-३-९६
३. 'संहतान्' इति कुं पाठः ।

**वेदयन्ति बृहस्पतेः** इत्यत्र **वेदयन्ति** युद्धोपायं जानन्ति । **संयतान्** सम्यक् नियतान् एतावदेवेति नियमवतः, अल्पानित्यर्थः । बहून् स्वसैनिकान् दिशि दिशि विस्तारयेत् । एवं कृत्वा संयतान् योधयेच्च, इत्येका नीतिः । अल्पानां स्वसैन्यानाम् अनीकं सूचीमुखं कर्तव्यम्, यथा सूच्यग्रमतिक्रूरं तथा अग्रे अतिक्रूरमेकं भटं स्थापयित्वा तस्य पृष्ठतः सर्वैर्गन्तव्यम् इत्यपरा नीतिः ।

**वारणा दशसाहस्राः प्रभिन्नकरटामुखाः ।**
**शूरौ[१] हेममयैर्जालैः दीप्यमाना इवाचलाः ॥ ३१ ॥**

**शूरौ[२] हेममयैर्जालैः** इत्यत्र **जालैः** जालाकारैः अङ्गास्तरणैः । 'जरी'[३] इत्यपभ्रंशभाषा ।

**यं प्रतिव्यूह्य तिष्ठन्ति पाण्डवास्तव वाहिनीम् ।**
**अजेयो मानुषे लोके पाण्डवैरभिरक्षितः ॥ ३६ ॥**

**यं प्रतिव्यूह्य तिष्ठन्ति** इत्यत्र यं वज्रव्यूहम् ।

**[४]संस्रन्त इव चाक्षीणि योधानां भरतर्षभ ।**
**दृष्ट्वाग्रतो भीमसेनं गदापाणिमवस्थितम् ॥ ४५ ॥**

**स्रंसन्त इव चाक्षीणि** इत्यत्र भीमं दृष्ट्वा योधानामक्षीणि स्रंसन्ते इवेति पदच्छेदः । अधः पतन्तीवेत्यर्थः ।

॥ इति एकोनविंशोऽध्यायः ॥

---

१. 'शूरा' इति कुं.पाठः ।
२. भूमौ सो.मु.पा. ; ३. जिरी सो.मु.पा.
४. **'ग्रसन्त इव मज्जानो'** इति कुं पाठः ।

## ॥ अथ विंशोऽध्यायः ॥

धृतराष्ट्र उवाच –

**सूर्योदये सञ्जय के नु पूर्वं**
**युयुत्सवो हृष्यमाणा इवासन् ।**
**मामका वा भीष्मनेत्राः [१]समीके**
**पाण्डवा वा भीमनेत्रास्तदानीम्** ॥ १ ॥

**मामका वा भीष्मनेत्राः समीके** इत्यत्र **समीके** युद्धे ।'समीकं साम्परायिकम्'[२] इत्यमरः ।

**केषां जघन्यौ सोमसूर्यौ सवायू**
**केषां सेनां श्वापदाश्चाभषन्तः ।**
**केषां यूनां मुखवर्णाः पसन्नाः**
**सर्वं [३]तत्त्वं ब्रूहि तत्त्वं यथावत्** ॥ २ ॥

**सर्वं तत्त्वं ब्रूहि तत्त्वम्** इत्यत्र तत् त्वमिति एकत्र पदच्छेदः ।

सञ्जय उवाच –

**उभे सेने तुल्यमिवोपयाते उभे व्यूहे हृष्टरूपे नरेन्द्र ।**
**उभे चित्रे [४]वनराशिप्रकाशे तथैवोभे नागरथाश्वपूर्णे** ॥ ३ ॥

**उभे चित्रे वनराशिप्रकाशे** इत्यत्र **वनराशिः** समुद्रः ।

---

१. BORI पृ. १०३; **'समीपे'** इति कुं पाठः ।
२. अ.को. २-८-१०४ ; ३. **'ह्येतद्ब्रूहि'** इति कुं पाठः ।
४. **'वनराजिप्रकाशे'** इति कुं पाठः ।

**संशप्तकानामयुतं रथानां मृत्युर्जयो वार्जुनस्येति सृष्टाः ।**
**येनार्जुनस्तेन राजन् कृतास्त्राः प्रयातारस्ते त्रिगर्ताश्च शूराः** ॥१५॥

**येनार्जुनस्तेन राजन्** इत्यत्र येन पथा अर्जुन आयाति तेन पथा प्रयाताः ।

॥ इति विंशोऽध्यायः ॥

## ॥ अथ एकविंशोऽध्यायः ॥

**गुणभूतो जयः कृष्णे पृष्ठतोऽभ्येति माधवम् ।**
**[१]अभिजाति जयस्तस्य सन्नतिश्चापरो गुणः** ॥ १३ ॥

**आभिजाति जयस्तस्य** इत्यत्र **अभिजातिं** जन्म आ आरभ्य आभिजाति तस्य जयः ।

**अनुकृष्णं [२]जयाम इति यैरुक्तं तत्र तैर्जितम् ।**
**तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिः सुरैः** ॥ १६ ॥

**अनुकृष्णं जयाम** इत्यत्र **अनुकृष्णं** कृष्णमनुसृत्य ।

॥ इति एकविंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः ॥

**अनीकं दक्षिणं राजन् युयुधानेन पालितम् ।**
**श्रीमता [३]सात्वता तेन शक्रेणेव धनुष्मता** ॥ ४ ॥

---

१. **'तद्यथा विजयश्चास्य'** इति कुं पाठः ।; २. **'जयेम'** इति कुं पाठः ।
३. $D_6$; BORI पृ.११०; **'सात्वताग्र्येण'** इति कुं पाठः ।

**श्रीमता सात्वता तेन** इत्यत्र **सात्वता** सत्ववता पञ्चरात्रप्रवर्तकेन वा ।

**[१]उभयोः सेनयोस्तत्र योधा जहृषिरे तदा ।**
**[२]स्रजश्चोत्थमगन्धानामुभयत्र समुद्भवः ॥**

**स्रजश्चोत्तमगन्धानामुभयत्र समुद्भवः** इत्यत्र **स्रजः** माल्यात् उत्तमगन्धानां समुद्भवः ।

॥ इति द्वाविंशोऽध्यायः ॥

**॥ अथ भगवद्गीतालक्षालङ्कारः ॥**

गीतां [३]कृष्णमुखाज्जातां शीतांशोरिव चन्द्रिकाम् ।
आसेव्य भवदावोत्थधर्मं निर्मूलयाम्यहम् ॥

धृतराष्ट्र उवाच–

**[४]धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥**

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सव** इत्यत्र बहूनामेकभूमौ युगपत्संयोगं **समवायं** वदन् श्रीकृष्णः संयोगविशेष एव समवाय इति सूचयति ।

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

---

१. कुं. २४ अध्यायः ; २. 'स्रजः समाः सुगन्धानामुभयत्र' इति कुं पाठः ।
३. कृष्णमुखोद्भूताम् सो.मु.पा.
४. कुं. २५ अध्यायः । भ.गी. १ अध्यायः ।

**अपर्याप्तं तदस्माकम्** इत्यत्र **पर्याप्तं** परिसमाप्तिं प्राप्तं, तन्न भवतीति **अपर्याप्तम्**।

**अयनेषु च सर्वेषु यथाभागमवस्थिताः।**
**भीष्ममेवाभिरक्षन्तु भवन्तस्सर्व एव हि ॥ ११ ॥**

**अयनेषु च सर्वेषु** इत्यत्र **अयनेषु** युद्धमार्गेषु। 'अयनं पदवी मार्गः'[१] इति हलः।

॥ इति त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**[२]गुरूनहत्वा हि महानुभावान्**
**श्रेयो भोक्तुं भैक्षमपीहलोके।**
**हत्वाऽर्थकामांस्तु गुरूनिहैव**
**भुञ्जीयभोगान् रुधिरप्रदिग्धान् ॥ ५ ॥**

**गुरूनहत्वा हि महानुभावान्** इत्यत्र गुरून् अहत्वा भोक्तुं लोके भैक्षमपि श्रेयः।

**नचैतद्विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः।**
**यानेव हत्वा न जिजीविषामः**
**तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

---

१. ह.को. २-२६०
२. कुं. २६ अध्यायः।

**नचैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः** इत्यत्र तान् वयं वा जयेम इति यत् , ते **नः** अस्मान् जयेयुरिति वा यत्, एतत् कतरत् गरीयः इति न विद्मः । अस्माकं गुरुपितामह-वधोऽप्यनुचितः, भीष्मद्रोणादीनां पौत्रशिष्यवधोऽप्यनुचित इति भावः ।

**नहि प्रपश्यामि ममापनुद्या-**
**द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं**
**राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

**नहि प्रपश्यामि ममापनुद्यात् यच्छोकमुच्छोषणमिन्द्रियाणाम्** इत्यत्र सुराणामाधिपत्यं राज्यञ्च अवाप्यापि इन्द्रियाणाम् उच्छोषणं मम **शोकं** गुरुवधजनितशोकं यदपनुद्यात् तन्न हि प्रपश्यामीति योजना ।

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांस्तु[१] भाषसे ।**
**गतासूनगतासूंश्च नानु शोचन्ति पण्डिताः ॥ ११ ॥**

**प्रज्ञावादांस्तु भाषस** इत्यत्र **प्रज्ञावादान्** केवलं बुद्ध्या उत्प्रेक्षितान् धर्मवादान् , स्वकपोलकल्पितानित्यर्थः ।

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

---

१. 'प्रज्ञावादांश्च' इति कुं. पाठः ।

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परम्** इत्यत्र अहं तु जात्वपि नासमिति नैव, किन्तु सर्वदाऽप्यासम् । त्वञ्च जात्वपि नासीरिति न । इमे जनाधिपाश्च नासन्निति न । अतः **परम्** उत्तरकालेऽपि सर्वे वयं न भविष्याम इति न । **तुशब्देन** [१] स्वस्मिन् देहस्यापि नित्यत्वाख्यविशेषमाह । जीवानां स्वसाम्यं [२] निवारयति–

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥ १३ ॥**

**देहिनोऽस्मिन्** इत्यत्र **देहिनः** प्राकृतदेहवतो जीवस्येत्यर्थः । जीवस्य स्वरूपतो नित्यत्वात् देहादेश्च प्रवाहतो नित्यत्वादिति भावः । अनेन जगतो भाविबाधकशङ्कां च निवारयति ।

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदा** इत्यत्र **मात्राणां** रूपरसादिपञ्चतन्मात्राणां **स्पर्शाः** चक्षुरादीन्द्रियैरनुभवाः शीतोष्णसुखदुःखदा इति योजना ।

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

**यं हि न व्यथयन्त्येत** इत्यत्र एते मात्रास्पर्शाः ।

---

१. तस्मिन् सं.मु.पा । ; २. व्यावर्तयति सं.मु.पा ।

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

**नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः** इत्यत्र असत्पदेन शशशृङ्गादिकमेवोच्यते, तृतीयकोटेरकथनात् । सत्पदेन असद्भिन्नम् अर्थक्रियाकारितया विद्यमानश्च प्रस्तुतदेहादि ब्रह्मान्तं सकलं सदुच्यते । **असतः** शशशृङ्गादेः **भावः** सत्ता न, सद्वैलक्षण्यमेतेष्वस्ति, न त्वसद्वैलक्षण्यमपि तेषामिति भावः । **सतः** देहादेः **अभावः** अत्यन्ताभावो न, असद्वैलक्षण्यमेव तेष्वस्ति, न तु सद्वैलक्षण्यमपीति भावः । **अनयोरुभयोः** पूर्वार्धोक्तयोः असति सद्वैलक्षण्यमेव, सति असद्वैलक्षण्यमेवेति व्यवस्थितयोरुभयोः पक्षयोरपि । **अन्तः** इदमित्थमेवेति निश्चयः । 'अन्तोऽस्त्री निश्चये नाशे'[१] इत्यमरः । **तत्त्वदर्शिभिः** तत्त्ववादिभिः **दृष्टः** साक्षिणा विषयीकृतः । साक्षिसिद्धत्वादस्यार्थस्य कदापि न व्यत्यासः । जीवस्य नित्यत्वात्, देहादेरनित्यत्वमात्रसद्भावेऽपि अत्यन्ताभावाभावेन पुनर्देहान्तरसम्भवात् नोभयविषयेऽपि दुःखं कार्यमिति भावः । सत्पदेन ब्रह्ममात्राङ्गीकारे अन्तपदेन नाशाङ्गीकारे च अनयोरुभयोः धर्मितया पूर्वार्धोक्तयोः सदसतोर्ब्रह्मशशशृङ्गयोः तन्निष्ठतयोक्तयोः सद्वैलक्षण्यासद्वैलक्षण्ययोश्च कस्यापि मते नाशाभावात् नाशाख्यावसानाभावाच्च वाक्यार्थानुपपत्तेश्च । इतोऽन्यत्र जगति उभयोर्नाश इत्यङ्गीकारे जगतीत्यस्याश्रवणात् श्रुतयोः सदसतोस्त्यागाच्च श्रुतहान्यश्रुतकल्पने । अस्मिंश्च पक्षे जगत्यपि सदसतोर्नाशाभावात् न धर्मिनाशात्तयोरन्तो वक्तुं

---

१. [illegible] मुद्रितकोशेषु नोपलभ्यते ।

शक्यते । नापि धर्मनाशात्, एतन्निष्ठतयोक्तधर्मयोरन्यत्र नाशस्याप्यसम्भवादेव । एतद्धर्मसदृशधर्मनाशाङ्गीकारे च अनयोरुभयोरिति पूर्वोक्तपरामर्शिपदविरोधः । सत्यत्ववादिनां मते सद्वैलक्षण्यस्य जगत्यत्यन्ताभावाङ्गीकारेण, असद्वैलक्षण्यस्य च सत्त्वाङ्गीकारेण नाशायोगादर्थानुपपत्तिरेव । मिथ्यात्वावदिभिस्तु जगति सद्वैलक्षण्यासद्वैलक्षण्ययोरुभयोरप्यङ्गीकारेण नाशायोगात् सुतरामर्थानुपपत्तिरेव । प्रतीतत्वमात्रेण असद्विलक्षणेऽपि जगति स्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वं वदता वादिना निषेध्यतया परम्पराप्रस्तुतभावाभावयोरन्तस्याप्यङ्गीकारायोगाच्च न कथञ्चिदप्यर्थावकाशः । यदि च भावाभावपदाभ्यां सत्त्वासत्त्वे विवक्षिते, तयोरन्तश्च लक्षणया अभाव इति मन्यसे तदाऽपि जगति त्रैकालिकानिषेधाप्रतियोगित्वरूपसत्तानिषेधो हि 'अभावाभावो भाव एव' इति वचनात् त्रैकालिकनिषेधप्रतियोगित्वाख्यासत्त्वस्यैव स्थापकत्वात् तत्रैव पुनरुच्यमानमसत्त्वनिषेधं निरुणद्धि । एवं त्रैकालिकनिषेधप्रतियोगित्वरूपासत्त्वनिषेधश्च सत्त्वनिषेधफलीभूतत्रैकालिकनिषेधप्रतियोगित्वनिषेधरूपत्वात् सत्तानिषेधमेव निरुणद्धि । अतोऽस्मिन् पक्षे परस्परव्याहतिरधिका । अथ यदि 'असच्चेन्न प्रतीयेत' इति प्राचां वचनमनुस्मरन् प्रत्यक्षयोग्यत्वमेवासत्त्वं मन्यसे, न तु विशेष्यभूतं त्रैकालिकनिषेधप्रतियोगित्वञ्च, तथापि उक्तप्रत्यक्षायोग्यत्वाख्यासत्त्वनिषेधो नाम प्रत्यक्षयोग्यत्वमेव । तच्च सन्निकर्षयोग्यत्वरूपतया अर्थसत्तासाधकत्वात् पुनस्त्वदभिलषितसत्तानिषेधबाधकमेव । सत्तानिषेधश्च त्वदभिलषितप्रत्यक्षायोग्यत्वाख्यासत्वनिषेधफलीभूतप्रत्यक्षयोग्यत्वबाधक इति दत्तेऽप्यौषधे न रोगशान्तिः, 'नाभावो विद्यते

सतः' इति मूलविरुद्धश्च। अतो यत्किञ्चिदेतत्। किञ्चैतत्प्रकरणारम्भे भगवतैव 'न चैव न भविष्यामः सर्वे वयमतः परम्' इति व्यतिरेकमुखेन जगति अनित्ये प्रवाहतो नित्यस्य, नित्ये स्वरूपतो नित्यस्य च भावाख्यसत्त्वस्यैव स्थिरीकरणेन अवसानरूपतदन्तस्य नाशरूप-तदन्तस्य च कथमवकाशः ? अतोऽस्मदुक्त एव वाक्यार्थः इत्यनु-सन्धेयम्।

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।**
**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥ १७ ॥**

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्** इत्यत्र **येन** ब्रह्मणा इदं सर्वं जगत् ततं व्याप्तं तद्ब्रह्म देहादेरपि नाशाभावात् तु विशेषेण आविनाशि विद्धि।

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतः** इत्यत्र **एनं** जीवमेव **हन्तारं** स्वातन्त्र्येण हन्तारं यः मन्यते, यश्च एनं जीवं हतं मन्यते देहस्यैव हतत्वेऽपि स्वात्मानमेव हतं मन्यते तावुभौ न विजानीतः।

**न जायते म्रियते वा कदाचि-**
**न्नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ २० ॥**

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूय** इत्यत्र न जायते म्रियते इत्यादिकं जीवचैतन्यापेक्षया। **भूत्वा** भूयः मरणानन्तरं वा भविता न। शस्त्रघातेन अस्त्रेण विषपानेन मन्त्रशापाभ्यां भावनया च लोके मरणादिदर्शनात् नानाप्रकारेऽपि मरणाभावसूचनार्थं पुनः पुनर्वचनम्।

**वेदाविनाशिनं नित्यं य एनमजमव्ययम्।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम्** ॥ २१ ॥

**कं घातयति हन्ति कम्** इत्यत्र **घातयति** शस्त्रघातवन्तं करोति।

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।**
**तथापि त्वं महाबाहो नैनं शोचितुमर्हसि** ॥ २६ ॥

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्** इत्यत्र **नित्यजातं** स्वरूपतो नित्यं देहतो जातम्, स्वरूपतो नित्यं देहमादाय मृतम्।

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।**
**अव्यक्त निधनान्येव तत्र का परिवेदना** ॥ २८ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत** इत्यत्र **अव्यक्तं** मूलप्रकृतिः। **व्यक्तं** तेजोऽबन्नात्मकं पञ्चमहाभूतात्मकं वा।

**आश्चर्यवत्पश्यति कश्चिदेन-**
**माश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाप्येनं वेद न चैव कश्चित्** ॥ २९ ॥

**आश्चर्यवत्पश्यति कश्चिदेनम्** इत्यत्र 'आश्चर्यवत्पश्यति' इत्यादिकं ब्रह्मादिमहानुभावजीवानपेक्ष्य ।

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु** इत्यत्र **साङ्ख्ये** भगवन्महिमप्रतिपादकपञ्चरात्रादिशास्त्रे । **योगे** कर्मकौशलशास्त्रे ।

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन । बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्** इत्यत्र **व्यवसायात्मिका** पुण्यं करोम्येवेति निश्चतात्मिका । **व्यवसायिनाम्** एतादृशव्यवसायवतां भिन्नभिन्न-स्वभावानां पुंसां बुद्धयः **पुनर्बहुशाखा अनन्ताश्च**, यज्ञं करोमि दानं करोमि तपः करोमीत्याद्याकारेण बहुशाखाः अन्ततोऽनन्ताश्च भवन्ति । अथवा **अव्यवसायिनाम्** एकत्र निश्चयरहितानाम् । अन्यत् स्पष्टम् ।

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिन** इत्यत्र **पुष्पितां** पुष्पस्थानीयस्वर्गप्रतिपादिकां, स्वर्गमेव आपाततः फलत्वेन प्रतिपादयन्तीमित्यर्थः । **नान्यदस्तीति वादिनः** अन्यत् मोक्षाख्यं महाफलंनास्तीतिवादिनः ।

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

**भोगैश्वर्यगतिं प्रति** इत्यत्र भोगैश्वर्यगतिं प्रति आसक्ता भवन्तीति योग्यक्रियाध्याहारः ।

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

**समाधौ न विधीयत** इत्यत्र **समाधौ** चित्तसमाधानार्थम् । तादर्थ्ये सप्तमी ।

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्** इत्यत्र **त्रैगुण्यं** सत्वादिगुणमयस्वर्गादिकं **विषयः** आपाततः प्रतिपाद्यमानोऽर्थो येषां ते त्रैगुण्याख्यविषं **यापयन्ति** त्यजयन्तीति वा **त्रैगुण्यविषयाः** । यथास्थितार्थवेदप्रतिपाद्यत्रैगुण्यस्य निषेधायोगात् निस्त्रैगुण्यो भवेत्यस्य विरोधः। **निस्त्रैगुण्यः** त्रिगुणात्मक-स्वर्गादिफले आकाङ्क्षारहितः। **निर्योगक्षेमः** योगक्षेमार्थं प्रयत्नमकुर्वन् ।

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत** इत्यत्र सर्वतः **सम्प्लुतोदके** समुद्रे **उदपाने** स्वस्य

तृषापरिहारायोदकपाने यावानर्थः, विजानतो ब्राह्मणस्य सर्वेषु वेदेषु तावान् **अर्थः** प्रयोजनम् । स्वस्य यावती योग्यता तावदेवोपास्यं, न त्वधिकमिति भावः ।

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्माते सङ्गोस्त्वकर्मणि ॥ ४७ ॥**

**मा ते सङ्गोऽस्त्वकर्मणि** इत्यत्र **अकर्मणि** कर्माकरणे ते सङ्गः माऽस्तु । फलं नास्तीति कर्मापि न त्यजेति भावः ।

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय** इत्यत्र 'समत्वं योग उच्यते' इति वचनात् सिद्ध्यसिद्ध्योः कर्मणः समाप्त्यसमाप्त्योः समत्वं **योगः** । **सङ्गं** फलाकाङ्क्षाम् ।

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय** इत्यत्र नीचं कर्म **अवरं** बुद्धियोगात् दूरेण त्यज । **बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः** इत्यत्र फलहेतवः कृपणाः ।

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृत** इत्यत्र **सुकृतं** काम्यकर्म ।

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदम्** इत्यत्र मोहाख्यं **कलिलं** कर्दमम् । **निर्वेदं** फलम् ।

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदायोगमवाप्स्यसि ॥ ५३ ॥**

**श्रुतिविप्रतिपन्ना त** इत्यत्र **श्रुतिभिः** श्रवणैः **वि** विशेषेण **प्रतिपन्ना** उत्पन्ना, श्रुतीनां **वि** विचारेण प्रतिपन्ना उत्पन्ना वा ।

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

**स्थितप्रज्ञस्य का भाषा** इत्यत्र **स्थितप्रज्ञस्य** अपरोक्षज्ञानिनः **का भाषा** किं [१] भाषणम् । तदेव विशदयति – **स्थितधीः किं प्रभाषेत** इति ।

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

**आत्मन्येवात्मना तुष्ट** इत्यत्र **आत्मनि** परमात्मनि ।

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

१. भापकम् सो.मु.पा.

**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते** इत्यत्र **रसः** विषयेष्वाकाङ्क्षा, तस्याः **वर्जो** वर्जनम् । रसोऽपि **परं** परमात्मानं दृष्ट्वा निवर्तते ।

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥ ६२ ॥**

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायत** इत्यत्र **सङ्गः** स्नेहः । **कामात् क्रोधोऽभिजायत** इत्यत्र अलाभे क्रोधः ।

**क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥**

**क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः** इत्यत्र **सम्मोहः** अज्ञानम् । **स्मृतिविभ्रमः**[१] श्रुतशास्त्रार्थस्मरणस्य नाशः । **स्मृतिभ्रंशाद्बुद्धिनाश** इत्यत्र **बुद्धिः** शास्त्रोत्पन्नतत्वज्ञानम् । तस्य नाशः ।

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् । आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति** इत्यत्र **आत्मवश्यैः** इन्द्रियैः विषयान् **चरन्** यावता प्राणधारणं तावदेव चरन् । **विधेयः** स्वाधीनः 'विधेयो विनयग्राही' इत्यमरः । आत्मा अन्तःकरणं यस्य स तथोक्तः । **प्रसादं** भगवत्प्रसादम् ।

---

१. स्मृति विभ्रंशः सो.मु.पा.

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चाभावयतः शान्तिः** इत्यत्र **अयुक्तस्य** कर्मकौशलरहितस्य । **बुद्धिः** निश्चितज्ञानम् । **भावना** निदिध्यासनम् । **शान्तिः** बुद्धेर्भगवदेकनिष्टता, अपरोक्ष-ज्ञानमिति यावत् ।

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

**इन्द्रियाणां हि चरतां यन्मनोऽनु विधीयते । तदस्य हरति प्रज्ञाम्** इत्यत्र **अनु** अनुसारि **विधीयते** क्रियते इति यत्, तत् अस्य प्रज्ञां हरति ।

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः** इत्यत्र सर्वभूतानां परलोकविचारणं[१] **निशा**, [२]रात्राविवान्धकारवशात् । तस्यां रात्रौ संयमी जागर्ति । तस्य तत्रान्धकारो नास्तीत्यर्थः । सदा परलोकविचारमेव करोतीति भावः । यस्यां स्वकुटुम्बभरणादिक्रियायां भूतानि **जाग्रति** जागरणं प्राप्ता-स्तिष्ठन्ति, सा कुटुम्बभरणादिक्रिया**निशा** निशाप्राया मुनेस्तत्र दृष्टिर्न पततीति भावः ।

---

१. **परलोकविचारेण** सो.मु.पा. ; २. **रात्राविवान्धकारदशा** सो.मु.पा.

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत् कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

**समुद्रमापः प्रविशन्ति यद्वत् । तद्वत् कामा यं प्रविशन्ति सर्व** इत्यत्र **तद्वत्** समुद्रं प्रविश्य तत्रैव निलीननद्युदकवत् कामाः यं पुरुषं प्रविशन्ति, बहिर्विषयेष्वचरन्तः सन्तः मनस्येव निलीना भवन्तीत्यर्थः ।

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥**

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति । स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति** इत्यत्र **ब्राह्मी** परब्रह्मसम्बन्धिनी । **निर्वाणं** मोक्षप्रदं ब्रह्म ऋच्छति । ब्रह्मणः कृपया निवारणं मोक्षमिति वा ।

॥ चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

अर्जुन उवाच –

[१] **ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

---

१ भी. २७ अध्यायः ।

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन** इत्यत्र **कर्मणः** युद्ध कर्मणः सकाशात् **बुद्धिः** ब्रह्मविषयिणी बुद्धिः ज्यायसी मता चेदिति सम्बन्धः ।

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**नच सन्न्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत** इत्यत्र नैष्कर्म्यं निष्कर्मणां योग्यं ज्ञानम् । **अनारम्भात्** विष्णुप्रीत्यर्थमारम्भाभावात् ।

**नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

**नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म** इत्यत्र **अकर्मकृत्** चक्षुरुन्मेषणनिमेषणभोजनादीनां सर्वैः क्रियमाण-त्वात् अकर्मकृन्न तिष्ठतीत्युक्तम् । **अवशः** विष्णुवशः ।

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा** इत्यत्र इन्द्रियार्थान् मनसा स्मरन्निति सम्बन्धः ।

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

**असक्तः स विशिष्यत** इत्यत्र **असक्तः** फलापेक्षारहितः ।

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

**कर्म ज्यायो ह्यकर्मण** इत्यत्र **अकर्मणः** सर्वथा कर्मनिरसनात् कर्म ज्यायः ।

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९ ॥**

**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर** इत्यत्र **मुक्तसङ्गः** त्यक्तफलस्नेहः ।

**सहयज्ञाः प्रजास्सृष्ट्वा पुरोवाचप्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

**अनेन प्रसविष्यध्वम्** इत्यत्र **अनेन** यज्ञेन ।

**देवान् भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

**देवान् भावयतानेन ते देवा भावयन्तु व** इत्यत्र देवान् **भावयत** [illegible]यत, **अनेन** यज्ञेन । **भावयन्तु** फलदानेन सम्भावयन्तु ।

**इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव स** इत्यत्र **एभ्यः** देवेभ्यः **अप्रदाय** अदत्त्वा ।

**यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्** इत्यत्र **आत्मनः** स्वस्य **कारणात्** उदरभरणाख्यकारणात् ।

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

**ब्रह्माक्षरसमुद्भवम् । तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्** इत्यत्र **अक्षरो** वेदः, तस्मात् **समुद्भवः** सम्यक्प्रतिपादनेन व्यक्तीकरणं यस्य तत्तथोक्तम् । तस्मात् स्वप्रतिपादकवेदविहितत्वात् ।

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

**एवं प्रवर्तितं चक्रम्** इत्यत्र **चक्रम्** अनादिकालमारभ्य परिवर्तमानं पुण्यचक्रम् ।

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यत** इत्यत्र **आत्मनि** परमात्मनि **रतिः** रागो यस्य । **आत्मतृप्तः** परमात्मध्यानेन अन्यत्रालम्बुद्धिं प्राप्तः । आत्मन्येव **सन्तुष्टः** परमात्मदर्शनादेव सन्तोषं प्राप्तः असम्प्रज्ञातसमाधियोगस्थ इत्यर्थः । **कार्यं** बहिःकार्यम् ।

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन** इत्यत्र इह असम्प्रज्ञात-समाधियोगदशायां **अकृतेन** कर्माकरणेन अनर्थो न । अन्यदा कर्माकरणे अनर्थो भवत्येवेति भावः ।

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

**स यत्प्रमाणं कुरुत** इत्यत्र **स** श्रेष्टः **यत्** कर्म **प्रमाणं** प्रमीयते इति प्रामाणिकमिति कुरुते ।

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

**नानवाप्तमवाप्तव्यम्** इत्यत्र **अनवाप्तं** प्रागवाप्तं प्राप्तं न भवति **अनवाप्तम्,** अवाप्तव्यम् उपरि प्राप्तव्यश्च फलं न । अत एव कर्तव्यं कर्मापि न ।

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

**सङ्करस्य च कर्ता स्याम्** इत्यत्र **सङ्करस्य** जातिसङ्करस्य ।

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोपयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥ २६ ॥**

**जोषयेत् सर्वकर्माणि** इत्यत्र **जोषयेत्** कर्मसु प्रीतिं जनयेत्। 'जुषी प्रीतिसेवनयोः' इति धातुः।

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

**तत्वविन्तु महाबाहो गुणकर्मविभागयोः। गुणा गुणेषु वर्तन्त इति मत्वा न सज्जत** इत्यत्र गुणकर्मविभागयोः तत्वविदिति सम्बन्धः। **गुणाः** सत्वादिगुणाः। **गुणेषु** स्वकार्यभूतेषु सात्विकराजसतामस-कार्येषु।

**सदृशं चेष्टते [1]यस्याः प्रकृतेर्ज्ञानवानपि।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

**सदृशं चेष्टते यस्याः प्रकृतेर्ज्ञानवानपि। प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति** इत्यत्र ज्ञानवानपि यस्याः प्रकृतेः **सदृशं** प्रकृतिगुणानुसारेणेत्यर्थः। **चेष्टते** कर्माणि कुरुते। जातावेकवचनम्। तानि भूतानि तामेव प्रकृतिं यान्ति। **सात्विकाः** सत्कर्मकरणात् पुनः पुनः सात्विका एव भवन्ति। एवमन्यत्रापि। **निग्रहः** जनापवादः किं करिष्यति।

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

**इन्द्रियस्येन्द्रियार्थेषु रागद्वेषौ व्यवस्थितौ। तयोर्न वशमागच्छेत्**

---

१. **'स्वस्याः'** इति कुं. पाठः।

इत्यत्र **इन्द्रियार्थेषु** अगम्यागमनादिदुर्विषयेषु सन्ध्यावन्दनादिसद्विषयेषु च रागद्वेषौ दुर्विषये रागः सद्विषये द्वेषश्च **व्यवस्थितौ** अविद्यकाम-कर्मवशात् नियतौ । हरिविषयकविद्यया मूलीभूताविद्यां निरस्य तयोर्न वशमागच्छेदिति योजना ।

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्** इत्यत्र स्वनुष्ठितात् **परधर्मात्** शान्त्यादिब्राह्मणधर्मात् **विगुणः** किञ्चिदङ्गविकलः **स्वधर्मः** युद्धादिक्षत्रियधर्मः । एवमन्यत्रापि योज्यम् ।

**श्रीभगवानुवाच –**
**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

**महाशनो महापाप्मा** इत्यत्र अतिशयेन पुण्यश्रेणीमश्नातीति **महाशनः** ।

**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्** इत्यत्र **उल्बेन** जरायुणा । **तेन** कामेन । **इदं** जगत् ।

इन्द्रियाभिमानिदेवानां यथयोग्यमुत्तमज्ञाने, सर्वनियामकतया गर्वोत्तमहरिज्ञाने च सन्तुष्टास्ते ज्ञाताः देवाः पुनरिन्द्रियाणि इतस्ततो

न प्रचारयन्तीति भावेन देवतातारतम्यमाह – **इन्द्रियाणि पराण्याहुरित्यादिना ।**

**इन्द्रियाणि पराण्याहुः इन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिः यो बुद्धेः परतस्तु सः** ॥ ४२ ॥

**इन्द्रियाणि** इन्द्रियाभिमानिबृहस्पतिसूर्यादिदैवतानि **पराणि** इतर-देवेभ्यः उत्तमानि । **मनः** चित्ताहङ्करादिरूपमनोऽभिमानिनो ब्रह्माद्याः । **बुद्धिः** विद्यास्फूर्तिसंविद्रूपबुद्ध्यभिमानिनी लक्ष्मीः । बुद्धेः परतः यो वर्तते स परमात्मा । **बुद्धेः** परतः परस्य बुद्धिपरत्वं सुतरामस्तीति वा तदुक्तिः ।

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम्** ॥ ४३ ॥

**संस्तभ्यात्मानमात्मना** इत्यत्र **आत्मना** निरवधिकसर्वोत्तमेन परमात्मना । **आत्मानम्** अन्तःकरणम् ।

॥ इति पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

[१]**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति** ॥ ४ ॥

**अपरं भवतो जन्म परं जन्म विवस्वत** इत्यत्र **अपरम्** अल्पकालीनम्, तदवतारस्य इदानीं जातत्वात् । **परं** बहुकालीनम्, सूर्यस्यादौ सृष्टत्वात् ।

१. कुं. २८ अध्यायः ।

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया** इत्यत्र **प्रकृतिं** सच्चिदानन्दस्वभावम् । **आत्ममायया** स्वेच्छया । 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति'[१] इति वक्ष्यमाणत्वात् **मायया**[२] स्वेच्छयैव । पुनर्जन्म नैतीति फलोक्तेः, दिव्यमिति जन्मकर्मणोर्विशेषणाच्च हरेर्न लोकवज्जन्म । जन्मज्ञानेन जन्मनाशायोगात् । किन्तु अवतारे एव ।

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो ज्ञानतपसा पूता मद्भावमागता** इत्यत्र **मन्मयाः** मत्प्रधानाः । **मद्भावं** मयि भक्तिम् ।

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्** इत्यत्र **भजामि** फलदानेन अनुगृह्णामि ।

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्** इत्यत्र **अकर्तारं** अकर्तृवत् कर्मलेपरहितम् ।

---

१. भीष्म पर्व २८-९ ; २. माया स्वेच्छैव सो.मु.पा.

तदेव विवेचयति – **न मां कर्माणि लिम्पन्ति** इति।

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिता** इत्यत्र **कर्म** स्वेन कर्तव्यं कर्म। **अकर्म** अयोग्यतया कस्यचिदकर्तव्यं पुण्यकर्म।

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यश्च विकर्मणः। अकर्मणश्च बोद्धव्यम्** इत्यत्र **कर्मणः** स्वस्वविहितकर्मणः, **बोद्धव्यम्** अवस्थानं बोद्धव्यम्। **विकर्मणः** विरुद्धपापकर्मणः। **अकर्मणः** पुण्यत्वेऽपि स्वायोग्यतया कैश्चिदकर्तव्यकर्मणः, यथा सन्यासिनां यज्ञादिकम्।

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।**
**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

अत्र विशेषमाह– **कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः। स बुद्धिमान् मनुष्येषु** इत्यत्र **कर्मणि** सत्यवचनादिकर्मणि **अकर्म** सतामपाये सति इदमकर्तव्यं कर्मेति यः पश्येत्। तथा **अकर्मणि** व्रततया स्वेन अकर्तव्ये श्राद्धभोजनादिकर्मणि **कर्म** 'अष्टौ तान्य-व्रतघ्नानि' इति वचनात् गुर्वाज्ञया मयेदं कर्तव्यं कर्मेति च यः पश्येत् स

बुद्धिमानिति योजना । पूर्वश्लोके वर्णाश्रमविभेदेन कर्माकर्मणोर्विभाग इति विशेषः । अस्यातिसूक्ष्मधर्मत्वात् फलमाह – **स बुद्धिमानिति** ।

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥ २१ ॥**

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्** इत्यत्र आत्मपदेन प्रयत्नः कथ्यते । **शारीरं** शरीरयात्रामात्रोपयुक्तं कर्म कुर्वन् किल्बिषं नाप्नोति इति योजना ।

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

**यज्ञायाचरतः कर्म समग्रं प्रविलीयत** इत्यत्र समग्रं पापं प्रविलीयते ।

**ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणाहुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥ २४ ॥**

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना** इत्यत्र कृतपुण्यस्य ब्रह्मण्येवार्पणं **ब्रह्मार्पणम्** । ब्रह्मणः सम्बन्धि हविः **ब्रह्महविः** । ब्रह्मणः अग्निः **ब्रह्माग्निः** तस्मिन् । **ब्रह्मणा** ब्रह्मप्रेरितेन यजमानाख्यब्राह्मणेन हुतम् । ब्रह्मण्येवार्पणं कार्यम्, हविषि अग्नौ च ब्रह्मणः सन्निधानं स्मर्तव्यम् । 'न ऋते त्वत्क्रियते किञ्चन'[१] इति श्रुतेः । ब्रह्मप्रेरितेनैव मया होमः [२]कृत इति च ध्येयम् । एवं **ब्रह्मकर्मसमाधिना** ब्रह्मण्येव कर्मविषयकचित्त-

१. ऋ.सं १०-११२-९ ; २. **क्रियते** सो.मु.पा.

समाधानवता तेन यजमानेन अन्ते ब्रह्मैव गन्तव्यं भवतीति योजना । मोक्षदशायामपि गन्तव्यस्य ब्रह्मणो गन्तुर्जीवस्य च गम्यगन्तृभावेन भेदकथनात् ब्रह्मणा हुतमित्यत्र सांसरिक जीवस्याभेदकथनं [१] पूर्वोत्तर-विरुद्धम् । जडभूतार्पणक्रियायाः, जडस्य हविषः, जडभूताग्नेश्च ब्रह्मैवार्पणं, ब्रह्मैव हविरित्यादिना ऐक्यकथनं पूर्वोत्तरविरुद्धं स्वमत-विरुद्धञ्च ।

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

**दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति** इत्यत्र **दैवं** केवलं देवसम्बन्धियज्ञमेव ज्ञानरूप-यज्ञमेव । **ब्रह्माग्नौ** [२] ब्रह्मसम्बन्धिनि तेजोरूपाग्नौ **यज्ञं** यज्ञनामक-परमात्मानं **यज्ञेन** कर्मरूपयज्ञेन उपजुह्वति ।

प्रधानत्वात् प्राङ्निर्दिष्टज्ञानयज्ञमेव प्रपञ्चयति– **श्रोत्रादीनी-त्यादिभिः** ।

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति । शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति** इत्यत्र **संयमाग्निषु** विषयतृष्णा संयमनाख्याग्निषु । दिने दिने क्रियमाणत्वाद्बहुवचनम् **इन्द्रियाग्निषु** इन्द्रियनियमनाख्याग्निषु । इन्द्रियाणां नियमने सति शब्दादिविषयाणां

---

१. **पूर्वोत्तरकथनविरुद्धम्** सो.मु.पा. ; २. **ब्रह्मरूपसम्बन्धिनि** सो.मु.पा.

हुतान्नवदकिञ्चित्करत्वात् जुह्वतीत्युक्तम्। विषयतृष्णाभावे इन्द्रियाण्यबाधकानि, इन्द्रियनियमने विषयाश्चाबाधका भवन्तीति भावः।

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपित** इत्यत्र **सर्वाणीन्द्रियकर्माणि** इन्द्रियव्यापारान्। **प्राणकर्माणि** श्वासोच्छ्वासादिव्यापारान्। **आत्मसंयमयोगाग्नौ, आत्मनः** चित्तस्य आत्मनि परमात्मन्येव **संयमयोगः** सम्यङ्नियमनाख्यध्यानयोगः स एवाग्निः तस्मिन्।

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे। प्राणापानगती रुद्ध्वा प्राणायामपरायणा** इत्यत्र परमात्मनो निदिध्यासने क्रियमाणे सति अपानवायोरपि ऊर्ध्वमाकर्षणेन श्वासे निलीयमानत्वात् प्राणे अपानं जुह्वतीत्युक्तम्। वामनासापुटेन ऊर्ध्वश्वासाख्यप्राणवायोः पूरणे सति अधोगमनेन अपानवायौ निलीयमानत्वात् अपाने प्राणं जुह्वतीत्युक्तम्। पाठक्रमादर्थक्रमस्य ज्यायस्त्वादेवं योजना। तदनन्तरं कुम्भकेन प्राणापानगती रुद्ध्वा **प्राणायामपरायणाः** प्राणायामाख्यमहायज्ञपरायणा भवन्तीति योजना।

**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति** इत्यत्र **अपरे** संयमाग्नौ इन्द्रियहोमासक्ता नूतनयोगिनः नियताहाराः सन्तः देहं शोषयित्वा **प्राणान्** इन्द्रियगणान् **प्राणेषु** श्वासवायुषु जुह्वति। त्वगस्थिमात्रावयवा भूत्वा श्वासमात्रं मुञ्चन्तस्तिष्ठन्तीति भावः।

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥**

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्** इत्यत्र एतेषु यज्ञेषु कृतेषु सत्सु शिष्टं यत् पुण्यवैराग्यज्ञानादि तदेव अमृतम्, मोक्षसाधनत्वात्। **नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम** इत्यत्र **अयज्ञस्य** उक्तबहुविधयज्ञेषु एकेनापि यज्ञेन रहितस्य। अत्रापि सर्वजननिन्द्यत्वादयं लोको नास्तीत्युक्तम्।

**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत** इत्यत्र **अखिलम्** अनष्टम्।

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया** इत्यत्र **तत्** ज्ञानम्।

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि** इत्यत्र **येन** ज्ञानेन । **अथो** अनन्तरम् । **आत्मनि** परमात्मनि मयि भूतानि द्रक्ष्यसि ।

**श्रद्धावान् लभते ज्ञानं [1] तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रिय** इत्यत्र **तत्परः** ज्ञानपरः ।

॥ इति षड्विंशोऽध्यायः ॥

## ॥ अथ सप्तविंशोऽध्यायः ॥

**[2] सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

**सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगत** इत्यत्र **अयोगतः** योगं विना यः सन्न्यासः स दुःखमाप्तुमेव, न सुखायेत्यर्थः । असाध्य इति भावः ।

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यत** इत्यत्र सर्वभूतानां **आत्मा** अन्तर्यामी नारायणः, तस्मिन् **भूतः** जातः **आत्मा** चित्तं यस्य स तथोक्तः ।

---

१. 'मत्परः' इति कुं. पाठः ।
२. कुं. २९ अध्यायः ।

**नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८ ॥**

**नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्** इत्यत्र **युक्तः** योगयुक्तः **तत्त्ववित्** ज्ञानी किञ्चिदपि कर्म अहमेव करोमीति न मन्येत, किन्तु हरिप्रेरणयैव करोमीति चिन्तयेत् ।

**प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्** इत्यत्र **इन्द्रियाणि** हरिणा प्रेरितानीन्द्रियाणि ।

**सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

**सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी** इत्यत्र **सन्न्यस्य** हरौ समर्प्य । **नवद्वारे पुरे देही नैव कुर्वन् न कारयन् । न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तत** इत्यत्र जीवः स्वातन्त्र्येण कुर्वन् न, कारयन्नपि न । **कर्तृत्वं** स्वतन्त्रकर्तृत्वं लोकस्य न सृजति । स्वतन्त्रकर्माणि च न सृजति । कर्मफलसंयोगश्च स्वातन्त्र्येण न सृजतीति पूर्वेणान्वयः । **स्वभावः** स्वतन्त्रेण हरिणा **भावः** चेष्टा यस्य स तथोक्तस्तु प्रवर्तते ।

**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः** इत्यत्र पापपुण्ययोः प्रेरकोऽपि भगवान् न कस्यचित् पापमादत्ते, सुकृतञ्च नैवादत्ते । **विभुः** समर्थः । समर्थत्वादेव नादत्ते इति भावः । ईदृशं ज्ञानं सर्वेषां कुतो न जायते इत्यत आह– **अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः** इति ।

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्** इत्यत्र **परम्** उत्तमं **तत्** विष्ण्वाख्यं ब्रह्म ।

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिन** इत्यत्र सप्तमया निर्दिष्टेषु ज्ञान्यज्ञानिषु च एतेष्वधिकरणेषु **समं** नित्यशुद्धत्वसार्वज्ञ्यादिगुणैः समानं परमात्मानं पश्यन्तीति **समदर्शिनः** । 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि'[१] इति हि ब्रह्मसूत्रम् । 'निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः'[२] इति उत्तरश्लोके कृष्णेनैव समपदस्य ब्रह्मपरतया व्याख्यातत्वाच्च । सर्वत्र साम्यं [३]पश्यन्तीति येषामाशा तेषां समपदमेव विषमम् । तथा सति साम्यदर्शिन इति स्यात् । अनुभवविरुद्धं स्मृति-

१. ब्र.सू. ३-२-११ ; २. भीष्म २९-१९ ; ३. पश्यतीति सो.मु.पा.

विरुद्धश्च गोशुनोः साम्यदर्शनम् । शुनः स्पर्शे स्नानविधानात् , गोस्पर्शे पुण्यविधानात् । गवामिव पुण्यकाले शुनां दानाभावाच्च ।

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते** इत्यत्र सम्यक् विषय-स्पर्शेन जाताः **संस्पर्शजाः** ।

**योऽन्तःसुखोऽन्तरारामस्तथांऽतर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

**योऽन्तः सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति** इत्यत्र **अन्तःसुखः** अन्तःसुखं हरिध्यानेन[1] सुखं यस्य । **अन्तरारामः** अन्तः हरावेव आ सम्यक् रमते इति अन्तरारामः । **अन्तर्ज्योतिः** अन्तः ज्योतिः हरेरपरोक्षज्ञानं यस्य स तथोक्तः । **निर्वाणं** मोक्षप्रदम् । **ब्रह्मभूतः** ब्रह्मण्येव भूतः जातः, ब्रह्मनिष्ठ इत्यर्थः ।

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥**

**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रता** इत्यत्र **द्विधा** विरुद्ध-कोटिद्वयावलम्बनेन जातं ज्ञानं **द्वैधम्,** संशय इत्यर्थः ।

॥ सप्तविंशोऽध्यायः ॥

---

१. हरिध्यानेनैव सो.मु.पा.

## ।। अथ अष्टाविंशोऽध्यायः ।।

**[१] यं सन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसन्यस्तसङ्कल्पो योगी भवति कश्चन ।। २ ।।**

**न ह्यसन्यस्तसङ्कल्पो योगी भवति कश्चन** इत्यत्र सन्यस्तः सङ्कल्पः फलोद्देशो येन स न भवतीति **असन्यस्तसङ्कल्पः** फल-कामनावान् ।

**उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।। ५ ।।**

**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मन** इत्यत्र पुण्ये कृते आत्मैवात्मनो बन्धुः, पापे कृते आत्मैवात्मनो रिपुः इत्यादि ।

**बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ।। ६ ।।**

**बन्धुरात्माऽत्मनस्तस्य येनात्मैवात्मना जितः** इत्यत्र **आत्मा** अन्तःकरणम् । **अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्** इत्यत्र **अनात्मनः** चित्तजयरहितस्य । केनचित् समं शत्रुत्वे प्राप्ते आत्मैव शत्रुवत्, स्वचित्तं प्रत्येव शत्रुवद्वर्तेत । कलहिनं प्रति कलहं न कुर्यात्, किन्तु स्वचित्तमेव शमयेदिति भावः ।

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ।। ९ ।।**

---

१ पू. ३० अध्यायः ।

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु । साधुष्वपि च पापेषु समबुद्धिर्विशिष्यत** इत्यत्र एषु वस्तुषु स्थिते **समे** नारायणे बुद्धिर्यस्य स तथोक्तः ।

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी जितचित्तात्मा[१] निराशीरपरिग्रहः ॥ १० ॥**

**एकाकी जितचित्तात्मा निराशीरपरिग्रहः** इत्यत्र **जितचित्तात्मा** जितचित्तप्रयत्नवान् ।

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वत** इत्यत्र **आत्यन्तिकं सुखं** निरवधिकसुखरूपं **यद्** ब्रह्म तत् वेत्ति ।

**तं विद्याद् दुःखसंयोगवियोगं योगसञ्ज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोनिर्विण्णचेतसा ॥ २३ ॥**

**तं विद्याद् दुःखसंयोगवियोगं योगसञ्ज्ञितम्** इत्यत्र दुःखसंयोगस्य वियोगो यस्मिन् स **दुःखसंयोगवियोगः**, तम् ।

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥**

**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्** इत्यत्र ब्रह्मप्रसादाज्जातं **ब्रह्मभूतम्** ।

---

१. $D_6$; BORI पृ. १३८; '**यतचित्तात्मा**' इति कुं पाठः ।

**युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

**युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मष** इत्यत्र ब्रह्म-संस्पर्शमात्मानं चित्तं युञ्जन् ।

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥**

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थिते** इत्यत्र **एकत्वं** सर्वभूतेषु स्थितमद्रूपाणामैक्यम्, स्थानभेदेन मद्रूपभेदं न पश्येदित्यर्थः । सर्वभूतस्थितमित्याधाराधेयभावोक्तेः, मां भजतीति सेव्यसेवकभावोक्तेश्च जीवैक्यस्य बाधितत्वात् स्थानभेदेन प्रसक्तस्वरूपभेद-निषेध एवायम् । अत एव एकत्वमिति सामान्येनोक्तिः ।

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तत** इत्यत्र वेदाभ्यास-योगाभ्यासयोरेकेनैव मनसा कर्तुमशक्यत्वात् वेदाभ्यासे किञ्चिदुपरतो भवतीत्यर्थः । यद्वा शब्दरूपवेदावृत्तिं अतिवर्तते, अर्थरूपं परम्ब्रह्मैव ध्यायन्नास्ते इत्यर्थः ।

॥ इति अष्टाविंशोऽध्यायः ॥

* * *

## ।। अथ एकोनत्रिंशोऽध्यायः ।।

**[१]भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ।। ४ ।।**

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ।। ५ ।।**

**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा । जीवभूतां महाबाहो ययेदं धार्यते जगत्** इत्यत्र मदधीना **प्रकृतिः** जडप्रकृतिः अपरेयं अष्टधा भिन्ना इत्यन्वयः । **जीवभूतां** जीवस्य देहेन्द्रियादिरूपाम् । यया [२]एवं द्विविधया जडप्रकृत्या ।

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।। ६ ।।**

**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा** इत्यत्र कृत्स्नस्य जीवजडात्मकस्य जगतः ।

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ।। ८ ।।**

**रसोऽहमप्सु कौन्तेय** इत्यत्र **रसः** रसनियामकः । 'सूत्रे मणिगणा इव' इति प्रोक्ताधारधेयभावविवरणरूपत्वात् रसोऽहमित्यादिकम् आधाराधेयभावविवक्षया, जडैक्यस्य कैरप्यनङ्गीकारात् । बीजं मां

---

१. कुं. ३१ अध्यायः ।
२. एवंविधया सो.मु.पा.

सर्वभूतानामिति स्वेनैव वक्ष्यमाणत्वाच्च । तत्तत्स्वभावभूता-साधारणगुणस्यापि स्वयमेव नियामक इति बोधनार्थं पृथगुक्तिः ।

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि** इत्यत्र **तान्** गुणान् मत्त एवेति विद्धि । न त्वहमेव ते गुणा इति विद्धीति एवकारेण स्पष्टमैक्यनिषेधाच्च उक्त एवार्थः । अहं **तेषु** गुणेषु न, ते गुणा मदाधारभूता न । किन्तु **ते** गुणा एव मयि, अहमेव तेषां नियामकतया आधार इत्यर्थः । अथवा अहं तेषु न, ते मय्यपि न । असङ्गत्वादिति भावः ।

'रसोऽहम्' इत्यादिवाक्येषु स्वाभिप्रायमज्ञात्वा स्वस्य जडजीवैक्यं वदन्तो मिथ्याज्ञानिन इत्याह–

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

**मामेभ्यः परमव्ययम्** इत्यत्र **एभ्यः** जीवजडेभ्यः **परं** विलक्षण-गुणगश्च । **अव्ययं** तद्वन्नाशरहितम् ।

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

**दैवी ह्येषा गुणमयी मम माया दुरत्यया** इत्यत्र **देवी** महालक्ष्मीः [illegible]धर्नी **देवी** । तदभिमन्यमानेत्यर्थः ।

सोऽहम्भावमाश्रित्य मम शरणागतिरूपं दासोऽहम्भावमुपेक्षमाणाः पुरुषाः पञ्चमहापातकिनः मूढाः नरेष्वधमाः मायया प्रमुषिततत्त्वज्ञानाः केवलमसुराश्चेत्याह –

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

इति ।

ये तु सोऽहम्भावमुपेक्ष्य स्वसेवायामेव निरताः ते सोपाधिका वा निरुपाधिका वा भवन्तु, सर्वे सुकृतिन एवेत्याह–

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

इति ।

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे [1] मतः ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे(ऽ)मत** इत्यत्र एते सर्वे **उदाराः** उत्कृष्टाः । तत्रापि **ज्ञानी** अपरोक्षज्ञानी **आत्मैव** जीव एव मे तु विशेषेण **मतः** सम्मतः । यद्वा तत्रापि ज्ञानी तु एतेभ्योऽपि विशेषेण आत्मैव जीव एवेति मे मतः । मिथ्याज्ञानिनां नराधमत्वोक्तेः ज्ञानी नरश्रेष्ठ इत्यर्थः । ज्ञानी **आत्मैव** अहमेवेति तु मे **अमतः** मतो न । 'चतुर्विधा भजन्ते माम्', 'एकभक्तिर्विशिष्यते', 'स च मम प्रियः'

---

१. **'मतम्'** इति कुं. पाठः, उपलभ्यमानपाठश्च ।

इत्यादिना ज्ञानिनोऽपि भेदस्यैव मया प्रपञ्चनात् सर्वैक्यवादिनां ज्ञानिमात्रैक्यस्य अनभिमतत्वाच्चेति भावः । 'स च मम प्रियः' इत्युक्तत्वात् 'मम प्राणा हि पाण्डवाः' इतिवत् ज्ञानी **आत्मैव** मम देह एव, मम देहवत् प्रिय इति वा । ज्ञानी आत्मा अहमेवेति तु मे अमतः इति यदुक्तं तदेव स्पष्टयति –'आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' इति । **सः** ज्ञानी **अनुत्तमां गतिं** अनुत्तमगतिदातारं मामेव **आस्थितः** आश्रितः । आश्रयाश्रयिभावेन भिन्न इत्यर्थः । बहूनां जन्मनामन्तेऽपि **ज्ञानवान्** ज्ञानी मां प्रपद्यते एव, न तु तत्राप्यहमेव स भवति । किन्तु गन्तृगम्यभावेन भिन्न एव । किमु तदानीमिति भावः ।

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

**वासुदेवः सर्वमिति स महात्मा सुदुर्लभ** इत्यत्र 'अहं कृत्स्नस्य जगतः' इत्युक्तकृत्स्नजगत्स्रष्टृत्वं, 'मत्तः परतरं नान्यत्' इत्युक्तसर्वोत्तमत्वं, 'मयि सर्वमिदं प्रोतम्' इत्युक्तसर्वाधारत्वं, 'न मां दुष्कृतिनो मूढाः' इति 'चतुर्विधा भजन्ते माम्' इति चोक्तजीववैविध्यञ्चेति प्रमेयं सुदुर्लभः स महात्मा वासुदेवो वेद । **वा असुदेवः** [illegible] वेद । एकस्य मूलकर्तृत्वात् , एकस्य भाष्यकर्तृत्वादिति [illegible] । यद्वा, वेदेतिक्रियायाः अपरेणाप्यध्याहर्तव्यत्वात् पूर्वोत्तरभेद[illegible]नुसारेण यो न वेदेति क्रियाध्याहारे सर्वसामञ्जस्यं[1] [illegible] । वेदेत्यध्याहारेऽपि इति पूर्वोक्तप्रकारेण, 'सर्वं समाप्नोषि

---

१ सर्वसामञ्जस्यात् सो.मु.पा.

ततोऽसि सर्वः' इति गीतायामेवोक्तत्वात् , **सर्वं** सर्वव्यापि ब्रह्म । चिन्मात्रैक्यवादे जीवजडात्मकसकलप्रपञ्चैक्यस्य अयुक्तत्वात्, अत्रैवोक्तबहुभेदवचनेभ्यश्च उक्त एवार्थः । सर्वस्य वासुदेवत्वे सर्वेषां साम्यात् 'स ज्ञानी महात्मा' इत्युक्तमहत्त्वस्य, शुनामपि वासुदेवत्वेन 'सुदुर्लभः' इत्युक्तसुदुर्लभत्वस्य चायोगात्, अस्मिन्नेव श्लोके पूर्वोत्तरार्धयोरेव विरोधाच्च, अभिसरतः स्ववैरिणो वारयतीति वा अनुसरतः स्वभक्तान् वृणोतीति वा **सर्वः** । अत एव हि 'इदं ब्रह्म सर्वं खलु' इति श्रुतिरप्याह । तस्मान्न कश्चित्क्षुद्रोपद्रवः ।

[१]अन्यदेवताभजकस्य निन्दनाच्च सर्वस्य वासुदेवत्वमित्यापातप्रतीतार्थो न ममाभिप्रेत इति भावेनाह–

**कामैस्तैस्तैर्हृतज्ञानाः[२] प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

इति । **तैस्तैर्**देवैर्दीयमानकामैः **हतज्ञानाः** हतं **ज्ञानं** मम सर्वोत्तमत्वज्ञानं यैस्ते । कामोद्रेकात् श्रुतिमतमुल्लङ्घ्य अगम्यागमनगन्तृवत् अन्यदेवताभजनं कुर्वन्तीत्यर्थः । तं तं **नियमं** शैवादीनामपेक्षितं लिङ्गभस्मधारणादिनियमम् । **प्रकृत्या** आसुरादिप्रकृत्या ।

**यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति** इत्यत्र यां यां **तनुं** ब्रह्मशिवादीनां प्रतिमाम् ।

---

१. **अन्यदेवताभजनस्य** सो.मु.पा. ; २. '**-हृतज्ञानाः**' इति कुं पाठः ।

**स तया श्रद्धया युक्तस्तस्याराधनमीहते ।**
**लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥**

**लभते च ततः कामान् मयैव विहितान् हि तान्** इत्यत्र ततः अन्यदेवताभजनात् । मयैव विहितान् न तु तैस्तैर्देवैर्विहितान् । स्वाराधकफलदानशक्तिरपि तेषां नास्तीति भावः ।

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धय** इत्यत्र **अव्यक्तं** ब्रह्मादीनामदृश्यं मां, **व्यक्तं** सर्वजनैर्दृश्यं पाञ्चभौतिकदेहमापन्नं प्राप्तं ब्रह्मादिपिपीलिकान्तजीवं मन्यन्ते । अत एव अबुद्धयः अन्तवत्फलाश्च ।

जीवेभ्यः स्वस्य भेदे तेषामसर्वज्ञत्वं स्वस्य सर्वज्ञत्वं च प्रयोजकमित्याह –

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

इति ।

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥**

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् । ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रता** इत्यत्र **अन्तगतं** नाशं प्राप्तम् ।

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥**

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः । प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतस** इत्यत्र साधिभूताधि दैवं अधिभूताधिदेवैः सहितं तेषां हृदिस्थमित्यर्थः ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

## ॥ अथ त्रिंशोऽध्यायः ॥

**श्रीभगवानुवाच –**

**[1] अक्षरं ब्रह्म परमं [2] स्वभावाध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञितः ॥ ३ ॥**

**स्वभावाध्यात्ममुच्यते** इत्यत्र स्वभावेन **आत्मानं** जीवमधिकृत्य वर्तमानं जीवबहिःस्थितत्वादध्यात्ममित्युच्यते । **भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञित** इत्यत्र भूतानां **भावः** सत्ता, **उद्भवः** उत्पत्तिः तौ करोतीति स तथोक्तः । **विसर्गः** विशेषेण सर्गः आदिकालीनः सृष्टि-व्यापारः भगवतः कर्मसञ्ज्ञितः । 'किं कर्म' इत्यस्योत्तरमिदम् ।

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

---

१. कुं. ३२ अध्यायः ।

२. **'स्वभावोऽध्यात्ममुच्यते'** इति कुं. पाठः । अत्र शाङ्कररामनुजमध्वभाष्ये 'स्वभावोऽध्यात्मं' इत्येव पाठः दृश्यते ।

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् । अधियज्ञोऽहमेवात्र देहे देहभृतां वर** इत्यत्र **क्षरः** क्षरणात् क्षरशब्दवाच्यो जीवानां देहः **अधिभूतं** पञ्चमहाभूतान्यधिकृत्य वर्तमानत्वादधिभूतशब्दवाच्यः । **पुरुषो** जीवः **अधिदैवतम्** दैवतान्यधिकृत्य वर्तमानत्वात् यज्ञादिना देवप्रीतिकरत्वात् अधिदैवतमित्युच्यते । **अधियज्ञः** यज्ञमधिकृत्य वर्तमानत्वात् यज्ञ-भोक्तृत्वादिति यावत् अधियज्ञपदवाच्यः ।

**अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

**अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशय** इत्यत्र मयि **भावं** भक्तिं मयि सत्तां वा, मद्भावं स्वभावं सारूप्यं वा **मद्भावम्** ।

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्** इत्यत्र **तमसः** अज्ञानात् **परस्तात्** उपरि विद्यमानम् ।

**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् १०**

**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्** इत्यत्र प्राणमाकृष्य भ्रुवोर्मध्ये **निवेश्य,** श्वासनिरोधं कृत्वेत्यर्थः ।

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ ११ ॥**

**तत्ते पदं सङ्ग्रहेण प्रवक्ष्य** इत्यत्र पद्यते इति **पदम्**, गम्यं वस्तु ।

**आब्रह्मभवनाल्लोकाः[१] पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

**आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत** इत्यत्र महामेरुस्थितब्रह्मभवनपर्यन्तं पुनरावर्तिनः, पुनः पुनरावर्तन्ते इति पुनरावर्ताः संसारिणः तद्वन्तः **पुनरावर्तिनः** । महामेरुस्थितब्रह्मभवनात् अर्वाक् स्थितलोकेषु संसारिण एव तिष्ठन्ति, न तु मुक्ताः । तदुपरि मुक्ताश्चरन्ति, संसारिणोऽपि सन्ति । स्वलोके तु मुक्ता एव सन्तीति भावः ।

**अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसञ्ज्ञके ॥ १८ ॥**

**अव्यक्ताद् व्यक्तयः सर्वा प्रभवन्त्यहरागम** इत्यत्र **अव्यक्तात्** प्रकृतितत्त्वात् । **व्यक्तयः** प्राकृतदेहवन्तो जीवाः ।

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातन** इत्यत्र **तस्मात्**

---

१. **‘आब्रह्मभुवनात्’** इति कुं पाठः । ‘आब्रह्मभवनात्’ इति पाठः वेङ्कटनाथीये ब्रह्मानन्दगिर्याख्याने, तथा पुरुषोथमीयायाम् ‘अमृततरङ्गिण्यां’ स्वीकृतः । बहुभिः व्याख्यातृभिः ‘-भुवनात्’ इत्येव पाठः स्वीकृतः ।

भूतग्रामात् **अन्यः** भिन्नः **परः** उत्तमः **भावः** परमात्माख्यः पदार्थः अव्यक्तादप्यव्यक्तः ।

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया** इत्यत्र न विद्यते अन्यो विषयो यस्याः सा **अनन्या** तया ।

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन** इत्यत्र **सृती** मार्गौ ।

॥ इति त्रिंशोऽध्यायः ॥

## ॥ अथ एकत्रिंशोऽध्यायः ॥

[1] **राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्** इत्यत्र विद्यासु राजा **राजविद्या,** गुह्येषु राजा राजगुह्यम्, विद्याश्रेष्ठं गुह्यश्रेष्ठश्चेत्यर्थः । **प्रत्यक्षावगमं** योगिनां प्रत्यक्षेणावगमो यस्य तत् ।

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

---

१ ... ३३ अध्यायः ।

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि** इत्यत्र **अस्य** वक्ष्यमाणस्य ।

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्** इत्यत्र **योगं** [१] असङ्गत्वाख्योपायम् । योगशक्त्यैवेदमुक्तं, न तु मिथ्यात्वादिति भावः ।

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्** इत्यत्र 'मयाध्यक्षेण' इति वक्ष्यमाणत्वात् **मामिकां** मदधीनाम् ।

**मयाऽऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

**हेतुनानेन कौन्तेय जगद्विपरिवर्तत** इत्यत्र **वि** विशेषेण **परिवर्तते**, अनाद्यनन्तकालेऽपि परिवर्तते इत्यर्थः । कर्तुर्ममापि नित्यत्वात्, उपादानप्रकृतेरपि नित्यत्वादिति भावः ।

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

इत्यत्र **मानुषीं** मानुषशरीरवत् दृश्यमानाम् । **परं भावं** स्वभावं अनुभावं वा ।

---

१. **असङ्गाख्योपायम्** सो.मु.पा.

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥**

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥**

**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । महात्मनस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः** इत्यत्र राक्षसीं प्रकृतिं दैवीं प्रकृतिमिति वदन् देवः स्वभावादेव जीवानां द्वैविध्यमाह । **भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्** इत्यत्र अन्येषु मनो येषां न विद्यते ते **अनन्यमनसः**, एकान्तभक्ता इत्यर्थः ।

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

– इत्यत्र **एकत्वेन** स्वावतारगुणादिष्वेकत्वेन । **पृथक्त्वेन** जीव-जडात्मकात् प्रपञ्चात् पृथक्त्वेन । **बहुधा** श्रवणमनननिदिध्यासनादि-रूपेण, 'सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः । यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः' इति स्मृत्युक्तप्रकारेण बहुधा वा ।

जडैक्यस्य कैरप्यनङ्गीकारात् [१] 'अहं क्रतुः' इत्यादिस्ववचनाभिप्रायं स्वयमेवाह **गतिर्भर्ता प्रभुः साक्षी** इत्यादिना ।

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

---

१. भीष्म - ३३-१६

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन** ॥ १९ ॥

**सदसच्चाहमर्जुन** इत्यत्र **सत्** कारणम् । **असत्** कार्यम् ।

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्** ॥ २० ॥

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते** इत्यत्र तिस्रो **विद्याः** वेदविद्याः, तत्सम्बन्धिनस्**त्रैविद्याः** ।

**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते** ॥ २१ ॥

**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त** इत्यत्र काम्यते इति **कामो** विषयः तत्र कामो येषां ते तथोक्ताः ।

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते** ॥ २४ ॥

**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते** इत्यत्र सर्वयज्ञानां भोक्तृत्वेन प्रभुत्वेन च मां नाभिजानन्ति । इदमेवाभिप्रेत्य प्रागविधिपूर्वकमित्युक्तम् । **अतः** शिवादिपूजानां शिवाद्यन्तर्गतो हरिरेव भोक्ता हरिरेव प्रभुश्चेति ज्ञानाभावात् ।

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्** ॥ २७ ॥

इत्यत्र मयि अर्पणं यस्य तत् **मदर्पणम्** ।

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि** ॥ २८ ॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः** इत्यत्र **कर्मबन्धनैः** कर्मनिबन्धनैः । **सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि** इत्यत्र सम्यक् हरौ **न्यासः** स्वकृतकर्मणां समर्पणं **सन्न्यासयोगः** ।

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्** ॥ २९ ॥

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः** इत्यत्र तत्तत्कृतपुण्यपापादिकमतिक्रम्य लौकिकजनस्य[१] न द्वेष्यः, प्रियोऽपि न । तदेव दर्शयति **ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्** इति । इदञ्चोपलक्षणम् । ये तु द्विषन्ति ते मयि न, अहं तेष्वपि नेत्यपि द्रष्टव्यम् । अत एव पार्थादीनां परिग्रहः, कंसादीनां वधश्चेति भावः ।

दुराचारिणः कथं साधुत्वमित्यत आह – **क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति** इति ।

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति** ॥ ३१ ॥

॥ इति एकत्रिंशोऽध्यायः ॥

---

१. **लौकिकजनस्येव** इति पाठः युक्तो भाति ।

## ।। अथ द्वात्रिंशोऽध्यायः ।।

**[१] न मे विदुस्सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ।। २ ।।**

**न मे विदुः सुरगणाः प्रभवं न महर्षय** इत्यत्र **प्रभवं** प्रभावं सामर्थ्यम् ।

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ।। ६ ।।**

इत्यत्र चत्वारो मनवः प्रधानभूताः । मयि **भावो** भक्तिर्येषां ते **मद्भावाः** । **मानसाः** मनःप्रियाः । येषां **लोकः** जनः ।

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ।। ७ ।।**

इत्यत्र विशेषेण विशिष्टेषु **भूतिः** सन्निधानं यस्मात् तं **योगम्** उपायम् । सृष्टियोगेन समुच्चयार्थश्चशब्दः ।

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।। ११ ।।**

इत्यत्र **आत्मभावस्थः** आत्मनां जीवानां भावे चित्ते स्थितः ।

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ।। १४ ।।**

---

१. कुं. ३४ अध्यायः ।

**न हि ते भगवन् व्यक्तिं विदुर्देवानदानवाः** इत्यत्र **व्यक्तिम्** अवतारम् ।

**श्रीभगवानुवाच –**

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥**

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः** इत्यत्र [१] 'केषुकेषु च भावेषु चिन्त्योऽसि' इत्युक्तत्वात् सन्निधानमेव विभूतिः, न तु तैस्तैरैक्यम् ।

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः** इत्यत्र **आत्मा** परमात्मा । जडेभ्योऽपि चेतनेषु विशेषेण स्थिता विभूतिमूर्तिरियम् । **अहमादिश्च मध्यं च भूतानामन्त एव च** इत्यत्र **आदिः** सृष्टिकर्ता, **मध्यं** स्थितिकर्ता, **अन्तः** नाशकर्ता । वक्ष्यमाणविभूतिषु विष्णुकपिलव्यासवासुदेवरामाः पञ्च स्वरूपविभूतयः । अन्याः तेषु तेषु विशेषेण सन्निहितविभूतयः । सर्वैक्यवादिनां गणश्रेष्ठेन [२] एकैकेन ऐक्यकथनस्यासङ्गतत्वात् सन्निधानविशेषादेवेयमुक्तिरिति सर्वैरपि वक्तव्यम् । 'केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया' इत्युपक्रमाच्च ।

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

---

१. भीष्म ३४-१७ ; २. **गुणश्रेष्ठेन** सो.मु.पा.

**मरीचिर्मरुतामस्मि** इत्यत्र **मरीचिरिति** मरुत्सु श्रेष्ठस्य कस्यचिन्नाम ।

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

**भूतानामस्मि चेतना** इत्यत्र **चेतना** ज्ञानम् ।

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

**गिरामस्म्येकमक्षरम्** इत्यत्र **एकमक्षरम्** ओङ्कारः ।

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥**

**द्वन्द्वः सामासिकस्य च** इत्यत्र **सामासिकस्य** समस्तसम्बन्धिनो व्यापारस्य ।

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**

**कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा** इत्यत्र कीर्त्यादीनि सप्त कीर्त्याद्यभिमानिभूतश्रियो रूपाणि नारीणां मध्ये श्रेष्ठानि ।

उक्तस्ववचनानां स्वयमेवाभिप्रायमाह **न तदस्ति विना यत्स्यान्मया भूतं चराचरम्** इति ।

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यात् मया भूतं चराचरम् ॥ ३९ ॥**

**यत्** चराचरं स्यात् तत् मया विनाभूतं नास्ति । किन्तु सर्वं मया अविनाभूतं व्याप्तम् । तत्र श्रेष्ठेषु विभूतिरूपेण तिष्ठामीति भावः ।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ४१ ॥**

इत्यत्र मम तेजोंऽशात् **सम्भवः** सम्यक् भवः महिमा यस्य ।

॥इति द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**नमः[1] पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ४०**

'नमोऽस्तु ते सर्वत एव सर्व' इति स्वोक्तसम्बुद्धेः स्वयमेवार्थमाह – **सर्वं समाप्नोषि ततोऽसि सर्व** इति ।

**अर्जुन उवाच –**

**दृष्ट्वेवं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः** इत्यत्र **संवृत्तः** सम्यक् चित्तवृत्तिमान् । । इति त्रयस्त्रिंशोऽध्यायः ।

---

१. कु. ३५ अध्यायः ।

## ।। अथ चतुस्त्रिंशोऽध्यायः ।।

**अर्जुन उवाच –**

**एवं[1] सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ।। १ ।।**

इत्यत्र **अक्षरम्** अक्षरनामकम्, **अव्यक्तम्** अव्यक्तसञ्ज्ञं श्रीतत्त्वम् ।

**सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ।। ४ ।।**

**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रता** इत्यत्र ते श्रियमुपास्य तद्द्वारा मदुपासकाः ।

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।। ५ ।।**

इत्यत्र ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनात् क्लेशः अधिकतरः । **दुःखं** दुःखं यथा भवति तथा, लक्ष्मीप्रीत्यर्थं देहदण्डनादितपःकरणात् ,पुनः मत्प्रीत्यर्थञ्च करणात् । **अव्यक्ता** अव्यक्तद्वारा सम्पादिता । तर्हि कुत एवं कुर्युरिति चेत्, तथा तेषां योग्यता, किञ्चिदैहिकाशापूर्वकं परलोके आशावन्तश्च ।

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ।। १० ।।**

---

१. कुं. ३६ अध्यायः ।

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव** इत्यत्र **मत्कर्म** मम पूजादिकर्म ।

**अथैदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्** इत्यत्र सर्वकर्मणां यत् **फलं** स्वर्गधनकनकादिकं, तत्राशां न कुरु । वैराग्यमेव कुर्वित्यर्थः ।

**श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

इत्यत्र **अभ्यासात्** शुष्कवेदाभ्यासात् । **ज्ञानं** श्रवणमननाभ्यां वेदार्थावधारणम् । **शान्तिः** बुद्धेर्मन्निष्ठता ।

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

**उदासीनो गतव्यथ** इत्यत्र **उदासीनः** विषयेष्वासक्तिरहितः ।

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

**शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः** इत्यत्र **शुभं** ·ाम्यशुभम् ।

॥ इति चतुस्त्रिंशोऽध्यायः ॥

* * *

## ।। अथ पञ्चत्रिंशोऽध्यायः ।।

**अर्जुन उवाच –**

**पुरुषं[१] प्रकृतिं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ।। १ ।।**

इत्यत्र **प्रकृतिं** मूलक्षेत्रम् । यत्र [२]लिङ्गदेहात्मना प्रकृतेर्विकाररूपं देह्यात्मना पुरुषस्य विकारजनकं **क्षेत्रम्** । **क्षेत्रज्ञं** पुरुषपदेन जीवस्य पृथग्गृहीतत्वात् जीवस्य हृदयकमले स्थित्वा क्षेत्रसञ्ज्ञितयोस्तयो-रुभयोरपि विकारान् साक्षितया पश्यन्तम् । ज्ञानम् । **ज्ञेयं** तस्य ज्ञानस्य विषयभूतं मोक्षदायकं परमात्मानम् । एतद्वेदितुमिच्छामीति सर्वत्र सम्बन्धः । प्रकृतिम् । **पुरुषं** जीवम् । **क्षेत्रं** मूलकारणत्वेन जीवरूपतया च प्रागुक्तयोरेव प्रकृतिपुरुषयो[३]र्विक्रियमाणतया विकाराभिमानितया च क्षेत्रेऽपि प्रवेशेन क्षेत्रनिरूपणस्यापि तन्निरूपणरूपत्वात् प्रकृतिपुरुषविकाररूपक्षेत्रस्य महासंसारहेतुतया ज्ञानिनामत्यन्त-रिपुत्वाच्च तत्रैव [४]वैराग्योत्पादनाय [५]जडाजडात्मकसकलजगत्सङ्ग्राहकं क्षेत्रमेव । पुरुषपदेन जीवस्य पृथगुक्तत्वात् क्षेत्रज्ञः कः इति शङ्कां परिहरति– **क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत** इति । [६]स्वमुखं स्वपृष्ठं [७]स्वदेहान्तश्च या स्थितिस्तामजानन् स्वोदरमात्रदर्शी जीवः अत्र न क्षेत्रज्ञः । किन्तु देहिनां हृत्कमलमध्ये स्थित्वा अन्तर्बहिः सर्वञ्च

---

१. कुं. ३७ अध्यायः । 'प्रकृतिं पुरुषं' इति कुं.पाठः ।
२. **लिङ्गे देहात्मना** सो.मु.पा. ; ३. **विक्रियमाणयोः** सो.मु.पा.
४. **वैराग्योत्पादनात्** सो.मु.पा.; ५. **जडाजडात्मकं** सो.मु.पा.
६. **स्वरूपं** सो.मु.पा.; ७. **स्वदेहान्तस्थतया स्थितिमत्तामजानन्** सो.मु.पा.

पश्यन् स्वयमेव क्षेत्रज्ञः । अन्यथा सुषुप्तिदशायां क्षेत्रज्ञाभावात् देह-निपातप्रसङ्गः । किञ्च जीवस्यैव क्षेत्रज्ञत्वे [१] इन्द्रावतारतया जीव-श्रेष्ठस्यार्जुनस्य सुतरां क्षेत्रज्ञानावश्यम्भावेन 'एतद्वेदितुमिच्छामि' इति प्रश्नायोगाच्चेति भावः ।

क्षेत्रस्वरूपपर्यालोचनायामपि जीवानां क्षेत्रज्ञत्वमसम्भावितमिति भावेनाह–

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥**

इति । तत्क्षेत्रं **यत्** यैर्विशेषैर्भरितं, पाञ्चभौतिककरचरणादिमात्रं वा क्षेत्रं इन्द्रियैः इन्द्रियार्थैः पञ्चभूतादिभिश्च सह वा इत्येतच्छृणु । **यादृक्** बहिर्यादृक् अन्तर्यादृक् तच्छृणु । **यद्विकारि** यैर्विकारैर्भरितं तच्छृणु । यत् क्षेत्रे यदुत्पन्नं यद्यद्वस्तु भागशो विद्यते तत् यत उत्पन्नं [२] तच्छृणु । **स** च क्षेत्रज्ञः परमात्मा, **यः** स्थूलरूपेण यः, यत्प्रभावश्च यादृशसामर्थ्यवान् तच्च शृणु । 'यत्' इत्यस्य 'महाभूतानि' इत्यारभ्य 'सङ्घातश्चेतना धृतिः' इत्यन्तं सकलमप्युत्तरम् । (महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।) 'एतत्क्षेत्रम्' इति सर्वस्यापि क्षेत्रत्वकथनात् एतावद्विशेषभरितं क्षेत्रं जीवः कथं जानातीति भावः । यतश्च यदित्यस्योत्तरं अव्यक्तं महाभूतानीति । अव्यक्तात् पञ्चमहाभूतानि, पञ्चमहाभूतेभ्यः देहस्थपार्थिवजलादिभागा इत्यर्थः । अहङ्कारः बुद्धिः एकं मनश्च अन्तः, दशेन्द्रियाणि इन्द्रियगोचराः पञ्च

---

१. इन्द्रावतारितया सो.मु.पा. ; २. तच्च श्रुणु सो.मु.पा.

बहिरिति 'यादृक् च इत्यस्योत्तरम् । 'यद्विकारी' इत्यस्योत्तरम् – **इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः** इति । **सङ्घातः** अभिमानितया जीवस्य देहेन सह सम्बन्धः । **चेतना** ज्ञानम् । **धृतिः** देहधारणम् । क्षेत्रज्ञस्यैव मुमुक्षुभिर्ज्ञेयत्वात् 'स च यो यत्प्रभावश्च' इत्यस्य ज्ञेयकथनेनैवोत्तरं भवष्यतीति मत्वा ज्ञानविस्तारमाह – **अमानित्वमदम्भित्वम्** इत्यादिना । यावन्ति ज्ञानस्य कारणानि यावन्ति च ज्ञानस्य कार्याणि तत्सर्वं ज्ञानपदेनैवोच्यते इति भावः । अत एव 'एतद्वेदितुमिच्छामि' इति ज्ञानस्यापि ज्ञानप्रश्नः ।

अधुना ज्ञेयस्वरूपं सविस्तरं वक्तुमारभते– **अनादिमत्परं ब्रह्म** इत्यादिना ।

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते** ॥ १३ ॥

जीवनियामकतया हृद्गतं रूपं, मोक्षदायकतया व्याप्तं रूपञ्चेति रूपद्वयमपेक्ष्य क्षेत्रज्ञं ज्ञेयमिति च भगवतो द्विर्ग्रहणम् । **अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते** इत्यत्र 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते' इति वचनात् **सत्** मूर्तं, **असत्** अमूर्तम् ।

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च** ॥ १९ ॥

– इत्यत्र **सर्वेन्द्रियगुणाभासं** सर्वेषां जीवाना**मिन्द्रियाणि** प्राकृतेन्द्रियाणि, **गुणान्** प्राकृतरूपरसादिगुणांश्च **आ** सम्यक् भासयतीति तत्तथोक्तम् । **सर्वेन्द्रियविवर्जितं** सर्वेषामिन्द्रियैः

प्राकृतेन्द्रियैः, उपलक्षणञ्चैतत्, प्राकृतगुणैश्च विवर्जितम् । सर्वथा इन्द्रियवर्जितत्वे 'सर्वतः पाणिपादं तत्' इत्यादिनिरवकाशोपक्रमवाक्यविरोधः । **निर्गुणं** सत्त्वादिगुणरहितम् । **गुणभोक्तृ** स्वरूपभूतानन्दादिगुणभोक्तृ । सर्वथा गुणाभावपरिहाराय गुणभोक्तृ चेत्युक्तम् ।

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥**

**अविभक्तं तु भूतेषु विभक्तमिव च स्थितम्** इत्यत्र भूतेषु अविभक्तम् पृथक्पृथग्भूतेषु स्थितावपि **अविभक्तं** स्वस्मिन् भेदरहितम् । भूतेषु प्राणिष्वित्याधारतया जीवानां कथनात् जीवभेदोऽस्त्येव । 'यदा भूतपृथग्भावमेकस्थम्' इति एकपदोक्तब्रह्मणि जीवभेदस्य स्पष्टं वक्ष्यमाणत्वाच्च । तथापि भेदप्रतिनिधिविशेषबलात् विभक्तमिव स्थितम् ।

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥**

**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्** इत्यत्र **ज्ञानं** ज्ञानरूपकरचरणादिमत् । **सर्वस्य** जीवसमूहस्य ।

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १९ ॥**

**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते** इत्यत्र **मद्भावाय** मयि [illegible] ।

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ २० ॥**

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि** इत्यत्र पुरुषपदेन जीवोऽपि कथ्यते । परमात्मनः पृथगनुक्तेः सोऽपि कथ्यते, अनादित्वस्य तत्रैव मुख्यत्वात् । **विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्** इत्यत्र **विकारान्** [१] महदादीन् । **गुणान्** सत्त्वादीन् ।

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥**

**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते** इत्यत्र **पुरुषो** जीव एव, सुखदुःखभोक्तृत्वस्य परमात्मन्यसम्भवात् ।

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥**

– इत्यत्र **प्रकृतिस्थः** प्राकृतदेहस्थः । **गुणसङ्गः** सत्त्वादिगुणसङ्गः । **अस्य** जीवस्य ।

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २३ ॥**

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः** इत्यत्र **उपद्रष्टा,** उप समीपे **द्रष्टा** साक्षी ।

**यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २७ ॥**

---

१. महदहमादीन् सो.मु.पा.

– इत्यत्र **क्षेत्रं** [१] क्षेत्रस्थानीयाप्रकृतिः । **क्षेत्रज्ञः** क्षेत्रकर्षणादिकुशल-कृषीवलवत् प्रकृतेर्देहात्मना विकारं प्रापयन् परमात्मा । तत् बीजाज्जाय-मानाङ्कुरजन्मवत् रेतसा विक्रियमाणस्थावरजङ्गमजन्म ।

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ ३० ॥**

– इत्यत्र **प्रकृत्या** जीवानां सात्विकराजसतामसादिस्वभावेन तैस्तैर्जीवैः क्रियमाणानि **कर्माणि** पुण्यपापमिश्रकर्माणि यः पश्यति । तथा आत्मान**मकर्तारं** प्रकृत्यैव कर्म कुर्वतां जीवानां [२] परतन्त्रतया नियामकसापेक्षत्वात् प्रकृतेर्नियमनमात्राय तद्हृदि स्थितावपि तेषु [३] रागद्वेषादिदोषवशात् कर्ता न भवतीत्यकर्ता, तम् । अत एव 'प्रकृतिस्त्वां नियोक्ष्यति' इति वक्ष्यति ।

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३१ ॥**

– इत्यत्र **एकस्थम्** एकस्मिन् परमात्मनि स्थितम् । **भूतपृथग्भावं, भूतानां** जीवानां **पृथग्भावं** भेदम् । **ततः** परमात्मन एव । **विस्तारं** जीवजडात्मकप्रपञ्चविस्तारम् ।

**अनादित्वात् निर्गुणत्वात् परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३२ ॥**

– इत्यत्र अनादित्वात् देहेन सह जायमानजीववत् जीवदेहजन्मनि

---

१. क्षेत्रस्थानीयं सो.मु.पा. ; २. **परमतन्त्रतया** सो.मु.पा.
३. रागद्वेपादिविशेपवशात् सो.मु.पा.

स्वस्यजन्माभावात्, त्रिविधजीववत् सत्वादिगुणरहितत्वाच्च परमात्मा न करोति, **न लिप्यते** जीवदेहजन्मनि स्वस्य जन्माभावेन पापकर्तृ-जीवदेहस्य [१]स्वदेहत्वाभावात् तत् पापकर्म च परमात्मनो न । अत एव तेन पाप्मना न लिप्यते च । न हि क्रूरपुरुषेण स्वदोष्णा कस्यचित् कपोले [२]ताड्यमाने शान्तोऽपि ताडयिता वा ताडनफलभोक्ता वा भवेत् । न वा शिष्यविद्याप्रेरको गुरुः शिष्ययोर्विवादे विवादी, नापि तयोः पराजये सति पराजयीति भावः ।

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत** ।। ३४ ।।

– इत्यत्र **क्षेत्री** क्षेत्रनियामकः ।

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्** ।। ३५ ।।

– इत्यत्र **क्षेत्रक्षेत्रज्ञयोः क्षेत्रस्य** जीवजडात्मकप्रपञ्चस्य, **क्षेत्रज्ञस्य** परमात्मनश्चेत्युभयोः । **भूतप्रकृतिमोक्षं** च भूतानां परमात्मनः कृपया प्रकृतेः सकाशात् मोक्षञ्च ये विदुः ते **परं** नारायणं यान्ति ।

।। इति पञ्चत्रिंशोऽध्यायः ।।

## ।। अथ षट्त्रिंशोऽध्यायः ।।

[३]**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत** ।। ३ ।।

---

१. स्वदेहाभावात् सो.मु.पा. ; २. ताड्यमानशान्तोऽपि सो.मु.पा.
३. कुं. ३८ अध्यायः ।

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्** इत्यत्र **योनिः** भार्या । **महद्ब्रह्म** 'बृह[1] जीवकमलासनशब्दराशिषु' इत्यनुशासनात् वेदमुख्या-भिमानितया महद्ब्रह्मपदवाच्या महालक्ष्मीः ।

**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

– इत्यत्र **मूर्तयः** देवर्ष्यादीनां या मूर्तयः सम्भवन्ति तासां महद्ब्रह्म महालक्ष्मीः **महद्योनिः** ।

**तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

– इत्यत्र **सत्त्वं** सत्त्वगुणः **सुखसङ्गेन** प्राकृतसुखसङ्गेन । **ज्ञान-सङ्गेन** प्राकृतज्ञानसङ्गेन ।

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

**कर्मसङ्गेन देहिनम्** इत्यत्र **कर्मसङ्गेन** काम्यकर्मसङ्गेन ।

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**
**सर्वद्वारेषु देहेऽस्मिन् [2] प्रकाशमुपजायते ।**
**ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥ ११ ॥**

---

१ जातिजीवकमलासनशब्दराशिषु, जीवराशिकमलासनशब्दराशिषु सों.मु.पा
२ 'प्रकाश उपजायते' इति कुं.पाठः ।

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा । सर्वद्वारेषु देहेऽस्मिन् प्रकाशमुपजायते** इत्यत्र **सर्वद्वारेषु** घ्राणरसनादिनवद्वारेषु, सत्त्वमेव **भवति** प्रबलं भवति । अयमुत्तमानां स्वभावः । रजः सत्त्वं चाभिभूय प्रकाशं स्पष्टं यथा भवति तथा सर्वद्वारेषु तम एवोपजायते । अयमधमानां स्वभावः । तथा तमः सत्त्वं चाभिभूय सर्वद्वारेषु प्रकाशं स्पष्टं यथा भवति तथा रज एवोपजायते । अयं मध्यमानां स्वभावः ।

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा** इत्यत्र **कर्मणां** काम्यकर्मणामारम्भ इति सम्बन्धः ।

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥**

**तदोत्तमविदां लोकानमलान् प्रतिपद्यते** इत्यत्र **उत्तमविदाम्** उत्तमज्ञानिनाम् ।

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्** इत्यत्र **सुकृतस्य** कर्मणः निर्मलं यत् फलं सुखं तत् **सात्त्विकं** सत्त्वगुणोत्पन्नम् ।

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥**

– इत्यत्र **गुणेभ्यः अन्यं** उक्तविधया सत्त्वादिगुणेभ्यो भिन्नं नारायणं **कर्तारं** स्वस्य सुखदुःखकर्तारं **द्रष्टा** जीवः यदा **नानुपश्यति**, जीवस्वभावभूतसत्त्वादिगुणा एव जीवान् सुखयन्ति दुःखयन्ति च, तस्माज्जीवस्यैवायमपराधो न हरेरिति यः पश्यतीत्यर्थः । तं नारायणं गुणेभ्यः **परं** उत्तमं, सत्त्वादिगुणविधुरमित्यर्थः । **मद्भावं** मयि भक्तिम् ।

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते** ॥ २० ॥

– इत्यत्र गुणानेतान् **अतीत्य** हरेरनुग्रहादतीत्य ।

**श्रीभगवानुवाच—**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति** ॥ २२ ॥

**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति** इत्यत्र **सम्प्रवृत्तानि** यदृच्छया प्राप्तानि एतानि प्रकाशादीनि न द्वेष्टि, न काङ्क्षति ।

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते** ॥ २३ ॥

**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते** इत्यत्र गुणा वर्तन्ते स्वस्वकार्येषु ।

**माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते** ॥ २६ ॥

– इत्यत्र **ब्रह्मभूयाय** ब्रह्मत्वाय, 'बृह वृद्धौ' इति धातोः, 'ब्रह्माणि

जीवाः सर्वेपि'इति वचनाच्च स्वयोग्यसुखपूर्णमुक्तत्वाय । 'युजिर् योगे'धातोः, सदा ब्रह्मसम्बन्धाख्यब्रह्मसायुज्याय वा । 'स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि'[१] इत्यमरः ।

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥**

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च** इत्यत्र **ब्रह्मणः** पूर्णसुखरूपमुक्तजीवस्य **प्रतिष्ठा** आधारः । **अमृतस्य** मोक्षस्य । 'ब्रह्मणोऽहं प्रतिष्ठा' इत्युक्तेः 'ब्रह्मभूयाय' इत्युक्तं ब्रह्मत्वमपि पूर्णसुखरूपमुक्तजीवत्वमेव ।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

[२]**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

– इत्यत्र **ऊर्ध्वमूलम्** ऊर्ध्वाः महत्तत्त्वादप्युपरितनाः सत्त्वादिगुणाः मूलं यस्य तम् । **अधःशाखम्** अधः **शाखाः** शाखास्थानीयाः [३]देवर्षिमनुष्यपशुपक्षिदैत्यदानवादिरूपनानायोनयो यस्य तम् । **अश्वत्थं** श्वो न तिष्ठतीत्यश्वत्थः संसाराख्यवृक्षः, तम् । **छन्दांसि** वेदाः । **पर्णानि** पत्रस्थानीयानि ।

---

१. अ.को. २-७-५१ ; २. कुं. ३९ अध्यायः ।
३. देवर्षिमनुष्यपितृपक्षि सो.मु.पा.

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥२॥**

– इत्यत्र **ऊर्ध्वं** सत्यलोकमारभ्य मानुषलोकपर्यन्तम्, **अधः** मानुषलोकमारभ्य पाताललोकपर्यन्तं च प्रसृताः । **गुणप्रवृद्धाः** रूप-रसादिगुणैः प्रवृद्धाः । **गुणो** विषयानुभवः तज्जन्यं सुखं वा । **विषय-प्रवालाः** स्रक्चन्दनादिविषयाख्यप्रवालवन्तः । **अधश्च** शाखायाः सन्धौ सन्धौ **मूलानि** गुणत्रयाख्यमूलानि **कर्मानुबन्धीनि**, **कर्माणि** पुण्य-पापमिश्ररूपकर्माणि **अनु** उत्तमाधममध्यमजीवानां योग्यतामनुसृत्य बध्नातीति तानि तथोक्तानि । सत्यादिपाताललोकपर्यन्तं गुणत्रयानु-बन्धेनैव जीवानां प्रवृत्तेरिति भावः ।

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

**ततः परं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा** इत्यत्र **अस्य** [१] संसारवृक्षस्य । **रूपम्** ईदृशं रूपम् । **अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा । ततः परं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः** इत्यत्र **असङ्गशस्त्रेण** वैराग्याख्य-शस्त्रेण । **ततः परं** वृक्षच्छेदानन्तरम् । **तत्** नारायणाख्यं परं ब्रह्म । **तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी** इत्यत्र तमेव

---

१ संसारविपवृक्षस्य सो.मु.पा.

पुरुषं प्रपद्ये इति मनसि निश्चित्य तत् परिमार्गितव्यमिति पूर्वेण सम्बन्धः ।

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥**

**निर्मानमोहा जितसङ्गदोषा** इत्यत्र निर्गतौ मानमोहौ येभ्यस्ते **निर्मानमोहाः** ।

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

इत्यत्र जीवविषयत्वे स्पष्टोऽर्थः । परमुखमुद्रणार्थं परमात्मविषयतयैव योजना क्रियते । 'दशार्थाः सर्वभारते' इति हि प्राच्यः । **यत्** यदा शरीरं **आप्नोति** जीवः उत्पत्तिसमये प्राप्नोति तदा **जीवभूतः** जीवेषु भूतः 'भू सत्तायाम्' इति धातोः सन्निहितः ममैवांशः **प्रकृतिस्थानि** जडप्रकृतौ स्थितानि मनःषष्ठानि **इन्द्रियाणि** ज्ञानेन्द्रियाणि **कर्षति** आकर्षति जीवशरीरं प्रत्याकर्षति । प्रकृतेराकृष्य परिणम्यमानजीवदेहे पञ्चमे मासि चक्षुरादीन्द्रियस्थानेषु परिणामयतीत्यर्थः । **यत्** यदा जीवः शरीरम् उत्क्रामति च तदापि ईश्वरः **आशयात्**[1] पुष्पाद्याश्रयात् वायुः गन्धानिव एतानिन्द्रियाणि गृहीत्वा सूक्ष्मरूपेण लिङ्गदेहे गृहीत्वा संयाति । सूक्ष्मरूपेण नयतीति सूचनाय 'वायुर्गन्धानिव' इत्युक्तम् ।

१. **आश्रयात्** सो.मु.पा

'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते', 'न च मां तानि कर्माणि निबध्नन्ति धनञ्जय','उदासीनवदासीनमसक्तं तेषु कर्मसु' इत्यादि-निरवकाशोक्तेः अस्मदुक्त एवार्थः । जीवो भूत्वा ईश्वर एव संसरती-त्यर्थस्तु न मनसाऽपि स्मर्तुं योग्यः , अत्रैवोक्तेश्वरपदविरोधात् । कललान्तःस्थितनिश्चेष्टजीवस्य प्रकृतिस्थेन्द्रिय-कर्षणासामर्थ्याच्चा-स्मदुक्तरीत्या जीवसन्निहितसमर्थेश्वरस्यैवेदं सृष्टिसंहारकौशलमिति ज्ञेयम् ।

**श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

इत्यत्र **अयं** परमात्मा **अधिष्ठाय** चक्षुरादीन्द्रियेषु व्याप्य विषयान् उपपन्नतया सेवते । सुखरसमेव भुङ्क्ते, न तु कदापि दुःखमित्यर्थः ।

**उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

इत्यत्र **उत्क्रामन्तं** स्वोत्क्रमणसमये स्वैः सह उत्क्रामन्तम्, **स्थितं** स्वस्थितौ स्थितम्, **भुञ्जानं** स्वैः सह सारभागं भुञ्जानं वा, **गुणान्वितं** आनन्दादिगुणान्वितम् अणिमाद्यष्टैश्वर्यसम्पन्नं वा परमात्मानं विमूढा नानुपश्यन्ति ।

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**

इत्यत्र गां भूमिम् । **सोमो भूत्वा** गामाविश्येतिवत् सोमाविष्टो [illegible] ।

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित** इत्यत्र **वैश्वानरः** वैश्वानराग्नौ सन्निहितत्वात् वैश्वानरनामकः ।

आपातत ऐक्योक्तिवत् प्रतीयमानस्ववचनानां स्वयमेवार्थमाह –

**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनश्च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

इति ।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

इत्यत्र लोके **इमौ** विद्वत्प्रसिद्धौ क्षरश्चाक्षरश्चेति द्वौ पुरुषौ चेतनौ स्तः । तत्र शरीरक्षरणात् सर्वाणि भूतानि सकलप्राणिसमूहः क्षर इत्युच्यते । मुक्तानामपि संसारदशायां शरीरक्षरणात् क्षरपुरुषेष्वेवान्तर्भावः । क्षरः इति तु जातावेकवचनम् । सर्वाणि भूतानीति भगवतैव स्पष्टं व्याख्यातत्वात् देहः क्षरः इति व्याख्या अपव्याख्या । भूतशब्दस्य प्राणिष्वेव रूढत्वात् । नित्यमुक्ततया कदाचिदपि देहक्षरणाभावात् कूटस्थपदवाच्या लक्ष्मीः अक्षरः पुरुष इत्युच्यते । पुंल्लिङ्गदारपदवाच्यजायावत् पुंवच्छक्तिमती श्रीश्च क्वचित् पुंलिङ्गेनोच्यते । निर्विकारार्थकूटस्थशब्दस्य सविकारेषु जीवेष्वसम्भवात्

परमात्मनः पृथगुक्तेः, प्रकृतिलक्ष्मीनारायणाख्येषु त्रिष्वक्षरेषु मध्यमाक्षरपदवाच्यतया प्रसिद्धा श्रीरेव कूटस्थपुरुषः । **तु** विशेषेण क्षराक्षरपुरुषयोर**न्यः** अत्यन्तभिन्नः उत्तमः पुरुषः । लोकत्रयनाशेऽपि नाशरहितत्वात् 'अव्ययः' इत्युक्तम् । तच्च ईश्वरत्वाद्धटत इति सूचनाय ईश्वर इत्युक्तम् ।

'परमात्मेत्युदाहृतः' इति परोक्षतया निर्देशात् स्वयमुत्तमः पुरुषो नेति वारयितुमाह –

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥**

इति । क्षरम् **अतीतः** अतिक्रम्य स्थितः, क्षरादुत्तम इति यावत् । **लोके** च विद्वज्जने पौरुषेयागमे वा । एषः परोक्षतया निर्दिष्टः स परमात्मापि स्वयमेव । आत्मनोश्चेतनयोः क्षराक्षरपुरुषयोः परम इति व्युत्पत्त्या क्षराक्षरपुरुषयोरात्मानात्मत्वशङ्कां व्यावर्तयितुं स्वस्य तदुभयो-त्तमत्वमनुभावयितुं च परमात्मपदप्रयोग इति भावः ।

इतश्च पुरुषोत्तमत्वं व्यावहारिकमिति शङ्कां निवारयितुमाह–

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥**

इति । **एवं** पूर्वोक्तव्युत्पत्त्या, नत्वश्वकर्णादिशब्दवत् सङ्केत-मात्रेणेत्यर्थः । **असम्मूढः** सम्मोहरहितः । व्यावहारिकावस्थाया मायामयत्वेन सम्मोहरूपत्वात् 'असम्मूढः' इत्युक्त्या तद्राहित्यमेवोक्तं भवति । जडदेहादेर्नश्वरतया, क्षराक्षरभेदेन द्विविधचेतनयोर्भृत्यतया, स

वस्य उत्तमतया च ज्ञानात् 'स सर्ववित्' इत्युक्तम् । **सर्वभावेन** सर्वेण भावेन चेष्टापरपर्यायप्रकारेण, सर्वप्रकारेणेत्यर्थः । सर्वमनोवृत्त्या वा । पूर्वोक्तप्रमेयमनुसृत्य सर्वोत्तमपदार्थरूपतयेति वा अर्थः । शाकपार्थिवादिव्यपदेशेषु मध्यमपदलोपस्य बहुलमुपलम्भात् प्रागुक्तसर्वोत्तमत्वोपलक्षितसमस्तमद्गुणानां भावेन । असम्मूढपदसूचितसत्तया वा । 'भावः पदार्थे सत्तायां चेष्टाभिप्रायजन्मसु' इत्यमरः । मां **भजति** सेवते, सर्वोत्तमत्त्ववेदनमेव महती सेवेत्यर्थः । सर्वभावेन सर्वरूपत्वेन मां भजतीत्यर्थस्तु 'भज सेवायाम्' इति धातुविरुद्धत्वात् पूर्वश्लोके पूर्वार्धे चोक्तसर्वोत्तमत्त्वविरुद्धत्वाच्च महाननर्थ एव ।

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥**

**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत** इत्यत्र **बुद्धिमान्** अपरोक्षज्ञानि । **कृतकृत्यो** मुक्तः ।

॥ इति सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**श्रीभगवानुवाच–**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**[1]
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः** इत्यत्र **सत्त्वं** चित्तं, तस्य संशुद्धिः ।

---

१. कुं. ४० अध्यायः ।

**दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

**दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता** इत्यत्र **निबन्धाय** नितरां बन्धो दुःसम्बन्धः अन्धन्तमः, तस्मै ।

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ ८ ॥**

इत्यत्र **असत्यं** मिथ्याभूतम् । **अप्रतिष्ठम्** अन्ते प्रतिष्ठारहितं, ज्ञानबाध्यमित्यर्थः । **अनीश्वरं** सर्वाभेदवादित्वादीश्वररहितम् । **अपरस्परसम्भूतं** मृत्पिण्डात् घटः, तन्तोः पट इत्यादिरूपेण परस्परं कार्यकारणभावरहितम् । **किं** किन्तर्हि, **कामहैतुकं, कामः** स्वेच्छानुसारेण परिकल्पितमज्ञानं, स एव **हेतुः** कारणं यस्य तत् कामहैतुकम् । ब्रह्माश्रिताज्ञानमेव घटपटादिजगदाकारेण परिणमते, न तु तत्तदवयवपरम्परया आदिसृष्टौ तत्तत्कार्यमुत्पद्यते इति वदन्तीति भावः । यद्वा का पुरुषः इत्यादाविव कुत्सिता **अमा** अज्ञानं यस्य तत् **कामं** अज्ञानशबलं ब्रह्म, तद्धेतुकमिति वा । **अन्यत्** सदसतोरन्यत् इति भावः ।

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥**

**मोहाद् गृहीत्वाऽसद्ग्रहान् प्रवर्तन्तेऽशुचिव्रताः** इत्यत्र **असद्ग्राहान्** दुराग्रहान् ।

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥**

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः** इत्यादौ आशा-पाशादयस्तु परापरतत्त्वद्रोहमूलाः । सांसारिकदोषाश्च तेष्वेवाभ्य-धिका इति भावः ।

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥**

**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी** इत्यत्र ईश्वरः जगदीश्वरः, अहं मदभिन्नः । मत्तोऽन्यो जगदीश्वरो नास्तीति वदन्ति । परतत्त्वविचारे अहं ब्रह्मेति वादिनः, अपरतत्त्वविचारे जगन्मिथ्यात्व-वादिनः आसुरा इति फलितार्थः ।

**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः** इत्यत्र आत्मदेहे प्रद्वेषो नाम मम ब्रह्मरूपत्वात् मया अनुभूयमानं दुःखादिकं हरेरेवेति स्वदोषाणां भगवत्यारोपणम् । परदेहेषु प्रद्वेषो नाम तेषां सर्वेषां ब्रह्मत्वाभिमानेन तत्तद्दोषाणां हरावारोपणम् ।

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**
**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यांत्यधमां गतिम् ॥ २० ॥**

इत्यत्र संसारे अजस्रं **क्षिपामि,** 'क्षिप निरसने' इति धातोः निरस्तज्ञानादिगुणान् करोमि । 'अजस्रं क्षिपामि, आसुरीष्वेव योनिषु, मूढा जन्मनिजन्मनि' इत्युक्त्या आसुरस्वभावानां जीवानां संसारदशायां नियमेनाधमयोनिष्वेवोत्पत्तिः, मिथ्याज्ञानद्वेषादिदोषाणां जन्मनि जन्मनि अभिवृद्धिरेव भवति, अतस्ते तमः साधनेष्वेव निरताः, मोक्षसाधनप्रयत्नस्त्वष्टमरसायित एव तेषामिति नियमप्रतिपादकपद-त्रयेण सूचितम् । 'मामप्राप्यैव कौन्तेय यान्त्यधमां गतिम्' इत्यनेन मोक्षाभावे नियमः, तमःप्राप्तिनियमश्च निरूपित इति ज्ञेयम् । तस्मादुत्तमाधमभेदेन जीवद्वैविध्यस्य न कदापि व्यत्यास इति भावः ।

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ २१ ॥**

इत्यत्र 'तमोद्वारैस्त्रिभिर्नरः' इति वक्ष्यमाणत्वात् **कामो** न यत्किञ्चित् काममात्रम्, किन्तु 'अच्युतोऽहं शिवोऽहम्' इत्यादिभावनया जगन्मातृभूततत्पत्नीष्वेव कामः । **क्रोधः** विष्णुवैष्णवद्वेषः । **लोभः** निरवधिकभगवदानन्दज्ञानादिगुणेषु लोभः ।

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

इत्यत्र **कामकारतः** स्वेच्छया करणेन ।

**॥ इति अष्टत्रिंशोऽध्यायः ॥**

* * *

## ।। अथ एकोनत्रिंशोऽध्यायः ।।

**अर्जुन उवाच –**

**[१]ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ।। १ ।।**

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः** इत्यत्र **आहो** आहोस्वित् ।

**श्रीभगवानुवाच –**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां श्रुणु ।। २ ।।**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा** इत्यत्र सा त्रिविधा श्रद्धा देहिनां स्वभावजेति कथनात् स्वभावत एव जीवाः सात्त्विकादि-विभागवन्तः । कथमन्यथा दैत्या एव तामसाः, मानुषा एव राजसाः, देवा एव सात्त्विका इति नियमेन विभागः स्यादिति भावः ।

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।। ३ ।।**

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत** इत्यत्र **सर्वस्य** उत्तम-जीवसमूहस्य ।

**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ।। ६ ।।**

---

१. कुं. ४१ अध्यायः ।

इत्यत्र **भूतग्रामं** पञ्चमहाभूतानां समूहं **कर्शयन्तः** आतपोपवासादिना कृशं कुर्वन्तः । अथवा **भूतग्रामं** तत्त्वाभिमानिभूतदेवतासमूहं अन्तःशरीरस्थं मां च कर्शयन्तः स्वविहितप्राणाग्निहोत्राकरणेन चित्तक्षोभयुक्तं कुर्वन्तः ।

**आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥**

**रस्याः स्निग्धाः स्थिराः हृद्या आहाराः सात्विकप्रियाः** इत्यत्र **रस्याः** मधुररसप्रधानाः ।

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

इत्यत्र **गतरसं** त्यक्तान्नरसम्, अन्नरसेन सहैव पक्वचरोः [१] यज्ञयोग्यत्वादिति भावः । **पूति** दुर्गन्धयुक्तं लशुनादि । **पर्युषितम्** एकरात्रोषितम् । **उच्छिष्टं** कामुकतया भार्यादिभिः सह [२] भुज्यमानम् । **अमेध्यम्** अपवित्रम् अलाबुवृन्ताकादि ।

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

इत्यत्र **विधिहीनं** वेदे अविहितं यक्षराक्षसपूजादि ।

**मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

---

१. यज्ञभोग्यत्वात् सो.मु.पा. ; २. भुज्यमानमन्नम् सो.मु.पा.

इत्यत्र **मूढग्राहेण, मूढेषु** पिशाचादिषु **ग्राहेण** दुराग्रहेण ।

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्** ॥ २१ ॥

इत्यत्र **परिक्लिष्टं** परिक्लेशसहितम् ।

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम्** ॥ २२ ॥

इत्यत्र **असत्कृतम्** सत्काररहितम् ।

**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा** ॥ २३ ॥

इत्यत्र **ब्रह्मणः** परब्रह्मणः सर्वगुणपूर्णत्वात् ॐ, 'तनु विस्तारे' इति धातोः औणादिकडतुप्रत्यये कृते सकलजगद्व्याप्तत्वात् **तत्** , सदा विद्यमानत्वात् निर्दोषत्वाच्च **सत्** इति त्रिविधो निर्देशः स्मृतः । 'ॐतत्सदिति' निर्देशेन । ॐतत्सदिति निर्देशपूर्वकम् उपनयनादि-संस्कारे कृते ब्राह्मणा विहिता इत्यर्थः ।

सच्छब्दस्य भगवद्वाचित्वोपयुक्तं मुख्यार्थद्वयं प्रदर्शयन् अर्थान्तर-मप्याह –

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते** ॥ २६ ॥
**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते** ॥ २७ ॥

इति । **सद्भावे** सर्वदा विद्यमानत्वे । **साधुभावे** निर्दोषत्वे । **तदर्थीयं** यज्ञाद्यर्थं विद्यमानं प्रोक्षणावघातादिकम् ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**[1]काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

इत्यत्र कर्माधिकारिण एव गृहस्थस्य स्वर्गादिफलकामनाभावात् **काम्यानां** फलकामनया विहितानां ज्योतिष्टोमादिसकलकर्मणां **न्यासं** स्वरूपेणैव न्यासम् । [2]**सर्वकर्मफलत्यागं** सर्वकाम्यकर्माणि कृष्ण-प्रीत्यर्थमेव कृत्वा यस्तेषां फलत्यागः तम् ।

काम्यानां कर्मणां न्यासो[3] मयि समर्पणमिति भ्रमं वारयितुं कामनायाः कुतो हेयत्वमिति शङ्कां च वारयितुं उक्तपक्षद्वयमेव विवेचयति–

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥**

इति । पापाख्यदोषवतः कर्मणः सर्वैरपि हेयत्वेन [4]एकपदायोगेन मोक्षप्रतिबन्धकीभूतकामनैवात्र दोषः । **दोषवत्** कामनाख्यदोषवत् कर्म **त्याज्यं** न कर्तव्यमेव । यज्ञदानतपःकर्म न त्याज्यम् , किन्तु तत्फल-कामनैव त्याज्येत्यपरे ।

---

१. कु. ४२ अध्यायः । ; २. सर्वकर्मपरित्यागं सो.मु.पा.
३. न्यासं सो.मु.पा.; ४. एकपदत्वायोगेन सो.मु.पा.

**निश्चयं श्रुणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ४ ॥**

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम** इत्यत्र त्यागे स्वरूपफलयो-स्त्यागे । **निश्चयम्** अयमेव त्यागः कर्तव्य इति निश्चयम् । **त्रिविधः सम्प्रकीर्तितः** इत्यत्र सात्विकराजसतामसभेदेन त्रिविधः ।

त्रिविधे त्यागे तव कोऽभिमतः इत्यतः वक्ष्यमाणः सात्विक एव ममाभिमत इत्याह – **एतान्यपि तु** इति ।

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

**सङ्गं** फलेष्वासक्तिम् । **फलानि** स्वर्गादिफलानि च । 'यस्त्विन्द्रियाणि संयम्य सदास्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते' इति स्मृतेः लोकरञ्जनार्थं फलं त्यक्त्वा मनसि तदेव स्मरन्नपि न भवेदिति भावः ।

इदानीं तत्त्रैविध्यमेव विवेचयन् ब्रह्मसूत्रन्यायेन अतिहेयं तामसं, हेयमात्रं राजसं च प्रागुक्त्वा स्वसिद्धान्तभूतं सात्त्विकं पश्चादाह–

**नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।**
**मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

इति ।

**दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥**

अत एव प्रौढाः मलापहारिस्नानं प्राकृत्वा पश्चाच्छुद्धस्नानं कुर्वन्ति। **नियतस्य** श्रुतिविहितस्य ज्योतिष्टोमादेः सन्न्यासः स्वरूपेणैव त्यागः। यद्वा, सन्न्यासिनां निष्क्रियत्वभ्रान्त्या ज्ञानित्वभ्रमेण वा यत्केचन सन्न्यासिनो नियतगायत्रीमेव त्यजन्ति स एव नियत-सन्न्यासः।

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**

**न द्वेष्ट्यकुशलम्** इत्यत्र **अकुशलम्** अकुशलैः कृतम्।

**अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम्।**
**भवत्यत्यागिनां प्रेत्य नतु सन्न्यासिनां क्वचित् ॥ १२ ॥**

**अनिष्टमिष्टं मिश्रञ्च** इत्यत्र **अनिष्टं** पापकर्मणः फलं नरकादि। **इष्टं** पुण्यकर्मणः फलं स्वर्गादि। **मिश्रं** भूलोकस्थैरनुभूयमानं सुख-दुःखात्मकम्।

**पञ्चैतानि महाबाहो कारणानि निबोध मे।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

**साङ्ख्ये कृतान्त** इत्यत्र **कृतान्ते** सिद्धान्ते।

**अधिष्ठानं तथा कर्ता [१]कारणञ्च पृथग्विधम्।**
**विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥**

१. करणञ्च -सो.मु.पा.

इत्यत्र **अधिष्ठानं** भूमिः । **कर्ता** यजमानः । **पृथक्** पृथक्कारणं व्रीहियवादि । **चेष्टाः** मन्त्रेण होमादिचेष्टाः । **दैवम्** उद्देश्यदेवता, कर्मप्रेरको देवो वा ।

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः** ॥ १६ ॥

**तत्रैवं सति कर्तारमात्मानं केवलं तु** इत्यत्र केवलं [१] स्वतन्त्रकर्तृभूतनारायणनिरपेक्षम् आत्मानमेव कर्तारम् ।

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः** ॥ १८ ॥

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना । करणम्** इत्यत्र **ज्ञानं** कर्मकाण्डतत्त्वार्थज्ञानम् । **ज्ञेयं** ज्योतिष्टोमादिकर्म । **परिज्ञाता** कर्ममीमांसायां कुशलः । **करणं** कर्मणः क्रिया ।

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि** ॥ १९ ॥

**प्रोच्यते गुणसङ्ख्याने** इत्यत्र **गुणसङ्ख्याने** गुणसङ्ख्यानाख्यपञ्चरात्रविभागे[२]।

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्** ॥ २० ॥

---

१. **स्वतन्त्रकर्तृभूतनारायणे निरपेक्षं** -सो.मु.पा.
२. **पञ्चरात्रभागे** सो.मु.पा.

इत्यत्र **विभक्तेषु** भिन्नभिन्नेषु सर्वभूतेषु **अविभक्तं** स्थानभेदेऽपि स्वस्मिन् भेदरहितम् । **एकम्** एकैकमूर्तावपि स्वकरचरणादिषु भेदरहितम् । **भावं** नारायणाख्यपदार्थम् । **येन** ज्ञानेन ।

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

**पृथक्त्वेन तु यज्ज्ञानं** इत्यत्र **पृथक्त्वेन** हरेर्भिन्नभिन्नत्वेन । भूतानां भिन्नत्वज्ञानमुत्तमम्, हरिरूपेषु मिथो भेदज्ञानमधमम् । अतः सद-सन्मिश्रत्वाद्राजसम् ।

**यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहेतुकम् ।**
**अतत्त्वार्थवदल्पश्च तत्तामसमुदाहृतम् ॥ २२ ॥**

इत्यत्र अहैतुकं नित्यमुक्तत्वात् संसारहेतुभूताविद्याकामकर्मादि-रहितं परम्ब्रह्म **यत्** येन **कृत्स्नवत्** कृत्स्नाः अविद्याकामकर्मादि-सकलदोषाः अस्य वर्तन्त इति कृत्स्नवत्, **अतत्त्वार्थवत्** मिथ्याभूत-करचरणादिमत्, **एकस्मिन् कार्ये** जगदारोपाख्ये कार्ये **सक्तम्** आसक्तम्, **अल्पं** तुच्छजीवाभिन्नत्वेन अल्पीभूतश्च पश्यसि, यत् ज्ञानं पश्यतीति वा, तज्ज्ञानं तामसमित्युदाहृतम् ।

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म तत्तत्तामसमुच्यते ॥ २५ ॥**

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्** इत्यत्र **अनुबन्धं** सुन्दोप-सुन्दवत् अन्योन्यस्नेहं भस्मासुरवत् वरदातर्येव स्नेहं वा, **क्षयं** हिरण्या-

क्षवत् लोकक्षयं, **हिंसां** जरासन्धवत् प्राणिहिंसां, **पौरुषं** दुर्योधनवत् स्वप्रतापम् अनपेक्ष्य ।

**रागी कर्मफलप्रेप्सुः लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥**

**हर्षशोकान्वितः कर्ता** इत्यत्र **हर्षशोकान्वितः** लाभे हर्षः, अलाभे शोकः ।

**अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥**

**अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः । उच्यत** इत्यत्र **अयुक्तः** विवेकिभिरयुक्तः । **प्राकृतः** प्रकृत्या बद्धः । **नैकृतिकः** निकृति-सम्बन्धी, कपटीत्यर्थः ।

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥**

**गुणतस्त्रिविधं शृणु** इत्यत्र **गुणतः** सत्वादिगुणतः त्रिविधम् ।

**प्रकृतिं विकृतिश्चैव कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥**

**प्रकृतिं**[१] **विकृतिश्चैव** इत्यत्र **प्रकृतिं** मूलप्रकृतिम् । **विकृतिं** तद्विकारात्मकं जगत् , न तु मायामयम् ।

---

१. प्रवृत्तिश्च सो.मु.पा.

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

**अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी** इत्यत्र **अयथावत्प्रजानाति** यथावन्न प्रजानाति संसारमग्नत्वात्तद्विचारमेव न करोति ।

**अधर्मं धर्ममिति या मन्यते तमसाऽवृता ।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

**सर्वार्थान् विपरीतांश्च** इत्यत्र सर्वार्थान् **विपरीतान्** मिथ्याभूतान् ।

**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

**प्रसङ्गेन फलाकाङ्क्षी** इत्यत्र **प्रसङ्गेन** प्रकृष्टेन सङ्गेन विषयस्नेहेन ।

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

**यदग्रे चानुबन्धे च सुखं मोहनमात्मन** इत्यत्र **अग्रे** आदौ । **अनुबन्धे** अनु अनन्तरं बन्धे सुखसम्बन्धे । **मोहनं** मिथ्याज्ञानजनकम् ।

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥**

**दानमीश्वरभावश्च** इत्यत्र **ईश्वरभावः** समर्थत्वबुद्धिः ।

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥ ४९ ॥**

**सन्न्यासेनाधिगच्छति** इत्यत्र **सन्न्यासेन** हरिचरणे समर्पणेन ।

**सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा** ॥ ५० ॥

इत्यत्र ज्ञानस्य या परा निष्ठा तां समासेन निबोधेति पूर्वेणान्वयः ।

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते** ॥ ५३ ॥

**ब्रह्मभूयाय कल्पते** इत्यत्र 'स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि' इत्यभिधानात्, 'बृह वृद्धौ' इति धातुव्याख्यानाच्च **ब्रह्मभूयाय** ब्रह्मत्वाय स्वयोग्यसुखाद्यभिवृद्ध्यै, 'युजिर् योगे' इति धातोः नित्यसम्बन्धरूपब्रह्मसायुज्याय वा । यद्वा 'या' धातोः भावार्थे औणादिकडप्रत्यये कृते **यं** गमनम् । **ब्रह्मणो** विष्णोः **भूः** स्थानं वैकुण्ठलोकः । तत्प्राप्तये कल्पते इत्यर्थः ।

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्** ॥ ५४ ॥

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति** इत्यत्र **ब्रह्मभूतः** ब्रह्मणि भूतः, ब्रह्मभुवि ऊतः 'ऊतं स्यूतमुतञ्चेति त्रितयं [१] तन्तुसन्तते' इत्यमरवचनात् **ऊतः** आश्रितः । परब्रह्मत्वं प्राप्त इत्यर्थस्तु सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे इत्युपक्रमेण, मद्भक्तिं लभते [२] पराम् इति मध्येन, ततो मां तत्त्वतो ज्ञात्वा विशते इत्युपसंहारेण इदं

१. **तनुसन्ततौ** सो.मु.पा. ; २. **नरः** -सो.मु.पा.

ज्ञानमुपाश्रित्य[१] मम साधर्म्यमागताः इति भगवतैव स्पष्टं स्थलान्तरे प्रोक्तफलेन च विरुद्धः ।

**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥**

**मिथ्यैष व्यवसायस्त** इत्यत्र एष व्यपसायः **मिथ्या** वृथा ।

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६० ॥**

**करिष्यस्यवशोऽपि तत्** इत्यत्र **अवशः** विष्णुवशः ।

तदेव स्पष्टयति–

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ?? ॥**

इति । 'भ्रमु अनवस्थाने' इति धातोः इतस्ततः प्रवर्तयन् **मायया** स्वेच्छया तिष्ठति । अन्यथा यन्त्रारूढप्रतिमादृष्टान्तो विरुद्धः स्यात् ।

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज** इत्यत्र सर्वधर्मान् कृत्वा फलाशां परित्यज्येत्यर्थः । अन्यथा, 'नियतस्य तु सन्यासः कर्मणो

---

१. **ज्ञानमपाश्रित्य** - सं.मु.पा.

नोपपद्यते । मोहात् तस्य परित्यागस्तामसः परिकीर्तितः' इति स्ववचन-विरोधः ।

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्धुवा नीतिर्मतिर्मम ॥ ७८ ॥**

**तत्र श्रीर्विजयो भूतिर्धुवा नीतिर्मतिर्मम** इत्यत्र **श्रीः** धनकनकादि-सम्पत् । 'विभूतिर्भूतिरैश्वर्यम्' इत्यभिधानात् **भूतिः** राज्यैश्वर्यम् ।

स्नातं गीतामृताम्भोधौ पीतं ज्ञानामृतं मया ।
धूतं विषं भवोद्भूतं पूतं तेनाखिलं कुलम् ।

**॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां भीष्मपर्वणि ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रीमत्कविकुलतिलकश्रीमद्वागीशतीर्थ-श्रीमच्चरणकमलसञ्जातश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायां [१] अर्जुनप्रबोधो नाम अष्टादशोऽध्यायः ॥**

**॥ इति भीष्मपर्वणि चत्वारिंशोऽध्यायः ॥**

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

**कृष्णं चेमं जगद्रूपम्** इत्यत्र 'पश्यामि देवांस्तव देव देहे' इति वचनात् जगन्ति रूपे यस्य तं **जगद्रूपम्** ।

**[२] न शत्रुं तात पश्यामि यो मां हन्याद्रथे स्थितम् ।**
**युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणम् ॥ ६६ ॥**

---

१. **अर्जुनसुबोधो** सो.मु.पा. ; २. कुं. ४३ अध्यायः ।

**ऋते प्रायगतं राजन् न्यस्तशस्त्रमचेतनम् ।**
**हन्यान्मां युधि योधानां सत्यमेतद् ब्रवीमि ते ॥ ६७ ॥**

**ऋते प्रायगतम्** इत्यत्र **प्रायगतं** प्रायोपवेशगतम् ऋते मां यो हन्यात् तं शत्रुं न पश्यामीति पूर्वेणान्वयः । न्यस्तशस्त्रं अचेतनं यो मां हन्यात् स एव मां हन्यादित्युत्तरेण सम्बन्धः ।

**शस्त्रं चाहं रणे जह्यां श्रुत्वा तु महदप्रियम् ।**
**[१]श्रद्धेय वाक्यात् परुषादेतत् सत्यं ब्रवीमि ते ॥ ६८ ॥**

**श्रद्धेयं वाक्यात्** इत्यत्र परुषाद्वाक्यात् अहं **श्रद्धेय** श्रद्धां कुर्यामिति लोडात्मनेपदे उत्तमपुरुषैकवचनम् ।

**भजस्वास्मान् राजपुत्र भजमानान्महाद्युते ।**
**न भविष्यति दुर्बुद्धिः धार्तराष्ट्रोऽत्यमर्षणः ॥ १०१ ॥**

**न भविष्यति दुर्बुद्धि** इत्यत्र **न भविष्यति** भूमौ न स्थास्यति, मरिष्यतीत्यर्थः ।

॥ इति एकचत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

**[३]क्ष्वेलाः किलकिलाशब्दाः कृकवा गोविषाणिकाः ।**
**भेरीमृदङ्गमुरजा हयकुञ्जरनिःस्वनाः ॥ ४ ॥**

---

१. $M_2$; BORI पृ. २०१; **'श्रद्धेयवाक्यात्पुरुषात्'** इति कुं पाठः ।

३. $D_a$,$D_n$.$D_{4\cdot5\cdot7\cdot9}$.; BORI पृ. २०३; **'क्ष्वेडाः किलकिलाशब्दाः क्रकचा'** इति कुं पाठः ।

**क्ष्वेलाः किलकिलाशब्दाः कृकवा**[१] **गोविषाणिकाः** इत्यत्र **क्ष्वेलाः** भटानां गर्जितानि । **किलकिलाशब्दाः** कोलाहलशब्दाः । [२]कोल्लोलु इत्यपभ्रंशभाषा । **कृकवाः** वाद्यविशेषाः ।

**उभयोः सेनयोर्ह्यासंस्ततस्तेऽस्मान् समाद्रवन् ।**
**वयं तान् प्रति [३]नन्दन्तस्तदाऽऽसीत्तुमुलं महत् ॥**

[४]**वयं तान् प्रति** [५]**नन्दन्तस्तदा** इत्यत्र तान् प्रति वयं इति नन्दन्तः ।

**हयानां हेषमाणानामनीकेषु सहस्रशः ।**
[६]**सर्वान् पराभवच्छब्दान् भीमस्य नदतः स्वनः ॥ १० ॥**

**सर्वान्** [७]**पराभवच्छब्दान् स्वनः** इत्यत्र **पराभवत्** पराभावयत् ।

**महाचापानि धुन्वन्तो मेघा इव सविद्युतः ।**
**आददानाश्च नाराचान्निर्मुक्ताशीविषोपमान् ॥ १७ ॥**

**आददानश्च नाराचान् निर्मुक्ताशीविषोपमान्** इत्यत्र **निर्मुक्ताः** त्यक्तनिर्मोकाः । 'निर्मुक्तो मुक्तकञ्चुकः'[८] इत्यमरः ।

**तस्मिन् प्रथमसङ्ग्रामे भीमज्यातलनिःस्वने ।**
**तावकानां परेषाञ्च नासीत् [९]कश्च पराङ्मुखः ॥ २० ॥**

---

१. **क्रकचाः** - सो.मु.पा. ; २. **कोल्लकोल्लु** - सो.मु.पा.
३. BORI; **'नर्दन्त'** इति कुं पाठः । ४. **वयं प्रतिनदन्तश्च** - सो.मु.पा.
५. **नर्दन्तः** - - सो.मु.पा.; ६. **'सर्वानभ्यभवच्छब्दान्'** इति कुं पाठः
७. **अभ्यभवत्** - सो.मु.पा.; ८. अ.को. १-८-६
९.. **'कश्चित्'** इति कुं पाठः ।

**नासीत् कश्च पराङ्मुखः** इत्यत्र **कश्च** को वा ।

**सर्वे त्वन्ये महीपालाः प्रेक्षका इव भारत ।**
**ददृशुर्दर्शनीयं तं भीमं ज्ञातिसमागमम् ॥ २३ ॥**

**भीमं ज्ञातिसमागमम्** इत्यत्र **भीमं** भयङ्करम् ।

**उभयोः सेनयोस्तीव्रः सैन्यानां स समागमः ।**
**अन्तर्धीयत चादित्यः सैन्येन रजसा वृतः ॥ २८ ॥**

**अन्तर्धीयत चादित्यः सैन्येन रजसाऽऽवृतः** इत्यत्र **अन्तर्धीयत** अन्तरधीयत । **सैन्येन** सेनासम्बन्धिना ।

॥ इति भीष्मपर्वणि द्विचत्वारिंशोऽध्यायः ॥

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

[1]**तस्य द्रोणः सुसंक्रुद्धः परासुकरणं दृढम् ।**
**त्रिधा चिच्छेद समरे यतमानस्य तु कार्मुकम् ॥ ३१ ॥**

**परासुकरणं दृढम्** इत्यत्र 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः' इत्यमरवचनात् परासुं गतप्राणं करोतीति **परासुकरणम्** ।

**आर्जुनिस्तस्य समरे हयान् हत्वा महारथः ।**
**ननाद बलवान्नादं [2]ते सैन्यान्यस्य पूजयन् ॥ ७० ॥**

[3]**ते सैन्यान्यस्य पूजयन्** इत्यत्र **ते** तवसैन्यानि **अस्य** इरावतः कर्म **पूजयन्** अपूजयन् ।

---

१. कुं. ४५ अध्यायः । ;   २. 'तत्सैन्यं प्रत्यपूरयत्' इति कुं पाठः ।
३. तत्सैन्यं प्रत्यपूरयत् - सां.मु.पा.

**ततो दन्तिसहस्राणि रथानां चापि मारिष ।**
**अश्वौघाः पुरुषौघाश्च विपरीतं समाययुः ॥ ८६ ॥**

**विपरीतं समाययुः** इत्यत्र **विपरीतं** समानजातीयं विहाय विपरीतं यथा भवति तथा ।

॥ इति भीष्मपर्वणि त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

[१] **न पुत्रः पितरं जज्ञे पिता वा पुत्रमौरसम् ।**
**न भ्राता भ्रातरं तत्र स्वस्रीयं न च मातुलः ॥ २ ॥**

**न पुत्रः पितरं जज्ञे पिता वा पुत्रमौरसम्** इत्यत्र **जज्ञे** ज्ञातवान् ।

**न मातुलं च स्वस्रीयो न सखायं सखा तथा ।**
**आविष्टा इव युध्यन्ते पाण्डवाः कुरुभिः सह ॥ ३ ॥**

**आविष्टा इव युध्यन्ते** इत्यत्र **आविष्टाः** भूताविष्टाः ।

**गजानां पादरक्षास्तु व्यूढोरस्काः प्रहारिणः ।**
**ऋष्टिभिश्च धनुर्भिश्च विमलैश्च परश्वथैः ॥ १३ ॥**

**गजानां पादरक्षास्तु** इत्यत्र **पादरक्षाः** एकैकगजचरणरक्षणार्थं कल्पिताः भटानां श्रेण्यः ।

**महोल्काप्रतिमा घोरास्तत्र तत्र विशाम्पते ।**
**द्वीपिचर्मावनद्धैश्च व्याघ्रचर्मच्छदैरपि ॥ ३१ ॥**

---

१. कुं. ४६ अध्यायः ।

**द्वीपिचर्मावनद्धैश्च व्याघ्रचर्मच्छदैरपि** इत्यत्र द्वीपिव्याघ्रौ स्थूल-सूक्ष्मभेदेन द्विविधौ।

**विकोशैर्विमलैः खड्गैरभिजघ्नुः परान् रणे।**
**[1] अतिविद्धमभिक्रुद्धौ एकपार्श्वावदारितम् ॥ ३२ ॥**
**विदर्शयन्तः सम्पेतुः खड्गचर्मपरश्वधैः ॥ ३३ ॥**

[2] **अतिविद्धमभिक्रुद्धौ** इत्यत्र अति अतिशयेन विद्धः स्वयं येन तम् अतिविद्धम्।

**सखा सखायं च तथा सम्बन्धी बान्धवं तथा।**
**[3] एवं युधिष्टिरे तत्र कुरवः पाण्डवैः सह ॥ ४७ ॥**

**एवं युधिष्ठिरे तत्र** इत्यत्र युधि युद्धे स्थिरे सतीत्यर्थः।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**[4] गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे।**
**वर्तमाने महा रौद्रे महावीरवरक्षये ॥ १ ॥**

**गतपूर्वाह्णभूयिष्ठे** इत्यत्र **गतपूर्वाह्णभूयिष्ठे** गतः पूर्वाह्णस्य भूयिष्ठो भागः, गतः पूर्वाह्णाख्यः श्रेष्ठो भागो वा यस्मिंस्तथोक्ते।

**जाम्बूनदविचित्रेण कर्णिकारेण केतुना।**
**अभ्यवर्तत भीष्मं च तांश्चैव रथसत्तमान् ॥ ८ ॥**

---

१. 'अभिप्लुतमभिक्रुद्धं' इति कुं.पाठः। ; २. अभिप्लुतमभिक्रुद्धं -सो.मु.पा.
३. 'एवं युयुधिरे' इति कुं पाठः।; ४. कुं. ४७ अध्यायः।

**जाम्बूनदविचित्रेण कर्णिकारेण केतुना** इत्यत्र **कर्णिकारेण** कर्णिकाराख्यगुल्मविशेषेण ।

**कृपस्य निशिताग्रेण तांश्च तीक्ष्णमुखैः शरैः** ॥ १३ ॥
**जघान परमक्रुद्धो नृत्यन्निव महारथः** ॥ १४ ॥

**तांश्च तीक्ष्णमुखैः शरैः** इत्यत्र **तांश्च** अन्यानपि भीष्मरथरक्षकान् ।

**तथैव कृतवर्मा च कृपः शल्यश्च मारिष ।**
**विद्ध्वा[1] नाकम्पयत् कार्ष्णिं मैनाकमिव पर्वतम्** ॥ १९ ॥

**विद्ध्वा नाकम्पयत् कार्ष्णिं मैनाकमिव पर्वतम्** इत्यत्र **कार्ष्णिम्**, अर्जुनस्यापि कृष्णनामवत्त्वात् **कार्ष्णिर**भिमन्युः तम् । 'व्यासार्जुनाग्निहरिकोकिलकाकशूद्रतामिस्रपक्षकलिनीलगुणेषु कृष्णः' इत्यभिधानम् ।

**जाम्बूनदमयः श्रीमान् केसरी स नरोत्तम ।**
**पपात भीमसेनस्य भीष्मेण मथितो रथात्** ॥ ३३ ॥

**केसरी नरसत्तम** इत्यत्र केसरी अस्य वर्तते इति **केसरी** । ईकारे इनः पूर्वसवर्णादेशः ।

**प्रगृहीताग्रहस्तेन वैराटिरपि दन्तिना ।**
**अभ्यद्रवत राजानं मद्राधिपतिमुत्तरः** ॥ ३५ ॥

**प्रगृहीताग्रहस्तेन** इत्यत्र **प्रगृहीताग्रहस्तेन** प्रगृहीतः अग्रे भागे हस्तो यस्य स प्रगृहीताग्रहस्तः तेन ।

**। इति पञ्चचत्वारिंशोऽध्यायः ।**

१. 'विद्ध' इति कुं पाठः ।

## ।। अथ षट्चत्वारिंशोऽध्यायः ।।

[१]**तेन रत्नवता पार्थः स च गाण्डीवधन्वना ।। ४५ ।।**

**बभूव परमोपेतः [२]स्वयम्भूरिव भानुना ।। ४६ ।।**

**तेन रत्नवता पार्थः** इत्यत्र **तेन** ध्वजेन पार्थः **परमोपेतः** परया **मया** कान्त्या उपेतो बभूव । स ध्वजश्च गाण्डीवधन्वना परमोपेतो बभूवेति योजना । अन्योन्यं शुशुभाते इति भावः । स्वयमेव भवतीति **स्वयम्भूः** सूर्यः । भानुना किरणेन । 'भानू रश्मिदिवाकरौ'[३] इत्यमरः ।

**अनूपकाः किराताश्च ग्रीवायां भरतर्षभ ।**
**पटच्चरैश्च [४]पौण्ड्रैश्च राजन् [५]कौरवकैस्तथा ।। ४८ ।।**
**निषादैः सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ।**
**पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।। ४९ ।।**

**पटच्चरैश्च पौण्ड्रैश्च** इत्यत्र **पटच्चरः** कश्चिद्विषयविशेषः । **कौरवको**ऽपि कश्चिद्देशविशेषः ।

**द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ।**
**पिशाचा दारदाश्चैव पुण्ड्राः कुण्डीविषैः सह ।। ५० ।।**

**द्रौपदेयाभिमन्युश्च** इत्यत्र द्रौपदेयैः सहितः अभिमन्युः **द्रौपदेया-भिमन्युः** ।

---

१. कुं. ५० अध्यायः । ; २. 'सुमेरुरिव भानुना' इति कुं.पाठः ।
३. अ.को. ३-३-१०५
४. $B_2$,$Dn_2$.D.$_{4\cdot7\cdot8}$; BORI पृ. २३७ ; **'हुण्डैश्च'** इति कुं पाठः ।
५. $B_{1\cdot2\cdot4}$.D; BORI पृ. २३७; **'पौरवकैः'** इति कुं पाठः ।

**रथानामयुतं पक्षौ शिरश्च नियुतं तथा ।**
**पृष्ठमर्बुदमेवासीत्सहस्राणि च विंशतिः ॥ ५४ ॥**

**शिरश्च नियुतं तथा** इत्यत्र **नियुतं** विंशतिसहस्रम् । **अर्बुदं** लक्षम् ।

**जग्मुः परिवृता राजंश्चलन्त इव पर्वताः ।**
**जघनं पालयामास विराटः सह केकयैः ॥ ५६ ॥**

**जघनं पालयामास** इत्यत्र **जघनं** कटिदेशम् ।

॥ इति षट्चत्वारिंशोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

[१]**तथा प्रवृत्ते सङ्ग्रामे धनुरुद्यम्य दंशितः ।**
[२]**अभिमन्युर्महाबाहुर्भीष्मो भीमपराक्रमः ॥ ७ ॥**

**अभिमन्युर्महाबाहुः** इत्यत्र **अभिमन्युः** अभितो **मन्युः** कोपो यस्येति भीष्मस्य विशेषणम् ।

**सैन्धवो नवभिश्चैव शकुनिश्चापि पञ्चभिः ।**
[३]**आर्तायनिस्त्रिभिर्भल्लैः राजन् विव्याध पाण्डवम् ॥ २५ ॥**

**आर्तायनिस्त्रिभिर्भल्लैः** इत्यत्र **आर्तायनिः** ऋतायनपुत्रः शल्यः ।

**चिह्नमात्रेण भीष्मं तु प्रजघ्नुस्तत्र कौरवाः ।**
**तथा पाण्डुसुताः पार्थं चिह्नमात्रेण जघ्निरे ॥ ५९ ॥**

१. कुं. ५२ अध्यायः । २. '**अभिपत्य महाबाहुः**' इति कुं.पाठः ।
३. $B_2$; BORI पृ. २४६; '**विकर्णो दशभिर्भल्लैः**' इति कुं पाठः ।

**प्रजज्ञुस्तत्र कौरवाः** इत्यत्र **प्रजज्ञुः** प्रकर्षेण ज्ञातवन्तः ।

॥ इति अष्टचत्वारिंशोऽध्यायः ॥

## ॥ अथ पञ्चाशोऽध्यायः ॥

**[1]उद्ववर्हाथ निस्त्रिंशं चिकीर्षुः कर्म दारुणम् ।**
**चर्म चाप्रतिमं राजन्नर्षभं पुरुषर्षभ ॥ २७ ॥**

**उद्ववर्हाथ निस्त्रिंशम्** इत्यत्र **निस्त्रिंशः** खड्गः ।

**भानुमन्तं अभिद्रुत्य प्राद्रवत् पुरुषर्षभः ।**
**भानुमन्तं ततो भीमः शरवर्षेण च्छादयन् ॥ ३४ ॥**

**भानुमन्तमभिद्रुत्य प्राद्रवत् पुरुषर्षभः** इत्यत्र भानुमानिति कालिङ्गस्यैव नाम ।

**छिन्नस्कन्धः स विनदन् पपात गजयूथपः ।**
**आरुग्णः सिन्धुवेगेन सानुमानिव पर्वतः ॥ ४१ ॥**

**आरुग्णः सिन्धुवेगेन** इत्यत्र **सिन्धुः** नदी । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरितिस्त्रियाम्'[2] इत्यमरः ।

**[3]भ्रान्तमुद्भ्रान्तमाविद्धमाप्लवं प्रसृतं प्लवम् ।**
**संयतं चाप्युदीयं च दर्शयामास पाण्डवः ॥ ५० ॥**

---

१. कुं. ५४ अध्यायः । **'निस्त्रिंशमाददे घोरं'** इति कुं.पाठः ।

२. अ.को. ३-३-१०१

३. **'भ्रान्तमाविद्धमुद्भ्रान्तमाप्लुतं प्रसृतं प्लुतम् । सम्पातं समुदीर्णं च दर्शयामास पाण्डवः ॥'** इति कुं.पाठः ।

**भ्रान्तमुद्भ्रान्तमाविद्धमाप्लवं प्रसृतं प्लवम्** इत्यत्र **भ्रान्तं** भूमौ भ्रमणम् । **आविद्धं** परं वेद्धुं खड्गमभिमुखीकृत्य गमनम् । **आप्लवं** परावृत्योल्लङ्घनम् । **प्लवं** शत्रुं प्रत्युल्लङ्घनम् । **प्रसृतं** वामदक्षमार्गाभ्यां प्रकर्षेण सृतं गमनम् । **संयतं** चर्मान्तः स्वशरीरस्य आच्छादनम् । **उदीयम्** ऊर्ध्वं लङ्घनेन गमनम् । इदं सर्वं खड्गाभ्यासकौशलम् ।

**[१]प्रदिशो वातिचित्रास्त कक्ष्याश्च कनकोज्ज्वलः ।**
**ग्रैवेयाण्यथ शक्तिश्च प्रदिशः कणपास्तथा** ॥ ५४ ॥

**प्रदिशो वातिचित्रास्त** इत्यत्र प्रकर्षेण दिशन्ति कवलादिकमिति **प्रदिशो** गजरक्षकाः । **प्रदिशः कणपास्तथा** इत्यत्र [२]कणात् पान्तीति **कणपाः** कम्बलाद्यास्तरणानि ।

**छिन्नगात्रावरकैर्निहतैश्चापि वारणैः ।**
**[३]आसीद्भूमिः समास्तीर्णा पतितैर्भूधरैरिव** ॥ ५७ ॥

**छिन्नगात्रावरकैर्निहतैश्चापि वारणैः** इत्यत्र गात्रमावृण्वन्तीति **गात्रावराणि** गजकवचानि ।

**[४]खलीनानि विचित्राणि कक्ष्याश्च कनकोज्ज्वलाः ।**
**परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः** ॥ ५९ ॥

---

१. **'परिस्तोमान् विचित्रांश्च कक्ष्याश्च कनकोज्ज्वलः । ग्रैवेयाण्यथ शक्तिश्च पताकाः कणपांस्तथा'** इति कुं.पाठः ।

२. **कणान्** सो.मु.पा.

३. **आसीत्तस्मिन् समास्तीर्ण पतितैर्भूनगैरिव'** इति कुं पाठः ।

४. B,$D_{1.2}$.$D_{.4.7.8}$; BORI पृ. २६३; **'खलीनान्यथ योक्त्राणि'** इति कुं. पाठः ।

**खलीनानि विचित्राणि** इत्यत्र **खलीनानि** 'लीङ् श्लेषणे' इति धातोः **खे** आकाशे लीनानि पताकाध्वजादीनि । **परिस्तोमाः** कुथाः । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः'[1] इत्यमरः ।

**भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवैधितः ।**
**अथाशोकः समादाय रथं हेमपरिष्कृतम् ।**
**भीमं सम्पादयामास रथेन रथसारथिः ॥ ७० ॥**

**अथाशोकः समादाय** इत्यत्र **अशोकः** विशोको भीमसारथिः ।

**स च पारावताश्वस्य रथे हेमपरिष्कृते ।**
**कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत् ॥ ९८ ॥**

**स च पारावताश्वस्य** इत्यत्र **पारावताश्वः** धृष्टद्युम्नः । **कोविदारो** वृक्षविशेषः ।

**॥ इति पञ्चाशोऽध्यायः ॥**

## ॥ अथ एकपञ्चाशोऽध्यायः ॥

[2]**एष पाण्डुसुतो वीरः कृष्णेन सहितो बली ।**
**तथा करोति सैन्यानि यथा कुर्याद्धनञ्जयः ॥ ३७ ॥**

**यथा कुर्याद्धनञ्जयः** इत्यत्र **धनञ्जयः** अग्निः । 'अग्निर्वैश्वानरो ऽग्निर्वीतिहोत्रो धनञ्जयः'[3] इत्यमरः ।

॥ इति एकपञ्चाशोऽध्यायः ॥

---

१. अ.को. २-८-४२ ; २. कुं. ५५ अध्यायः; ३. अ.को. १-१-४२

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

[१] **सर्वस्य जगतो गोप्ता गोप्ता यस्य जनार्दनः ।**
**एवमेतं महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः** ॥ १८ ॥

**गोप्ता यस्य जनार्दनः** इत्यत्र **यस्य** व्यूहस्य ।

॥ इति द्विपञ्चाशोऽध्यायः ॥

## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥

[२] **धार्तराष्ट्रा रणे यत्नात् पाण्डवान् प्रत्ययोधयन् ।**
**प्रार्थयाना यशो दीप्तं मृत्युं [३] कृत्वाऽनिवर्तनम्** ॥ ३ ॥

**मृत्युं कृत्वाऽनिवर्तनम्** इत्यत्र **अनिवर्तनं** मृत्युं **कृत्वा** मनसि निश्चित्य ।

**पत्तिसङ्घा रणे पत्तीन् भिन्दिपालपरश्वधैः ।**
**न्यपातयन्त संहृष्टाः [४] परस्परकृतायसः** ॥ १७ ॥

**परस्परकृतायासः** इत्यत्र परस्परं कृतानि **अयांसि** खड्गशरादीनि येषां ते **परस्परकृतायसः** ।

॥ इति त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

[५] **अथैनं रथवृन्देन कोष्ठकीकृत्य भारत ।**
**शरैः सुबहुसाहस्रैः समन्तादभ्यवारयन्** ॥ २ ॥

---

१. कुं. ५६ अध्यायः । ; २. कुं. ५७ अध्यायः ।
३. 'कृत्वा निवर्तनम्' इति कुं पाठः ।; ४. 'परस्परकृतागसः' इति कुं.पाठः ।
५. कुं. ५८ अध्यायः ।

**कोष्ठकीकृत्य भारत** इत्यत्र **कोष्ठकीकृत्य** अन्तर्गृहवत् मध्ये कृत्वा। 'अन्तर्गेहेऽपि कोष्ठं स्यात्'[१] इति हलः।

**तान्निवृत्तान् समीक्ष्यैव ततोऽन्येपीतरे जनाः।**
**अन्योन्यस्पर्धया राजन् लज्जया चावतस्थिरे ॥ ३१ ॥**

**ततोऽन्येपीतरे जनाः** इत्यत्र **अन्ये** राजानः, **इतरे जनाः**[२] योद्धारश्च।

॥ इति चतुःपञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

[३]**विनिर्भिन्नाः शरैः केचिदन्त्रापीडप्रकर्षिणः।**
**अभीताः समरे शत्रूनभ्यधावन्त**[४] **दर्पिताः ॥ १७ ॥**

**विनिर्भिन्नाः शरैः केचित् अन्त्रा पीडाप्रकर्षिणः** इत्यत्र **अन्त्राणि** मांसमालाः **आपीडानि** छिन्नशिरःसन्धानाय शिरोऽलङ्कारभूताः कृत्वा **प्रकर्षिणः** आकर्षन्तः।

**जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा।**
**श्रियं सखायं चाक्रन्दे सखा दैवबलात्कृतः ॥३८–३९ ॥**

**श्रियं सखायं चाक्रन्दे** इत्यत्र **आ** समन्तात् क्रन्दनं यस्मिन् **आक्रन्दे** युद्धे।

---

१. ह.को. ५.८१७; अन्तर्गृहेऽपि -सो.मु.पा.
२. गोधाश्च -सो.मु.पा.
३. कु. ५५ अध्यायः।
४. दंशिताः इति कुं. पाठः।

**निगृह्यमाणश्च तदाऽऽदिदेवो भृशं सरोषः किल [१] नामयोगी ।**
**आदाय वेगेन जगाम विष्णुर्जिष्णुं महावात इवैकवृक्षम् ॥९९॥**

**निगृह्यमाणश्च तदाऽऽदिदेवो** इत्यत्र **नामयोगी** कृष्णाख्यार्जुननाम्ना योगवान् एकनामेत्यर्थः । अथवा अर्जुनाकर्षणेन कर्षतीति कृष्णः [२] इत्युक्तस्वनाम्नो योगवान् ।

**न हास्य ते कर्म यथाप्रतिज्ञं पुत्रैः शपे केशव सोदरैश्च ।**
**अन्तं करिष्यामि यथा कुरूणां त्वयाऽहमिन्द्रानुज सम्प्रम्युक्तः १०२**

**न हास्य ते कर्म यथाप्रतिज्ञम्** इत्यत्र अस्य ते इदं कर्म **यथाप्रतिज्ञम्** आयुधं न गृह्णामीति प्रतिज्ञामनतिक्रम्य वर्तमानं **नह** नहि ।

**स तानभीषून् पुनराददानः प्रगृह्य शङ्खं द्विषतां निहन्ता ।**
**भीष्मशरैः सम्परिवार्य सङ्ख्ये चिच्छेद भूरिश्रवसश्च चापम् १०५**
**विनादयामास ततो दिशश्च स पाञ्चजन्यस्य रवेण शौरिः १०६**

**स तानभीषून्** इत्यत्र **अभीषून्** रथरश्मीन् ।

**व्याविद्धनिष्काङ्गदकुण्डलं रजोविकीर्णाञ्चितपद्मनेत्रम् ।**
**विशुद्धदंष्ट्रं प्रगृहीतशङ्खं विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः ॥ १०७ ॥**

**विशुद्धदंष्ट्रम्** इत्यत्र मन्दहासेन विशुद्धा दंष्ट्राः अग्रे दन्ता यस्य तं **विशुद्धदंष्ट्रम्** ।

---

१. BORI पृ. ३०२; **चात्मयोगी** - सो.मु.पा.
२. **इत्युक्तः स्वनाम्नो** - सो.मु.पा.

**निकृत्तयन्त्रा निहतेन्द्रजालाः ध्वजा महान्तो ध्वजिनीमुखेषु ।**
**पदातिसङ्घाश्च रथाश्च सङ्ख्ये हयाश्च नागाश्च धनञ्जयेन ।।१२३**

**निकृत्तयन्त्रा [१] निहतेन्द्रजालाः** इत्यत्र इन्द्रजालपदेन मायिमन्त्रादिकमुच्यते ।

**नदी सुघोरा नरमेदफेना प्रवर्तिता तत्र रणाजिरे वै ।**
**वेगेन साऽतीव पृथुप्रवाहा परेतनागाश्वशरीररोधाः ।।१२६।।**

**परेतनागाश्वशरीररोधाः** इत्यत्र रोधः तीरम् । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' [२] इत्यमरः ।

**नराश्वनागास्थिनिकृत्तशर्करा विनाशपालालनवती भयावहा ।**
**तां कङ्कमालावृतगृध्रकङ्कैः क्रव्यादसङ्घैश्च तरक्षुभिश्च ।।**

[३] **विनाशपालालवती भयावहा** इत्यत्र **पालालं** पललसमूहः । 'पललं क्रव्यमामिषम्' [४] इत्यमरः । विनाशे सति यत् पालालं तद्वती । भटानां विनाशवती **पालालवती**ति वा ।

**।। इति पञ्चपञ्चाशोऽध्यायः ।।**

## ।। अथ षट्पञ्चाशोऽध्यायः ।।

**ततः प्रहस्याद्भुतविक्रमेण गाण्डीवमुक्तेन शिलाशितेन ।**
**[illegible]पाठजालेन महास्त्रजालं विनाशयामास किरीटमाली ।।२८।।**

---

१. निहतेन्द्रकीलाः -सो.मु.पा. ; २. अ.को. १-९-७

३. विनाशपातालवती -सो.मु.पा.; ३. अ.को. २-६-६३

विपाठजालेन महास्त्रजालम् इत्यत्र विपाठजालेन शरसमूहेन ।

॥ इति षट्पञ्चाशोऽअध्यायः ॥

## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥

[१]शितनिस्त्रिंशहस्तस्य शरावरणधारिणः ।
बाणवेगमतीतस्य तथाभ्याशमुपेयुषः ॥
त्वरन् सेनापतिः क्रुद्धो बिभेद गदया शिरः ॥२८,२९॥

शरावरणधारिणः इत्यत्र [२]शरान् आ समन्तात् वारयतीति शरावरणं चर्म ।

॥ इति सप्तपञ्चाशोऽध्यायः ॥

## ॥ अष्टपञ्चाशोऽध्यायः ॥

[३]अपश्याम रणे तस्मिन् गिरीन् वज्रहतानिव ।
भग्नदन्तान् भग्नकरान् भग्नसक्थींश्च वारणान् ॥५०,५१॥

भग्नसक्थींश्च वारणान् इत्यत्र सक्थि ऊरुसन्धिः ।

॥ इति अष्टपञ्चाशोऽध्यायः ॥

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

[४]न तत्र कश्चिन्नविषण्ण आसीद्दृते राजन् सोमदत्तस्य पुत्रात् ।
स वै समादाय धनुर्महात्मा भूरिश्रवा भारत सौमदत्तिः ॥ ३२

---

१. कुं. ६१ अध्यायः । ; २. शरान् आ समन्तात् वरा वरणं चर्म । -सो.मु.पा.
३. कुं. ६२ अध्यायः ।; ४. कुं. ६३ अध्यायः ।

इत्यत्र तत्र कश्चिद्विषण्णो नासीदिति न ।

॥ इति एकोनषष्टितमोऽध्यायः ॥

## ॥ अथ एकषष्टितमोऽध्यायः ॥

**सर्वश्च तदनादृत्य पुत्राणां तव किल्बिषम् ।**
**सापह्नवाः[1] सदैवासन् पाण्डवाः पाण्डुपूर्वज ॥ २२ ॥**

**सापह्नवाः सदैवासन्** इत्यत्र **अपह्नवो** निराकरणं, तेन सहिताः सापह्नवाः ।

**तस्य पापस्य सततं क्रियमाणस्य कर्मणः ।**
**साम्प्रतं[2] स महाघोरं फलं किम्पाकसन्निभम् ॥ २३ ॥**

**फलं किम्पाकसन्निभम्** इत्यत्र **किम्पाकं** बिम्बफलं भक्षणसमये स्वादु, 'सद्यो मतिहरी बिम्बा' इति वचनात् पश्चान्मतिघ्नम् । 'किम्पाकः स्यान् महाकाली[3] ओष्ठी बिम्बा च तुण्डिका'[4] इति हलः ।

**महोरगवराहाद्य हरिकेश विभो जय ।**
**हरिवासदिशामीश विश्ववासामिताव्यय ॥ ५२ ॥**

**महोरगवराहाद्य** इत्यत्र महोरगवरेणाहेयत्वात् **महोरगवराहः**, सदा [illegible]शार्यात्यर्थः । तत्सम्बुद्धिः ।

**व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सत्क्रिय ।**
**असङ्ख्येयात्मभावज्ञ जय गम्भीर कामद ॥ ५३ ॥**

---

१. BORI पृ. ३४५; **'धर्ममूलाः'** इति कुं पाठः ।
२. BORI पृ. ३४५; **'प्राप्तं जनेश्वर'** इति कुं पाठः ।
३. **'महाकाला औष्ठी'** सो.मु.पा.; ४. ह.को. २-२०३

**असङ्ख्येयात्मभावज्ञ** इत्यत्र **आत्मनां** जीवानां **भावं** स्वभावं जानातीति **आत्मभावज्ञः**। तत्सम्बुद्धिः।

**पादौ तव धरा देवी दिशो बाहू दिवं शिरः।**
**मूर्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी ॥ ५९ ॥**

**मूर्तिस्तेऽहं सुराः** इत्यत्र अहं ते **मूर्तिः** प्रतिमा। तव नाभिकमले स्थितत्वात्, मूर्तिस्थितत्वात्।

**बलं तपश्च सत्यं च [१]धर्मकर्मात्मजं तव।**
**तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसम्भवाः ॥ ६० ॥**

**धर्मकर्मात्मजं तव** इत्यत्र **आत्मजं** देहाज्जातम्।

**वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मितः।**
**तस्माद्याचामि लोकेश चतुरात्मानमात्मना ॥ ७२ ॥**

**वासुदेवमयः सोऽहम्** इत्यत्र **वासुदेवमयः** वासुदेवप्रधानः।

**॥ इति एकषष्टितमोऽध्यायः ॥**

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**[२]ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः।**
**सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ॥ ३९ ॥**

**शूद्रैश्च कृतलक्षणैः** इत्यत्र **कृतलक्षणैः** कृतशङ्खचक्रादिचिह्नैः। 'चिह्नं लक्ष्म च लक्षणम्'[३] इत्यमरः। **। इति द्विषष्टितमोऽध्यायः।**

---

१. $K_{3.4}.B_{2.4}$; BORI पृ. ३५०; **'कर्म धर्मात्मकं तव'** इति कुं पाठः।
२. कुं. ६७ अध्यायः।; ३. अ.को. १-३-७

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

**ब्रह्मभूतममावास्यां[१] पौर्णमास्यां तथैव च ।**
**योगभूतं परिचरन् केशवं महदाप्नुयात्** ॥ १९ ॥

**ब्रह्मभूतममावास्याम्** इत्यत्र अमावास्यां ब्रह्मभूतं **ब्रह्म** वेदो ब्राह्मणजातिर्वा **भूतं** प्रवृत्तं यस्मात् सः, तम् । अमावास्यां ब्राह्मणैराराध्यः, पौर्णमास्यां योगिभिराराध्य इति भावः ।

॥ इति त्रिषष्टितमोऽध्यायः ॥

## ॥ अथ चतुष्षष्टितमोऽध्यायः ॥

**साध्यानामपि[२] देवानां देवदेवेश्वरः प्रभुः ।**
**लोकभावनभावज्ञ इति त्वां नारदोऽब्रवीत्** ॥ २ ॥

इत्यादिना ब्रह्मा हरिं स्तौति ।

**अव्यक्तं ते शरीरोत्थं व्यक्तं ते मनसि स्थितम् ।**
**देवास्त्वत्संभवाश्चैव देवलस्त्वसितोऽब्रवीत्** ॥ ७ ॥

**अव्यक्तं ते शरीरोत्थम्** इत्यत्र 'रोचनार्थं फलश्रुतिः' इति वचनात् व्यक्तं स्वर्गादिकं फलं यस्य न **तदव्यक्तं** कर्म । व्यज्यते अनेन सर्वं [illegible]मिति **व्यक्तं** ज्ञानम् ।

॥ इति चतुष्षष्टितमोऽध्यायः ॥

---

१ पु. ६७ अध्यायः ।
२ पु. ६८ अध्यायः ।

## ।। अथ सप्तषष्टितमोऽध्यायः ।।

**[१]भीष्ममेवाभ्यलीयन्त सह सर्वैस्तवात्मजैः ।**
**तेषामार्तायनमभूद्भीष्मः शान्तनवो रणे ।। १० ।।**

**तेषामार्तायनमभूत्** इत्यत्र तेषां मध्ये । **आर्तायनम्** आर्तानामयनम् आश्रयः ।

**गन्धहस्तिपदस्रावमाघ्राय बहवो रणे ।**
**सन्निपाते बलौघानां [२]वातमाददिरे गजाः ।। ३७ ।।**

**वातमाददिरे गजाः** इत्यत्र **वातं** मदपरिमलवायुं **आददिरे** आघ्रातवन्तः ।

।। इति सप्तषष्टितमोऽध्यायः ।।

## ।। अथ अष्टषष्टितमोऽध्यायः ।।

**[३]माद्रीपुत्रस्तु नकुलः [४]शूरः सङ्क्रन्दनो भुवि ।**
**त्रिगर्तानां बलैः सार्धं समसज्जत पाण्डवः ।। ७ ।।**

**शूरः सङ्क्रन्दनो भुवि** इत्यत्र भुवि **सङ्क्रन्दनः** इन्द्र इव स्थितः । सम्यक् क्रन्दयति परानिति वा **सङ्क्रन्दनः** ।

---

१. कुं. ७१ अध्यायः ।

२. $S_1$, $K_{0\cdot3}$,$B_{2\cdot4}$ $D_a$,$D_n$,$D_{2\cdot3\cdot7}$ $T_2$,$C_{a.d}$; BORI पृ. ३७६; **'गजैर्ममृदिरे गजाः'** इति कुं पाठः ।

३. कुं. ७२ अध्यायः ।

४. $C_a$; BORI पृ. ३८१; **'शूरसङ्क्रन्दनो युधि'** इति कुं पाठः ।

**वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिम् ।**
**तस्याश्वाः प्रद्रुता राजन्निहते रथसारथौ ।**
**तेन तेनैव [१]गच्छन्ति मनोमारुतरंहसः ॥ ३० ॥**

**तेन तेनैव गच्छन्ति** इत्यत्र येन पथा गन्तुमिच्छन्ति तेन तेन ।

॥ इति अष्टषष्टितमोऽध्यायः ॥

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

**आकर्णप्रहितैस्तीक्ष्णैः [२]निशितैस्तिग्मतैजितैः ।**
**अविध्यत्तूर्णमव्यग्रः कुरुराजं महोरसि ॥ १९ ॥**

**निशितैस्तिग्मतैजितैः** इत्यत्र **तिग्मैः** तेजितैः **तेजनं** शाणधारया उत्तेजनं कारितैः ।

**पुत्रस्तु तव तेजस्वी भीमसेनेन ताडितः ।**
**नामृष्यत यथा नागः [३]तलशब्दसमीरीतम् ॥ २१ ॥**

**तलशब्दसमीरीतम्** इत्यत्र तलशब्दपूर्वकं **समीरणम्**, आह्वान-[मि]त्यर्थः ।

**[४]संविद्धोरःक्षरन् रक्तं शत्रुसंवारणं महत् ।**
**चिच्छेद चित्रसेनस्य चित्रं कार्मुकमार्जुनिः ॥ २७ ॥**

---

१ $B_{1}$,$D_{n2}$,$D_{4\cdot7\cdot8}$; BORI पृ. ३८१; ‘धावन्ति’ इति कुं पाठः ।
२ $B_{1}$,$D_{n2}$,$D_{4\cdot7\cdot8}$; BORI पृ. ३८४; ‘वेगवद्भिरजिह्मगैः’ इति कुं पाठः ।
३ $D_{n1}$; BORI पृ. ३८४; ‘तलशब्दं मदोत्कटः’ इति कुं पाठः ।
४ ‘सं विद्धो विक्षरन् रक्तं’ इति कुं पाठः ।

**संविद्धोरःक्षरन्** इत्यत्र संविद्धोरसि क्षरन् ।

॥ इति एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

**[1]समासाद्य महेष्वासं भूरिश्रवसमाहवे ।**
**ऊचुः सर्वे सुसंरब्धा [2]धूमकेतुं महारणे** ॥ १३ ॥

**धूमकेतुं महारणे** इत्यत्र धूमः केतौ यस्य स **धूमकेतुः** भूरिश्रवाः । तम् ।

॥ इति सप्ततितमोऽध्यायः ॥

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

**[3]नातिवृद्धमबालं च न कृशं न च पीवरम् ।**
**लघुवृत्तायतप्रायं सागराकारमव्ययम्** ॥ ३ ॥

**न कृशं न च पीवरम्** इत्यत्र **पीवरम्** अतिस्थूलाङ्गम् ।

॥ इति द्विसप्ततितमोऽध्यायः ॥

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

**यदि यामि विना भीमं किं मां क्षत्रं वदिष्यति ।**
**एकायनगते भीमे मयि चावस्थिते युधि** ॥ ३३ ॥

---

१. कुं. ७४ अध्यायः । २. 'यूपकेतुं' इति कुं पाठः ।
३. कुं. ७६ अध्यायः ।

**मयि चावस्थिते युधि** इत्यत्र **अवस्थिते** तूष्णीमवस्थिते सति ।

**अस्त्विति तस्य कुर्वन्ति देवाः शक्रपुरोगमाः ।**
**यः [१]सहायं परित्यज्य स्वस्तिमानाव्रजेद्गृहम् ॥ ३४ ॥**

**स्वस्तिमानाव्रजेद्गृहम्** इत्यत्र यः सहायं परित्यज्य स्वस्तिमान् गृहमाव्रजेत् तस्येति पूर्वेण सम्बन्धः ।

**सोऽहं तत्र गमिष्यामि यत्र यातो वृकोदरः ।**
**निघ्नन्तं मां रिपून् पश्य दानवानिव वासवम् ॥ ३६ ॥**

**निघ्नन्तं माम्** इत्यत्र निघ्नन्तं सर्वे पश्यन्त्विति योग्यक्रियाध्याहारः ।

॥ इति त्रिसप्ततितमोऽध्यायः ॥

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

**[२]अश्वान् मनोजवांस्तस्य [३]कल्माषान् वातरंहसः ।**
**जघान निशितैस्तूर्णं सर्वान् द्वादशभिः शरैः ॥ ५१ ॥**

**कल्माषान् वातरंहसः** इत्यत्र 'कल्माषः कृष्णपाण्डुरः'[४] इत्यभिधानात् **कल्माषान्** कृष्णपाण्डुरान् ।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

**[५]तेनैव मुक्तः प्रहसन्महात्मा दुर्योधनं [६]जातमन्युं विदित्वा ।**
**तं प्रत्युवाचाविमना मनस्वी गङ्गासुतः शस्त्रभृतां वरिष्ठः ॥ ७ ॥**

१. 'सहायान्' इति पाठान्तरम् । ; २. कुं. ७९ अध्यायः ।
३. 'कर्बुरान्' इति कुं पाठः । ; ४. ह.को. ४-७३६
५. कुं. ८० अध्यायः । ; ६. BORI पृ. ४२३; **'मन्युगतं'** इति कुं पाठः ।

**जातमन्युं विदित्वा** इत्यत्र **जातमन्युं** जातशोकम् । 'मन्युशोकौ तु शुक् स्त्रियाम्'[१] इत्यमरः ।

**प्रहर्षयुक्तानि तु तानि राजन् महान्ति नानाविधशस्त्रवन्ति ।**
**[२]भिन्नानि नागाश्वपदातिमन्ति विरेजुराजौ तव राजन् बलानि**
**॥ १४ ॥**

**भिन्नानि नागाश्वपदातिमन्ति** इत्यत्र **भिन्नानि** पृथक् पृथक् पुञ्जीभूतानि ।

॥ इति षट्सप्ततितमोऽध्यायः ॥

## ॥ अथ अष्टसप्ततितमोऽध्यायः ।

**[३]भारद्वाजस्ततः क्रुद्धः शरमाशीविषोपमम् ।**
**चिक्षेप समरे तूर्णं शङ्खं प्रति [४]जनेश्वर ॥ २१ ॥**

**शङ्खं प्रति जनेश्वर** इत्यत्र **शङ्खं** शङ्खनामकं विराटपुत्रम् ।

**शिखण्डी तु भृशं राजंस्ताड्यमानः शितैः शरैः ।**
**आरुरोह रथं तूर्णं माधवस्य महात्मनः ॥ ३८ ॥**

**माधवस्य महात्मनः** इत्यत्र **माधवस्य** मधुकुलोत्पन्नस्य सात्यकेः ।

**शकुनिस्तं समभ्येत्य राजगृद्धी महाबलः ।**
**राजानं सर्वलोकस्य रथमारोपयत् स्वकम् ॥ ५४ ॥**

---

१. अ.को. १-७-२५ ; २. '**स्थितानि**' इति कुं पाठः ।
३. कुं. ८२ अध्यायः ।; २. BORI पृ. ४३४; '**जनेश्वरः**' इति कुं पाठः ।

**राजानं सर्वलोकस्य** इत्यत्र सर्वलोकस्य पश्यतः सत इति योग्यपदाध्याहारः ।

**हताश्वश्च ततस्तूर्णं [१]बृषकस्य रथं ययौ ।**
**स्यालस्य ते महाराज तव पुत्रस्य पश्यतः ॥ ६१ ॥**

**बृषकस्य रथं ययौ** इत्यत्र वृषको नाम शकुनेरनुजः ।

**॥ इति अष्टसप्ततितमोऽध्यायः ॥**

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[२]सा वध्यमाना समरे धार्तराष्ट्री महाचमूः ।**
**वेगान् बहुविधांश्चक्रे विषं पीत्वेव मानवः ॥ २४ ॥**

**वेगान् बहुविधांश्चक्रे** इत्यत्र **बहुविधान्** पुरतः पृष्ठतः पार्श्वतश्च धावनरूपान् वेगान् ।

**ततः प्राग्ज्योतिषो राजा नागराजं समास्थितः ।**
**यथा वज्रधरः पूर्वं सङ्ग्रामे तारकामये ॥ २६ ॥**

**सङ्ग्रामे तारकामये** इत्यत्र **तारकामये** मिषतां चक्षुस्तारकाणामामयो यस्मात् तस्मिन् ।

**निवृत्तेषु तु पाण्डूनां पुनः सैन्येषु भारत ।**
**आसीत् निस्वानको[३] घोरस्तव सैन्यस्य संयुगे ॥ ३१ ॥**

---

१. BORI पृ. ४३८; **'सुबलस्य'** इति कुं. पाठः ।
२. कुं. ८३ अध्यायः । ; ३. **'निष्टानकः'** इति कुं पाठः ।

**आसीत् निस्वानको** इत्यत्र **निस्वानकः** निस्वनः ।

॥ इति एकोनाशीतितमोऽध्यायः ॥

## ॥ अथ अशीतितमोऽध्यायः ॥

**[१]स तु तं रथमुत्सृज्य धृष्टकेतुर्महामनाः ।**
**आरुरोह ततो [२]वाहं शतानीकस्य मारिष ॥ ३९ ॥**

**आरुरोह ततो वाहम्** इत्यत्र वहतीति **वाहो** रथः ।

॥ इति अशीतितमोऽध्यायः ॥

## ॥ अथ एकाशीतितमोऽध्यायः ॥

**[३]तेषां रथानामथ पृष्ठगोपा द्वात्रिंशदन्येऽभ्यपतन्त पार्थम् ।**
**तथैव ते तं परिवार्य पार्थं विकृष्य चापानि महारवाणि ॥ ५ ॥**

**तेषां रथानामथ पृष्ठगोपा** इत्यत्र तेषां रथानां मध्ये **पृष्ठगोपाः** सुशर्मणः पृष्ठगोपाः ।

**अथैत्य राजा युधि सत्यसन्धो जयद्रथोऽत्युग्रबलो मनस्वी ।**
**चिच्छेद चापानि महारथानां प्रसह्य तेषां धनुषा वरेण ॥ १६ ॥**

**जयद्रथोऽत्युग्रबलो मनस्वी** इत्यत्र [४]'छिन्नायुधं शान्तनवेन' इति, 'निकृत्तचापः शान्तनवेन'[५] इति च वक्ष्यमाणत्वात् जयन् रथो यस्येति **जयद्रथो** भीष्मः ।

---

१. कुं. ८४ अध्यायः । २. $S_1$; BORI पृ. ४४०; **'यानं'** इति कुं पाठः ।
३. कुं. ८५ अध्यायः । ; ४. छिन्नायुधः शान्तनवेनेति - भीष्म प. ८५-१४
५. भीष्म प. ८५-२३

**उक्त्वा तथा त्वत्पितुरग्रतो मामहं हनिष्यामि महाव्रतं तम् ।**
**भीष्मं शरौघैर्विमलार्कवर्णैः सत्यं वदामीति कृता प्रतिज्ञा ।।२०।।**

**मा महं हनिष्यामि** इत्यत्र मां प्रति भीष्मं हनिष्यामीत्युक्त्वा तथा प्रतिज्ञा च कृता। स्वोक्तवचनं प्रति अकरणे वह्निं प्रवेक्ष्यामीत्यादिरूपेण [1] यद्बाधकज्ञापनं सा प्रतिज्ञा ।

**प्रेक्षस्व भीष्मं युधि भीमवेगं सर्वांस्तपन्तं मम सैन्यसङ्घान् ।**
**शरौघजालैरतितिग्मवेगैः कालं यथा कालकृतं क्षणेन ।। २२ ।।**

**कालं यथा कालकृतं क्षणेन** इत्यत्र **कालकृतम्** आयुरवसानकाले कृतम् ।

**स धर्मराजस्य वचो निशम्य रूक्षाक्षरं विप्रलापानुबद्धम् ।**
**प्रत्यादेशं मन्यमानो महात्मा प्रतत्वरे भीष्मवधाय राजन् ।।२६।।**

**प्रत्यादेशं मन्यमाना** इत्यत्र 'प्रत्यादिष्टो निरस्तः स्यात्'[2] इत्यभिधानात् **प्रत्यादेशं** निरासं स्वनिराकरणमित्यर्थः ।

**ततः समुत्सृज्य धनुः सबाणं युधिष्ठिरं वीक्ष्य भयाभिभूतम् ।**
**गदां प्रगृह्याभिपपात सङ्ख्ये जयद्रथं भीमसेनः पदातिः ।। ३१ ।।**

**जयद्रथं भीमसेनः पदातिः** इत्यत्र तु सिन्धुराजस्येति वक्ष्यमाणत्वात् **जयद्रथः** सैन्धव एव ।

।। इति एकाशीतितमोऽध्यायः ।।

---

१. यद्बन्धकज्ञापनं
२. अ.को. ३-१-४०

## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

[१] **तथैव शरजालानि भीष्मेणास्तानि मारिष ।**
**आकाशे समदृश्यन्त खगमानां व्रजा इव** ॥ ७ ॥

**भीष्मेणास्तानि मारिष** इत्यत्र **अस्तानि** क्षिप्तानि ।

**तत्राक्रन्दो महानासीत् तावकानां महात्मनाम् ।**
**वध्यतां समरे राजन् पार्षतेन महात्मना** ॥ ३२ ॥

**वध्यतां समरे राजन्** इत्यत्र **वध्यतां** वध्यमानानाम् ।

॥ इति द्व्यशीतितमोऽध्यायः ॥

## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

[२] **बृहद्बलादनु नृप त्रिगर्तः [३] प्रच्छलाधिपः ।**
**काम्भोजैर्बहुभिः सार्धं यवनैश्च सहस्रशः** ॥ १० ॥

**त्रिगर्तः प्रच्छलाधिपः** इत्यत्र प्रकर्षेण **छलं** युद्धं न त्यजाम इति छलं येषां ते **प्रच्छलाः** संशप्तकाः, तेषामधिपः ।

**ततः स पार्षतः क्रूरो व्यूहं चक्रे सुदारुणम् ।**
**शृङ्गाटकं महाराज परव्यूहविनाशनम्** ॥ १७ ॥

**शृङ्गाटकं महाराज** इत्यत्र गोशृङ्गद्वयाकारेण वर्तमानो व्यूहः **शृङ्गाटकः** । प्रागुक्तः कौरवव्यूहस्तु दण्डाकारः ।

---

१. कुं. ८६ अध्यायः । ; २. कुं. ८७ अध्यायः ।
३. $K_{03}$, $D_{n2}$, $D_{4\cdot7\cdot8}$; BORI पृ. ४४२; **'प्रस्थलाधिपः'** इति कुं पाठः ।

**निष्पेतुर्विमलाः शक्त्यस्तैलधौताः सुतेजनाः ।**
**अम्बुदेभ्यो यथा राजन् भ्राजमानाः शतह्रदाः ॥ २७ ॥**

**भ्राजमानाः शतह्रदाः** इत्यत्र **शतह्रदाः** विद्युतः । 'शतह्रदा ह्लादिनी तटिद्विद्युत्'[१] इति हलः ।

॥ इति त्र्यशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

**[२]भीमस्तु सारथिं हत्वा भीष्मस्य रथिनां वरः ।**
**[३]प्रहताश्वरथे तस्मिन् द्रवमाणः समन्ततः ॥ १२ ॥**

**प्रहताश्वरथे तस्मिन् द्रवमाण** इत्यत्र तस्मिन् भीष्मे प्रहताश्वरथे सति तं विहाय द्रवमाणः भीमः ।

**समयश्च मया पूर्वं कृतो वै शत्रुकर्शन ।**
**नाहं युधि [४]विमोक्तव्यो नाप्याचार्यः कथञ्चन ॥ ४१ ॥**

**यं यं हि धार्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे ।**
**हनिष्यति रणे [५]नित्यं सत्यमेतद् ब्रवीमि ते ॥ ४२ ॥**

**नाहं युधि विमोक्तव्यो** इत्यत्र **यत्** यस्मात् अहं युधि पितामह इति धर्मबुद्ध्या भवद्भिर्न विमोक्तव्यः, आचार्यश्च गुरुबुद्ध्या न विमोक्तव्यः,

---

१. ह.को. १-६० ; २. कुं. ८८ अध्यायः ।
३. '**प्रद्रुताश्वे रथे तस्मिन् द्रवमाणे समन्ततः**' इति कुं पाठः ।
४. BORI पृ. ४७५; '**नियोक्तव्यः**' इति कुं पाठः ।
५. '**तं तं**' इति कुं. पाठः ।

इति पाण्डवान् प्रति समयः कृतः तस्मादत्र भीमो यं यं द्रक्ष्यति तं तं हनिष्यतीति सम्बन्धः ।

॥ इति चतुरशीतितमोऽध्यायः ॥

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

**[१]निवारय सुतं द्यूतात् पाण्डवान् मा [२]रुदेति वै ।**
**सुहृदां हितकामानां ब्रुवतां तत्तदेव च ॥ १० ॥**

**मा रुदेति वै** इत्यत्र रुद रोदय ।

**न शृणोमि पुरा वाक्यं मर्त्यः पथ्यमिवौषधम् ।**
**तदिदं समनुप्राप्तं वचनं साधु भाषितम् ॥ ११ ॥**

**न शृणोमि पुरा वाक्यम्** इत्यत्र यदा यदा यद्यद्वक्तव्यं तत्तदेव तदा तदा ब्रुवतामिति सम्बन्धः ।

**अर्जुनो द्रौपदेयाश्च चेकितानश्च वीर्यवान् ।**
**दुर्योधनसमादिष्टान् राज्ञः सर्वान् समभ्ययुः ॥ १९ ॥**

**राज्ञः सर्वान् समभ्ययुः** इत्यत्र **राज्ञः** सहायार्थमागतान् विजातीयान् नृपान् ।

**अभिमन्युस्तथा शूरो हैडिम्बश्च महारथः ।**
**भीमसेनश्च सङ्क्रुद्धस्तेऽभ्यधावन्त कौरवान् ॥ २० ॥**

**अभ्यधावन्त कौरवान्** इत्यत्र **कौरवान्** कुरुकुलोत्पन्नान् ।

---

१. कुं. ८९ अध्यायः। ; २. 'द्रुहेति च' इति कुं पाठः ।

**कूजतां [१] नदतां चैव स्वनतां चैव भारत ।**
**अनिशं शुश्रुवे शब्दः क्षुत्क्लिष्टानां नृणामिव ॥ २९ ॥**

**कूजतां नदतां चैव** इत्यत्र कूजतां भटानां, नदताम् अश्वानां, स्वनतां गजानामिति सम्बन्धः ।

**अनुकर्षैः शुभै राजन् योक्त्रैश्चैव सरश्मिभिः ।**
**सङ्कीर्णा वसुधा भाति वसन्ते कुसुमैरिव ॥ ३८ ॥**

**अनुकर्षैः शुभै राजन्** इत्यत्र **अनुकर्षैः** अश्वग्रीवास्रस्तयुगैः । 'अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगाद्युगाः' [२] इत्यमरः ।

॥ इति पञ्चाशीतितमोऽध्यायः ॥

## ॥ अथ षडशीतितमोऽध्यायः ॥

**[३] ततः काम्बोजमुख्यानां नदीजानां च वाजिनाम् ।**
**[४] आजानेयमहीजानां सिन्धुजानां च सर्वशः ॥ ३ ॥**
**वनायुजानां शुभ्राणां तथा पर्वतवासिनाम् ।**
**वाजिनां बहुभिः सङ्ख्ये समन्तात् परिवारयन् ॥ ४ ॥**

**वनायुजानां शुभ्राणाम्** इत्यत्र 'आजानेयाः कुलीनाः स्युः' [५] इत्यभिधानात् **आजानेयानां** कुलीनानां, **महीजानाम्** अस्यां भूमौ जातानाम् । [६] **वनायुजानां** वनायुदेशजातानाम् । अश्वेषु जातिविशेषोऽयम् ।

---

१. **'क्रन्दतां चैव स्तनतां'** इति कुं पाठः । ; २. अ.को. २-८-५७
३. कुं. ९० अध्यायः । ; ४. **'आरट्टानां महीजानां'** इति कुं पाठः ।
५. अ.को. २-८-४४ ; ६. वानायुजानां वानायुदेशजातानाम् सो.मु.पा

**ये चापरे तित्तिरिजा जवना वातरंहसः ।**
**सुवर्णालङ्कृतैरेतैर्वर्मवद्भिः सुकल्पितैः ॥ ५ ॥**

**ये चापरे तित्तिरिजा** इत्यत्र [1] **तित्तिरिजाः** तित्तिरिदेशे जाताः ।

**ते त्वदीयान् समासाद्य हयसङ्घान् मनोजवान् ॥ २२ ॥**
**क्रोडैः [2] क्रोडान्यभिघ्नन्तो घोणाभिश्च परस्परम् ।**
**निपेतुः सहसा राजन् सुवेगाभिहता भुवि ॥ २३ ॥**

**क्रोडान्यभिघ्नन्तो** इत्यत्र **क्रोडं** भुजस्थानीययोरग्रपादयोर्मध्यम् । 'न ना क्रोडं भुजान्तरम्' [3] इत्यमरः ।

**वायुवेगसमस्पर्शाञ्जवे वायुसमांश्च ते ।**
**आरुह्य बलसम्पन्नान् वयःस्थांस्तुरगोत्तमान् ॥ २९ ॥**

**वयःस्थांस्तुरगोत्तमान्** इत्यत्र **वयःस्थान्** यौवनवयःस्थान् ।

**अब्रवीत् समरे योधान् स्वान्विचित्रहयस्थितान् ।**
**यथैते धार्तराष्ट्रस्य योधाः सानुगवाहनाः ॥ ३४ ॥**

**हन्यन्ते समरे सर्वे तथा नीतिर्विधीयताम् ।**
**बाढमित्येवमुक्त्वा ते सर्वे योधा इरावतः ॥ ३५ ॥**

**यथैते धार्तराष्ट्रस्य** इत्यत्र यथा हन्यन्ते इति [4] योजना ।

॥ इति षडशीतितमोऽध्यायः ॥

---

१. तित्तिरजाः तित्तिरदेशे सो.मु.पा.; २. '**क्रोडानभिघ्नन्तः**' इति कुं पाठः ।
३. अ.को. २-६-७७; ४. योग्यपदाध्याहारः सो.मु.पा.

[१] रौद्रे तस्मिन् राक्षसेन्द्रे यदि[२] तेऽनुशयो महान् ।
अयं वा गच्छतु रणे तस्य युद्धाय दुर्मतेः ॥ १५ ॥

भगदत्तो महीपालः पुरन्दरसमो युधि ।
एतावदुक्त्वा राजानं भगदत्तमथाब्रवीत् ॥ १६ ॥

**तेऽनुशयो महान्** इत्यत्र **अनुशयः** हन्तव्य इति बुद्धिः ।

वारयस्व रणे यत्तो मिषतां सर्वधन्विनाम् ।
राक्षसं क्रूरकर्माणं यथेन्द्रस्तारकं पुरा ॥ १८ ॥

**वारयस्व रणे यत्तो** इत्यत्र षण्मुखं पुरस्कृत्येति योग्यपदाध्याहारः ।

स भीमं शरधाराभिस्ताडयामास पार्थिवः ।
पर्वतं वारिधाराभिः [३] सम्पाते जलदो यथा ॥ ३५ ॥

**सम्पाते जलदो यथा** इत्यत्र **सम्पाते** वर्षाकाले । 'धारासम्पात आसारः'[४] इत्यमरः ।

॥ इति एकनवतितमोऽध्यायः ॥

## ॥ अथ द्विनवतितमोऽध्यायः ॥

विपाटितविचित्राभिः [५] कुथाभी राङ्कवैस्तथा ।
ग्रैवेयैश्चित्ररूपैश्च रुक्मकक्ष्याभिरेव च ॥ ७० ॥

---

१. कुं. ९५ अध्यायः । २. 'यदि ते हृच्छयो महान्' इति कुं पाठः ।
३. 'तपान्ते' इति कुं पाठः । ४. अ.को. १-३-११
५. BORI पृ. ५२७; 'कुथाभिरङ्कुशैस्तथा' इति कुं पाठः ।

इत्यत्र राङ्कवैः मृगरोमजैः। 'राङ्कवं मृगरोमजम्'इत्यमरः।

॥ इति द्विनवतितमोऽध्यायः ॥

**अङ्गदी बद्धमुकुटो हस्ताभरणवान्नृप।**
**धार्तराष्ट्रो महाराज विबभौ स पथि व्रजन्** ॥ २१ ॥

**[१]भण्डीपुष्पविकासेन तपनीयनिभेन च।**
**अनुलिप्तः पराद्धर्येन चन्दनेन सुगन्धिना** ॥ २२ ॥

**भण्डीपुष्पविकासेन** इत्यत्र [२]**भण्डीपुष्पविकासेन** कुङ्कुमकुसुम-विकसितेनेति चन्दनस्य विशेषणम्।

**प्रययौ सदनं राजा गाङ्गेयस्य यशस्विनः।**
**अन्वीयमानः सततं सोदरैः परिवारितः** ॥ २८ ॥

**दक्षिणं [३]दक्षिणाकारं सम्भृत्य स्वभुजं तदा** ॥२९॥

**दक्षिणं दक्षिणाकारम्** इत्यत्र **दक्षिणाकारं**, दक्षिणां **आ** समन्तात् करोतीति **दक्षिणाकारः**, तम्। दक्षिणाग्निसदृशं वा।

**[४]तमहं न हनिष्यामि प्राणत्यागेऽपि भारत।**
**[५]सैषा वाङ्निर्मिता धात्रा सैषा वै स्त्री शिखण्डिनी** ॥ २२ ॥

---

१. **'भण्डीपुष्पनिकाशेन'** इति कुं पाठः।
२. **भाण्डी युद्धसन्नाहवान् पुष्पविकासेन**
३. **'दक्षिणः काले'** इति कुं पाठ ः।
४. **कुं. ९८ अध्यायः।**
५. **'याऽसौ प्राङ्निर्मिता'** इति कुं पाठः।

**सैषा वाङ्निर्मिता** इत्यत्र **वाक्** वाङ्नाम्नी कन्या । सा एषा शिखण्डिनी ।

**सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्ता महारणम् ।**
**यं जनाः कथयिष्यन्ति यावत् स्थास्यति मेदिनी ॥ २३ ॥**

**जनाः कथयिष्यन्ति** इत्यत्र **यं** माम् ।

**मन्यमानः स तं राजन् प्रत्यादेशमिवात्मनः ॥ २८ ॥**
**निर्वेदं परमं गत्वा विनिन्द्य [१]परवाच्यताम् ।**
**दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्जुनं रणे ॥ २९ ॥**

**विनिन्द्य परवाच्यताम्** इत्यत्र परेण इदं कुर्विति वाच्यः **परवाच्यः** । तस्य भावः **परवाच्यता**, दास्यमित्यर्थः ।

**दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।**
**द्वाविंशतिमनीकानि सर्वाण्येवाभिचोदय ॥ ३१ ॥**

**द्वाविंशतिमनीकानि** इत्यत्र **द्वाविंशतिं** पुञ्जीकृतैकैकसेनासमूह-गणनायां द्वाविंशतिम् ।

**अयं स्त्रीपूर्वको राजन् शिखण्डी यदि ते श्रुतः ।**
**उद्योगे कथितं सर्वं यथा जाता शिखण्डिनी ॥ ३७ ॥**

**उद्योगे कथितम्** इत्यत्र **उद्योगे** रणोद्योगसमये ।

॥ इति द्विनवतितमोऽध्यायः ॥

---

१. BORI पृ. ५३७; 'परवश्यताम्' इति कुं पाठः ।

## ।। अथ चतुर्नवतितमोऽध्यायः ।।

**[१]द्रोणो भूरिश्रवाः शल्यो भगदत्तश्च मारिष ।**
**दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ।। ४ ।।**

**भगदत्तश्च मारिष** इत्यत्र **मारिष** श्रेष्ठ । 'आर्यो मारिष उच्यते'[२] इति हलः ।

**उत्कृष्टसिंहनादैश्च क्ष्वेलितैश्च पृथग्विधैः ।। १९ ।।**
**[३]भयं प्रतिनदन्तस्तानगच्छाम त्वरान्विताः ।**
**सहसैवाभिसङ्क्रुद्धास्तदासीत्तुमुलं महत् ।। २० ।।**

**भयं प्रतिनदन्तस्तानगच्छाम** इत्यत्र **भयं** भयं यथा भवति तथा ।

।। इति चतुर्नवतितमोऽध्यायः ।।

## ।। अथ पञ्चनवतितमोऽध्यायः ।।

**[४]प्रतिविन्ध्यस्ततो रक्षो बिभेद निशितैः शरैः ।**
**सर्वपारशवैस्तूर्णमकुण्ठाग्रैर्महाबलः ।। ३९ ।।**

इत्यत्र [५]सर्वे पारशवानि तीक्ष्णायांसि येषां ते **सर्वपारशवाः** । 'तीक्ष्णमयः पारशवम्'[६] इति हलः ।

।। इति पञ्चनवतितमोऽध्यायः ।।

---

१. कुं. ९९ अध्यायः । ;   २. ह.को. १-९९
३. **'वयं'** इति कुं पाठः ।;   ४. कुं. १०० अध्यायः ।
५. सर्वतः इति ऊह्यते ।;   ६. ह.को. २-१७१

## ।। अथ अष्टनवतितमोऽध्यायः ।।

**[1]ऋद्ध्या वैश्रवणं चाति नयेन च बृहस्पतिम्** ।। २२ ।।

**सर्वलोकेश्वराः शूरास्तत्र तत्र विशाम्पते ।**

**विप्रद्रुता व्यदृश्यन्त प्राकृता इव मानवाः** ।। २३ ।।

**सर्वलोकेश्वराः शूरा** इत्यत्र वैश्रवणम् अतिक्रम्य वर्तमानाः इति योग्यपदाध्याहारः ।

**दन्तिनश्च नरश्रेष्ठ हीनाः परमसादिभिः ।**

**मृद्नन्तः स्वान्यनीकानि निपेतुः सर्वशब्दगाः** ।। २४ ।।

**निपेतुः सर्वशब्दगाः** इत्यत्र सर्वेषां हाहाकारशब्दानुल्लङ्घ्य गच्छन्तीति **सर्वशब्दगाः** ।

**।। इति अष्टनवतितमोऽध्यायः ।।**

## ।। अथ एकोनशततमोऽध्यायः ।।

**[2]सर्वोद्योगेन महता धनञ्जयमुपाद्रवत् ।**

**त्रिगर्ताधिपतेरर्थे जीवितस्य विशाम्पते** ।। १० ।।

**त्रिगर्ताधिपतेरर्थे** इत्यत्र त्रिगर्ताधिपतेः जीवितस्य अर्थे इति सम्बन्धः ।

**अवप्लुत्य ततो वाहात् बाह्लीकः पुरुषोत्तमः ।**

**आरुरोह रथं तूर्णं लक्ष्मणस्य महारणे** ।। २७ ।।

---

१. कुं. १०३ अध्यायः । ; २. कुं. १०४ अध्यायः ।

**अवप्लुत्य ततो वाहात्** इत्यत्र वहति राजानमिति **वाहो** रथः, तस्मात् ।

॥ इति एकोनशततमोऽध्यायः ॥

## ॥ अथ शततमोऽध्यायः ॥

[१] **तदापतद्वै सहसा शल्यस्य सुमहद्बलम् ।**
**महौघवेगं समरे वारयामास पाण्डवः** ॥ ३० ॥

**महौघवेगं समरे** इत्यत्र **महान् ओघः** जलप्रवाहः ।

॥ इति शततमोऽध्यायः ॥

## ॥ अथ एकाधिकशततमोऽध्यायः ॥

[२] **शिरःकालिङ्गकै रुण्डकूष्माण्डैर्विभटैः पटैः** इत्यत्र शिरांस्येव **कालिङ्गानि** कालिङ्गफलानि । **रुण्डाः** कबन्धा एव कूष्माण्डाः । **विभटैः** भटेभ्यो विगतैः छित्वा पतितैः दीर्घाकारहस्तपादाद्यैः । **पटैः** पटोलैः **काले** फलकाले । विभटैर्भटैः इति पाठे **शिरःकालिङ्गकैः** शिरांसि कालिङ्गकानि येषां तैः । **रुण्डकूष्माण्डैः** रुण्डा एव कूष्माण्डाः येषां तैः । राज्ञां **विभटैः** विरुद्धभटैः **भटैः** निजभटैश्च । **क्षिप्तैः** भूम्यां निक्षिप्तैः । **काले,** तादर्थ्ये सप्तमी, कालाय मृत्यवे । मृधे [३] शाकवनं व्याधादिति योजना ।

---

१. कुं. १०५ अध्यायः ।

२. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

३. **शाकपनं** सो.मु.पा.

[1]**भीष्मभल्लाग्रविश्रान्तभ्रमत्** [2]**कुड्मलपाणिभिः** इत्यत्र भीष्मभल्लाग्राणि विश्रान्तानि यासु । स्त्रीत्वात् वेतालनारीषु शरं न मुञ्चतीत्यर्थः । ताश्च ताः भ्रमत्[3] कुड्मलपाणयश्च, ताभिः । तादर्थ्ये तृतीया । ताभ्यो दत्ता आसीदित्यर्थः । अथवा वृद्धवेतालनारीभिः [4]एनं भिन्धीति भीष्माय दत्ता आसीत् ।

[5]**संसाराङ्कणे रणयुगन्धरम्** इत्यत्र संसाराख्याङ्कणे [6]क्षेत्राङ्कणे रण एव युगः, तं धारयतीति **रणयुगन्धरः,** तं माम् । उक्ष्णः साम्यायेदमुदितम् ।

॥ इति एकाधिकशततमोऽध्यायः ॥

## ॥ अथ द्व्यधिकशततमोऽध्यायः ॥

**दुर्योधनार्थं योत्स्यामि सत्यमेतदिति प्रभो ।**
**स हि राज्यस्य [7]नो दाता मन्त्रस्यैव च माधव ॥ ४६ ॥**

**नो दाता मन्त्रस्यैव च माधव** इत्यत्र राज्यस्य दाता नो न भवति । किन्तु मन्त्रस्यैव दाता ।

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. 'कुट्टल; कुट्मल; छद्मल सो.मु.पा.
३. कुट्टल; कुट्मल; छद्मल सो.मु.पा.
४. एनं छिन्धि एनं भिन्धीति; एनं छिन्धि भिन्धीति सो.मु.पा.
५. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
६. क्षेत्राङ्कणे इति नास्ति सो.मु.पा.
७. 'मं' इति कुं पाठः ।

**इमं मे शृणु राजेन्द्र सङ्कल्पं पूर्वचिन्तितम् ।**
**[1]अमाङ्गल्यध्वजं दृष्ट्वा न युद्ध्येयं कदाञ्चन ॥ ७९ ॥**

**अमाङ्गल्यध्वजं दृष्ट्वा** इत्यत्र **अमाङ्गल्यस्य** योद्धुरमाङ्गल्यस्य ध्वजः चिह्नं स्त्रीत्व, स्त्रीनामधेयत्व, क्लीबत्वादिकं यस्य तम् ।

**[2]दिष्टमेतत्पुरा देवैर्भविष्यत्यवशस्य ते ॥ ९८ ॥**

**दिष्टमेतत्पुरा देवैः** इत्यत्र **दिष्टं** देवैराज्ञप्तं, देवैः शिरसि लिखितमित्यर्थः ।

**॥ इति द्व्यधिकशततमोऽध्यायः ॥**

॥ अथ त्र्यधिकशततमोऽध्यायः ।

**[3]ध्मायत्सु दधिवर्णेषु जलजेषु समन्ततः ।**
**शिखण्डिनं पुरस्कृत्य निर्याताः पाण्डवा युधि ॥ ३ ॥**

**जलजेषु समन्तत** इत्यत्र **जलजेषु** शङ्खेषु ।

**॥ इति त्र्यधिकशततमोऽध्यायः ॥**

॥ अथ पञ्चाधिकशततमोऽध्यायः ।

**[4]ततो दुर्योधनो राजन् वार्ष्णेयं वीक्ष्य पीडितम् ॥ ३२ ॥**
**दुःशासनं शतेनाजौ नाराचानां समार्पयत् ॥ ३३ ॥**

---

१. **'असङ्कल्पध्वजं'** इति कुं पाठः ।; २. BORI पृ. ६००; **'दृष्टं'** इति कुं पाठः
३. BORI पृ. ६०२; **'ध्मायमानेषु शङ्खेषु पाण्डरेषु'** इति कुं पाठ ः।
४. **'ततोऽर्जुनो जातमन्युः'** इति कुं पाठः ।

**ततो दुर्योधनो राजन्** इत्यत्र योद्धुमशक्यः **दुर्योधनः** अर्जुनः । 'ततोऽर्जुनो जातमन्युः' इति पाठे स्पष्टोऽर्थः ।

**॥ इति पञ्चाधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्ताधिकशततमोऽध्यायः ॥

**[1]पपात महती चोल्का मध्येनादित्यमण्डलात् ।**
**[2]सकबन्धः सपरिघो भानुमावृत्य तिष्ठति ॥ ९ ॥**

**सकबन्धः सपरिघो** इत्यत्र परिघायुधेन सहितः **सकबन्धः** राहुकबन्धः ।

**छिद्यन्ते च ध्वजाग्राणि तोमराणि धनूंषि च ॥ २६ ॥**
**प्रासाश्च विमलास्तीक्ष्णाः शक्त्यश्च कनकोज्ज्वलाः ।**
**वैजयन्त्यश्च नागानां सङ्क्रुद्धेन किरीटिना ॥ २७ ॥**

**वैजयन्त्यश्च नागानाम्** इत्यत्र **वैजयन्त्यः** पताकाः । 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्'[3] इत्यमरः ।

**उपेन्द्रसदृशश्यामो महाशाल इवोद्गतः ।**
**एष गच्छत्यनीकाग्रे द्वितीय इव [4]फाल्गुनः ॥ ३८ ॥**

**एष गच्छत्यनीकाग्रे द्वितीय इव फाल्गुन** इत्यत्र **एषः** धर्मराजः **फाल्गुनः** फाल्गुनमाससम्बन्धी सूर्यः, फल्गुनसम्बन्धी कृष्णो वा ।

**॥ इति सप्ताधिकशततमोऽध्यायः ॥**

---

१. कुं. ११२ अध्यायः । ; २. **'सकबन्धश्च परिघः'** इति कुं पाठः ।
३. अ.को. २-८-९९; ४. **'फल्गुनः'** इति कुं पाठः ।

## ॥ अथ नवाधिकशततमोऽध्यायः ॥

**[१]तावकानां जये भीष्मो ग्लह आसीद्दिशाम्पते ।**
**तत्र हि द्यूतमासक्तं विजयायेतराय वा ॥ ४४ ॥**

**भीष्मो ग्लह आसीद्दिशाम्पत** इत्यत्र द्यूते जेतुः[२] कल्पितं द्रव्यं **ग्लह** इत्युच्यते । 'पणोऽक्षेषु ग्लहः पुमान्'[३] इत्यमरः । तव नेदं, ममैवेदमिति यथा ग्लहलाभाय कलहः एवं भीष्मार्थमुभयोः सेनयोः कलहात् ग्लहस्थानो भीष्मः ।

**भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम् ।**
**आपतन्तीं महाराज वेलामिव [४]महोदधेः ॥ ४७ ॥**

इत्यत्र महोदधेः **वेलां** जलप्रवाहमिव । 'वेला तत्तीरनीरयोः' इत्यभिधानम् ।

॥ इति नवाधिकशततमोऽध्यायः ॥

## ॥ अथ चतुर्दशाधिकशततमोऽध्यायः ॥

**[५]अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।**
**अनुलोमः सुगन्धी च पृषतैश्च समन्वितः ॥ ३८ ॥**

**अस्य वाक्यस्य निधने** इत्यत्र **निधने** नाशे अवसाने इत्यर्थः ।

---

१. कुं. ११४ अध्यायः ।; २. जेतुं सो.मु.पा.
३. अ.को. २-१०-४५;
४. $K_{3\cdot4}$.$B_{1\cdot3\cdot4}$.Da.$D_{1\cdot2}$; BORI पृ. ६०३; **'महोदधिः'** इति कुं पाठः ।
५. कुं. ११९ अध्यायः ।

**सम्भ्रमश्च महानासीत् त्रिदशानां विशाम्पते ।**
**पतिष्यति रथाद्भीष्मे सर्वलोकप्रिये तदा ॥ ४१ ॥**

**पतिष्यति रथाद्भीष्मे** इत्यत्र पतिष्यति सतीति सप्तमी ।

**कृन्तन्ति मम गात्राणि [१] माघमा सेगवामिव ।**
**अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः ॥ ६६ ॥**

**कृन्तन्ति मम गात्राणि माघमा सेगवामिव** इत्यत्र **माघमा** कर्कटीसन्ततिः **सेगवां** स्वमातृभूतां कर्कटीमिव । 'सेगवा कर्कटी प्रोक्ता माघमा तत्सुता मता' इत्यभिधानम् । कर्कटीसन्ततिः स्वमातृपृष्ठमेव निर्भिद्य जायते इति प्रसिद्धिः ।

**चर्माथादत्त गाङ्गेयो जातरूपपरिष्कृतम् ।**
**खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे [२] जयद्रथः ॥ ७० ॥**

**मृत्योरग्रे जयद्रथः** इत्यत्र जयन् रथो यस्येति **जयद्रथो** भीष्मः ।

**कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः ।**
**[३] कालं कर्ता नरव्याघ्रः सम्प्राप्ते दक्षिणायने ॥ ९८ ॥**

**कालं कर्ता नरव्याघ्रः** इत्यत्र **कालं** मरणकालं **कर्ता** अङ्गीकर्ता कथं स्यात् ।

**इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ।**
**भीष्मः कथं महात्मा सन् [४] संस्थितो दक्षिणायने ॥ १०५ ॥**

---

१. D.$_{6\cdot8}$; BORI पृ. ६८१; **'माधमां सेगवा इव'** इति कुं पाठः ।
२. **'जयाय वा'** इति कुं पाठः ; ३ BORI पृ. ६८१; **'कालकर्ता'** इति कुं पाठः
४. **'संस्थाता'** इति कुं पाठः ।

**संस्थितो दक्षिणायन** इत्यत्र **संस्थितः** मृतः । 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः'[१] इत्यमरः ।

**इत्युक्त्वा [२]प्रस्थितान् हंसान् दक्षिणामभितो दिशाम् ।**
**सम्प्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत ॥ १०६ ॥**

**इत्युक्त्वा प्रस्थितान्** इत्यत्र **प्रस्थितान्** प्रकर्षेण स्थानोद्युक्तान् ।

**[३]ऐश्वर्यभूतः प्राणानामुत्सर्गे नियमो यतः ॥ १०९ ॥**
**तस्मात् प्राणान् धारयिष्ये मुमूर्षुरुदगायने ॥ ११० ॥**

**ऐश्वर्यभूतः प्राणानाम्** इत्यत्र **ऐश्वर्यभूतः**, ऐश्वर्यं ईश्वरसम्बन्धी प्रसादः, तस्माद् भूतः । प्राणानामुत्सर्गे नियमः यदा भवितव्यं [४]तदैव भवेदिति नियमः ।

**तस्मिन् हते महासत्त्वे [५]भारतानाममद्यपे ॥ ११३ ॥**
**न किञ्चित् प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ ॥ ११४ ॥**

**भारतानाममद्यपे** इत्यत्र **अमद्यपे** मद्यपानं न करोमीति व्रतवति, अत एव महाव्रते इत्यर्थः ।

॥ इति चतुर्दशाधिकशततमोऽध्यायः ॥

---

१. अ.को. २-८-११७
२. BORI पृ. ६८१; **'प्रस्थिता हंसाः'**
३. BORI पृ. ६८२; **'प्राणानां च समुत्सर्ग ऐश्वर्यं नियतं मम'** इति कुं पाठः ।
४. **तदेव** सो.मु.पा.
५. $M_{4\cdot5}$; BORI पृ. ६८२; **'भरतानां पितामहे'** इति कुं पाठः ।

## ।। अथ पञ्चदशाधिकशततमोऽध्यायः ।।

[१]विनिवृत्तान् कुरून् दृष्ट्वा पाण्डवापि स्वसैनिकान् ।
रथैः शीघ्राश्वसंयुक्तैः समन्तात् पर्यवारयन् ।। २८ ।।

**समन्तात् पर्यवारयन्** इत्यत्र परितः **अवारयन्** [२]मा युद्धमिति निवारयामासुः ।

[३]परिषच्छ्राम्यतामत्र ममावसदने नृपाः ।
उपासिष्ये विवस्वन्तमेवं शरशताचितः ।। ५४ ।।

**परिषच्छ्राम्यतामत्र ममावसदने नृपाः** इत्यत्र **परिषत्** सभा । **श्राम्यताम्** विश्राम्यताम् । **अवसदने** अवसाने जायमाने सति । मम निर्याणकाले परितः सर्वैः स्थित्वा सम्भ्रमः कार्य इत्यर्थः ।

नैष धर्मो महीपालाः शरतल्पगतस्य मे ।
एभिरेव शरैश्चाहं दग्धव्योऽस्मि नराधिपाः ।। ५८ ।।

**एभिरेव शरैश्चाहम्** इत्यत्र एभिः शरैः सह ।

।। इति पञ्चदशाधिकशततमोऽध्यायः ।।

## ।। अथ षोडशाधिकशततमोऽध्यायः ।।

[४]पयः पास्यामि गोपाला गोमयं न तु गोमयम् ।
गोमयेनाग्निवर्णेन गोमयं न तु गोमयम् ।। १९ ।।

---

१. कुं. १२० अध्यायः । ; २. मा युध्यतेति सो.मु.पा.
३. 'पाग्ला खन्यतामत्र' इति कुं पाठः ।; ४. कुं. १२१ अध्यायः ।

**पयः पास्यामि गोपाला गोमयं न तु गोमयम्** इत्यत्र **गोपालाः** भूमिपालाः, **गोमयं** शराद्भूमेरभिनवतया उद्भूतत्वात् शरमयं **पयः** जलं पास्यामि। न तु गोमयं गोक्षीरं, कूपादिभूमयं वा न तु।

**एवमुक्त्वा शान्तनवो [1] निन्दन् वाक्येन पार्थिवान्।**
**अर्जुनं द्रष्टुमिच्छामीत्यभ्यभाषत ॥ १६ ॥**

**एवमुक्त्वा शान्तनवो निन्दन् वाक्येन पार्थिवान्** इत्यत्र एवं प्रोक्त्वा पार्थिवान् निन्दन्निति सम्बन्धः।

**कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः ॥ २७ ॥**

**विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः।**
**तत्कर्म प्रेक्ष्य बीभत्सोरतिमानुषविक्रमम् ॥ २८ ॥**

**शक्रस्येव विकुर्वत** इत्यत्र **विकुर्वतः** विचित्रं कुर्वतः।

**परीतबुद्धिर्हि विसञ्ज्ञकल्पो दुर्योधनो न च तच्छ्रद्दधाति।**
**स शेष्यते वै निहतश्चिराय शास्त्रातिगो भीमबलाभिभूतः ३८**

**परीतबुद्धिर्हि विसञ्ज्ञकल्पो** इत्यत्र **परीतबुद्धिः परीता** विपरीता बुद्धिर्यस्य स तथोक्तः।

**न चेदेवं प्राप्तकालं वचो मे मोहाविष्टः प्रतिपत्स्यस्यबुद्ध्या।**
**[2] भीष्मस्यान्तादेतदन्ताः स्थ सर्वे सत्यामेतां भारतीमीरयामि ५६**

---

१. 'दीनवाक्सर्वपार्थिवान्' इति कुं पाठः।
२. BORI पृ. ६९९; 'तप्स्यस्यन्ते' इति कुं पाठः।

**भीष्मस्यान्तादेतदन्ताः** इत्यत्र भीष्मस्य अन्ते सति सर्वे **एतदन्ताः** एषः भीष्मनाश एव [1] अन्तो येषां ते तथोक्ताः ।

॥ इति षोडशाधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तदशाधिकशततमोऽध्यायः ॥

**[2] स ददर्श महात्मानं शरतल्पगतं तदा ।**
**जन्मशय्यागतं वीरं कार्त्तिकेयमिव प्रभुम्** ॥ ३ ॥

**जन्मशय्यागतं वीरम्** इत्यत्र **जन्मशय्या** पुत्रजन्मनि कृता दोला ।

**इत्युक्तवति गाङ्गेयेऽभिवाद्योपमन्त्र्य च ।**
**राधेयो रथमारुह्य प्रायात्तव सुतं प्रति** ॥ ३९ ॥

**इत्युक्तवति गाङ्गेयेऽभिवाद्योपमन्त्र्य च** इत्यत्र **अभिवाद्य** [illegible]नुत्य । 'वदि अभिवादनस्तुत्योः' इति धातुः ।

॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां भीष्मपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण-विरचित लक्षालङ्काराख्यटिप्पण्यां सप्तदशाधिकशततमोऽध्यायः ॥

॥ समाप्तं भीष्मपर्व ॥

---

[1] [illegible]
[2] [illegible] अध्यायः ।

# अथ द्रोणपर्व

## ।। अथ प्रथमोऽध्यायः ।।

[१]तद्द्वितीयं महत् खण्डं त्रैलोक्यस्यापि भीषणम् ।
**भयमुत्पादयंस्तीव्रं बाधेन्नाम महद्बलम्** ।। १ ।।
**भीष्मतः कौरवेयाणामपि यास्यति किन्नु [२]तत्** ।। २ ।।

**तद्द्वितीयं महत् खण्डम्** इत्यत्र तीव्रम् भयमुत्पादयन् यो भीष्मः **तद्द्वितीयम्** अस्मद्बलाद्द्वितीयं **महत् खण्डं** एतावदिति सङ्ख्या खण्डितं त्रैलोक्यस्यापि भीषणं **महद्बलं** पाण्डवबलं बाधेन्नाम । कौरवेयाणां नः बलं तस्मात् भीष्मतोऽपि अन्यत् किन्नु शरणं यास्यतीति योजना ।

**विस्मिताश्च प्रहृष्टाश्च क्षत्रधर्मं [३]विशाम्पते ।**
**स्वधर्मं निन्दमानास्ते प्रणिपत्य महात्मने** ।। १८ ।।

**क्षत्रधर्मं विशाम्पते स्वधर्मं निन्दमानास्ते** इत्यत्र **स्वधर्मं** स्वधर्मभूतं क्षत्रधर्मं निन्दमाना इति सम्बन्धः ।

**अजावय इवागोपा वने श्वापदसङ्कुले ।**
**कर्णकर्णेति चाक्रन्दन् शेषा भारत पार्थिवाः ।**
**भृशमुद्विग्नमनसो हीना देवव्रतेन ते** ।। २५ ।।

---

१. B,$D_{c1}$,$D_n$,$D_{2.3.5}$; BORI पृ. ५; '**तदुदीर्णं महत्सैन्यं त्रैलोक्यस्यापि सञ्जय**' इति कुं. पाठः ।
२. 'ते' इति कुं पाठः । ; ३.T; BORI पृ. ६; '**निशाम्यते**' इति कुं.पाठः ।

**अजावय इवागोपा वने श्वापदसङ्कुले** इत्यत्र **अगोपाः** 'गुपूरक्षणे' इति धातोः रक्षकरहिताः ।

**विपन्नसस्येव मही वाक्यैव संस्कृता यथा ।**
**आसुरीव यथा सेना निगृहीते नृपे बलौ ॥ २७ ॥**

**नृपे बलौ** इत्यत्र **बलौ** महाबलौ निगृहीते सतीति योजना ।

**विधवेव वरारोह शुष्कतोयेव निम्नगा ।**
**वृकैरिव वने रुद्धा पृषती हतयूथपा ॥ २८ ॥**

**पृषती हतयूथपा** इत्यत्र **पृषती** मृगी । 'सारङ्ग ऋश्यः पृषतो रुरुश्च'[1] इति हलः ।

**सासेना भरतश्रेष्ठे पतिते जाह्नवीसुते ।**
**शरभाहतसिंहेव महती गिरिकन्दरा ॥ २९ ॥**

**शरभाहतसिंहेव** इत्यत्र **शरभेण** अष्टापदाख्यसिंहवैरिमृगेण आहतः सिंहो यस्याः सा ।

**[2]कर्णं हि कुरवोऽस्मार्षुः स हि देवव्रतोपमः ।**
**सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम् ॥ ३३ ॥**

**कर्णं हि कुरवोऽस्मार्षुः** इत्यत्र **अस्मार्षुः** स्मृतवन्तः ।

**बन्धुमापद्गतस्येव [3]तेषामासीद्गतं मनः ॥ ३३ ॥**

---

१. ह. को. २-२३०; २. BORI पृ. ७; '**कर्णस्य**' इति कुं पाठः ।
३. ([illegible] damaged); BORI पृ. ८; '**तेषामेवोपगमन्**' इति कुं पाठः ।

**बन्धुमापद्गतस्येव तेषामासीद्गतं मनः** इत्यत्र आपद्गतस्य मनः बन्धुमिव **तेषां** कौरवाणां मनः प्रागुक्तं कर्णमेव गतमासीदिति योजना ।

**[१]अगमन् मनसा कर्णं मन्युनाभ्यधिकेष्विह ।**
**जामदग्न्याभ्यनुज्ञातमस्त्रे दुर्वारपौरुषम्** ॥ ४७ ॥

**मन्युनाभ्यधिकेष्विह** इत्यत्र इह लोके **अभ्यधिकेषु** पाण्डवेषु मन्युना कारणेन कर्णं मनसा अगमन्निति सम्बन्धः ।

**अपि तन्न मृषा कर्णो युधि सत्यपराक्रमः ।**
**सम्भ्रान्तानां तदार्तानां त्रस्तानां त्राणमिच्छताम्** ॥ ५१ ॥

**अपि तन्न मृषा कर्णो** इत्यत्र तत् स्मरणं मृषा नाकरोदपीति योग्यक्रियाध्याहारेण योजना । **अपिशब्दः** किंशब्दार्थः ।

**तत् खण्डं पूरयन् कर्णः परेषामादधद्भयम् ।**
**कृतवान्मम पुत्राणां जयाशां सफलामपि** ॥ ५३ ॥

**तत् खण्डं पूरयन्** इत्यत्र **खण्डम्** अस्मदीयसेनाखण्डम् ।

॥ इति प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

**नेह ध्रुवं किञ्चन जातु लोके ह्यस्मिन् कर्मणोऽनित्ययोगात् ।**
**सूर्योदये को हि विमुक्तसंशयो भावं कुर्वीताद्य महाव्रते हते** ॥६॥

१. $D_2$;BORI पृ.९; 'अगमन्नो मनः कर्णं बन्धुमात्ययिकेष्विव' इति कुं पाठः

**सूर्योदये को हि विमुक्तसंशयो भावं कुर्वीताद्य** इत्यत्र **सूर्योदये** सूर्यवदुदयो यस्मिन् देवव्रते । **भावं** जेष्यामीति भावम् ।

**वसुप्रभावे वसुवीर्यसम्भवे**
**गते वसूनेव वसुन्धराधिपे ।**
**वसूनि पुत्रांश्च वसुन्धरां तथा**
**कुरूंश्च शोचध्वमिमां च वाहिनीम्** ॥ ८ ॥

**वसूनि पुत्रांश्च** इत्यत्र **वसूनि** द्रव्याणि ।

**समाहितं चात्मनि भारमीदृशं जगत्तथा [१]भारमहश्च लक्षये ॥**

**भारमहश्च लक्षये** इत्यत्र **भारं** भारभूतं जगत् यथा तथा लक्षये ।

**निपातितं चाहवशौण्डमाहवे**
**कथं नु कुर्यामहमीदृशे भयम्** ॥ १४ ॥

**निपातितं चाहवशौण्डमाहवे** इत्यत्र वीक्ष्येति योग्यपदाध्याहारः ।

**एवं चैषां बाधामानः प्रभावं**
**गत्वैवाहं तान् ज़याम्यद्य सूत ।**
**मित्रद्रोहो मर्षणीयो न मेऽयं**
**भग्ने सैन्ये यः समेयात् स मित्रम्** ॥ १९ ॥

**गत्वैवाहं तान् जयाम्यद्य सूत** इत्यत्र **सूतेति** स्वसारथिं प्रति [illegible] वचनम् ।

---

१ B[illegible],M[illegible],$D_c$,$D_2$,$G_{3-5}$,$M_{3-5}$; BORI पृ. १३; **'नित्यमिदं च'** इति कुं[illegible] ।

सम्प्राक्रुष्टे [1]रुदति स्त्री कुमारे
[2]पराजितेऽपौरुषे धार्तराष्ट्रे ।
[3]साह्यं कार्यमद्यैव मया सूत
तस्माद्राज्ञस्त्वद्य शत्रून् विजेष्ये ॥ २१ ॥

**सम्प्राक्रुष्टे रुदति स्त्री कुमारे** इत्यत्र कुमारे **सम्प्राकृष्टे** सम्यक् प्रकर्षेण आक्रोशं कुर्वति सति **स्त्री** नार्यपि **रुदति** रोदिति । अतः कारणात् रोदमानान् दृष्ट्वा प्रतिरोदनं न भटस्य धर्मः । तस्मात् पराजिते अपौरुषे धार्तराष्ट्रे अद्यैव मया साह्यं कार्यमिति योजना ।

स्फीतां रौग्मीं नागकक्ष्यां विचित्रां
ध्वजं जैत्रं दिव्यमिन्दीवराङ्कम् ।
श्लक्ष्णैर्वस्त्रैर्विप्रमृज्यानयन्तु
चित्रां मालां चारुबद्धां सलाजाम् ॥ २५ ॥

**स्फीतां रौग्मीं नागकक्ष्यां विचित्राम्** इत्यत्र **नागकक्ष्यां** सर्पाकारोदरबन्धनम् ।

अश्वानग्र्यान् पाण्डुराभ्रप्रकाशान्
पुष्टान् स्नातान् मन्त्रपूताभिरद्भिः ।
[4]चित्रैर्भाण्डैः काञ्चनैरभ्युपेतान्
शीघ्राञ्शीघ्रं सूतपुत्रानयस्व ॥ २६ ॥

---

१. **'रुदितस्त्रीकुमारे'** इति कुं पाठः ।

२. $D_{n1}$,$D_3$,T,G,$M_{1\cdot2}$; BORI पृ. १४; **'पराहते पौरुषे'** इति कुं पाठः ।

३. $G_{2\cdot5}$; BORI पृ. १५; **'मया कृत्यमिति जानामि'** इति कुं पाठः ।

४. $D_{4\cdot7\cdot8}$,$D_5$; BORI पृ. १६; **'तसैः'** इति कुं पाठः ।

**चित्रैर्भाण्डैः** इत्यत्र **भाण्डैः** मुखत्राणाद्यलङ्कारैः ।

**प्रायात्रिकं चानयताशु सर्वं**
**कान्त्या पूर्णं वीरकांस्यं च हैमम् ।**
**आनीय मालामवबध्य चाङ्गे**
**प्रवादयन्त्वाशु जयाय भेरीः ॥ २९ ॥**

**वीरकांस्यं च हैमम्** इत्यत्र वीर एव **वीरकाः** । तेषां **आंस्यम्** अंसयोग्यं माल्यमित्यर्थः । **मालां** पुष्पमालाम् ।

**तिष्ठेन्[१] मृत्युः सर्वहरोऽभिरक्षन्**
**सदाऽप्रमत्तः समरे किरीटिनम् ।**
**तथापि हन्तास्मि समेत्य सङ्ख्ये**
**यास्यामि वा भीष्ममुखो यमाय ॥३१,३२॥**

**तिष्ठेन् मृत्युः सर्वहरोऽभिरक्षन्** इत्यत्र **सर्वहरः** मृत्युः यदि गामभिरक्षन् तिष्ठेत् तर्हीत्युत्तरेणान्वयः ।

**न त्वेवाहं न गमिष्यामि येषां**
**[२]मध्यं शूराणां तत्र चाहं ब्रवीमि ।**
**मित्रद्रुहो दुर्बलाभक्तयो ये**
**पापात्मानो न ममैते सहायाः ॥ ३२ ॥**

**न त्वेवाहं न गमिष्यामि येषाम्** इत्यत्र अहं तेषां शूराणां मध्यं न गमिष्यामीति न त्वेव । तत्र युद्धाय गमनानन्तरं **ब्रवीमि** ममाभीष्टं

---

१ $G_{2.3.5}$; BORI पृ. १७; **'न चेत्'** इति कुं पाठः ।

२ $M_{1.5..}$, $K_4$, $D_{4.7}$; BORI पृ. १७; **'मध्ये'** इति कुं पाठः ।

**ब्रवीमि** । ये मित्रद्रुहः, दुर्बलाश्च ते **अभक्तयो** भक्तिरहिताश्च दुर्बलाभक्तयः, ये च पापात्मानः ते मम सहाया न स्युः, मया सह तैर्न गन्तव्यमिति भावः ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**उत्साद्य चाखिलामुर्वीं सर्वक्षत्रान्तकं गुरुम्**[१] ॥ २ ॥

**उत्साद्य चाखिलामुर्वीं सर्वक्षत्रान्तकं गुरुम्** इत्यत्र उर्वीमुत्साद्य **सर्वक्षत्रान्तकं** परशुरामं **गुरुं** यस्य गुरुमाहुः ।

**दिव्यैरस्त्रैर्महेष्वासं पातितं सव्यसाचिना ।**
**जयाशा तव पुत्राणां सम्भग्ना शर्म वर्म च** ॥ २ ॥

**जयाशा तव पुत्राणां सम्भग्ना शर्म वर्म च** इत्यत्र तव पुत्राणां जयस्य आशा यस्मिन्निति यत्तच्छब्दाध्याहरेण योजना । **शर्म** सुखदायकं, **वर्म** कवचस्थानीयं भीष्मम् ।

**बुद्ध्या विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात् ।**
**योधांस्त्वमप्लवे हित्वा पितृलोकं गमिष्यसि** ॥ १२ ॥

**योधांस्त्वमप्लवे हित्वा** इत्यत्र स त्वं **अप्लवे** प्लवरहिते सेनासमुद्रे योधान् हित्वा इत्यर्थः । 'योधांस्तु बहुधा भित्त्वा' इति पाठे स्पष्टोऽर्थः ।

॥ इति तृतीयोऽध्यायः ॥

---

१. $D_6$.S; BORI पृ. १८; **'दृष्ट्वा पितामहं भीष्मं'** इति कुं पाठः ।

## ।। अथ चतुर्थोऽध्यायः ।।

**सत्यस्य च यथा सन्तो बीजानामिव चोर्वरा ।**

**पर्जन्य इव भूतानां प्रतिष्ठा सुहृदां भवान्** ।।२,३।।

**बीजानामिव चोर्वरा** इत्यत्र **उर्वरा** सर्वसस्योचिता भूः । 'उर्वरा सर्वसस्या भूः'[१] इति हलः ।

**यौनात् सम्बन्धकाल्लोके विशिष्टं सङ्गतं सताम् ।**

**सद्भिः[२] सह नरश्रेष्ठ तस्मात् प्राज्ञः परैरपि ।**

**स सत्यसङ्गरो भूत्वा ममेदमिति निश्चितः** ।। १४ ।।

**तस्मात् प्राज्ञः परैरपि** इत्यत्र परैः सह सत्यसङ्गरो भूत्वा हन्याः इति योजना ।

**[३]ततः पक्षौ प्रपक्षौ च विधाय भरतर्षभ ।**

**पक्षकोटी पुनर्द्वाभ्यां पश्चाद्द्वाभ्यामबृंहयत् ।।**

**पक्षकोटी पुनर्द्वाभ्याम्** इत्यत्र **द्वाभ्यां** द्विभागीकृतसेनाभ्यां, **पश्चात्** पृष्ठभागे ।

**[४]कृतं बृहस्पतिमतं मत्वा कर्णेन धीमता ।**

**बलं व्यूहशरीरस्य सारानीकं परस्परम् ।।**

**बलं व्यूहशरीरस्य सारानीकं परस्परम्** इत्यत्र साराणि **अनीकानि** [illegible]भादीनि यस्मिन् तत्सैन्यं परस्परं व्यूहशरीरस्य बलं कृतम् ।

।। इति चतुर्थोऽयायः ।।

---

१. ह. को. २-१५८ ; २. BORI पृ. २३; **'सङ्गममिच्छन्ति'** इति कुं पाठः ।
३. BORI पृ. २३. ;      ४. BORI पृ. २३.

## ।। अथ पञ्चमोऽध्यायः ।।

**आदेशिको यथाऽसार्थः सर्वः कृच्छ्रं समृच्छति ।**
**अनायका तथा सेना सर्वान् दोषान् समर्च्छति ।। १० ।।**

**आदेशिको यथाऽसार्थः** इत्यत्र **आदेशिकः आ** समन्तात् देशेषु चरन्, **असार्थः** असहायः ।

**[1]सर्वेषामिह लोकानां विश्वस्य च यथा क्षयः ।**
**[2]विश्वोत्पत्तिस्थितिश्चैव श्रेष्ठो नारायणः प्रभुः ।। ८ ।।**

इत्यत्र विश्वस्य **क्षयः** क्षयकारकः विश्वोत्पत्तिस्थितिः श्रेष्ठो नारायणः सर्वेषां लोकानां यथा प्रभुः तथेति सम्बन्धः ।

**।। इति पञ्चमोऽध्यायः ।।**

## ।। अथ षष्ठोऽध्यायः ।।

**[3]प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः**
**ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ।। १२ ।।**

**प्रपक्षः शकुनिस्तेषाम्** इत्यत्र **प्रपक्षः** पृष्ठभागे स्थितः पक्षः ।

**ततस्तुमुलमाकाशमावृणोत् सदिवाकरम् ।**
**वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमम् ।। ३५ ।।**

---

१. कुं. ६ अध्यायः । '**सर्वेषामिव**' इति कुं पाठः ।
२. '**विश्वोत्पत्तिस्थितिलये**' इति कुं पाठः ।
३. कुं. ६ अध्यायः ।

**कौशेयनिकरोपमम्** इत्यत्र **कौशेयनिकरोपमं** रक्तपट्टवस्त्रसमूहसमानमिति शुक्लरक्तरञ्जितरजसो विशेषणम् ।

**खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या**
**चलदनिलपताकं ह्लादनं वल्गिताश्वम् ।**
**स्फटिकविमलकेतुं त्रासनं शात्रवाणां**
**रथवरमधिरूढः सञ्जहारारिसेनाम् ॥ ५४ ॥**

**खचरनगरकल्पम्** इत्यत्र **खचरनगरं** गन्धर्वनगरम् ।

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**ततो[१] युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ ।**
**अब्रवीत् सर्वतो यत्तैः कुम्भयोनिर्निवार्यताम् ॥ २ ॥**

**कुम्भयोनिर्निवार्यताम्** इत्यत्र **कुम्भयोनिः** कलशोद्भवो द्रोणः । 'आचार्यः कलशाज्जातः शरस्तम्बाद् गुरुः कृपः' इति वचनात् प्राक् द्रोणे पतितं रेतः पुनः कलशे निक्षिप्य यतो रक्षितं अतो द्रोणस्यैव कुम्भयोनिरित्यपि नाम ।

**विचित्रजाम्बूनदभूषितध्वजं**
**महारथं रुक्मरथं निपातितम् ।**
**[२]निशाम्य कश्चिद्धतहर्ष एव**
**ऋते मृधे द्रुपदसुतान् ससृञ्जयान् ॥ ३८ ॥**

---

१. कुं. ८ अध्यायः ।
२. 'निशम्य कश्चिद्धि न हर्षमेयिवान्' इति कुं पाठः ।

**निशाम्य कश्चिद्धतहर्ष एव** इत्यत्र ते सैन्ये **कश्चित्** यः कश्चिदपि हतहर्ष एव बभूवेति योजना ।

॥ इति सप्तमोऽध्यायः ॥

## ॥ अथ अष्टमोऽध्यायः ॥

**[१] अस्त्रं चतुर्विधं शूरे यस्मिन्नासीत्प्रतिष्ठितम् ।**
**तमिष्वस्त्रधराचार्यं द्रोणं शंससि मे हतम्** ॥ ७ ॥

**अस्त्रं चतुर्विधं शूरे** इत्यत्र **चतुर्विधं** मन्त्रबाणप्रयोगोपसंहाराख्य-विधाचतुष्टयसहितं अस्त्रमिति सम्बन्धः ।

**आशंसन्तः परान् जेतुं जितश्वासा जितव्यथाः ।**
**हयाः पराजिताः शीघ्रा भारद्वाजरथोद्वहाः** ॥ १९ ॥

**हयाः पराजिताः शीघ्रा** इत्यत्र कथं पराजिताः इति कथंपदानुकर्षेण योजना ।

**उताहो सर्वसैन्येन धर्मराजः सहानुजः ।**
**[२] पाञ्चाल्यग्राहको द्रोणं सर्वतः समवारयत्** ॥ २५ ॥

**पाञ्चाल्यग्राहको द्रोणम्** इत्यत्र **पाञ्चाल्यग्राहकः** पाञ्चाल्यस्यानु-ग्राहकः ।

**योऽधीत्य चतुरो वेदान् साङ्गानाख्यातपञ्चमान् ।**
**ब्राह्मणानां प्रतिष्ठासीत् स्रोतसामिव सागरः** ॥ ३१ ॥

१. कुं. ९ अध्यायः । ; २. 'पाञ्चालप्रग्रहो' इति कुं पाठः ।

**साङ्गानाख्यातपञ्चमान्** इत्यत्र **आख्यातपञ्चमान्** आ समन्तात् ख्यातः इतिहासपुराणाख्यः पञ्चमो वेदो येषां तान् ।

**[१]अमर्षणो मर्षितवान् [२]क्लिश्यमानः सदा मया ।**
**[३]अनर्हमाणः कौन्तेयान् कर्मणस्तस्य तत्फलम्** ॥ ३४ ॥

**अमर्षणो मर्षितवान्** इत्यत्र कौन्तेयान् प्रति **अनर्हमाणः** ब्राह्मणत्वाद्युद्धस्यायोग्यः । अत **एवामर्षमाणः** युद्धमसहमानः द्रोणः मया असकृत् क्लिश्यमानः सन् **मर्षितवान्** युद्धं सेहे ।

**क्षिप्रहस्तश्च बलवान् दृढधन्वारिमर्दनः ।**
**न यस्य विजयाकांक्षी [४]विषमं प्राप्य जीवति** ॥ ३७ ॥

**विषमं प्राप्य जीवति** इत्यत्र **विषमं** दुःसहं युद्धम् ।

**के च तस्मिंस्तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।**
**द्रोणस्य समरे वीराः केऽकुर्वन्त परां [५]गतिम्** ॥ ४६ ॥

**केऽकुर्वन्त परां गतिम्** इत्यत्र **गतिं** सहायम् ।

॥ इति अष्टमोऽध्यायः ॥

* * *

---

१. BORI पृ. ४४; **'अमर्षिणा'** इति कुं पाठः ।
२. BORI पृ. ४४; **'क्लिश्यमानान्'** इति कुं पाठः ।
३. BORI पृ. ४४; **'अनर्हमाणान्'** इति कुं पाठः ।
४. **'विषयम्'** इति कुं पाठः ।
५. $K_5$,$B_1$.$Dn_{10}$,$D_{52}$; BORI पृ. ४५; **'धृतिम्'** इति कुं पाठः ।

## ।। अथ नवमोऽध्यायः ।।

**[१]के वा तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।**
**अमानुषाणां जेतारं युद्धेष्वपि धनञ्जयम्** ।। २६ ।।

इत्यत्र **प्रतीपं** वैरिणं **मृत्युं** मारकं धनञ्जयमाव्रजन्निति योजना ।

**[२]तं रथानां रथं [३]वीरं सदा युद्धेषु दुर्मदम् ।**
**नकुलं पाण्डवश्रेष्ठं के वीराः पर्यवारयन् ।।**

**तं रथानां रथं वीरम्** इत्यत्र रथानां मध्ये रथं गच्छन्तं 'रथ गतौ' इति धातुः ।

**[४]पितुः स्म मातुः पितरं वासुदेवं द्विजातयः ।**
**स एष नियतः कृष्ण आपदर्थं धनञ्जये ।।**

**पितुः स्म मातुः पितरं वासुदेवं द्विजातयः** इत्यत्र यं वासुदेवं सर्वस्रष्टृनारायणावतारत्वात् **पितुः** वसुदेवस्य **मातुः** देवक्याश्च पितरमाहुः स एष धनञ्जये **आपदर्थम्**, आपत्परिहारार्थम्, आ समन्तात् पद्यते इति **आपत्** सर्वशत्रुजयः तदर्थं वा, नियत इति योजना ।

**[५]आशाप्लवश्च साम्बश्च वृष्णिवीराः प्रहारिणः ।**
**एते वै विहितास्तत्र पाण्डवार्थे जिगीषवः ।।**

---

१. कुं. १० अध्यायः । ; २. कुं. ११ अध्यायः । BORI पृ. १०५०
३. $G_{3\cdot4}$; BORI पृ. १०५०; 'वरं' इति कुं पाठः ।
४. BORI पृ. १०६६
५. BORI पृ. १०६७; **आशावहश्च साम्बश्च** इति कुं. पाठः ।

**आशाप्लवश्च साम्बश्च** इत्यत्र आशासु **प्लवते** गच्छतीति **आशाप्लवः** ।

**न वेद कृष्णं दाशार्हम् अर्जुनं चैव पाण्डवम् ।**
**पूर्वदेवौ महात्मानौ नरनारायणावुभौ** ॥ ४१ ॥

**न वेद कृष्णं दाशार्हम्** इत्यत्र **कृष्णं** कृष्णवर्णम् ।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

[१]**भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान्** । ७ ।

**भोजराजस्य मध्यस्थो भ्राता** इत्यत्र **मध्यस्थो भ्राता** मध्यमो भ्रातेत्यर्थः ।

**तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।**
**निर्जित्य पृथिवीपालानवहत् पुष्करेक्षणः** ॥ १० ॥
**अमृष्यमाणा राजानो यस्य जात्या हया इव ।**
**रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः** ॥ ११ ॥

**अमृष्यमाणा राजानो** इत्यत्र वैवाहिके रथे युक्ताः प्रतोदेन कृतव्रणाः **जात्याः** जातिमन्तः हया इव राजानः **यस्य** कृष्णस्य पराक्रममममृष्यमाणाः तान् निर्जित्येति पूर्वेणान्वयः ।

॥ इति दशमोऽध्यायः ॥

---

१. कुं. पाठानुसारेण पूर्वाध्यायएव अनुसरति ।

## ।। अथ एकादशोऽध्यायः ।।

[१]इच्छेयं वै महात्मानं धर्मात्मानं युधिष्ठिरम् ।
**भ्रातॄणां पश्यतामेव जीवग्राहेण मे द्विज ।। ७ ।।**

**जीवग्राहेण मे द्विज** इत्यत्र मे वशम् इच्छेयमिति पूर्वेणान्वयः ।

**धन्यः कुन्तीसुतो राजन् यस्य ग्रहणमिच्छसि ।**
**न वधं तस्य दुर्धर्ष वरमद्य प्रयाचसे । ।। १० ।।**

**किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसे ।। ११ ।।**

इति श्लोके **वरमद्य प्रयाचसे** इत्यत्र किमर्थमिति पदमनुकृष्य योजनीयम् ।

**ततः कृत्स्नं वशे कृत्वा निःशेषं नृपमण्डलम् ।**
**ससागरवनां स्फीतां विजित्य वसुधामिमाम् ।**
**विष्णुर्दास्यति कृष्णायै कुन्त्यै वा पुरुषोत्तमः ।। २० ।।**

**ततः कृत्स्नं वशे कृत्वा** इत्यत्र ततः स्वाश्रितपाण्डवानां मरणात् कुपितो विष्णुरिति योग्यपदाध्याहारेण योजना ।

**असंशयं स शिष्यो मे [२]मत्पूर्वश्चास्त्रकर्मणि ।**

**मत्पूर्वश्चास्त्रकर्मणि** इत्यत्र अहं **पूर्वः** प्रथमगुरुर्यस्य स तथोक्तः ।

**तरुणः कीर्तियुक्तश्च एकायनगतश्च सः ।। २६ ।।**

---

१. कुं. १२ अध्यायः ।
२. मत्पूर्वश्चात्र कर्मणि

**एकायनगतश्च सः** इत्यत्र **एकायनगतः** एकस्मिन् **अयने** मार्गे गतः। मम यो मार्गः तं सर्वं मार्गं सोऽपि जानातीति भावः।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

[1] **तत्त्वमद्य महाबाहो युद्ध्यस्व मदनन्तरम्।**
**यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात्** ॥ ६ ॥

**युद्ध्यस्व मदनन्तरम्** इत्यत्र मम अन्तरं यथा न भवति तथा **मदनन्तरम्**।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

[2] **महारथशतावर्तां भूमिरेणूर्मिमालिनीम्।**
**महावीर्यवतां सङ्ख्ये सुतरां भीरुदुस्तराम्** ॥ १४ ॥

**महावीर्यवतां सङ्ख्ये सुतरां भीरुदुस्तराम्** इत्यत्र महावीर्यवतां सुतरां सुखेन तर्तुं योग्यामित्यर्थः।

**सिन्धुराजं परित्यज्य सौभद्रः परवीरहा।**
**तापयामास तत्सैन्यं भुवनं भास्करो यथा** ॥ ७७ ॥

**भुवनं भास्करो यथा** इत्यत्र **भुवनं** जलम्। 'पयः कीलालममृतं जीवनं भुवनं वनम्'[3] इत्यमरः।

---

१. कुं. १३ अध्यायः।; २. कुं. १४ अध्यायः।; ३. अ.को. १-९-३

**तेषां च प्रियमन्विच्छन् सूतस्य च पराभवम् ।**
**आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात्** ॥ ८७ ॥

**आर्तायनिरमित्रघ्नः** इत्यत्र **आर्तायनिः** ऋतायनपुत्रः शल्यः ।

॥ इति त्रयोदशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

**[१]नायं संरक्षितुं कालः प्राणांस्तात जयैषिणा ।**
**[२]साहसाग्र्यं पुरस्कृत्य यशसे च जयाय च** ॥ २६ ॥

**साहसाग्र्यं पुरस्कृत्य** इत्यत्र अग्र्य साहसं **साहसाग्र्यम्** ।

सञ्जय उवाच–

**एवं सञ्चोदितो यन्ता द्रोणमभ्यवहत्ततः ।**
**तदा स्वहृदयानाश्वान् अभिमन्त्र्याशु हर्षयन् ।**
**रथेन सवरूथेन भास्वरेण विराजता** ॥२७,२८॥

**तदा स्वहृदयानाश्वान्** इत्यत्र स्वस्य हृत् तथा यथा **अयन्ते** गच्छन्तीति स्वहृदयाः, तान् अश्वान् आशु हर्षयन् सुरथिनामको यन्ता **सवरूथेन** रथसन्नाहसहितेन भास्वरेण विराजता रथेन द्रोणमवहदिति पूर्वेणान्वयः ।

**युगन्धरस्ततो [३]राज्ञः भारद्वाजं महारथम् ।**
**वारयामास सङ्क्रुद्धं वातोद्धूतमिवार्णवम्** ॥४१॥

---

१. कुं. १६ अध्यायः । ; २. **'याहि स्वर्गं'** इति कुं पाठः ।
३. **'राजन्'** इति कुं पाठः ।

**युगन्धरस्ततो राज्ञः** इत्यत्र **युगन्धरः** सूतः । **वारयामास** रथसञ्चारेण वारयामास ।

**अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति ।**
**[1]आहरिष्यति नो मूलं धार्तराष्ट्रस्य संयुगे ॥ ५२ ॥**

**आहरिष्यति नो मूल** इत्यत्र **मूलं** मौल्यं धनम् ।

॥ इति पञ्चादशशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**[2]वयं विनिकृता राजन् सदा गाण्डीवधन्वना ।**
**[3]अनागसोऽपि चाकस्मात् प्रेष्याः प्रभवता यथा ॥ १२ ॥**

**प्रेष्याः प्रभवता यथा** इत्यत्र **प्रेष्याः** भृत्याः, **प्रभवता** प्रभुणा ।

**ते वयं स्मरमाणास्तान् विनिकारान् पृथग्विधान् ।**
**क्रोधाग्निना दह्यमाना [4]नाशीमहि दिवानिशम् ॥ १३ ॥**

**नाशीमहि दिवानिशम्** इत्यत्र **नाशीमहि** भोजनं न कुर्मः । 'अश भक्षणे' इति धातुः ।

**ततो ज्वलनमानर्च्य हुत्वा सर्वे पृथक् पृथक् ।**
**जगृहुः कुशचीराणि चित्राणि कवचानि च ॥ २२ ॥**

---

१. S; BORI पृ. ९१; **'आगमिष्यति नो नूनं'** इति कुं पाठः ।
२. कुं. १७ अध्यायः ।
३. BORI पृ. ९४; **'अनागःस्वपि चागस्तत्कृतमस्मासु तेन वै'** इति कुं पाठः
४. **'ह्यशेमहि सदा निशि'** इति कुं पाठः ।

**जगृहुः कुशचीराणि** इत्यादिश्लोकेषु जगृहुः कुशचीराणीत्यादेः समराग्नौ वयं दीक्षिता इति मत्वा कुशचीरादिग्रहणं कृतवन्त इति भावः ।

**ब्रह्मचर्यश्रुतिमुखाः[१] क्रतुभिश्चाप्तदक्षिणैः ।**
**प्राप्य[२] लोकान् सुयुद्धेन क्षिप्रमेव यियासवः ॥ २९ ॥**

**ब्रह्मचर्यश्रुतिमुखाः** इत्यत्र **ब्रह्मचर्यश्रुतिमुखाः** ब्रह्मचर्यं श्रुतयो वेदाश्च **मुखं** मूलं येषां ते तथोक्ताः । **प्राप्यलोकान्** प्राप्तुं योग्याः प्राप्याः ते च ते लोकाश्च प्राप्यलोकाः तान् ।

**न्यासापहारिणां ये च श्रुतं नाशयतां च ये ।**
**क्लीबेन युध्यमानानां ये च [३]दीनानुसारिणाम् ॥ ३४ ॥**

**नास्तिकानां च ये लोका येऽग्निमातृपितृत्यजाम् ।**
**सत्यमाक्रमतां ये च [४]प्रत्यादीत्यं प्रमेहताम् ।**
**तानाप्नुयामहे लोकान् ये च पापकृतामपि ॥ ३५ ॥**

**न्यासापहारिणाम्** इत्यत्र **न्यासापहारिणां, न्यासः** न्यस्तधनम्, तस्य अपहारिणाम् । **दीनानुसारिणाम्,** सति वित्ते दीनमनुसरन्तो दीनानुसारिणः, धने सत्यपि दारिद्र्यं दर्शयन्त इति यावत् ,तेषाम् ।

॥ इति षोडशोऽध्यायः ॥

---

१. **'ब्रह्मचर्यश्रुतिमुखैः'** इति कुं पाठः ।
२. BORI पृ. ९६; **'प्राप्यॉंल्लोकान्'** इति कुं पाठः ।
३. $B_{1\cdot2}$,,$D_3$,S; BORI पृ. ९७; **'नीचानुसारिणां'** इति कुं पाठः ।
४. उपलब्धेषु लिखितपुस्तकेषु **प्रत्यादित्यं प्रमेहतामित्यत्रे**ति प्रतीकोद्धारमात्रमुपलभ्यते, व्याख्यानं तु न दृश्यते ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

**[१]तानर्जुनः सहस्राणि [२]दश पञ्चैव चाशुगान् ।**
**अनागतानेव शरैश्चिच्छेदाशु पराक्रमी ॥१८-१४॥**

**तानर्जुनः सहस्राणि** इत्यत्र अनागतानेव तानाशुगान् सहस्राणि शकलानि यथा भवन्ति तथा, दश शकलानि यथा भवन्ति तथा, पञ्च शकलानि यथा भवन्ति तथैव चिच्छेद, नत्वेकं शरमपि चतुर्धा त्रिधा द्विधा वा चिच्छेदेति सूचनाय एवकारः ।

**भूयिष्टं प्रतिरुद्धा येऽहतैर्योधा[३] यशस्विनः ।**
**[४]विदुद्रुवुस्तदा भीता यत्र दौर्योधनं बलम् ॥ १८-२६ ॥**

**भूयिष्टं प्रतिरुद्धा येऽहतैर्योधा यशस्विनः** इत्यत्र अहतैर्भटैः भूयिष्ठं प्रतिरुद्धा ये ते यशस्विनो योधाश्च दौर्योधनं बलं प्रति विदुद्रवुरिति योजना ।

**ततस्त्रिगर्तराट् क्रुद्धस्तानुवाच महारथान् ।**
**अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ ॥ ३० ॥**

**अलं द्रुतेन वः शूरा** इत्यत्र **द्रुतेन** द्रवणेन, पलायनेनेत्यर्थः ।

**ततस्ते सन्न्यवर्तन्त संशप्तकगणाः पुनः ।**
**नारायणाश्च गोपाला मृत्युं कृत्वा निवर्तनम् ॥ ३४ ॥**

---

१. कुं. १८ अध्यायः ।
२. S; BORI पृ. १०१; 'दशपञ्चभिराशुगै' इति कुं पाठः ।
३. '–योधैः' इकि कुं पाठः ।
४. S; BORI पृ. १०३; 'व्यद्रवन्त भयात्' इति कुं पाठः ।

**नारायणाश्च गोपाला मृत्युं कृत्वा निवर्तनम्** इत्यत्र **नारायणाः** नारायणसञ्ज्ञाः **गोपालाः** गोपस्त्रीषु जाताः कृष्णकुमाराः संशप्तकानां सहायेन **आगता** गताः ।

**॥ इति सप्तदशोऽध्यायः ॥**

## ॥ अथ अष्टादशोऽध्यायः ॥

**[१]उह्यमानास्तु ते राजन् बह्वशोभन्त वायुना ।**
**प्रदीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ॥ २८ ॥**

**प्रदीनाः पक्षिणः काले** इत्यत्र प्रडीनपदेन पक्षिणां यो गमनप्रकारः तद्वन्तः । 'प्रडीनोड्डीनसण्डीनान्येताः खगगतिक्रियाः'[२] इत्यमरः ।

**॥ इति अष्टादशोऽध्यायः ॥**

## ॥ अथ एकोनविंशोऽध्यायः ॥

**[३]वृता बलेन महता [४]ब्रह्मलोकपुरस्कृताः ।**
**व्यूहस्योपरि ते राजन् स्थिता युद्धविशारदाः ॥ १४ ॥**

**ब्रह्मलोकपुरस्कृताः** इत्यत्र **ब्रह्मलोकपुरस्कृताः ब्रह्मलोकैः** ब्राह्मण-समूहैः **पुरस्कृताः** आशीर्भिः सत्कृताः ।

**तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।**
**सविद्युत्स्तनिता मेघा [५]दिवा दिग्भ्य इवोष्णगे ॥ १६ ॥**

१. कुं. १९ अध्यायः ।; २.अ.को. २-५-३७; ३. कुं. २० अध्यायः ।
४. BORI पृ. १११; **'ब्रह्मलोकपरिष्कृताः'** इति कुं पाठः ।
५. S; BORI पृ. १११; **'सर्वदिग्भ्यः'** इति कुं पाठः ।

**दिवा दिग्भ्य इवोष्णगे** इत्यत्र **उष्णगे** उष्णं **गं** गतं यस्मिन् काले स तथोक्तः, तस्मिन्। धर्मावसाने इत्यर्थः।

**तस्य प्राग्ज्योतिषो मध्ये विधिवत् कल्पितं गजम्।**
**आस्थितः शुशुभे राजन् अंशुमानुदयं यथा ॥ १७ ॥**

**अंशुमानुदयं यथा** इत्यत्र उत् ऊर्ध्वम् **अयते** गच्छति अस्मादिति **उदयः** उदयाचलः।

**माल्यदामवता राजन् श्वेतच्छत्रेण धार्यता।**
**कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना ॥ १८ ॥**

**श्वेतच्छत्रेण धार्यता** इत्यत्र 'व्यत्ययो बहुलम्' इति वचनात् **धार्यता** ध्रियमाणेन कृत्तिकायोगयुक्तेन इन्दुना पौर्णमास्यां रात्रिरिवेति योग्यपदाध्याहारेण योजना।

**नानानृपतिभिर्वीरैर्विविधायुधभूषणैः।**
**समन्वितः पार्वतीयैः शक्रो देवगणैरिव ॥ २० ॥**

**शक्रो देवगणैरिव** इत्यत्र देवगणैरिवेत्यस्योपरि व्यूहः शुशुभे इति योग्यपदाध्याहारः।

**निकृत्ताः पुनरुत्पत्य तुरगा[१] रथनेमिभिः ॥ ६३ ॥**

**निकृत्ताः पुनरुत्पत्य तुरगा रथनेमिभिः** इत्यत्र तुरगाः उत्पत्य पुनः रथनेमिभिः **निकृत्ताः** छिन्ना बभूवुः।

---

१. S; BORI पृ. ११६; **'सङ्क्षुण्णा पुनरावृत्य बहुधा'** इति कुं पाठः।

**शरवर्षाभिवृष्टेषु [१]योधेष्वाहवलक्ष्मसु ।**
**न तेष्वाचितता लेभे [२]कश्चिदाहवलक्षणः ॥ ६६ ॥**

**शरवर्षाभिवृष्टेषु** इत्यत्र **आहवलक्ष्मसु** आहवोचितं लक्ष्म येषां तेषु योधेषु शरवर्षाभिवृष्टेषु सत्सु **आहवलक्षणः** आहवं **लक्षयति** पश्यतीत्याहवलक्षणः आहवे विवेकवानिति यावत्, कश्चिद्भटः **तेषु** निर्धारणे सप्तमि तेषां भटानां मध्ये, **आचितताम्** आ समन्तात् 'चिञ् चयने' इति धातोः **चितः** शरै सम्बद्धः, तस्य भावः आचितता, तां न लेभे इति योजना ।

॥ इति एकोनविंशोऽध्यायः ॥

## ॥ अथ विंशोऽध्यायः ॥

**[३]सञ्छाद्यमानं समरे द्रोणं दृष्ट्वा महारथम् ।**
**चुक्रुशुः पाण्डवा राजन् वस्त्राणि दुधुवुश्च ह ॥ १३ ॥**

**चुक्रुशुः पाण्डवा राजन्** इत्यत्र **चुक्रुशुः** 'क्रुश आह्वाने रोदने च' इति धातोः अन्योन्यमाह्वानं चक्रुः ।

**नानद्यमानः पर्जन्यो [४]विष्वग्यातो हिमात्यये ।**
**अश्मवर्षमिवावर्षत् परेषां भयमादधत् ॥ ३३ ॥**

**विष्वग्यातो हिमात्यये** इत्यत्र **हिमात्यये** उष्णकाले ।

॥ इति विंशोऽध्यायः ॥

---

१. BORI पृ. ११६; **'योधेष्वश्चितलक्ष्मसु'** इति कुं पाठः ।
२. $G_5$; BORI पृ. ११७; **'कश्चिदाहतलक्षणः'** इति कुं पाठः ।
३. कुं. २१ अध्यायः । ; ४. **'मिश्रवातो'** इति कुं पाठः ।

## ।। अथ एकविंशोऽध्यायः ।।

**[१]भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे ।**
**पाञ्चालेषु च सर्वेषु कश्चिदन्योऽभ्यवर्तत ।। १ ।।**

**योद्धुं युद्धमतिं[२] कृत्वा क्षत्रियाणां यशस्करीम् ।**
**असेवितां कापुरुषैः सेवितां पुरुषर्षभैः ।। २ ।।**

**योद्धुं युद्धमतिं कृत्वा** इत्यत्र क्षत्रियाणां यशस्करीं कापुरुषैरसेवितां सत्पुरुषैः सेवितां मतिं कृत्वेति पूर्वेणान्वयः ।

**एकायनगता ह्येते पीडयेयुर्यतव्रतम् ।**
**अरक्ष्यमाणं शलभा यथा दीपं मुमूर्षवः ।।२२-२९।।**

**अरक्ष्यमाणं शलभा यथा दीपं मुमूर्षवः** इत्यत्र बहुशलभनिपाते तैलाभावादिना अरक्ष्यमाणः दीपोऽपि नश्यतीति भावः ।

**ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः ।**
**काका इव महानागं मा वै हन्युर्यतव्रतम् ।। ३१ ।।**

**काका इव महानागम्** इत्यत्र 'काकः कनकसूत्रेण कृष्णसर्पं जघान ।' इति पञ्चतन्त्रिकावचनात् उपायवन्तः काकाः महानागमिवेत्यर्थः ।

।। इति एकविंशोऽध्यायः ।।

* * *

---

१ कुं. २२ अध्यायः ।
२ 'आर्यां युद्धे' इति कुं पाठः ।

## ।। अथ द्वाविंशोऽध्यायः ।।

[१]**पितरं तु परिप्रेत्सुः क्षत्रधर्मा यतव्रतम् ।**
**सिद्धिं चास्य परां काङ्क्षन् शोणाक्षः सन्न्यवर्तत ।। ६ ।।**

इत्यत्र **पितरं** धृष्टद्युम्नम् । **क्षत्रधर्मा** क्षत्रधर्मनामकः ।

**तथा तित्तिरिकल्माषा हया वातसमा जवे ।**
**अवहंस्तुमुले युद्धे सहदेवमुदायुधम् ।। १० ।।**

इत्यत्र **तित्तिरिः** लावाख्यः चित्रवर्णः पक्षिविशेषः, तद्वत् **कल्माषाः** कृष्णपाण्डराः । 'तित्तिरिः कुक्कुभो लावः'[२] इत्यमरः । 'कल्माषः कृष्ण-पाण्डुरः'[३] इत्यभिधानम् ।

**दन्तवर्णास्तु राजानं कालबाला युधिष्ठिरम् ।**
**भीमवेगा नरव्याघ्रमवहन् वातरंहसः ।। ११ ।।**

**दन्तवर्णास्तु राजानं कालबाला युधिष्ठिरम्** इत्यत्र **दन्तवर्णाः** गजदन्तवर्णाः । **कालबालाः** कृष्णपुच्छाः ।

**बृहत्क्षत्रं तु कैकेयं सुकुमारं हयोत्तमाः ।**
**पलालधूमसङ्काशाः सैन्धवाः शीघ्रमावहन् ।। २४ ।।**

**पलालधूमसङ्काशाः** इत्यत्र पलालशब्देन शुष्कव्रीहितृणानि कथ्यन्ते । तेषां धूमोऽपि [४]ईषच्छत्रः , तत्सङ्काशाः । 'पलालोऽस्त्री स निष्फलः'[५] इत्यमरः ।

---

१. कुं. २३ अध्यायः । ; २. अ.को. २-५-३५; कुक्कुहो पाठान्तरम् ।
३. ह.को. ७-३६; ४. ईषच्छुक्लः इति पाठः सम्भाव्यते ।
५. अ.को. २-९-२२

**युवानमवहन्युद्धे क्रौञ्चवर्णा हयोत्तमाः ।**
**काश्यस्याभिभुवः पुत्रं सुकुमारं महारथम् ॥ २७ ॥**

इत्यत्र अभिभावयति सर्वानिति **अभिभूः**, तस्य अभिभुवः ।

**श्रुतसोमं[1] तु द्रौपद्यां पार्थः पुत्रमजीजनत् ।**
**माषपुष्पसवर्णास्तमवहन् वाजिनो रणे ॥ २९ ॥**

**श्रुतसोमं तु द्रौपद्याम्** इत्यत्र **पार्थः** पृथापुत्रो भीमः ।

**नाकुलिं तु शतानीकं शालपुष्पनिभा हयाः ।**
**आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् ॥ ३१ ॥**

**आदित्यतरुणप्रख्याः** इत्यत्र तरुणादित्यप्रख्या इति वक्तव्ये आदित्यतरुणप्रख्या इति विशेषणस्य परनिपातः ।

**श्रुतकीर्तिं श्रुतनिधिं द्रौपदेयं हयोत्तमाः ।**
**ऊहुः पार्थसमं युद्धे चाषपत्रनिभा हयाः ॥ ३३ ॥**

**चापपत्रनिभा हयाः** इत्यत्र **चाषः** श्यामवर्णः पक्षी । 'किकीदिविः [illegible]गृतश्चाषः शकुन्तो भास उच्यते' इति हलः । 'करिहक्कि'[2] [illegible]त्यपभ्रंशभाषा ।

**कुमारं शितिपादास्तु रुक्मचित्रैरुरश्छदैः ।**
**सौचित्तिमवहन्युद्धे यन्तुः प्रेष्यकरा हयाः ॥ ३७ ॥**

---

१. BORI पृ. १३२; 'सुतसोमं तु योधाग्र्यं भीमपुत्रं महाबलम्' इति कुं पाठः ।
२. [illegible]भाषायाम् ।

**कुमारं शितिपादास्तु** इत्यत्र **शितिपादाः** धवलवर्णपादचतुष्टयोपेताः । 'शिती धवलमेचकौ'[१] इत्यमरः ।

**यः स पाञ्चालसेनानीः द्रोणमंशमकल्पयत् ।**
**पारावतसवर्णास्तं धृष्टद्युम्नमुदावहन्** ॥ ४९ ॥

**द्रोणमंशमकल्पयत्** इत्यत्र **अंशं** स्वस्माद्वधयोग्यमंशम् ।

**ये तु [२]पुष्करसारस्य समवर्णा हयोत्तमाः ।**
**जवे श्येनसमाश्चित्राः सुदामानमुदावहन्** ॥ ५० ॥

**ये तु पुष्करसारस्य** इत्यत्र **पुष्करसारस्य** पद्मकेसरस्य ।

**शशलोहितवर्णास्तु पाण्डरोद्गतराजयः ।**
**पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन्** ॥ ५१ ॥

**पाण्डरोद्गतराजयः** इत्यत्र **पाण्डरोद्गतराजयः** पाण्डराः **उद्गताः** ऊर्ध्वं गताः **राजयः** पताकाराजयो येषां तथोक्ताः ।

**[३]कालायससवर्णास्तु श्वेतलोहितराजयः ।**
**रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम्** ॥ ६३ ॥

**कालायससवर्णास्तु श्वेतलोहितराजयः** इत्यत्र **श्वेतलोहितराजयः** **श्वेतानां** मौक्तिकानां लोहितानां विद्रुमादीनां च राजयो येषु ते तथोक्ताः ।

---

१. अ.को. ३-३-८३
२. S; BORI पृ. १३५; **'पुष्करनालस्य'** इति कुं. पाठः ।
३. **'कालायपुष्पवर्णास्तु'** इति कुं पाठः ।

[१]गोधाश्च मद्रकाश्चैव शरदण्डानुदण्डजाः ।
[२]निश्रुताङ्गाः कुटाङ्गाश्च दण्डकेतुमुदावहन् ॥ ६९ ॥

**गोधाश्च मद्रकाश्चैव** इत्यत्र गोधाः, मद्रकाः, निश्रुताङ्गाः कुटाङ्गा इति देशविशेषोद्भवाश्वजातेः सञ्ज्ञाः ।

केशवेन हते सङ्ख्ये पितर्यथ नराधिपे ।
[३]भिन्नैकपादयोधानां विद्रुतेषु च बन्धुषु ॥ ७० ॥

भीष्मादवाप्य चास्त्राणि द्रोणाद्रामात् कृपात् तथा ।
अस्त्रैः समत्वं सम्प्राप्य रुग्मिकर्णार्जुनाच्युतैः ।
इयेष [४]दारकान् हन्तुं कृत्स्नां जेतुं च मेदिनीम् ॥ ७१ ॥

**भिन्नैकपादयोधानां विद्रुतेषु च बन्धुषु** इत्यत्र शत्रुभिर्भिन्नाः एकैकपादा येषां तेषां योधानां स्वकीयभटानां बन्धुषु भयाद्विद्रुतेषु सत्सु भीष्मादिभ्यः अस्त्राण्यवाप्य **दारकान्** दारयन्तीति **दारकाः** स्वभटचरणच्छेत्तारः सपत्नाः तान् हन्तुं कृत्स्नां मेदिनीं जेतुञ्च इयेषेति योजना ।

[५]आरकूटकवर्णाभा हयाः पाण्ड्यानुयायिनाम् ।
अवहन् नथमुख्यानामयुतानि चतुर्दश ॥ ७५ ॥

---

१ 'गोधाश्च भद्रकाशश्च' इति कुं पाठः ।
२ '[illegible]ताण्डाः कुकुटाण्डाभा दण्डकेतुं हयाऽवहन्' इति कुं पाठः ।
३ 'भिन्नं कपाटे पाण्ड्यानां' इति कुं पाठः ।
४ 'दारकां' इति कुं पाठः ।
५ 'आरकूटकवर्णाश्च' इति कुं पाठः ।

**आरकूटकवर्णाभा** इत्यत्र आरकूटमेव **आरकूटकं** कांस्यम् । 'आरकूटं स्मृता रीतिः कांस्यं सौराष्ट्रिकं तथा'[१] इति हलः ।

**सुवर्णवर्णा धर्मज्ञं अनीकस्थं युधिष्ठिरम् ।**
**राजश्रेष्ठं हयश्रेष्ठाः सर्वतः पृष्ठतोऽन्वयुः** ॥ ७९ ॥

**अनीकस्थं युधिष्ठिरम्** इत्यत्र युधि स्थिरत्वाद् **युधिष्ठिरं** लोहिताक्षम् ।

**ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः ।**
**प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः** ॥ ८१ ॥

**ते यत्ता भीमसेनेन** इत्यत्र भीमसेन इति प्रभद्रकानामधिपतेर्नाम ।

**दृष्टवानस्मि सौवर्णं सोमं ग्रहगणान्वितम्**
[२]**विष्वग्लोहितचर्माणौ दिव्यौ नन्दोपनन्दकौ ।**
**यन्त्रेणाहन्यमानौ च सुस्वनौ हर्षवर्धनौ** ॥८५,८६॥

**विष्वग्लोहितचर्माणौ दिव्यौ नन्दोपनन्दकौ** इत्यत्र **नन्दोपनन्दकौ** इति भेरीद्वयस्य नाम । दृष्टवानस्मीति पूर्वेणान्वयः ।

॥ इति इति द्वाविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

[३]**तमग्ग्ररथमादिष्टाः** इत्यत्र अग्ग्ररथं तं दुर्मर्षणम् अनुगच्छन्त्वित्या-दिष्टा इति सम्बन्धः ।

---

१. ह.को. १-७०; २. कुं. २५ अध्यायः; 'मृदङ्गौ चात्र विपुलौ' इति कुं पाठः
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

[१] तदुत्पिञ्छलिकं युद्धम् आसीद्देवासुरोपमम् ।
मत्स्यानां केकयैः सार्धमभीताश्वरथद्विपम् ॥ २१ ॥

**तदुत्पिञ्छलिकम्** इत्यत्र **उत्पिञ्छलिकं** जलकोलाहलः शब्दः । 'जलकोलाहलः शब्दः स्यादुत्पिञ्छलिको महान्' इति हलः ।

नाकुलिं तु शतानीकं भूतकर्मा सभापतिः ।
अस्यन्तमिषुजालानि यान्तं द्रोणात् अवारयत् ॥ २२ ॥

इत्यत्र **द्रोणात्** द्रोणाज्ञया ।

यस्तु शूरतमो राजन् सेनयोरुभयोर्मतः ।
तं पटच्चरहन्तारं [२] लक्षणः समवारयत् ॥ ३३ ॥

**तं पटच्चरहन्तारं लक्षणः समवारयत्** इत्यत्र पटच्चराख्यराजहन्तारम् अभिमन्युम् ।

कर्णस्तु केकयान् भ्रातॄन् पञ्च लोहितकध्वजान् ।
द्रोणायाभिमुखं [३] यातः शरवर्षैरवारयत् ॥२५-४३॥

**द्रोणायाभिमुखं यातः** इत्यत्र **यातः** गन्तॄन् ।

क्षेमधूर्तिबृहन्तौ तु भ्रातरौ सात्वतं युधि ।
द्रोणायाभिमुखं यान्तं शरैस्तीक्ष्णैस्ततक्षतुः ॥ ४८ ॥

**भ्रातरौ सात्वतं युधि** इत्यत्र **सात्वतः** युयुधानः ।

---

१ 'तदुत्पिञ्छलिकं; तदुत्पिञ्जलकं' इति कुं पाठः ।
२ $G_1$ [illegible],M; BORI पृ. १४६; **'लक्ष्मणः'** इति कुं पाठः ।
३ $B_1$,$DC_1$,$Dn_2$; BORI पृ. १४६; **'यातान्'** इति कुं पाठः ।

[१] **भुवनेष्विव सर्वेषु** इत्यत्र **भुवनेषु** जलेषु ।

[२] **आरुजन् प्ररुजन् भञ्जन् निघ्नन् विद्रावयन् क्षिपन् ।**
**सेनां विभीषयन्नायाद् द्रोणप्रेप्सुर्घटोत्कचः ॥ ६२ ॥**

**आरुजन् प्ररुजन् भञ्जन्** इत्यत्र **आरुजन्** आ समन्तात् रुजन् । **प्ररुजन्** प्रकर्षेण रुजन् । **भञ्जन्** द्वैधीभावं कुर्वन् ।

**नैतादृशो दृष्टपूर्वः सङ्ग्रामो नैव च श्रुतः ।**
**द्रोणस्याभावभावे तु प्रसक्तानां परस्परम् ॥ ६६ ॥**

**द्रोणस्याभावभावे तु प्रसक्तानाम्** इत्यत्र **अभावे** नाशे **भावे** रक्षणे **प्रसक्तानां** पाण्डवानां कुरूणाञ्च ।

॥ इति चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

[३] **व्यवच्छिद्य तु राजानम् भगदत्तं युधिष्ठिरः ।**
**रथानीकेन महता सर्वतः पर्यवारयत् ॥ ३९ ॥**

**व्यवच्छिद्य तु राजानम्** इत्यत्र **राजानं** दशार्णाधिपतिं **व्यवच्छिद्य** तद्युद्धात् व्यवच्छिन्नं कृत्वा ।

॥ इति पञ्चविंशोऽध्यायः ॥

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. BORI पृ. १५०; 'आतुदन्' इति कुं पाठः ।
३. कुं. २६ अध्यायः ।

## ।। अथ षड्विंशोऽध्यायः ।।

**[१] दशैव तु सहस्राणि त्रिगर्तानां महारथाः ।**
**चत्वारि तु सहस्राणि वासुदेवस्य [२] येऽनुगाः ।। १२ ।।**

**वासुदेवस्य येऽनुगाः** इत्यत्र **वासुदेवस्य** वासुदेवस्य सम्बन्धिनः पुरा इति यावत् । **धेनुपाः** गोपस्त्रीषु जनितप्रागुक्तनारायणाख्यगोपालाः 'वासुदेवस्य चात्मजाः' इति पाठे स्पष्टोऽर्थः ।

**सा हि दुर्योधनस्यासीन्मतिः कर्णस्य चोभयोः ।**
**अर्जुनस्य वधोपाये [३] तेन द्वैधमकल्पयत् ।। १७ ।।**

**तेन द्वैधमकल्पयत्** इत्यत्र **द्वैधं** स्वसङ्कटकालेऽपि नागत इति अर्जुनं प्रति धर्मराजस्य द्वैधीभावम् ।

**।। इति षड्विंशोऽध्यायः ।।**

## ।। अथ अष्टाविंशोऽध्यायः ।।

**[४] ततश्छत्रं ध्वजं चैव छित्वा राज्ञोऽर्जुनः शरैः ।**
**विव्याध दशभिस्तूर्णमुत्स्मयन् [५] पर्वताधिपम् ।। ११ ।।**

**पर्वताधिपम्** इत्यत्र **पर्वताधिपः** भगदत्तः ।

---

१ कुं. २७ अध्यायः ।
२ BORI पृ. १५०; **'चानुगाः'** इति कुं पाठः ।
३ BORI पृ. १६१; **'या वै'** इति कुं पाठः ।
४ कुं. २९ अध्यायः ।
५ BORI पृ. १६७; **'पर्वतश्वरम्'** इति कुं पाठः ।

**परिवृत्तं किरीटं तं यमयन्नेव पाण्डवः ।**
**सुदृष्टः क्रियतां लोक इति राजानमब्रवीत्** ॥ १४ ॥

**सुदृष्टः क्रियतां लोक** इत्यत्र **सुदृष्टः** सुष्ठु दृष्टं दर्शनं यस्य स तथोक्तः ।

**तया पद्मपलाशिन्या [1]वासकम्पितलोकया** ॥ २० ॥
**शुशुभेऽभ्यधिकं शौरिरतसीपुष्पसन्निभः** ॥ २१ ॥

**वासकम्पितलोकया** इत्यत्र **वासः** वासना ।

**अयुध्यमानस्तुरगान् संयन्तास्मि जनार्दन ।**
**[2]इत्युक्तः पुण्डरीकाक्ष प्रतिज्ञां त्वं न रक्षसि** ॥ २२ ॥

**इत्युक्तः पुण्डरीकाक्ष प्रतिज्ञां त्वं न रक्षसि** इत्यत्र हे पुण्डरीकाक्ष, त्वं **प्रतिज्ञां** युद्धं न करोमीति प्रतिज्ञां न रक्षसि इति **उक्तः**, अर्जुनेन कृष्ण उक्त आसीत् ।

**[3]अस्मात् प्राग्ज्योतिषं प्राप्तं सर्वशस्त्रविघातनम्** ॥ २९ ॥
**नास्यावध्योऽस्ति लोकेऽस्मिन् मदन्यः कश्चिदर्जुन** ॥ ३० ॥

**अस्मात् प्राग्ज्योतिषं प्राप्तम्** इत्यत्र **अस्मात्** नरकासुरात् **प्रागूज्योतिषं** प्राक् ज्योतिः ज्योतीरूपं वैष्णवास्त्रं यं प्राप्तवान् तं प्राग्ज्योतिषं भगदत्तं, लक्षणया प्राग्ज्योतिषपुराधिपं वा ।

॥ इति अष्टाविंशोऽध्यायः ॥

---

१. **'वातकम्पितपत्रया'** इति कुं पाठः ।
२. **'इत्युक्त्वा'** इति कुं पाठः । ; ३. **'तस्मात्'** इति कुं पाठः ।

## ।। अथ त्रिंशोऽध्यायः ।।

[१] समुद्यतेषु चास्त्रेषु सम्प्राप्ते च युधिष्ठिरे ।
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ।। ४ ।।

सम्प्राप्ते च युधिष्ठिरे इत्यत्र सम्प्राप्ते युद्धाय सम्प्राप्ते सति ।

ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् ।
शरस्फुलिङ्गश्चापार्चिर्दहन् कक्षमिवानलः ।। १९ ।।

ततो नीलोऽनलप्रख्यो इत्यत्र नीलः नीलनामकः पाञ्चाल्यो राजा ।

तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोशपद्माभमुखं नीलो विव्याध सायकैः ।। २२ ।।

व्याकोशपद्माभमुखम् इत्यत्र व्याकोशः विकसितः । 'उद्बुद्धं व्याकोशं पद्मेषु विकासवाचकाः शब्दाः'[२] इति हलः ।

अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः ।
कथं नो [३] वाऽस्वस्ति नायात् शत्रुभ्य इति मारिष ।। २८ ।।

कथं नो वाऽस्वस्ति नायात् इत्यत्र अस्वस्ति अशोभनम् ।

।। इति त्रिंशोऽध्यायः ।।

## ।। अथ एकत्रिंशोऽध्यायः ।।

[४] [illegible]क्रेण चक्रमासाद्य वीरो वीरस्य संयुगे ।
[illegible]तिपूपधेः काले जहार गदया शिरः ।। २६ ।।

१. [illegible] ३१ अध्यायः ।; २. ह.को. १८७; ३. 'वासविस्रायात्' इति कुं पाठः
४. [illegible] ३२ अध्यायः ।

**अतीतेषूपधेः काले** इत्यत्र **अतीतः** गदाप्रहारवेगात् नष्टः **इषूपधिः** तूणीरं यस्य स तथोक्तः ।

**आसीत् केशपरामर्शो मुष्टियुद्धं च दारुणम् ।**
**नखैर्दन्तैश्च शूराणां अद्विपैर्द्विपमिच्छताम्** ॥ २७ ॥

**अद्विपैर्द्विपमिच्छताम्** इत्यत्र **अद्विपैः** गजरहितैः आत्मभिः पदातिभूतैरित्यर्थः । **द्विपम् इच्छतां** वेद्धुमिच्छताम् ।

**तेषामुत्पतितान् कांश्चित् पतितांश्च पराङ्मुखान् ।**
**न जघानार्जुनो योधान् योधव्रतमनुस्मरन्** ॥ ४९ ॥

**तेषामुत्पतितान् कांश्चित्** इत्यत्र **उत्पतितान्** पलायितान् ।

॥ इति एकत्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

[१] **ततो द्रोणेन विहितो राजन् व्यूहो व्यरोचत ।**
**चरन्मध्यन्दिने सूर्यो** [२] **निर्दहन्निव दृग्दृशः** ॥ १८ ॥

**निर्दहन्निव दृग्दृशः** इत्यत्र **दृशां** पश्यतां **दृशः** चक्षूंषि निर्दहन्निव ।

॥ इति द्वात्रिंशोऽध्यायः ॥

* * *

---

१. कुं. ३३ अध्यायः ।

२. S; BORI पृ. १९५; **'प्रतपन्निव दुर्दृशः'** इति कुं पाठः ।

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[1]तत्कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः ।**
**मातुलस्य च यत्प्रीतिं करिष्यति पितुश्च मे ॥ २५ ॥**

**हितं यद्वंशयोर्द्वयोः** इत्यत्र **द्वयोर्वंशयोः** [2]पितृवंशमातृवंशयोः ।

॥ इति चतुस्त्रिंशोऽध्यायः ॥

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**[3]एवमप्युच्यमानः स सारथिस्तं पुनः पुनः ।**
**वीर ते तेन मा युद्धं इति सौभद्रमब्रवीत् ॥ १० ॥**

**वीर ते तेन मा युद्धम्** इत्यत्र **तेन** वैरिदलेन ।

॥ इति पञ्चत्रिंशोऽध्यायः ॥

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[4]त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।**
**व्यसृजन्निषुजालानि नानालिङ्गानि सङ्घशः ॥ १० ॥**

**त एनं कोष्ठकीकृत्य** इत्यत्र **कोष्ठकीकृत्य**, कोष्ठमन्तर्गृहं तद्वदन्तः [illegible]त्यर्थः । 'अन्तर्गेहेऽपि कोष्ठं स्यात्'[5] इति हलः ।

॥ इति षट्त्रिंशोऽध्यायः ॥

---

१. कुं. ३५ अध्यायः । ; २. पितृवंशमातुलवंशयोः सो.मु.पा.
३. कुं. ३६ अध्यायः । ; ४. कुं. ३७ अध्यायः ।; ५. ह.को. ८१७

## ।। अथ सप्तत्रिंशोऽध्यायः ।।

[१] **चक्रं युगं च तूणीरं ह्यनुकर्षञ्च सायकैः ।**
**पताकां चक्रगोप्तारौ सर्वोपकरणानि च ।**
**लघुहस्तः प्रचिच्छेद ददृशे तं न कश्चन** ।। ३६ ।।

**ह्यनुकर्षञ्च सायकैः** इत्यत्र **अनुकर्षम्** अनुकूलतया कर्षत्यश्वानिति **अनुकर्षः** अश्वनियामकरज्जुविशेषः ।

**दूरमस्य गुरुं भारं साध्वसञ्च पुनः पुनः ।**
**सन्दधद्विसृजंश्चेषून् निर्विशेषमदृश्यत** ।। १७ ।।

**दूरमस्य गुरुं भारम्** इत्यत्र **साध्वसं** गुरुं भारं च दूरं तथा भवति यथा अस्य निरस्य ।

**।। इति सप्तत्रिंशोऽध्यायः ।।**

## ।। अथ अष्टत्रिंशोऽध्यायः ।।

[२] **अथ पणवमृदङ्गदुन्दुभीनां क्रकचमहानकभेरिझर्झराणाम् ।**
**निनदमतिभृशं नराः प्रचक्रुर्लवणजलोद्भवसिंहनादमिश्रम्** ।।३१

**अथ पणवमृदङ्गदुन्दुभीनाम्** इत्यत्र **लवणजलोद्भवः** शङ्खः ।

**।। इति अष्टत्रिंशोऽध्यायः ।।**

## ।। चत्वारिंशोऽध्यायः ।।

[३] **सोऽभ्यगच्छद् धनुष्पाणिर्ज्यां विकर्षन् पुनः पुनः ।**
**तयोर्महात्मनोस्तूर्णं रथोऽन्तरमवापतत्** ।। १ ।।

---

१. कुं. ३८ अध्यायः ।; २. कुं. ३९ अध्यायः ।

## ।। अथ त्र्यशीतितमोऽध्यायः ।।

[१] स कृत्वा पितृकर्म त्वं पुत्रं संस्थाप्य सत्पथे ।
वर्तेथा यदि धर्मेण न त्वां व्यसनमाव्रजेत् ।। ८ ।।

**स कृत्वा पितृकर्म त्वम्** इत्यत्र **पितृकर्म** पितृभिराचरितं कर्म ।

।। इति त्र्यशीतितमोऽध्यायः ।।

## ।। अथ षडशीतितमोऽध्यायः ।।

[२] तत्राद्भुतमपश्याम शिलानामिव सर्पणम् ।
यद्द्रोणं तरसा पार्थो वृद्धं बालोऽपि नातरत् ।। २९ ।।

**तत्राद्भुतमपश्याम शिलानामिव सर्पणम्** इत्यत्र **सर्पणम्** अन्योन्याभिगमनम् ।

।। इति षडशीतितमोऽध्यायः ।।

## ।। अथ अष्टाशीतितमोऽध्यायः ।।

[३] तावविध्यत्ततो भोजः [४] सर्वपारशवैः शरैः ।। २९ ।।

**सर्वपारशवैः शरैः** इत्यत्र **सर्वपारशवैः** तीक्ष्णायःसम्बन्धिभिः । 'तीक्ष्णमयः पारशवम्' [५] इति हलः ।

।। इति अष्टाशीतितमोऽध्यायः ।।

---

१. कुं. ८६ अध्यायः । ; २. कुं. ९१ अध्यायः ।
३. कुं. ९२ अध्यायः ।
४. BORI पृ. ३५८; 'कृतवर्मा शितैः' इति कुं पाठः; ५. ह.को. १७१

**सन्ध्यानुगतपर्यन्तः** इत्यत्र **सन्ध्यापर्यन्तमनुगतः** सन्ध्यानुगतपर्यन्तः ।

**अन्वस्य पितरं पश्य[१] चरतः सर्वतो दिशम् ।**
**शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत** ॥ २० ॥

**अन्वस्य पितरं पश्य** इत्यत्र **पितरम्** अर्जुनम् **अन्वस्य** सन्न्यस्य त्यक्त्वा ।

**अतिमानं[२] ददात्येष सौभद्रो विचरन् रणे** ॥ २२ ॥
**अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः** ॥ २३ ॥

**अतिमानं ददात्येष** इत्यत्र **अतिमा** अतिशयः, तम् **अतिमानम्** । गरिमा लघिमा इत्यादिवच्छब्दोऽयम् ।

**॥ इति सप्तचत्वारिंशोऽध्यायः ॥**

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

**[३]पूर्णचन्द्राभवदनं काकपक्षावृतालिकम् ।**
**तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः ।**
**मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः** ॥ १९ ॥

इत्यत्र अलिकशब्देन ललाटमुच्यते । 'ललाटमलिकं गोधिः'[४] इत्यमरः ।

**॥ इति अष्टचत्वारिंशोऽध्यायः ॥**

---

१. **'चाद्य'** इति कुं पाठः ।
२. $D_1$,$S_1$.$K_{2\cdot3}$; BORI पृ. २५०; **'दधात्येषः'** इति कुं पाठः ।
३. **कुं. ५४ अध्यायः । ; ४. अ.को. २-६-९२**

## ।। अथ द्विपञ्चाशोऽध्यायः ।।

**मृत्युस्तेषां व्याधयस्तत्प्रसूता व्याधी [1]रोगैर्युज्यते येन देहम्** ४५

इत्यत्र येन कारणेन **व्याधिः** विशेषेण **आधिः** मनःपीडा येभ्यस्ते **व्याधयः** गृहदाहास्त्रशस्त्रघाताद्याः । व्याधिरिति जात्येकवचनम् । **रोगाः** वातपित्तश्लेष्मादिविकारजनिताः सन्निपाताद्याः मरणकाले **देहं युज्यते** देहेन युज्यते इति यावत् । तेन कारणेन **तत्प्रसूताः** मृत्युदेवतानयनोदकेन प्रसूताः व्याधयः । उपलक्षणश्चैतत् । रोगाश्च मृत्युः ।

[2]**सर्वेषां वै प्राणिनां प्रायणान्ते प्राणा गत्वा सन्निवृत्तास्तथैव** ४६

इत्यत्र **प्रायणान्ते** मरणकाले सर्वेषां प्राणिनां प्राणा गत्वा पुनरुत्पत्तिकाले सन्निवृत्ता भवन्ति ।

**एवं सर्वे प्राणिनस्तत्र गत्वा वृत्ता देवा मर्त्यवद्राजसिंह** ।।४६।।

**एवं सर्वे प्राणिनस्तत्र गत्वा** इत्यत्र एवमुक्तप्रकारेण मृत्योः सकाशात् परलोकं गत्वा देहं देहम[3]पेक्ष्य भूयः मर्त्यतां यान्ति, न तु जीवस्यैव नाशो नामास्ति । अतोऽपि शोको न कर्तव्य इति भावः ।

**वायुर्भीमो भीमनादो महौजाः [4]सर्वेषाञ्च प्राणिनां प्राणभूतः ।**
**अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः** ।।४७।।

---

१. T; BORI पृ. १०८२; **'रोगो रुज्यते येन'** इति कुं पाठः ।

२. BORI पृ. १०८२ ; **'सर्वे देवाः प्राणिभिः प्रायणान्ते गत्वा वृत्ताः'** इति कुं पाठः ।

३. **उपेक्ष्य** सो.मु.पा.

४. **'भेत्ता देहान् प्राणिनां सर्वगोऽसौ । नो वा वृत्तिं नैव वृत्तिं कदाचित् । प्राप्नोत्युग्रोऽनन्ततेजोविशिष्टः** ।। इति कुं पाठः ।

इत्यत्र यस्मादिति अभ्युपस्कर्तव्यम् । यस्माद्वायु**र्भीमः** असुराणां भयङ्करः । तत्र हेतुः भीमनाद इति । **भीमो** भयङ्करो **नादो** ध्वनिर्यस्य स तथोक्तः । तथा महत् ओजो यस्यासौ तथोक्तः **महौजाः** । सर्वेषां **प्राणिनां** जीवानां **प्राणभूतः** चेष्टादिप्रदः । तथा **देहिनां** प्राणिनां **देहपाते** काये अनसावायोरवृत्तिः ( ? ) कारणमित्यर्थः । मुख्यप्राणेन देहे परित्यक्ते तत्पातो भवति, नान्यथेति भावः । अथवा **देहिनां** मुमुक्षूणां देहपाते अनावृत्तिः यत्प्रसादाद्भवतीत्यर्थः । तस्मादेतादृशो वायुर्देवानामपि देवोत्तम एव । **विशिष्टः** सर्वोत्कृष्ट इत्यर्थः ।

**आत्मानं वै [१]देहिनो घ्नन्ति सर्वे नैतान् मृत्युर्दण्डपाणिर्हिनस्ति । तस्मान्मृतान् नानुशोचन्ति धीरा मृत्युं ज्ञात्वा निश्चयं ब्रह्मसृष्टम्**
॥ ५०॥

**आत्मानं वै देहिनो घ्नन्ति सर्वे** इत्यत्र सर्वे प्रागुक्ता व्याधिरोगाद्याः **देहिनः** जीवस्य **आत्मानं** देहं घ्नन्ति । न तु जीवम् । जीवस्य [२]न तु मृतसञ्ज्ञापि । विधिकल्पनारूपत्वेनानुल्लङ्घ्यत्वाद्देहनाशादपि न भेतव्यमित्याह **तस्मान्मृतानिति** ।

॥ इति द्विपञ्चाशोऽध्यायः ॥

## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥

**[३]पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदक्षिण्यमधिचैत्त्येत्युदाहरत्[४]** ॥ ५७ ॥

---

१. **'प्राणिनो'** इति कुं पाठः । ; २. बहुषु पुस्तकेषु नञ् विनैव पाठ उपलभ्यते ।
३. कुं. ५५ अध्यायः । ४. **'-मभिश्चैत्येत्युदाहरत्'** इति कुं पाठः ।

[१] **पुत्रात् पुण्यतरस्तुभ्यम्** इत्यत्र **अधि** अधिकं **चैत्त्यं** चित्तसम्बन्धि ज्ञानं यस्य तस्य सम्बुद्धिः **अधिचैत्त्य** सृञ्जय, **अयज्वानं** यज्वा न भवतीत्ययज्वा तं, न विद्यते दक्षिणा यस्य तम् **अदक्षिण्यम्** अकृत-सत्कर्माणमिति यावत् , तव पुत्रं मानुतप्यथा इत्युदाहरदिति योजना।

॥ इति त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

**[२] चषालप्रचषालौ च यस्य यूपे हिरण्मयौ।**
**नृत्यन्त्यप्यसरसो यत्र षट्सहस्राणि सप्त च** ॥ ७ ॥

**चषालप्रचषालौ च यस्य यूपे हिरण्मयौ** इत्यत्र **यस्य** दिलीपस्य **यूपे** यज्ञयूपे **चषालः** अन्तरे अन्तरे विद्यमानो यूपकटकः, **प्रचषालः** आदिमध्यावसानेषु विद्यमानः स्थूलो यूपकटकश्च तौ चषालप्रचषालौ। 'चषालो यूपकटकः'[३] इत्यमरः।

**[४] अवादयच्च तत्रासौ प्रीत्या विश्वावसुः स्वयम्** ॥ ८ ॥

**अवादयच्च तत्रासौ** इत्यत्र **अवादयत्** वीणामृदङ्गादिकमध्वनयत्।

**[५] सर्वभूतान्यमोदन्त मम वादयतीति तम्** ॥ ८ ॥

**सर्वभूतान्यमोदन्त मम वादयतीति तम्** इत्यत्र **वादयतीति** प्रियं वाचयतीति तं दिलीपं सर्वभूतान्यमोदन्तेति योजना।

---

१. कुं. ५५ अध्यायः।; २. कुं. ६१ अध्यायः।; ३. अ.को. २-७-१८
४. 'यत्र वीणां वादयति' इति कुं पाठः।
५. 'सर्वभूतान्यबोधन्त' इति कुं पाठः।

**यस्याप्सु युध्यमानस्य चक्रे न परिपेततुः ॥ १० ॥**

**यस्याप्सु युध्यमानस्य चक्रे न परिपेततुः** इत्यत्र **चक्रे** रथाग्र-भागस्थचक्रे **न परिपेततुः** जलान्तर्न परिपेततुः ।

**॥ इति अष्टपञ्चाशोऽध्यायः ॥**

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

**[१] उपह्वरेऽतिव्यथिता तस्याङ्के निषसाद ह ।**
**तथा भागीरथी गङ्गा ऊर्ध्वगा चाभवत् पुरा ॥ ७,८ ॥**

**उपह्वरेऽतिव्यथिता** इत्यत्र **उपह्वरे** भगीरथस्य समीपे **अतिव्यथिता** पर्वतादिविदारणेन व्यथिता **ऊर्ध्वगा** प्रवाहरूपेण पुरतः पुरतो गच्छन्ती पुरा पूर्वं भगीरथस्य अङ्के निषसाद ह ।

॥ इति एकोनषष्टितमोऽध्यायः ॥

## ॥ अथ षष्टितमोऽध्यायः ॥

**[२] यं देवावश्विनौ गर्भे पितुः पार्श्वे चकर्षतुः ॥ १ ॥**

**यं देवावश्विनौ गर्भे पितुः पार्श्वे चकर्षतुः** इत्यत्र भार्योदरमप्राप्य पितुरुदर एव गर्भोऽभिवृद्ध इति भावः ।

**मृगयां विचरन् राजा तृषितः क्लान्तवाहनः ।**
**धूमं दृष्ट्वागमत् सत्रं पृषदाज्यमवाप सः ॥ ६२ ॥**

---

१. कुं. ६० अध्यायः ।; २. कुं. ६२ अध्यायः ।

**पृषदाज्यमवाप सः** इत्यत्र **पृषदाज्यं** घृतमिश्रितं होमान्नम् । 'पृषदाज्यं हविः सर्पिः'[१] इत्यमरः ।

**तं दृष्ट्वा युवनाश्वस्य जठरे रविसन्निभम् ।**
**गर्भं निरूहतुर्देवावश्विनौ भिषजां वरौ ॥ ३ ॥**

**गर्भं निरूहतुर्देवावश्विनौ भिषजां वरौ** इत्यत्र **निरूहतुः** 'वह प्रापणे 'इति धातोः पितुर्यथा मरणं न भवति तथा उदराद्बहिः प्रापयाञ्चक्राते । देवभिषक्त्वादश्विनोरेवेदं [२]कौशलमिति भावेनोक्तम् **भिषजां वरौ** इति ।

**मामेवायं धयत्वङ्ग इति ह स्माह वासवः ॥ ५ ॥**

**मामेवायं धयत्वङ्ग** इत्यत्र **धयतु** पिबतु । 'धेट् पाने' इति धातुः ।

**असितं च नृगं चैव मान्धाता मानवोऽजयत् ॥ १० ॥**

**मान्धाता मानवोऽजयत्** इत्यत्र **मानवः** मनुवंशजः ।

**॥ इति षष्टितमोऽध्यायः ॥**

## ॥ अथ एकषष्टितमोऽध्यायः ॥

**[३]नाभागमम्बरीषञ्च मृतं सृञ्जय शुश्रुम ॥ १ ॥**

**नाभागमम्बरीषञ्च** इत्यत्र **नाभागं** नभगकुलोत्पन्नम् ।

**॥ इति एकषष्टितमोऽध्यायः ॥**

---

१. **'पृषदाज्यं सदध्याज्ये'** इत्येव प्रचलितः अमरपाठः ।
२. कुशलम् सो.मु.पा. ; ३. कुं. ६४ अध्यायः ।

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

**[१] षट्त्रिंशद्योजनायामा त्रिंशद्योजनमायता ।**
**पश्चात् पुरश्चतुर्विंशद्वेदिकाऽसीद्धिरण्मयी ॥ १६ ॥**

**पश्चात् पुरश्चतुर्विंशद्वेदिकाऽसीद्धिरण्मयी** इत्यत्र **पुरः** पट्टणस्य पश्चात् बहिर्भागे । **'चतुर्विंशद्वेदिका'** इत्यत्र वेदिकेति जात्येक-वचनम् । चतुर्विंशात्सङ्ख्याता वेदिकेत्यर्थः ।

॥ इति त्रिषष्टितमोऽध्यायः ॥

## ॥ अथ चतुःषष्टितमोऽध्यायः ॥

**[२] सहस्रशश्च सौवर्णान् वृषभान् गोशतानुगान् ।**
**अध्यर्धमासमददाद्ब्राह्मणेभ्यः शतं समाः ॥ १० ॥**

**अध्यर्धमासमददाद्ब्राह्मणेभ्यः शतं समाः** इत्यत्र **अध्यर्धमासम्** अर्धेन मासेन सहितो मासः अध्यर्धमासः पञ्चचत्वारिंशद्दिनपरिमितं कालं मर्यादीकृत्य ब्राह्मणेभ्यः अददादित्यर्थः ।

॥ इति चतुःषष्टितमोऽध्यायः ॥

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

**[३] मनःशिलासमायुक्तान् स्वान् कृत्वाञ्जनकाशिनः ॥ ३ ॥**

---

१. कुं. ६६ अध्यायः ।; २. कुं. ६७ अध्यायः ।
३. कुं. ६८ अध्यायः । 'मनः शिला इव शिलाः सम्युक्ता जतुराशिभिः' इति कुं पाठः ।

**व्यालांदीश्चातिबलवान् [1]त्रिप्रभिन्नान् गजानपि ।**
**दंष्ट्रासु [2]गृह्याधिरुह्य शुष्कास्यानकरोद्वशे ॥ ४ ॥**

**मनःशिलासमायुक्तान् स्वान् कृत्वाञ्जनकाशिनः** इत्यत्र **स्वान्** स्वदेहान् । मनः शिलासमायुक्तान् **मनःशिला** धातुरसः, तया **समायुक्तान्** दिग्धाङ्गान् **अञ्जनकाशिनः** अञ्जनशिलया प्रकाशमानांश्च कृत्वा चरतः **व्यालान्** वनसर्पान् दुष्टगजान्वा । **त्रिभिन्नान्** त्रिषु स्थानेषु मदधारासहितान् ।

**[3]हिरण्मयाश्वान् द्विरदान् रथानुष्ट्रानजाविकान् ॥ १३ ॥**
**कोटीशतायुताश्चैव ब्राह्मणेभ्यो ह्यमन्यत ॥ १५ ॥**

**हिरण्मयाश्वान् द्विरदान्** इत्यत्र **हिरण्मयाः** हिरण्यालङ्कृताः ।

**॥ इति पञ्चषष्टितमोऽध्यायः ॥**

## ॥ षट्षष्टितमोऽध्यायः ॥

**[4]सर्वाः कामदुघा गावः पुटके पुटके मधु ।**
**आसन् हिरण्मया वृक्षाः सुखस्पर्शाः सुखावहाः ॥ ५ ॥**

**पुटके पुटके मधु** इत्यत्र **पुटके** वृक्षसम्पुटके, कोटरे इत्यर्थः । **पुटके** [5]पत्रपुटके मधु पिबन्ति इति वा ।

---

१. 'सुप्रतीकान्' इति कुं पाठः । ; २. 'गृह्य विमुखान्' इति कुं पाठः ।
३. 'हैरण्यान् द्विरदान् अश्वान्' इति कुं पाठः ।
४. कुं. ६९ अध्यायः ।
५. पत्रपुटे सो.मु.पा.

**एकस्यार्थाय यो हन्यात्  आत्मनो वा परस्य वा ।**
**एकं प्राणं बहून्वापि प्राणिनां नास्ति पातकम्    ॥ १८ ॥**

**यस्मिंस्तु निहते भद्रे बहवः सुखमेधते ।**
**[१]तस्मिन् हते सुखं नास्ति पातकं सोपभुज्यते    ॥ १९ ॥**

**एकस्यार्थाय यो हन्यात्** इत्यत्र यस्मिन् हते बहवः सुखं यथा भवति तथा **एधते** एधन्ते तम् आत्मनो वा परस्य वा एकस्यार्थे यो हन्यात् प्राणिनां मध्ये तस्य पातकं नास्ति । यस्मिन् हते सुखं लोकस्य सुखं नास्ति तं यो हन्यात् सः पातकम् **उपभुज्यते** भुनक्ति ।

**दोग्धा च सविता देवो दुग्धमूर्जस्करं प्रियम्    ॥ ३८ ॥**

**दुग्धमूर्जस्करं प्रियम्** इत्यत्र ऊर्जो देवान्नम्, तत्करोतीति **ऊर्जस्करम्** ।

**अन्तर्धानं चामपात्रे दुग्धा  पुण्यजनैर्विराट् ।**
**दोग्धा वैश्रवणस्तेषां वत्सश्चासीत् वृषध्वजः    ॥ ४४ ॥**

विराट् वैश्रवण इति सम्बन्धः ।

**हैरण्यानकरोद्राजा ये केचित्पार्थिवा भुवि ।**
**तान् ब्राह्मणेभ्यः प्रायच्छदश्वमेधे महामखे    ॥ ४८ ॥**

इत्यत्र ये **पार्थिवाः** पृथिवीसम्बन्धिनः पात्रविशेषाः तान् हैरण्यान् अकरोत् ।

॥ इति षट्षष्टितमोऽध्यायः ॥

---

१. 'तस्मिन् हते त्वघं नास्ति पातकं नोपभुज्यते' इति कुं पाठः ।

॥ अथ सप्तषष्टितमोऽध्यायः ॥

**[1]यश्चाश्वमनुपर्येति [2]भूमिं कुर्वन्नपांसुलाम् ।**
**न चासीद्विक्रिया यस्य प्राप्य श्रियमनुत्तमाम् ॥ २ ॥**

इत्यत्र **अपांसुलां** निर्दुष्टाम् ।

**यः क्षत्रियैः परामृष्टे वत्से पितरि [3]चाहते ।**
**ततोऽवधीत् कार्तवीर्यमजितं समरे परैः ॥ ५ ॥**

इत्यत्र **वत्से** कामधेनुवत्से ।

**ततः सप्तसहस्राणां [4]कटधूममपाययत् ॥ ९ ॥**

इत्यत्र **कटधूमं** कटतृणधूतम् ।

**शिष्टान् बद्ध्वा च हत्वा वै तेषां [5]मूर्धाभिपिच्य च ।**
**गुणावतीमुत्तरेण [6]पार्थिवां दक्षिणेन च ॥ ९ ॥**

इत्यत्र **मूर्ध्ना** शिरः कपालेन **अभिषिच्य** पितॄन् तर्पयित्वा उत्तरेण गुणवतीं दक्षिणेन पार्थिवां नाम नदीं ह्रदं वा चक्रे ।

**इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च ।**
**रुधिरस्य परीवाहैः पूरयित्वा सरांसि च ॥**
**सर्वानष्टादश द्वीपान् वशमानीय भार्गवः ।**
**ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः ॥ १६, १७ ॥**

---

१. कुं ७० अध्यायः ; २. 'भूमिं कुर्वन् विपांसुलाम्' इति कुं पाठः ।
३. **'चाब्रुवन्'** इति कुं पाठः ।; ३. **'कटुधूमम्'** इति कुं पाठः ।
५. **'मूर्ध्नि विभिध्य'** इति कुं पाठः । ६. **'खाण्डवात्'** इति कुं पाठः ।

इत्यत्र **बन्धुजीवः** बन्धूकपुष्पम् । ‘ बन्धूकं बन्धुजीवं स्यात् पुंनागः सुरकर्णिका’ इति हलः ।

॥ इति सप्तषष्टितमोऽध्यायः ॥

समाप्तं षोडशराजकम् । यद्यपि परशुरामः राजा न, तथापि बहूनां क्षत्रियाणां विनाशस्य तत्रापि श्रूयमाणत्वात् षोडशराजकमित्युक्तम् ।

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

**[१]अकृतास्त्रश्च भीतश्च न च सन्नाहकोविदः ।**
**अयज्वा चानपत्यश्च ततोऽसौ जीवितः पुनः ॥**

**शूरो वीरः कृतार्थश्च प्रमथ्यारीन् सहस्रशः ।**
**अभिमन्युर्गतः स्वर्गं सङ्ग्रामेऽभिमुखाहतः** ॥७१-११,१२॥

इत्यत्र ‘अकृतास्त्र’ इत्यारभ्य ‘अनपत्यश्च’ इत्यन्तं सृञ्जयसुतस्यैव दोषानुकीर्तनम् । **ततोऽपि** तस्मादपि ते तनयोऽभिमन्युः **‘शूर’** इत्यादिना अभिमन्योर्गुणकथनम् ।

**न [२]नेहानयितुं शक्यः किञ्चिदप्राप्यमीहता** ॥ १५ ॥
**एवं ज्ञात्वा स्थिरो भूत्वा मा शुचो धैर्यमाप्नुहि** ॥ १८ ॥

**न नेहानयितुं शक्यः** इत्यत्र **अप्राप्यं** प्राप्तुमयोग्यं **किञ्चित्** तन्मुखदर्शनादि क्षुद्रपदमीहतां इह [३]नानेतुं शक्यः । सृञ्जयपुत्रस्तु नरके

१. **‘अकृतार्थश्च’** इति कुं पाठः ।
२. **‘चेहानयितुं शक्यं किञ्चिदप्राप्यमीहितम्’** इति कुं पाठः ।
३. आनेतुं सो.मु.पा.

पतितत्वात् नारदेन आनीतः, अभिमन्युस्तु स्वर्गसुखं विहाय शक्तेनापि मया नेहानयितुं योग्य इति भावः ।

**॥ इति अष्टषष्टितमोऽध्यायः ॥**

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

**[1]सम्प्रयातेऽस्तमादित्ये सन्ध्याकाल उपस्थिते ।**
**[2]आयान्तमात्मशिबिरं निमित्तैरघशंसिभिः ॥ ५ ॥**

**आयान्तमात्मशिबिरम्** इत्यत्र शिबिरमायान्तम् अर्जुनं प्रतीति योग्यपदाध्याहारेण योजना ।

**हृष्टानां धार्तराष्ट्राणां सिंहनादो मया श्रुतः ।**
**युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् ॥ ६५ ॥**

**युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन्** इत्यत्र **वीरान्** कौरवान् **उपालभन्** निन्दन् युयुत्सुः कृष्णेन **श्रुतः** किमभूदिति श्रुतः ।

**॥ इति एकोनसप्ततितमोऽध्यायः ॥**

## ॥ अथ सप्ततितमोऽध्यायः ॥

**[3]ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम् ।**
**संशयं परमं प्राप्तं [4]दिष्टान्तेनाभ्ययोजयत् ॥ १२ ॥**

---

१. कुं. ७२ अध्यायः । ; २. **'आयतस्यात्म-'** इति कुं. पाठः ।
३. कुं. ७३ अध्यायः ।
४. BORI पृ. २७६; **'पदातिनमवस्थितम्'** इति कुं पाठः ।

इत्यत्र **दिष्टान्तेन** मरणेन । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः'[१] इत्यमरः ।

**पायसं वा यवान्नं वा शाकं कृसरमेव वा ।**
**संयावापूपमांसानि ये च लोका वृथाश्नताम् ।**
**तानह्नायाधिगच्छेयं न चेद्धन्यां जयद्रथम्** ॥ ३५ ॥

**शाकं कृसरमेव वा** इत्यत्र **कृसरं** यज्ञार्थं कृतं हविः ।

॥ इति सप्ततितमोऽध्यायः ॥

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

**[२]सममाचार्यकं तात तव चैवार्जुनस्य च ।**
**योगाद् [३]दुःखोचितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्जुनः ॥ २६ ॥**

**सममाचार्यकं तात** इत्यत्र आचार्यस्य मम उपदेशादिकं **समं** तव अर्जुनस्य च समम् । **योगात्** दिवारात्रमभ्यासाद्युपायात् । **दुःखोचितत्वात्** दुःखसहनशीलत्वाच्च ।

॥ इति एकसप्ततितमोऽध्यायः ॥

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

**[४]तैर्यतद्भिरियं सत्या श्रुता सत्यवतस्तव ।**
**प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन** ॥ ९ ॥

१. अ.को. २-८-११६; २. कुं. ७४ अध्यायः ।
३. BORI पृ. २८५; **'दुःखोषितत्वाच्च'** इति कुं पाठः ।
४. कुं.७५ अध्यायः । BORI पृ.२८७; **'तैश्चारेभ्य इयं कृत्स्ना'** इति कुं पाठः ।

**तैर्यतद्भिरियं सत्या** इत्यत्र यतद्भिः **तैः** भीसेनादिभिर्निमित्तैः सिन्धुराजस्य वधं प्रति या प्रतिज्ञा असत्या न, किन्तु सत्यैव ।

**पद्मकर्णिकमध्यस्थः सूचीपार्श्वे जयद्रथः ।**
**स्थास्यते रक्षितो वीरैः सिन्धुराड् स दुर्मदः ॥ २७ ॥**

**सूचीपार्श्वे जयद्रथः** इत्यत्र **सूचीपार्श्वे** सूचीसमुदायाकारेण संहतानां राज्ञां पार्श्वे जयद्रथः स्थितः ।

॥ इति द्विसप्ततितमोऽध्यायः ॥

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

[१]**गोसहस्रप्रदातॄणां क्रतुदानाञ्च या गतिः ॥ २७ ॥**

**क्रतुदानाञ्च या गतिः** इत्यत्र क्रतौ ददत्यन्नपानादिकमिति **क्रतुदाः**, तेषाम् ।

**साम्ना ये सर्वभूतानि गच्छन्ति गतमत्सराः ।**
**नारुन्तुदानां क्षमिणां या गतिस्तामवाप्नुहि ॥ ३६ ॥**

**नारुन्तुदानां क्षमिणाम्** इत्यत्र अरुन्तुदा न भवन्तीति **नारुन्तुदाः** । 'अरुन्तुदं तु मर्मस्पृक्' इत्यमरः ।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

* * *

---

१. कुं. ७८ अध्यायः ।

## ।। षट्सप्ततितमोऽध्यायः ।।

**[१]यद्यस्ति सुकृतं किञ्चिदस्माकं हन्तु सैन्धवम् ।**
**जित्वा सर्वान् रिपून्पार्थः [२]त्रातुं नोऽस्मान्महाभयात् ।। ७६ ।।**

**त्रातुं नोऽस्मान्महाभयात्** इत्यत्र अस्मान्महाभयात् नः त्रातुं सैन्धवं हन्तु इति योजना ।

।। इति षट्सप्ततितमोऽध्यायः ।।

## ।। अथ सप्तसप्ततितमोऽध्यायः ।।

**[३]दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्तते ।**
**द्रुतं च याति सविता तत एतद् ब्रवीम्यहम् ।। १६ ।।**

**दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्तते** इत्यत्र **विकाङ्क्षा** विरुद्धा-काङ्क्षा ।

।। इति सप्तसप्ततितमोऽध्यायः ।।

## ।। अथ अष्टसप्ततितमोऽध्यायः ।।

**[४]स सरस्येव तं बाणं मुमोचातिबलः प्रभुः ।**
**निचिक्षेप पुनर्वीरस्तस्मिन् सरसि तद्धनुः ।। १९ ।।**

**स सरस्येव तं बाणम्** इत्यत्र शिवसम्बन्धि [५]धनुर्बाणयोः कराभ्यां

---

१. कुं. ७९ अध्यायः । ; २. 'त्रातु' इति कुं पाठः ।
३. कुं. ८० अध्यायः । ; ४. कुं. ८१ अध्यायः ।
५. धनुर्बाणयोगेन कराभ्यां; धनुर्बाणयोगकराभ्यां सो.मु.पा.

संस्पर्शमात्रेण अर्जुनस्य वामहस्ते धनुःसन्निधानं, दक्षिणकराग्रे शरसन्निधानं च जातम्। अतः कृतकार्यत्वात्तदुभयं तत्रैव निचिक्षेपेति भावः।

**ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा।**
**वरमारण्यके दत्तं दर्शनं शङ्करस्य च।**
**मनसा चिन्तयामास तन्मे सम्पद्यतां भव ॥ २० ॥**

**वरमारण्यके दत्तम्** इत्यत्र हे भव, **आरण्यके** अरण्यसम्बन्धिनि इन्द्रकीलपर्वते यद्वरं दत्तम्, **शङ्करस्य** सुखकरस्य तव यद्दर्शनं च दत्तम्, तदुभयञ्च **सम्पद्यतां** सम्यक् प्राप्यताम्। द्विरावृत्त्या प्राप्तत्वात् प्रबलं[१] भूयादिति मनसा चिन्तयामासेति योजना।

**॥ इति अष्टसप्ततितमोऽध्यायः ॥**

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[२]वैतालिकाश्च सूताश्च तुष्टुवुः पुरुषर्षभम् ॥ २ ॥**

**वैतालिकाश्च सूताश्च** इत्यत्र **[३]वैतालिकाः** निद्रितस्योद्बोधकराः 'वैतालिका बोधकाः स्युः'[४] इत्यमरः।

**सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः।**
**[५]उत्सारितः कषायेण बलवद्भिः सुशिक्षितैः ॥ १० ॥**

---

१. प्रबन्धं सो.मु.पा.। ; २. कुं. ८२ अध्यायः।; ३. वैतानिकाः सो.मु.पा.
४. अ.को. २-८-९७
५. 'उत्सादितः' इति कुं पाठः।

**उत्सारितः कषायेण** इत्यत्र **कषायो** नाम नानौषधिरसैः परिमलैश्च सहितं स्नानीयचूर्णम् । तेन **उत्सारितः** अङ्गस्य मलोत्सर्जनं प्रापितः ।

**हरिणा चन्दनेनाङ्गमुपलिप्य महाभुजः ।**
**स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलिः स्थितः ॥ १२ ॥**

**हरिणा चन्दनेनाङ्गम्** इत्यत्र हरिणा **चन्दनेन** हरिचन्दनेन ।

**पूर्णान्यक्षतपात्राणि [१]रुचकान् रोचनांस्तथा ।**
**दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्ष्यां ततोऽगमत् ॥२१,२२॥**

इत्यत्र **[२]रुचकाः** रुचिमन्ति मातुलुङ्गफलानि । 'फलपूरो बीजपूरो रुचको[३] मातुलुङ्गके'[४] इत्यमरः । **रोचनाः** शोभावन्तः फलविशेषाः ।

॥ इति एकोनाशीतितमोऽध्यायः ॥

## ॥ अथ अशीतितमोऽध्यायः ॥

**[५]अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम् ।**
**अपुनर्दर्शनं मार्गम् इषुभिः क्षेप्स्यतेऽर्जुनः ॥ २५ ॥**

**अपुनर्दर्शनं मार्गम्** इत्यत्र पुनर्दर्शनं न विद्यते यत्र तद**पुनर्दर्शनं**, मार्गं मारयति क्लेशयति गतान् सर्वानिति **मार्गः** अन्धन्तमः । नरकादिषु पुनर्दर्शनसद्भावादुक्त एवार्थः ।

॥ इति अशीतितमोऽध्यायः ॥

---

१. **'रुचकं रोचनास्तथा'** इति कुं पाठः ।
२. **रुचिकाः** सो.मु.पा.
३. **रुचिको** सो.मु.पा.
४. अ.को. २-४-७८;
४. कुं. ८३ अध्यायः ।

## ।। अथ एकाशीतितमोऽध्यायः ।।

**[१]व्यक्तमर्जुन सङ्ग्रामे ध्रुवस्ते विजयो महान् ।**
**तादृग्रूपा [२]हि तच्छाया प्रसन्नश्च जनार्दनः ।। ४ ।।**

**तादृग्रूपा हि तच्छाया** इत्यत्र **छाया** कान्तिः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः'[३] इत्यमरः ।

**स मेघसमनिर्घोषस्तप्तकाञ्चनसप्रभः ।**
**बभौ रथवरः क्लृप्तः [४]शशी दिवसकृद्यथा ।। १२ ।।**

**शशी दिवसकृद्यथा** इत्यत्र अर्जुनरथस्य स्वकीयेषु शान्तत्वात् शत्रुषु क्रूरत्वाच्च शशी दिवसकृदिति दृष्टान्तद्वयमुक्तम् ।

**त्वयि चाहं [५]पराश्वस्य प्रद्युम्ने वा महारथे ।**
**शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ ।। ३२ ।।**

इत्यत्र महारथे प्रद्युम्ने वा यथा त्वयि पराश्वस्य । 'वा विकल्पोपमानयोः' इत्यमरः ।

।। इति एकाशीतितमोऽध्यायः ।।

## ।। अथ द्व्यशीतितमोऽध्यायः ।।

**[६]कपिराजध्वजं सङ्ख्ये विधुन्वानं महद्धनुः ।**
**दृष्ट्वा [७]पुत्रपरीदूनं किमकुर्वत मामकाः ।। ४ ।।**

---

१. कुं. ८४ अध्यायः ।; २. 'च ते छाया' इति कुं पाठः ।
३. अ.को. ३-३-१५७; ४. 'शिशुः' इति कुं पाठः ।
५. BORI पृ. ३२७; 'पराश्वस्तः' इति कुं पाठः ।
६. कुं. ८५ अध्यायः ।; ७. 'पुत्रपरियूनं' इति कुं पाठः ।

**दृष्ट्वा पुत्रपरीदूनम्** इत्यत्र **परीदूनं, परिदेवना** दुःखं, तद्युक्तम् ।

**विमन्द्रालापसंलापैः[1] द्रुतवादित्रवादितैः ।**
**गीतैश्च विविधैरिष्टै रमते यो दिवानिशम् ॥ १३ ॥**

**विमन्द्रालापसंलापैः** इत्यत्र **विमन्द्राः** विशेषेण **मन्द्रो** मन्दरस्वरो येषां ते तथोक्ताः ।

**सप्ततन्तून्वितन्वाना याजका यमुपासते ।**
**सौमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः ॥ १८ ॥**

**सप्ततन्तून्वितन्वाना** इत्यत्र **सप्ततन्तून्** यज्ञान् । 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः'[2] इत्यमरः ।

**धर्मापेक्षी नरो नित्यं सर्वत्र लभते सुखम् ।**
**प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ॥ ३२ ॥**

**प्रेत्यभावे च कल्याणम्** इत्यत्र **प्रेत्यभावे** मरणे ।

**कं [3]वार्थं मन्यसे तेषां यस्त्वां ब्रूयादतोऽन्यथा ॥ ३७ ॥**

**कं वार्थं मन्यसे तेषाम्** इत्यत्र **तेषां** तेषां सकाशात् ।

**कृष्णो न धर्मं सञ्जह्यात् [4]सर्व एते तदन्वयाः ॥ ३७ ॥**

इत्यत्र **तं** कृष्णम् **अनु** अनुसृत्य **अयन्ति** गच्छन्तीति तदन्वयाः ।

॥ इति द्व्यशीतितमोऽध्यायः ॥

---

१. **'वितण्डालापसंलापैः'** इति कुं पाठः । ; २. अ.को. २-७-१३
३. **'वा त्वं'** इति कुं पाठः ।; ४. **'सर्वे ते हि'** इति कुं पाठः ।

**रथोऽन्तरमवापतत्** इत्यत्र **रथः** कर्णानुजरथः । **अन्तरम्** ईषदन्तरं यथा भवति तथा ।

**सोपस्करैरधिष्ठानैः ईषादण्डकबन्धुरैः ॥ १९ ॥**
**अगम्यरूपा पृथिवी क्षणेनासीत्सुदारुणा ॥ २१ ॥**

**ईषादण्डकबन्धुरैः** इत्यत्र **ईषादण्डकबन्धुरैः** ईषादण्डे बन्धनशीलै-रश्वयुगादिभिः ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

**[१]ससूताश्वध्वजं तस्य स्यन्दनं तं च मारिष ।**
**आचितं समपश्याम [२]श्वाविडं शबलैरिव ॥ २० ॥**

**श्वाविडं शबलैरिव** इत्यत्र **श्वाविडं** शल्यकं **शबलैः** नानावर्ण-सूचीमुखरशलाकाभिः आवृतमिव ।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

**[३]कर्णोऽपि विबभौ शूरः शरैश्छिन्नोऽसृगाप्लुतः ।**
**सन्ध्यानुगतपर्यन्तः शरदीव दिवाकरः ॥ ३ ॥**

---

१. कुं. ४५ अध्यायः ।
२. S; BORI पृ. २४०; **'श्वाविधं शललैरिव'** इति कुं पाठः ।
३. कुं. ४८ अध्यायः ।

## ।। अथ एकोनाशीतितमोऽध्यायः ।।

[१] **क्षते क्षारं हि स ददौ पाण्डवस्य महात्मनः ।। १४ ।।**

**क्षते क्षारं हि स ददौ** इत्यत्र **क्षते** व्रणे । **क्षारं** क्षरणात् क्षारशब्दवाच्यं रक्तम् ।

**गोयोनिप्रभवा म्लेच्छाः कालकल्पाः प्रहारिणः ।। ४३ ।।**
**अभ्यवर्षन्त ते सर्वे पाण्डवं निशितैः शरैः ।।४५ ।।**

**गोयोनिप्रभवा म्लेच्छाः** इत्यत्र **गोः** कामधेनोः **योनिप्रभवा** योनिजाताः ।

।। इति एकोनाशीतितमोऽध्यायः ।।

## ।। अथ नवतितमोऽध्यायः ।।

[२] **अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रतः ।**
**न ह्यहं त्वां विजानामि सर्पं मण्डूकराविणम् ।। १४ ।।**

**सर्पं मण्डूकराविणम्** इत्यत्र मण्डूकवत् **रावः** ध्वनिः अस्य वर्तत इति **मण्डूकरावी**, तम् ।

**नादास्यचेद्वरं मह्यं भवान् पाण्डवनिग्रहे ।**
**नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ।। १५ ।।**

**नादास्यचेद्वरं मह्यम्** इत्यत्र अदास्यदिति लृङन्तपदस्य अभविष्यदितिवत् प्रथमपुरुषैकवचनम् । **।। इति नवतितमोऽध्यायः ।।**

---

१. कुं. ९३ अध्यायः । ; २. कुं. ९४ अध्यायः ।

## ॥ अथ एकनवतितमोऽध्यायः ॥

**[१]समुद्रमिव घर्मान्ते [२]विवान् घोरो महानिलः ।**
**व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ॥ ११ ॥**

**समुद्रमिव घर्मान्ते विवान् घोरो महानिलः** इत्यत्र विशेषेण वातीति **विवान्** ।

॥ इति एकनवतितमोऽध्यायः ॥

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

**रथस्थितोऽग्रतः [३]क्रोशे यानस्यत्यर्जुनः शरान् ।**
**रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ९ ॥**

**रथस्थितोऽग्रतः क्रोशे यानस्यत्यर्जुनः शरान्** इत्यत्र **क्रोशे** क्रोशपरिमितस्थले यान् शरान् अग्रतः अस्यति तस्यार्जुनस्य ते शराः रथे क्रोशमतिक्रान्ते सति पृष्ठभागे शात्रवान् घ्नन्ति । शरवेगादपि रथवेगो महानिति भावः ।

**नान्यस्य समरे राजन् गतपूर्वस्तथा रथः ।**
**यथा ययावर्जुनस्य मनोऽभिप्रायशीघ्रगः ॥ १२ ॥**
**प्रविश्य तु रणे राजन् केशवः परवीरहा ।**
**सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ १३ ॥**

---

१. कुं. ९५ अध्यायः ।
२. BORI पृ. ३८२; 'विशन्' इति कुं पाठः ।
३. 'क्रोशं' इति कुं पाठ : ।

**यथा ययावर्जुनस्य मनोऽभिप्रायशीघ्रगः** इत्यत्र अर्जुनस्य मनः यथा ययौ तथा **अभिप्रायशीघ्रगः** अभिप्रायादपि शीघ्रं गच्छतीति तथोक्तः केशव इत्युत्तरेण सम्बन्धः ।

**संरब्धैश्चारिभिर्वीरैः प्रार्थयद्भिर्जयं मृधे ।**
**एकस्थैर्बहुभिः क्रुद्धैः [१]ऊर्मीव समजायत** ॥ ५१ ॥

**ऊर्मीव समजायत** इत्यत्र व्रीहिमान् 'व्रीही' इतिवत् ऊर्मिमान् **ऊर्मी** समुद्र इव ।

॥ इति पञ्चनवतितमोऽध्यायः ॥

## ॥ षण्णवतितमोऽध्यायः ॥

[२]**आपतत्सु रथौघेषु प्रभूतगजवाजिषु ।**
[३]**नासम्भ्रमत्तदा पार्थस्तदस्य पुरुषानति** ॥ ५ ॥

**नासम्भ्रमत्तदा पार्थस्तदस्य पुरुषानति** इत्यत्र अर्जुनस्य तच्छौर्यं **पुरुषानति** अतिक्रम्य वर्तमानम् ।

॥ इति षण्णवतितमोऽध्यायः ॥

## ॥ एकोनशततमोऽध्यायः ॥

[४]**पाञ्चजन्यं च बलवद्दध्मौ तारेण केशवः ।**
**रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम्** ॥ ३९ ॥

---

१. 'ऊष्मेव' इति कुं पाठः । ; २. कुं. १०० अध्यायः ।
३. BORI पृ. ४०८; 'नासम्भ्रमात्तदा' इति कुं. पाठः ।
४. कुं. १०३ अध्यायः ।

**पाञ्चजन्यं च बलवद्दध्मौ तारेण केशवः** इत्यत्र **तारेण** तारस्वरेण ।

॥ इति एकोनशततमोऽध्यायः ॥

## ॥ अथ एकाधिकशततमोऽध्यायः ॥

**हस्तकाक्या[1] पुनर्हैमी बभूवाधिरथेर्ध्वजः[2] ।**
**आहवे खं महाराज ददृशे पूरयन्निव ॥ १२ ॥**

**हस्तकाक्या पुनर्हैमी बभूवाधिरथेर्ध्वजः** इत्यत्र **हैमी** हेमालङ्कृता स्वयमयोमयी **हस्तकाक्या** हस्तपरिमिता काकसम्बन्धिनी प्रतिमा । काकध्वज इत्यर्थः । 'उत्पत्य तु महावेगः... काकमभ्याहनत्कपिः'[3] इति कर्णपर्वणि स्पष्टं वक्ष्यमाणत्वात् । हस्तिकक्ष्येति पाठेऽपि रूढ्या लक्षणया वा काक एव वक्तव्यः ।

**मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ।**
**सौवर्णीं प्रतिपश्याम सीतामप्रतिमां[4] शुभाम् ॥ १८ ॥**

**सीतामप्रतिमां शुभाम्** इत्यत्र 'सीतालाङ्गलपद्धतिः' इत्यभिधानात् **सीता** केदाराकारा भूमिः ।

॥ इति एकाधिकशततमोऽध्यायः ॥

---

१. BORI पृ. ४३१; **'हस्तिकक्ष्या'** इति कुं पाठः ।
२. कुं. १०५ अध्यायः । $K_5, D, D_{c1}, D_{n2}, D_{3.6}, G_1, M_{3-5}$; BORI पृ. ४४३ ;**'ध्वजे'** इति कुं. पाठः ।
३. **कर्णपर्व** ९३-७. कुं. पाठान्तरम् -**'कक्ष्यामभ्याहनत्तदा'** इति ।
४. **'-मप्रतिमं'** इति कुं. पाठः ।

## ।। अथ द्व्यधिकशततमोऽध्यायः ।।

[१] **भीमसेनं तदा क्रुद्धं भीमरूपो भयानकः ।**
**प्रत्यवारयदायान्तं आश्यर्शृङ्गिर्महाबलः** ।। १६ ।।

**आश्यर्शृङ्गिर्महाबलः** इत्यत्र **आश्यर्शृङ्गिः** ऋश्यशृङ्गीतनयः अलम्बुसः ।

।। इति द्व्यधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चाधिकशततमोऽध्यायः ।।

[२] **अवस्कन्द्य रथात्तूर्णं [३] कैर्मीरिः क्रोधमूर्च्छितः ।**
**तस्मिन् मायामयं घोरमस्त्रवर्षं ववर्ष ह** ।। ५५ ।।

**कैर्मीरिः क्रोधमूर्च्छितः** इत्यत्र **कैर्मीरिः** किर्मीरतनयः ।

**तयोर्गात्रेषु पतितौ असी सन्नौ निपेततुः ।**
**वेगोत्सृष्टे मघवता वज्रे शैलतटेष्विव** ।। ६६ ।।

**असी सन्नौ निपेततुः** इत्यत्र **सन्नौ** सन्तौ **निपेततुः** पुनः पुनः शरीरे निपेततुः ।

**ततः सैन्यानि ददृशुस्तद्युद्धमतिदारुणम् ।**
**युद्धं तयो राक्षसयोरामिषे श्येनयोरिव** ।। ६७ ।।

---

१. कुं. १०६ अध्यायः ।
२. कुं. १०९ अध्यायः ।
३. BORI पृ. ११२६; 'कैर्मीरः' इति कुं पाठः ।

**युद्धं तयो राक्षसयोरामिषे श्येनयोरिव** इत्यत्र **आमिषे**, तादर्थ्ये सप्तमी। आमिषार्थं श्येनयोर्युद्धमिवेति सम्बन्धः।

**असृक्क्षरितसर्वाङ्गश्चूर्णितास्थिविभूषणः।**
**घटोत्कचेन निष्पिष्टो हतः सालकटङ्कटः ॥ ७५ ॥**

**हतः सालकटङ्कटः** इत्यत्र वनस्थसालवनेषु इतस्ततो धावने सति अयःसारोपमस्वाङ्गशिलासङ्घट्टनेन कटङ्कटध्वनिर्यस्मात्स राक्षसः **सालकटङ्कटः**, यद्वा **सालेन** सालवृक्षेण **कटस्य** वन्यकरिकुम्भस्थलस्य **कटं** सङ्कटं यस्मात् स तथोक्तः सालकटङ्कट अलम्बुसः। अतिदृढ-वपुष्मान् महाबलश्चेति भावः। तादृशो हत इति योजना।

॥ इति पञ्चाधिकशततमोऽध्यायः ॥

## ॥ अथ सप्ताधिकशततमोऽध्यायः ॥

[1]**यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः।**
[2]**कार्ये च साम्पराये वा नियोज्य इति मे मतिः ॥ ४५ ॥**

**कार्ये च साम्पराये वा** इत्यत्र **साम्पराये** युद्धे। 'समीकं साम्परायिकम्'[3] इत्यमरः।

**तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः।**
**सर्वथा समनुप्राप्तः सकृच्छ्रं बत जीवितम् ॥ ८२ ॥**

---

१. कुं. ११० अध्यायः।
२. **'स कार्ये सम्पराये तु'** इति कुं पाठः।
३. अ.को. २-८-१०४

सकृच्छ्रं बत जीवितम् इत्यत्र कृच्छ्रेण सहितं **सकृच्छ्रम्**।

॥ इति सप्ताधिकशततमोऽध्यायः ॥

## ॥ अथ नवाधिकशततमोऽध्यायः ॥

**[१]यदेतत् कुञ्जरानीकं सहस्रमनुपश्यसि ।**
**कुलमाञ्जनकं नाम यत्रैते वीर्यशालिनः ॥ ११८ ॥**

**कुलमाञ्जनकं नाम** इत्यत्र **आञ्जनकम्** अञ्जनाख्यदिग्गजसम्बन्धित्वादाञ्जनकं नामेत्यर्थः ।

**सततं प्रियकामाश्च कर्णस्यैते वशे स्थिताः ।**
**तस्यैव वचनाद्राजन्निवृत्ताः श्वेतवाहनात् ॥ २६ ॥**

**तस्यैव वचनाद्राजन्निवृत्ताः श्वेतवाहनात्** इत्यत्र अभिमुखं त्यक्त्वा अर्जुनस्यैव पृष्ठभागे स्थापिताः ।

**ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहसः ।**
**अजय्या जैत्रमूहुस्तं विकुर्वाणाश्च सैन्धवाः ॥ ७१ ॥**

**विकुर्वाणाश्च सैन्धवाः** इत्यत्र **विकुर्वाणाः**, विविधान् ह्रेषाविलासादीन् कुर्वाणाः ।

**आयत्यां च [२]तथात्वे च श्रेयो राज्ञोऽभिरक्षणम् ।**
**जानीषे मम वीर्यं त्वं तव चाह मरिन्दम ॥ ७६ ॥**

---

१. कुं. १११ अध्यायः ।
२. 'तदात्वे' इति कुं पाठः ।

**आयत्यां च तथात्वे च** इत्यत्र **आयत्याम्** आये सति, **तथात्वे** यथा प्रागस्ति तथैव विद्यमानत्वे न च राज्ञः अभिरक्षणं श्रेयः।

॥ इति नवाधिकशततमोऽध्यायः ॥

## ॥ अथ दशाधिकशततमोऽध्यायः ॥

**[१] प्रयाते तव सैन्यं तु युयुधाने युयुत्सया।**
**धर्मराजो महाराज स्वेनानीकेन संवृतः।**
**प्रायाद्द्रोणरथं प्रेप्सुर्युयुधानस्य पृष्ठतः ॥ १ ॥**

**प्रायाद्द्रोणरथं प्रेप्सुर्युयुधानस्य पृष्ठतः** इत्यत्र युयुधानस्य पृष्ठतः द्रोणरथं **प्रेप्सुः** युयुधानं विहाय पृष्ठतः स्वसेनाभिमुख्येन प्राप्तं कर्तुमिच्छुः।

॥ इति दशाधिकशततमोऽध्यायः ॥

## ॥ अथ द्वादशाधिकशततमोऽध्यायः ॥

**[२] धनुरन्यत् समादाय शिखण्डी तु महायशाः।**
**[३] अवाकिरत् कूर्मनखैः आशुगैर्हृदिकात्मजम् ॥ ८८ ॥**

**अवाकिरत् कूर्मनखैः** इत्यत्र **कूर्मनखैः** कूर्मनखाकारैः बाणैः।

॥ इति द्वादशाधिकशततमोऽध्याय ॥

---

१ कुं. ११३ अध्यायः।
२ कुं. ११४ अध्यायः।
३ 'अवारयत्' इति कुं पाठः।

## ॥ अथ अष्टादशाधिकशततमोऽध्यायः ॥

**तं[1] प्रयान्तं महाबाहुं तावकाः प्रेक्ष्य मारिष ।**
**दृष्टं चादृष्टवत् कृत्वा क्रियामन्यां प्रयोजयन्** ॥ ४६ ॥

इत्यत्र **क्रियां** युद्धक्रियातोऽन्यां पलायनक्रियामित्यर्थः ।

॥ इति अष्टादशाधिकशततमोऽध्यायः ध्यायः ॥

## ॥ अथ एकविंशत्यधिकशततमोऽध्यायः ॥

**ध्वजं[2] च रथशक्तिं च भल्लाभ्यां परमास्त्रवित् ।**
**चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी** ॥ ३४ ॥

**ध्वजं च रथशक्तिं च** इत्यत्र परेषां रथभेदिनी शक्तिरायुधविशेषः **रथशक्तिः** ।

॥ इति एकविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

**पतङ्गान्[3] ग्रसेच्चाषो यथा क्षुद्रान् बुभुक्षितः ।**
**तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे** ॥ ३९ ॥

**पतङ्गान् ग्रसेच्चाषो यथा क्षुद्रान् बुभुक्षितः** इत्यत्र **पतङ्गान्** शलभान् ।

---

१. कुं. १२० अध्यायः ।
२. कुं. १२३ अध्यायः ।
३. कुं. १२५ अध्यायः ।'पतङ्गं हि ग्रसेचापो यथा क्षुद्रं बुभुक्षितः' इति कुं पाठः ।

**निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत् ।**
**अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ४० ॥**

**निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत्** इत्यत्र **पित्र्यं** पितृयुद्धसम्बन्धि **तत्खण्डं** भूभागम् ।

॥ इति त्रयोविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षड्विंशत्यधिकशततमोऽध्यायः ॥

**[१] कच्चिद्भीष्मेण नो वैराच्छममेकेन यास्यति ।**
**शेषस्य रक्षणार्थं च सन्धास्यति सुयोधनः ॥ ५६ ॥**

**कच्चिद्भीष्मेण नो वैराच्छममेकेन यास्यति** इत्यत्र भीष्मपर्वणि हतेन सेनापतिना एकेन भीष्मेण वैराच्छमं यास्यति । न तु द्रोणमपि हनिष्यति कच्चिदिति चिन्तयतो युधिष्ठिरस्य भावः ।

॥ इति षड्विंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

**[२] सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः ॥ १४ ॥**

**सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः** इत्यत्र **पश्चात्** द्रोणव्यूहमुखे । **पुरस्तात्** सैन्धवसमीपे ।

**युधामन्युश्च पाञ्चाल्य उत्तमौजास्तथैव च ।**
**[३] भीत्त्वा पार्श्वेन सैन्यं तु प्रविष्टौ फल्गुनं प्रति ।**
**तौ समासादयद्वीरः शरैः कङ्कालभेदिभिः ॥**

---

१. कुं. १२८ अध्यायः । ; २. कुं. १३० अध्यायः ।; ३. BORI पृ. ५८९.

**शरैः कङ्कालभेदिभिः** इत्यत्र **कङ्कालं** शरीरास्थि । 'शरीरास्थि तु कङ्कालम्'[१] इत्यमरः ।

॥ इति अष्टाविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिंशत्यधिकशततमोऽध्यायः ॥

[२]**बाल्यात् प्रभृति चारिघ्नस्वानि दुःखानि चिन्तयन् ।**
**निरविद्यत धर्मात्मा जीवितेन वृकोदरः** ॥ २१ ॥

**निरविद्यत धर्मात्मा जीवितेन वृकोदरः** इत्यत्र जीवितेन किम् ? इति **निरविद्यत** निर्वेदं प्राप्तवान् ।

**अश्वानृश्यसवर्णांस्तु हंसवर्णैर्हयोत्तमैः ।**
**व्यामिश्रयद्रणे कर्णः पाण्डवं छादयञ्शरैः** ॥ ३० ॥

**अश्वानृश्यसवर्णांस्तु** इत्यत्र **ऋश्यसवर्णान्** सारङ्गसवर्णान् । 'सारङ्ग ऋश्यः पृषतो रुरुश्च'[३] इति हलः ।

॥ इति त्रिंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकत्रिंशत्यधिकशततमोऽध्यायः ॥

[४]**कथञ्च युद्धं [५]भूयोऽभूत्तयोः प्राणदुरोदरे** ॥ ४ ॥

---

१. **'स्याच्छरीरास्थ्नि कङ्कालः'** इति प्रचलितः अमरपाठः ।
२. **कुं. १३१ अध्यायः** । ; ३. ह.को. २३०
४. **कुं. १३३ अध्यायः** । इयं टीका क्वचिदेव लिखितपुस्तके उपलभ्यते ।
५. BORI पृ. ६०३; **'सम्भूतं तयोः'** इति कुं पाठः ।

**कथञ्च युद्धं भूयोऽभूत्तयोः प्राणदुरोदरे** इत्यत्र दुरोदरं द्यूतम् । 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्'[१] इमत्यरः ।

॥ इति एकत्रिंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्वात्रिंशत्यधिकशततमोऽध्यायः ॥

**[२]ततः सैक्यां चतुष्किष्कुं गुर्वीं रुक्माङ्गदां गदाम् ।**
**प्राहिणोत् सूतपुत्राय षडश्रामविचारयन् ॥ १० ॥**

**ततः सैक्यां चतुष्किष्कुम्** इत्यत्र 'भारयष्टिस्तदालम्बः सिक्यं काचोऽथ पादुका' इत्यभिधानात् **सैक्यां** भारयष्टच्यवलम्बिदृढतर-रज्जुरचितसिक्ये स्थापनयोग्याम् । **चारयन्** इत्यत्र भ्रामयन्नित्यर्थः ।

॥ इति द्वात्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशाधिकशततमोऽध्यायः ॥

**[३]न पार्था न च पाञ्चाला न च केशवसात्यकी ।**
**[४]जानन्ति युधिसंरब्धाज्जीवितं परिरक्षितुम् ॥ २३ ॥**

**न पार्था न च पाञ्चाला** इत्यत्र **संरब्धात्** भीमात् हन्यमानस्य पुरुषस्य जीवितं परिरक्षितुं न जानन्तीति योग्यपदाध्याहारेण योजना ।

॥ इति त्रयस्त्रिंशाधिकशततमोऽध्यायः ॥

---

१. अ.को. ३-३-१७१

२. कुं. १३४ अध्यायः । 'वज्रकल्पां' इति कुं पाठः; ३. कुं. १३५ अध्यायः ।

४. BORI पृ. ६१४; 'जानते युधि संरब्धा–' इति कुं पाठः ।

## ।। अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।।

**[१]शोणितादिग्धवाजाग्राः सप्त हेमपरिष्कृताः ।**
**पुत्राणां तव राजेन्द्र पीत्वा शोणितमुद्गताः ।। २८ ।।**

**शोणितादिग्धवाजाग्राः** इत्यत्र शोणितेन आदिग्धं **वाजं** तदुदरस्थमन्नम् अग्रे येषां ते तथोक्ताः । 'वाजमन्नम् 'इति श्रुतिः ।

।। इति पञ्चत्रिंशदधिकशततमोऽध्यायः ।।

## ।। अथ षट्त्रिंशदधिकशततमोऽध्यायः ।।

**[२]तदपास्य धनुश्छिन्नं सूतपुत्रो महारथः ।**
**अन्यत् कार्मुकमादत्त भारघ्नं वेगवत्तरम् ।। १९ ।।**

**भारघ्नं वेगवत्तरम्** इत्यत्र **भारघ्नं** वैरिभारघ्नम् ।

**कर्णस्य शरजालौघैर्भीमसेनस्य चोभयोः ।**
**अग्निस्फुलिङ्गसंस्पर्शैः अञ्जोगतिभिराहवे ।**
**तैस्तैः कनकपुङ्खानां द्यौरासीत् संवृता व्रजैः ।। ४४ ।।**

**अञ्जोगतिभिराहवे** इत्यत्र अञ्जसा गतिर्येषां ते **अञ्जोगतयः** तैः ।

**ततश्चटचटाशब्दो गोधाघातादभूत्तयोः ।। ५२ ।।**

**ततश्चटचटाशब्दो गोधाघातादभूत्तयोः** इत्यत्र **गोधा**पदेन ज्याघातवारणाय करतले बद्धं चर्म उच्यते । 'कोटिरस्याटनिर्गोधा तले ज्याघातवारणम्'[३] इत्यमरः ।

---

१. कुं १३७ अध्यायः । ; २. कुं. १३९ अध्यायः ।; ३. अ.को. २-८-८४

**तस्याश्वांश्च पुनर्हत्वा सूतं विव्याध पञ्चभिः ।**
**[1]सोऽवप्लुत्य रथात् सूतो युधामन्यो रथं ययौ ॥ ६३ ॥**

**तस्याश्वांश्च पुनर्हत्वा सूतं विव्याध पञ्चभिः** इत्यत्र **सूतः** भीमसारथिर्विशोकः ।

**स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।**
**स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः ॥ ७८ ॥**

**स्वरथं पृष्ठतः कृत्वा** इत्यत्र **पृष्टतः कृत्वा** धिकृत्य ।

**[2]तद्विहत्य स्म राधेयः तत एनं समभ्ययात् ।**
**संरम्भात् पाण्डवं सङ्ख्ये युद्धाय समुपस्थितम् ॥ ७९ ॥**

**तद्विहत्य स्म राधेयः** इत्यत्र तत् रथमारुह्य बलात् स्वग्रहणम् । **विहत्य** विलीनो भूत्वा परिहृत्येत्यर्थः ।

**विहसन्निव राधेयो वाक्यमेतदुवाच ह ॥ ९३ ॥**
**पुनः पुनस्तूबरक मूढ औदरिकेति च ॥ ९४ ॥**

**पुनः पुनस्तूबरक** इत्यत्र **तूबरकः** चुबुकाग्रमात्रे श्मश्रुमान् । **औदरिकः** उदरम्भरिः । 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते'[3] इत्यमरः ।

**योद्धव्यं मारिषान्यत्र न योद्धव्यं च मादृशैः ।**
**[4]मादृशैर्युध्यमानानामेतच्चान्यच्च दृश्यते ॥ १०४ ॥**

---

१. **'सोपसृत्य द्रुतं सूतो'** इति कुं पाठः ।; २. **'तद्विचिन्त्य'** इति कुं पाठः ।
३. अ.को. ३-१-२१
४. **'मादृशो'** इति कुं. पाठः । T; BORI पृ. ६३९ ; **'विद्यते'** इति कुं पाठः ।

**माद्दशैर्युध्यमानानामेतच्चान्यच्च दृश्यते** इत्यत्र **एतत्** धनुषा कण्ठकर्षणम् । **अन्यत्** मरणादिकम् ।

**ततः पार्थभुजोत्सृष्टाः शराः कनकभूषणाः ।**
**गाण्डीयप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन्** ॥ ११६ ॥

**हंसाः क्रौञ्चमिवाविशन्** इत्यत्र **क्रौञ्चं** क्रौञ्चनामकपर्वतम् ।

**स भुजङ्गैरिवाविष्टैर्गाण्डीवप्रेषितैः शरैः ।**
**भीमसेनादपासेधत् सूतपुत्रं धनञ्जयः** ॥ ११७ ॥

**भीमसेनादपासेधत्** इत्यत्र **अपासेधत्** अन्यत्र पलायितमकरोत् ।

॥ इति षट्त्रिंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

**दातव्यमद्य[१] मन्येऽहं पाण्डवानां स्वकं पुनः ।**
**न विग्रहो हि बलिना श्रेयसे स्याद्यथातथा** ॥ १ ॥

**पाण्डवानां स्वकं पुनः** इत्यत्र 'आत्मात्मीयज्ञातिधनवाची स्वशब्दः' इति वचनात् **स्वकं** स्वं द्रव्यम् ।

**जीवतैव परो लोकः साध्यते चैव सर्वथा ।**
**अजीवतस्तु[२] नैवास्ति नरको न परा गतिः** ॥ ३ ॥

**अजीवतस्तु नैवास्ति नरको न परा गतिः** इत्यत्र जीवनाभावे

---

१. कुं. १४० अध्यायः ।
२. 'अजीवतस्तथैवासीन्न सुखं' इति कुं पाठः ।

नरकसाधनपापकरणायोगात् स्वर्गसाधनपुण्यकरणायोगाच्च नोभय-मपीति भावः ।

**विनाशे सर्वथोत्पन्ने न बालो बुध्यते क्रियाम् ।**
**[१] मिथ्याभिमानादन्येन बुध्येताङ्ग कृते कृते ॥ ४ ॥**

**मिथ्याभिमानादन्येन** इत्यत्र मिथ्याभिमानात् बालः **क्रियां** प्रति-क्रियां न बुद्ध्यते । **अन्येन** बालादन्येन विवेकिना **कृते कृते** कर्तव्ये कर्तव्ये प्राप्ते सति प्रतिक्रिया बुध्येत । अङ्गेति सञ्जयस्य सम्बुद्धिः ।

**अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः ॥ १० ॥**

**अनुमानाच्च पश्यामि** इत्यत्र **अनुमानात्** अति प्रबलयोर्द्रौणि-कर्णयोरप्यर्जुनभयेन पलायनाख्यानुमानात् ।

**॥ इति सप्तत्रिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ अष्टत्रिंशदधिकशततमोऽध्यायः ॥

**[२] तमन्ये शूरसेनानां शूराः सङ्ख्ये न्यवारयन् ।**
**नियच्छन्तः शरव्रातैर्मत्तं द्विपमिवाङ्कुशैः ।**
**तैर्व्यवाहरदार्यात्मा मुहूर्तादेव सात्यकिः ॥ ११ ॥**

**तैर्व्यवाहरदार्यात्मा** इत्यत्र **व्यवाहरत्** विजहार विनोदं कृतवानि-त्यर्थः ।

**॥ इति अष्टत्रिंशत्यधिकशततमोऽध्यायः ॥**

---

१. **'मिथ्याभिमानदग्धो हि न बुद्ध्येत कृताकृते'** इति कुं पाठः ।
२. कुं. १४१ अध्यायः ।

## ।। अथ एकोनचत्वारिंशत्यधिकशततमोऽध्यायः ।।

**तावदीर्घेण[१] कालेन ब्रह्मलोकपुरस्कृतौ ।**
**यियासन्तौ परं स्थानमन्योन्यं सञ्जगर्जतुः** ।। २९ ।।

**ब्रह्मलोकपुरस्कृतौ** इत्यत्र **ब्रह्मलोकपुरस्कृतौ** ब्राह्मणसमूह-सत्कृतौ ।

**भ्रान्तमुद्भ्रान्तमाविद्धम् आप्लुतं विप्लुतं द्रुतम्[२] ।**
**संयतं[३] समुदीर्णं च दर्शयन्तौ यशस्विनौ ।**
**असिभ्यां सम्प्रजह्राते परस्परमरिन्दमौ** ।। ३९ ।।

**भ्रान्तमुद्भ्रान्तमाविद्धम्** इत्यत्र **भ्रान्तम्** एकत्रानवस्थानम् । 'भ्रमु अनवस्थाने' इति धातुः । **उद्भ्रान्तम्** ऊर्ध्वं लङ्घनम् । **आविद्धम्** असिभ्यामन्योन्यं ताडनम् । **आप्लुतं** पुरतः प्लवनम् । **विप्लुतं** विपरीत-तया प्लवनम् , पृष्ठतः प्लवनमित्यर्थः । **द्रुतं** पुनर्वेगेन द्रवणम्, **संयतं** चर्मान्तः स्वशरीरस्याच्छादनम् । **समुदीर्णं** पुनर्गात्रस्योन्नमनम् ।

**असिभ्यां चर्मणी चित्रे शतचन्द्रे नराधिप ।**
**निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः** ।। ४३ ।।

**निकृत्य पुरुषव्याघ्रौ** इत्यत्र चर्मणी निकृत्य, असी स्वकोशे एव निक्षिप्येति च ग्राह्यम् । अन्यथा मल्लयुद्धायोगात् । 'अथ कोशाद्विनिष्कृष्य खड्गं भूरिश्रवा रणे । मूर्धजेषु निजग्राह पदा चोरस्यताडयत् ' इति वक्ष्यमाणत्वाच्च ।

---

१. कुं. १४२ अध्यायः ।
२. BORI पृ. ६५३; **'सृतम्'** इति कुं पाठः ; ३. **'सम्पातम्'** इति कुं पाठः ।

**तयो राजन्[१] भुजाघाता निग्रहावग्रहात् तथा ।**
**शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ॥ ४५ ॥**

**निग्रहावग्रहात् तथा** इत्यत्र **निग्रहः** नितरामन्योन्यग्रहणम् । **अवग्रहः** पुनर्मोचनम् । द्वन्द्वैकवद्भावः तस्मात् ।

**द्वात्रिंशत्करणानि स्युः यानि युद्धानि भारत ।**
**तान्यदर्शयतां तत्र युध्यमानौ महाबलौ ॥ ५० ॥**

**द्वात्रिंशत्करणानि स्युः** इत्यत्र द्वात्रिंशत्सङ्ख्यातानि **करणानि** प्रकाराः येषां तानि तथोक्तानि ।

**हाहाकारो महानासीत् सैन्यानां भरतर्षभ ।**
**यदुद्यम्य महाबाहुः सात्यकिं[२] न्यपतद्भुवि ॥ ५७ ॥**

**सात्यकिं न्यपतद्भुवि** इत्यत्र **न्यपतत्** न्यपातयत् । अन्तर्णीतो णिच् ।

**अप्राप्तो हि मया कृष्ण हन्तुं भूरिश्रवा रणे ।**
**अन्येन तु समासक्तं मनो नोत्सहते मम ॥ ६६ ॥**

**अप्राप्तो हि मया कृष्ण** इत्यत्र हे कृष्ण, भूरिश्रवाः मया हन्तुमप्राप्तो हि, तद्धननमुद्दिश्य मया नागतमित्यर्थः । अन्येन समासक्तं हन्तुं मनो नोत्सहते इति पूर्वपदावृत्त्या योजना ।

॥ इति एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

---

१. **'भुजाघातनिग्रहप्रग्रहास्तथा'** इति कुं पाठः ।
२. **'न्यहनद्भुवि'** इति कुं पाठः ।

## ।। अथ चत्वारिंशदधिकशततमोऽध्यायः ।।

**[१]नृशंसं बत कौन्तेय कर्मेदं कृतवानसि ।**
**अपश्यतोऽविषक्तस्य यन्मे त्वं बाहुमच्छिनः** ।। ५ ।।

**अपश्यतोऽविषक्तस्य** इत्यत्र **अविषक्तस्य** त्वया सह अविषक्तस्येत्यर्थः ।

**[२]सौमदत्ते वयं साधु सर्वे साहाय्यकारिणः** ।। ४७ ।।

**सर्वे साहाय्यकारिणः** इत्यत्र **साहाय्यकारिणः** सात्यकेः साहाय्यकारिणः ।

**[३]स कथञ्च वधं नीतः कौरवेण महात्मना ।**
**ततो मयैतच्चरितं प्रतिज्ञारक्षणं प्रति** ।। ४९ ।।

**स कथञ्च वधं नीतः** इत्यत्र **सः** सात्यकिः वधं **नीतः** वधमुद्दिश्य धरण्यां नीतः । कौरवेण त्वया ।

**[४]नातिहारः कृतान्तस्य विद्यते कुरुनन्दन ।**
**यत्र त्वं पुरषव्याघ्रः प्राप्तः पापामिमां दशाम्** ।। ५२ ।।

**नातिहारः कृतान्तस्य** इत्यत्र **अतिहारः** परिहारः । **कृतान्तस्य** यमस्य ।

---

१. कुं. १४३ अध्यायः ।
२. '**सौमदत्तेरयं**' इति कुं पाठः ।
३. '**सात्यकश्च वशं**' इति कुं पाठः ।
४. '**नातिभारः**' इति कुं पाठः ।

**एवमुक्तस्तु पार्थेन शिरसा भूमिमस्पृशत् ।**
**पाणिना चैव सव्येन प्राहिणोदस्य [१]रक्षणम्** ॥ ५६ ॥

**प्राहिणोदस्य रक्षणम्** इत्यत्र **रक्षणम्** अभयम् ।

**मया त्वैतत्प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव वा ।**
**यो मां निष्पिष्य सङ्ग्रामे जीवन्हन्यात्पदा रुषा ।**
**स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः** ॥ ७९,८० ॥

**क्षेपे कस्मिंश्चिदेव वा** इत्यत्र **क्षेपे** परस्मान्निवारणे प्राप्ते सति ।

**चेष्टमानं प्रतीघाते सभुजं [२]मे सचक्षुषः ।**
**मन्यध्वं मृतमित्येव एतद्वो बुद्धिलाघवम्** ॥८०,८१॥

**चेष्टमानं प्रतीघाते सभुजं मे सचक्षुषः** इत्यत्र मे प्रतीघाते चेष्टमानम् । सभुजमित्युपलक्षणम् । सायुधश्च भूरिश्रवसं सचक्षुषः यूयं मृतमित्येव मन्यध्वम् । **एतत्** निरायुधं प्रति सायुधस्य युद्धोपेक्षणं बुद्धिलाघवम् ।

**स तेजसा [३]शस्त्रहतेन पूतो महाहवे देहवरं विसृज्य ।**
**आक्रामदूर्ध्वं वरदो वरार्हो व्यावृत्य धर्मेण परेण रोदसी** ॥९०॥

**स तेजसा शस्त्रहतेन पूतो** इत्यत्र **शस्त्रहतेन** शस्त्रघातेन ।

॥ इति चत्वारिंशत्यधिकशततमोऽध्यायः ॥

---

१. '**दक्षिणम्**' इति कुं पाठः ।
२. '**मा**' इति कुं पाठः ।
३. BORI पृ. ६६५; '**शस्त्रकृतेन**' इति कुं पाठः ।

## ।। अथ एकचत्वारिंशदधिकशततमोऽध्यायः ।।

**[१] ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातित्वे चाप्यहिंसकाः ।**
**एतेषां रक्षितारश्च ये स्युः कस्याश्चिदापदि ।। २५ ।।**

**एतेषां रक्षितारश्च** इत्यत्र **एतेषां** प्रागुक्तब्रह्मद्रव्यसुहृद्द्रव्यज्ञाति-द्रव्याणाम् ।

**अपि मेरुं वहेत् कश्चित्तरेद्वा मकरालयम् ।**
**न तु वृष्णिप्रवीराणां [२] समित्यन्तं व्रजेन्नृप ।। २८ ।।**

**समित्यन्तं व्रजेन्नृप** इत्यत्र **समितिः** सङ्ग्रामः तस्यान्तः । 'सङ्ग्रामः समितिः समिच्च समरः' [३] इति हलः ।

।। इति एकचत्वारिंशदधिकशततमोऽध्यायः ।।

## ।। अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ।।

**[४] यथाग्निरिन्धनेद्धो वै क्रोधेन्धनसमीरितः ।**
**सैन्धवस्य [५] मुखात्वाजौ कर्णः सात्वतमभ्ययात् ।। ११ ।।**

**सैन्धवस्य मुखात्वाजौ** इत्यत्र **मुखात्** सम्मुमुखात् ।

**अलमेष महाबाहुः कर्णायैकोऽपि पाण्डव ।**
**किमुत [६] द्रौपदेयाभ्यां सहितः सात्वतर्षभ ।। १३ ।।**

---

१. कुं. १४४ अध्यायः ।; २. **'समेत्यान्तं'** इति कुं पाठः ।; ३ ह.को. ४५३
४. कुं. १४५ अध्यायः । ; ५. **'मुखं त्यक्त्वा'** इति कुं. पाठः ।
६. **'किं पुनः'** इति कुं. पाठः ।

**किमुत द्रौपदेयाभ्याम्** इत्यत्र **द्रौपदेयाभ्यां** द्रुपदकुमाराभ्यां युधामन्यूत्तमौजोभ्याम् ।

[१](*)**चक्ररक्षौ तु पाञ्चाल्यौ** इत्यत्र चक्ररक्षयोस्तयोरन्यत्र गमनायोगात् तद्रथे स्थितावपि सात्यकेः कर्णेन सह युद्धं न घटते । अतः कं रथमास्थित इति प्रश्नः इति भावः ।

(*) **व्यपदेशेन** अन्यापदेशेन ।

(*) **कृष्णयोः स्यन्दनस्थयोः** इत्यत्र [२]**कृष्णयोः** कृष्णार्जुनयोः ये स्यन्दने तदुपरि स्थितयोः पुरुषयोरिति व्यधिकरणषष्ठी ।

**सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतं रणे ।**
**दध्मौ शङ्खं महानादमार्षभेणैव [३]पूरितम् ॥ २९ ॥**

**आर्षभेणैव पूरितम्** इत्यत्र प्राक् सञ्ज्ञार्थमुपदिष्टेन ऋषभसम्बन्धि-श्रवणेन ।

**तयोर्नृवरयो राजन् सारथ्यं दारुकस्य च ॥ ३८ ॥**

**तयोर्नृवरयो राजन्** इत्यत्र **तयोर्नृवरयोः** युध्यतोः सतोरित्यर्थः ।

**तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत् ।**
**दारुकोऽपि यथाकामं [४]प्रययुः केशवान्तिकम् ॥ ६९ ॥**

**प्रययुः केशवान्तिकम्** इत्यत्र **केशवान्तिकं** [५]केशवबीढाकारा-न्तिकम् ।

**॥ इति द्विचत्वारिंशदधिकशततमोऽध्यायः ॥**

---

१. (*)चिह्नितस्थलेषु तत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।
२. **कृष्णगोः** सो.मु.पा.; ३. **'माधवः'** इति कुं पाठः ।
४. **प्रययौ** इति कुं. पाठः । ५. **केशवबिडाकारान्तिकम्** सो.मु.पा.

## ।। त्रिचत्वारिंशदधिकशततमोऽध्यायः ।।

**[१]स्थातव्यमिति तिष्ठामि रणे सम्प्रति मानद ।**
**नाङ्गमिङ्गति किञ्चिन्मे सन्तप्तस्य महेषुभिः ।। ४२ ।।**

**नाङ्गमिङ्गति किञ्चिन्मे** इत्यत्र इङ्गति चेष्टते । 'इङ्ग चेष्टायाम्' इति धातुः ।

**[२]तान् पिङ्गलज्येन किरीटमाली क्रुद्धो रिपूनाजगवेन हन्ति १०९**

**तान् पिङ्गलज्येन किरीटमाली** इत्यत्र **पिङ्गलज्येन, पिङ्गला** रक्त-वर्णा ज्या यस्य तेन गाण्डीवेन ।

**ततः किरीटी महता महायशाः शरासनेनास्य शराननीकजित् ।**
**हयप्रवेकोत्तमनागधूर्णितान् कुरुप्रवीरानिषुभिर्न्यपातयत् ११०**

**हयप्रवेकोत्तमनागधूर्णितान्** इत्यत्र **हयप्रवेकाः** हयश्रेष्टाः । 'प्रवेका-नुत्तमोत्तमाः । मुख्यवर्यवरेण्याश्च'[३] इत्यमरः ।

।। इति त्रिचत्वारिंशददधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चचत्वारिंशददधिकशततमोऽध्यायः ।।

**[४]सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः ।**
**त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ।। ९ ।।**

---

१. कुं. १४६ अध्यायः । ; २. 'यत्' इति कुं पाठः ।
३. अ.को. ३-१-५७
४. कुं. १४८ अध्यायः ।

**सृष्टे तमसि कृष्णेन** इत्यत्र स्वप्रभया तमोग्रस्य सूर्यस्याग्रे कथं तमसः स्थितिरिति शङ्का 'अर्जुनस्य जयाकाङ्क्षी ससर्ज तम ऊर्जितम्' इति तमसः सामर्थ्यविशेषद्योतकोर्जितपदं ददता तात्पर्यकारेणैव परिहृता ।

**संहरत्यपि कौन्तेये तदस्त्रं तत्र भारत ।**
**ववौ शीतः सुगन्धश्च पवनो ह्लादयन्निव ॥ २९ ॥**

**तदस्त्रं तत्र भारत** इत्यत्र कौन्तेये स्थिते सतीति योग्यपदाध्याहारः ।

॥ इति पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

**सोऽजिषांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च ।**[१]
**चकाराचार्यकं तत्र कुन्तीपुत्रो धनञ्जयः ॥ ९ ॥**

**चकाराचार्यकं तत्र** इत्यत्र **आचार्यकम्** आचार्ये क्रियमाणं कर्म ।

**पुत्रशोकाभितप्तेन शरैरभ्यर्दितेन च ।**
**अभ्यस्तो बहुभिर्बाणैः दशाधर्मगतेन वै ।**
**शोचयत्येष नियतं भूयः पुत्रवधाद्धि माम् ॥ २२ ॥**

**अभ्यस्तो बहुभिर्बाणैः** इत्यत्र **अभ्यस्तः** अभितः **अस्तः** ताडितः ।

**उपाकृत्य [२]स्म विद्यां वै आचार्येभ्यो नरर्षभाः ।**
**प्रयच्छन्तीह ये कामान् देवत्वमुपयान्ति ते ॥ २४ ॥**

---

१. कुं. १४९ अध्यायः । ; २. 'तु वै विद्यां' इति कुं पाठः ।

**उपाकृत्य स्म विद्यां वै** इत्यत्र **उपाकृत्य** अभ्यस्य ।

**॥ इति षट्चत्वारिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

**कथं[१] पतितवृत्तस्य पृथिवी सुहृदां द्रुहः ।**
**विवराण्यशकद्दातुं[२] मम पार्थिवसंसदि ॥ २० ॥**

**पृथिवी सुहृदां द्रुहः** इत्यत्र पृथिवी सुहृदां द्रुहः पतितवृत्तस्य मम पार्थिवसंसदि **विवराणि** सिंहासने अवस्थानायाभ्यन्तरप्रदेशान् कथं दातुमशकदिति योजना ।

**श्रेयो हि पाण्डून् मन्यन्ते न तथास्मान् महाभुज ॥ ३० ॥**

**श्रेयो हि पाण्डून् मन्यन्ते** इत्यत्र लोकाः **पाण्डून्** 'कार्यकारण-शब्दाश्चान्योन्यं सङ्कीर्यन्ते' इति वचनात् पाण्डुपुत्रान् प्रति श्रेयः यथा मन्यन्ते तथा अस्मान् प्रति नेति योजना ।

**न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान् ।**
**आचार्य पाण्डुपुत्राणाम् अनुजानातु नो भवान् ॥ ३७ ॥**

**आचार्य पाण्डुपुत्राणाम्** इत्यत्र **पाण्डुपुत्राणामाचार्येति** कोपाद् द्रोणस्य सम्बोधनम् ।

**॥ इति अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥**

---

१. कुं. १५१ अध्यायः ।
२. **'विवरं नाशकत्'** इति कुं पाठः ।

## ।। अथ एकोनपञ्चाशदधिकशततमोऽध्यायः ।।

**[1]पुत्राणामिव चैतेषां धर्ममाचरतां सदा ।**
**द्रुह्येत् को नु नरो लोके मदन्यो ब्राह्मणब्रुवः ।। १८ ।।**

**मदन्यो ब्राह्मणब्रुवः** इत्यत्र **ब्राह्मणब्रुवः** ब्राह्मणाधमः । 'जातिमात्रोपजीवी तु विप्रः स्यात् ब्राह्मणब्रुवः'[2] इत्यमरः ।

**पाण्डवानामथो कोपः त्वया शकुनिना सह ।**
**आहूतो धृतराष्ट्रस्य संमते कुरुसंसदि ।**
**दुःशासनेन संयुक्तः कर्णेन परिवर्धितः ।।१९,२०।।**

**पाण्डवानामथो कोपः** इत्यत्र दुःशासनेन **संयुक्तः** सम्यक् प्रयुक्त इति कोपस्य विशेषणम् ।

**न ते वसुन्धरास्तीति तदाहं [3]चिन्तयं नृप ।। ३३ ।।**

**तदाहं चिन्तयं नृप** इत्यत्र **चिन्तयम्** अचिन्तयम् ।

।। इति एकोनपञ्चाशदधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चाशदधिकशततमोऽध्यायः ।।

**[4]दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा ।**
**अनन्यकर्म दैवं हि जागर्ति स्वपतामपि ।। ३६ ।।**

---

१. कुं. १५२ अध्यायः । ; २. ह.को. ४०६ । अमरकोशे नोपलभ्यते ।
३. 'चिन्तये' इति कुं पाठः ।
४. कुं. १५३ अध्यायः ।

**अनन्यकर्म दैवं हि** इत्यत्र जगन्नियमनादन्यत्कर्म न विद्यते यस्य **तदनन्यकर्म**।

**॥ इति पञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

**[१]मृदङ्गानकनिर्ह्रादैः [२]झिल्लिकापटहैस्तथा।**
**फेत्कारैर्ह्रेषितैः शब्दैः सर्वमेवाकुलं बभौ ॥ २५ ॥**

**झिल्लिकापटहैस्तथा** इत्यत्र **झिल्लिका** वाद्यविशेषः, झिल्लीनामकः रात्रौ नदज्जन्तुविशेषो वा।

**॥ इति द्विपञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

**विक्षिप्तयन्त्रसन्नाहं महामेघौघनिःस्वनम्।**
**युक्तं गजानिभैर्वाहैर्मर्द्धयैर्नापि[३] वारणैः ॥ ५९ ॥**

**मर्द्धयैर्नापि वारणैः** इत्यत्र हयान् वारणान् आरुह्य नागतं किन्तु रथैनैवेति भावः।

**पौत्रेण भीमसेनस्य शरैरञ्जनपर्वणा।**
**बभौ मेघेन धाराभिर्गिरिर्मेरुरिवावृतः ॥ ८१ ॥**

---

१. कुं. १५५ अध्यायः।
२. **'झर्झरैः पटहैस्तथा'** इति कुं पाठः।
३. **'–न हयैः'** इति कुं पाठः।

**शरैरञ्जनपर्वणा** इत्यत्र **अञ्जनपर्वणा** अञ्जनपर्वाख्येन घटोत्कचपुत्रेण ।

**एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः ।**
**पिप्रीषुस्ते सुतान् राजन् दिधक्षुश्चैव पाण्डवान् ॥ १२६ ॥**

**पिप्रीषुस्ते सुतान्** इत्यत्र **पिप्रीषुः** [१] प्रीणयितुमिच्छुः । 'पिपासुः' इति पाठे, 'पा रक्षणे' इति धातोः, **पातुं** रक्षितुमिच्छुरित्यर्थः ।

**युगान्ते सर्वभूतानि दग्ध्वेव वसुरुल्बणः ।**
**रराज जयतां श्रेष्ठो द्रोणपुत्रस्तवाहितान् ॥ १५१ ॥**

**दग्ध्वेव वसुरुल्बणः** इत्यत्र **वसुः** विभावसुः ।

**स ययौ घोररूपेण सुपताकेन भास्वता ।**
**द्वैरथं द्रोणपुत्रेण पुनरप्यरिसूदनः ॥ १५५ ॥**

**द्वैरथं द्रोणपुत्रेण** इत्यत्र द्वैरथं यथा भवति तथेति क्रियाविशेषणम् ।

**साश्वसूतध्वजं [२] वाहं भस्म कृत्वा महाप्रभा ।**
**विवेश वसुधां भित्त्वा साशनिर्भृशदारुणा ॥ १५९ ॥**

**साश्वसूतध्वजं वाहम्** इत्यत्र **वाहं** वहतीति वाहो रथः, तम् ।

**मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम् ।**
**केशशैवलकल्माषां भीरूणां कश्मलावहाम् ॥ १७६ ॥**

---

१. प्रीणातुमिच्छुः सां.मु.पा.
२. BORI पृ ७५४; 'यानं' इति कुं पाठः ।

**नागेन्द्रहययोधानां शरीरव्ययसम्भवाम् ।**
**शोणितौघमहाघोरां द्रौणिः प्रावर्तयन्नदीम् ॥ १७७ ॥**

इत्यत्र **कबन्धावर्जितोडुपां** कबन्धा एव **आवर्जितानि** जनवर्जितानि उडुपानि यस्यां सा तथोक्ता, ताम् । 'उडुपं तु प्लवः कोलः'[१] इत्यमरः । **केशशैवलकल्माषां** 'कल्माषः कृष्णपाण्डरः'[२] इत्याभिधानात् यूनां वृद्धानाञ्च केशाख्यशैवलैः कृष्णपाण्डरामित्यर्थः ।

। इति चतुःपञ्चाशदधिकशततमोऽध्यायः ।

## ॥ अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

**[३]भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः ।**
**[४]प्रातिपीयं महात्मानं विव्याध रणमूर्धनि ॥ १२ ॥**

**प्रातिपीयं महात्मानम्** इत्यत्र प्रतीपस्य पुत्रः **प्रातिपीयो** बाह्लीकः, तम् ।

**॥ इति पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

**[५]तान् वारय महाबाहो केकयांश्च नरोत्तम ।**
**पराकुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥ ९१ ॥**

---

१. अ.को. १-१०-११ ; २. ह.को. ३-७-३६
३. कुं. १५८ अध्यायः ।; ४. 'प्रातिपेयं' इति कुं पाठः ।
५. कुं. १६० अध्यायः ।

**पराकुर्वन्ति निःशेषम्** इत्यत्र निःशेषं यथा भवति तथा **पराकुर्वन्ति** अस्मत् सेनां निराकुर्वन्तीत्यर्थः ।

**आदौ वा यदि वा पश्चात् तवेदं कर्म मारिष ।**
**त्वमुत्पन्नो महाबाहो पाञ्चालानां वधं प्रति ॥ ९२ ॥**

**आदौ वा यदि वा** इत्यत्र **आदौ** युद्धपरिसमाप्तेरादौ युद्धमध्ये इत्यर्थः । **पश्चात्** सकलयुद्धादनन्तरं वा, पूर्ववैरमनुस्मृत्य एतत् पाञ्चाल-वधाख्यं कर्म, **तव** तव विद्यमान, त्वयैव कर्तव्यमिति भावः ।

॥ इति सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ षष्ट्यधिकशततमोऽध्यायः ॥

[१]**स विमुक्तो बलवता शैनेयेन शरोत्तमः ।**
[२]**पितुस्तवोरसि विभो निपपाताशु भारत ॥ ३२ ॥**

**पितुस्तवोरसि** इत्यत्र प्रतीपपुत्रयोः शन्तनुबाह्लीकयोः कनिष्ठज्येष्ठ-रूपत्वात् तत्पुत्रौ च सोमदत्तविचित्रवीर्यौ ज्येष्ठकनिष्ठरूपौ । अतस्तव पितुरित्युक्तम् ।

॥ इति षष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्विषष्ट्यधिकशततमोऽध्यायः ॥

[३]**दुर्योधनो महाराज वश्यान् भ्रातॄनुवाच ह ।**
[४]**विकर्णं चित्रसेनं च मद्रराजं च कौरव ॥ १८ ॥**

---

१. कुं. १६३ अध्यायः । ; २. 'घोरस्तस्योरसि' इति कुं पाठः ।
३. कुं. १६५ अध्यायः ।
४. BORI पृ. ८०१; 'कर्णं च वृपसेनं च' इति कुं पाठः ।

**विकर्णं चित्रसेनम्** इत्यत्रोक्तो विकर्णोऽन्यः ।

॥ इति द्विषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःषष्ट्यधिकशततमोऽध्यायः ॥

**[1]भूरिस्तु समरे राजन् शैनेयं रथिनां वरम् ।**
**[2]आपतन्तमवासेधत् प्रवणादिव कुञ्जरम् ॥ १ ॥**

**आपतन्तमवासेधत् प्रवणादिव कुञ्जरम्** इत्यत्र **प्रवणात्** निम्नस्थलात् । 'प्रवणं क्रमनिम्नोर्व्याम्'[3] इत्यमरः । 'प्रापणात्' इति पाठे प्रापयतीति **प्रापणो**ऽङ्कुशः, तस्मात् ।

**तिष्ठ तिष्ठ न मे जीवन् द्रोणपुत्र गमिष्यसि ।**
**एष त्वं निहनिष्यामि महिषं [4]स्कन्दरादिव ॥ १३ ॥**

**महिषं स्कन्दरादिव** इत्यत्र स्कन्दहतोऽपि कश्चिन्महिषासुरोऽस्तीति ज्ञातव्यम् ।

**स शरैराचितस्तेन राक्षसो रणमूर्धनि ।**
**व्यकाशत महाराज श्वाविच्छललितो यथा ॥ २१ ॥**

**श्वाविच्छललितो यथा** इत्यत्र **शललितः** शललवान् कृतः । शललमिति शल्यपक्षिणः शराणां नाम । 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्'[5] इत्यमरः ।

---

१. कुं. १६७ अध्यायः ।
२. T,$G_2$, BORI पृ. ८०९; **'आपतन्तमपासेधत् प्रयाणादिव'** इति कुं पाठः
३. अ.को. ३-३-५६ ; ४ . BORI पृ. ८०९; **'मृगरादिव'** इति कुं पाठः
५. अ.को. २-५-७

**शक्तिं चिक्षेप समरे सर्वपारशवीं शुभाम् ।**
**मृत्योरिव स्वसारं हि दीप्तां केतुशिखामिव ।**
**सीमन्तमिव कुर्वन्तीं [1]तमसः अग्निसमप्रभाम्** ॥ ५३ ॥

**सीमन्तमिव कुर्वन्तीम्** इत्यत्र **तमसः** अन्धकाराख्यस्त्रियः । **सीमन्तं** शिरोमध्यालङ्कारभूतरक्तचन्दनादिरेखाम् ।

॥ इति चतुःषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्विसप्तत्यधिकशततमोऽध्यायः ॥

[2]**लोहिताक्षो महाकायः ताम्रास्यो [3]निर्नतोदरः** ॥ ५ ॥

**ताम्रास्यो निर्नतोदरः** इत्यत्र **निर्नतोदरः** नितरां नतमुदरं यस्य सः । '**निम्नतोदर**' इति पाठे निम्नता उदरे यस्येत्यर्थः ।

**स्थूलस्फिग्गूढनाभिश्च [4]शिथिलापचयो महान्** ॥ १०८ ॥

**शिथिलापचयो महान्** इत्यत्र शिथिलः **अपचयः** ह्रासो यस्य स तथोक्तः । पुष्टसर्वाङ्ग इत्यर्थः ।

**तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत ।**
**महोल्काभ्यां यथा राजन् सार्चिषः स्नेहबिन्दवः** ॥ ९४ ॥

**सार्चिषः स्नेहबिन्दवः** इत्यत्र **सार्चिषः** अर्चिषा सहिताः **स्नेह-बिन्दवः**, तैलार्द्रोल्मुकात् अग्निज्वलोपेताः तैलबिन्दवः क्षणे क्षणे यथा पतन्ति तथेत्यर्थः । ॥ इति द्विसप्तत्यधिकशततमोऽध्यायः ॥

---

१. '**नभसः**' इति कुं पाठः । ; २. कुं. १७६ अध्यायः ।
३. '**निम्नितोदरः**' इति कुं पाठः ।; ४. '**शिथिलोपचयो**' इति कुं पाठः ।

## ।। अथ षट्सप्तत्यधिकशततमोऽध्यायः ।।

**[१]तद्बाणधारावृतमन्तरिक्षं तिर्यग्गताभिः समरे रराज ।**
**सुवर्णपुङ्खज्वलितप्रभाभिः विचित्रपुष्पाभिरिव [२]स्रजाभिः** १५

**विचित्रपुष्पाभिरिव स्रजाभिः** इत्यत्र 'आपं चापि हलन्तानां यथा वाचा निशा दिशा' इति वचनात् स्रजाभिरित्यपि शब्दः साधुः ।

**याऽसौ राजन्निहिता वर्षपूगान्**
**वधायाजौ सत्कृता फल्गुनस्य ।**
**यां वै प्रादात् सूतपुत्राय शक्रः**
**शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय** ।। ५३ ।।

**शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय** इत्यत्र कुण्डलाभ्यामिति चतुर्थीद्विवचनम् । कुण्डलयोरर्थे **निमाय** विनिमयं कृत्वा यां शक्तिं प्रादादिति सम्बन्धः ।

**।। इति षट्सप्तत्यधिकशततमोऽध्यायः ।।**

## ।। अथ सप्तसप्तत्यधिकशततमोऽध्यायः ।।

**[३]यद्येतन्न रहस्यं ते वक्तुमर्हस्यरिन्दम ।**
**धैर्यस्य [४]वै कृतिं ब्रूहि त्वमद्य मधुसूदन** ।। २८ ।।

---

१. **कुं. १८० अध्यायः ;**
२. BORI पृ. ८८६; **'प्रजाभिः'** इति कुं पाठः ।
३. **कुं. १८१ अध्यायः ।**
४. **'विकृतिम्'** इति कुं पाठः ।

**धैर्यस्य वै कृतिं ब्रूहि** इत्यत्र करोतीति **कृतिं** कारणम् ।

॥ इति सप्तसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

**[1]यदि ह्येनं नाहनिष्यत् कर्णः शक्त्या महामृधे ।**
**मया वध्योऽभविष्यत् सः भैमसेनिर्घटोत्कचः ।**
**[2]मायावी निहतः पूर्वमेष युष्मत्प्रियेप्सया ॥ २६ ॥**

**भैमसेनिर्घटोत्कचः** इत्यत्र यद्यपि घटोत्कचो भीमसेनपुत्रो मूलरूपेण निर्ऋतिर्देव एव । तथापि आसुरयोनिजत्वेन ईषदसुरावेशवशात् स्वसेनास्थदुर्जनराक्षसवशाच्च ब्रह्मद्रोहादिकमपि एतन्निमित्तं स्यात् । तेन पुण्यात्मनामपि भवतां किञ्चित्किञ्चित्पापमपि स्यात् । अतस्त्वद्धितार्थमित्युक्तमिति ज्ञातव्यम् ।

॥ इति अष्टसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनाशीत्यधिकशततमोऽध्यायः ॥

**[3]कुणेर्यथा हस्तगतं ह्रियेद्बिल्वं बलीयसा ।**
**तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ॥ ७ ॥**

**कुणेर्यथा हस्तगतं ह्रियेद्बिल्वं बलीयसा** इत्यत्र **कुणेः** कुत्सितकरस्य हस्तगतं **बिल्वं** बिल्वफलं यथा बलीयसा ह्रियेत् ह्रियेत तथेति सम्बन्धः । 'व्यत्ययो बहुलम्' इति वचनात् छन्दसि ह्रियेदिति

---

१. कुं. १८२ अध्यायः ।; २. **'मया न'** इति कुं पाठः ।
३. कुं. १८३ अध्यायः ।

परस्मैपदेऽपि कर्मणि प्रयोगः । 'स्यादेडे बधिरः कुब्जे [1] गडुलः कुकरे कुणिः' [2] इत्यमरः ।

॥ इति एकोनाशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ अशीत्यधिकशततमोऽध्यायः ॥

**[3]सौमदत्तेर्वधाद् [4]द्रोणमायस्तं सैन्धवस्य च ।**
**कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः ॥ १४,१५ ॥**

**सौमदत्तेर्वधाद् द्रोणमायस्तं सैन्धवस्य च** इत्यत्र सौमदत्तेः सैन्धवस्य वधाच्च **आयस्तम्** आयासवन्तं द्रोणमिति योजना ।

॥ इति अशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्व्यशीत्यधिकशततमोऽध्यायः ॥

**[5]सुप्तायमानास्त्वपरे परा इति विचेतसः ।**
**आत्मनः समरे जघ्नुः परान् स्वानेव चापरे ॥ १२० ॥**

**सुप्तायमानास्त्वपरे** इत्यत्र सुप्तायमानाः **अपरे** पाण्डवेभ्योऽन्ये कौरवाः **परान्** पाण्डवदलस्थान् मत्वा विचेतसः सन्तः आत्मनः स्वकीयानेव जघ्नुः । **अपरे** कौरवेभ्योऽपरे पाण्डवाश्च परान् मत्वा स्वानेव जघ्नुरिति योजना । सुप्तायमाना इति उभयोरपि विशेषणम् ।

---

१. जडुलः सो.मु.पा. ; २. अ.को. २-६-४८ ; ३. कुं. १८४ अध्यायः ।
४. **'द्रोणमायान्तं'** इति कुं पाठः ।
५. कुं. १८५ अध्यायः । **'स्वप्रायमानांस्त्वपरे परानतिविचेतसः । आत्मानं समरे जघ्नुः स्वानेव च परानपि ॥'** इति कुं पाठः ।

**ततो मुहूर्ताद्भगवान् पुरस्ताच्छशलक्षणः ।**
**अरुणं दर्शयामास ग्रसन् ज्योतिःप्रभां प्रभुः ॥ ५० ॥**

**अरुणं दर्शयामास ग्रसन्** इत्यत्र **ज्योतिःप्रभां** दीपप्रभां **ग्रसन्** निरस्कुर्वन् **अरुणं** स्वरश्म्युदयात् पूर्वकालीनमरुणवर्णं दर्शयामासेति योजना ।

**प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।**
**विचेरुर्न विचेरुश्च राजन् नक्तञ्चरास्ततः ॥ ५४ ॥**

**विचेरुर्न विचेरुश्च** इत्यत्र विचेरुः चकोरादयः । न विचेरुः तमःप्रिया घूकादयः इत्यर्थः ।

॥ इति द्व्यशीत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्र्यशीत्यधिकशततमोऽध्यायः ॥

**गच्छ त्वमपि कौन्तेयमात्मार्थेऽभ्येहि[१] माचिरम् ॥ २८ ॥**

**गच्छ त्वमपि कौन्तेयमात्मार्थेऽभ्येहि माचिरम्** इत्यत्र इतो गच्छ, आत्मार्थे कौन्तेयमभ्येहीति क्रियाद्वयस्य योजना ।

**त्वया [२] कत्थितमत्यन्तं कर्णेन सह हृष्टवत् ।**
**असकृच्छून्यवन्मोहाद् धृतराष्ट्रस्य शृण्वतः ॥ ३२ ॥**

**त्वया कत्थितमत्यन्तम्** इत्यत्र [३] **कत्थितं** कत्थनं कृतं यद्वा गापितमित्यर्थः । ॥ इति त्र्यशीत्यधिकशततमोऽध्यायः ॥

---

१. 'जहि' इति कुं पाठः । ; २. कथितं पाठान्तरम् ।
३. कथितं कथन सो.मु.पा.

## ।। अथ चतुरशीत्यधिकशततमोऽध्यायः ।।

**[१]हताश्वा हतसूताश्च निश्चेष्टा रथिनो हताः ।**
**जीवन्त इव तत्र स्म व्यदृश्यन्त भयार्दिताः ।। २१ ।।**
**हतान् गजान् समाश्लिष्य पर्वतानिव वाजिनः ।**
**गतसत्त्वा व्यदृश्यन्त तथैव सह सादिभिः ।। २२ ।।**

**हतान् गजान् समाश्लिष्य** इत्यत्र भयार्दिता यन्तारो जीवन्त इव तिष्ठन्तीति योग्यपदाध्याहारेण योजना ।

**नैव नस्तादृशं युद्धं दृष्टपूर्वं न च श्रुतम्**
**यथा सूर्योदये राजन् [२]समुत्पिञ्जलको महान् ।। ५६ ।।**

**यथा सूर्योदये राजन् समुत्पिञ्जलको महान्** इत्यत्र महान् सं सम्यक् **उत्पिञ्जलकः** पशुपक्षिमनुष्यादीनां कोलाहलः । 'उत्पिञ्जलमाकुलकं स्यादनुपदमन्वगन्वाक्षम्'[३] इति हलः । 'जनकोलाहलः प्रोक्तः समुत्पिञ्जलको बुधैः' इति च निघण्टुः ।

।। इति चतुरशीत्यधिकशततमोऽध्यायः ।।

## ।। अथ पञ्चाशीत्यधिकशततमोऽध्यायः ।।

**[४]वीरबाहुविसृष्टाश्च योधेषु च गजेषु च ।**
**[५]असयः प्रत्यदृश्यन्त वाससां नेजनेष्विव ।। १३ ।।**

१. कुं. १८७ अध्यायः । ; २. 'समुत्पिञ्जोऽभवन् महान्' इति कुं पाठः ।
३. ह.को. ७३१; ४. कुं. १८८ अध्यायः ।
५. BORI पृ. ९३४; 'राशयः' इति कुं पाठः ।

**वाससां नेजनेष्विव** इत्यत्र **वाससां** रजकगेहस्थितवस्त्राणां **नेजनेषु** शुद्धीकरणेषु क्षणे क्षणे दण्डघाता इव असयः प्रपतन्ति स्मेति योजना। 'णिजिर् शौचपोषणयोः' इति धातुः।

**शरशक्त्यर्दिताः क्लान्ता रात्रिमूढाल्पचेतसः।**
**विष्टभ्य सर्वगात्राणि व्यतिष्ठन् गजवाजिनः ॥ १८ ॥**

**विष्टभ्य सर्वगात्राणि** इत्यत्र **विष्टभ्य** संस्तभ्ययित्वा।

**न नूनं देहभेदोऽस्ति काले तस्मिन् समागते।**
**यत्र सर्वे न युगपद्व्यशीर्यन्त महारथाः ॥ ४१ ॥**

**न नूनं देहभेदोऽस्ति काले** इत्यत्र सैन्यद्वयेऽपि पतितदेहानां व्यामिश्रत्वात् परकीयस्वकीयदेहभेदो नास्ति, न ज्ञायते इति यावत्।

**॥ इति पञ्चाशीत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ षडशीत्यधिकशततमोऽध्यायः ॥

**[१]शरौघैरथ ताभ्यां तु छायाभूतं महामृधे।**
**तुमुलं प्रबभौ राजन् सर्वस्य जगतो भयम् ॥ ५६ ॥**

**छायाभूतं महामृध** इत्यत्र **छायाभूतं, छायया** शरच्छायया **भूतं** जातं सर्वस्य जगतः भयं **प्रबभौ** अहिफणच्छायाजनितभयवद्बभौ।

**॥ इति षडशीत्यधिकशततमोऽध्यायः ॥**

* * *

---

१. कुं. १८९ अध्यायः।

## ॥ अथ सप्ताशीत्यधिकशततमोऽध्यायः ॥

**[१] ततोऽस्य [२] स शरावापं क्षुरप्रेण द्विधाऽच्छिनत्** ॥ ३९ ॥

**ततोऽस्य स शरावापम्** इत्यत्र शरान् **आ** समन्तात् **वापयति** प्रापयति 'वा गतिगन्धनयोः' इति धातुः, **शरावापं** चापः ।

**॥ इति सप्ताशीत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ अष्टाशीत्यधिकशततमोऽध्यायः ॥

**तस्य पूर्वं रथः पृथ्व्याश्चतुरङ्गुलमुच्छ्रितः ।**
**बभूवैवं तु तेनोक्ते तस्य वाहोऽस्पृशन्महीम्** ॥ ५५ ॥

**तस्य पूर्वं रथः पृथ्व्या** इत्यत्र तस्य द्रोणस्य रथः पूर्वं युद्ध एव सन्नद्धस्य द्रोणदेहस्यातिलाघवात् युद्धसन्नद्धाश्वग्रीवाणामुत्तुङ्गत्वाच्च पृथ्व्याश्चतुरङ्गुलमुच्छ्रित आसीत् । एवं अश्वत्थामा हत इति **तेन** धर्मराजेनोक्ते सति दुखात् सूतेनापि रथरश्मिषु त्यक्तेषु सत्सु अश्वानामवनतग्रीवत्वात् दुःखवशात् द्रोणदेहस्यातिभारवत्तया रथोपस्थ एव स्थितत्वाच्च तस्य **वाहः** वहतीति वाहो रथः महीमस्पृदिति योजना ।

**॥ इति अष्टाशीत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ एकोननवत्यधिकशततमोऽध्यायः ॥

**तस्य रूपं शरस्यासीद्धनुर्ज्यामण्डलान्तरे ।**
**द्योततो भास्करस्येव घनान्ते [३] परिधिष्मतः** ॥ ५ ॥

---

१. कुं. १९० अध्यायः ।; २. **'सशरं चापं'** इति कुं पाठः ।
३. **'परिवेषिणः'** इति कुं पाठः ।

**घनान्ते परिधिष्मतः** इत्यत्र **परिधिष्मतः** परिवेषवतः । 'परिधिः परिवेषः स्यादुपसूर्यकमण्डले' इत्यमरः ।

**पार्षतेन परामृष्टं ज्वलन्तमिव तद्धनुः ।**
**अन्तकालमनुप्राप्तं मेनिरे वीक्ष्य सैनिकाः ॥ ६ ॥**

**अन्तकालमनुप्राप्तं मेनिरे वीक्ष्य सैनिकाः** इत्यत्र **अन्तकालम्** अन्ते विद्यमानः **कालो** मृत्युः तं मेनिरे इति योजना ।

**॥ इति एकोननवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ नवत्यधिकशततमोऽध्यायः ॥

**[१]भारतीं कैशिकीं चैव सात्वतीं चैव शिक्षया ।**
**दर्शयन् व्यचरद्युद्धे द्रोणस्यान्तचिकीर्षया ॥ ३९ ॥**

**भारतीं कैशिकीं चैव सात्वतीं चैव शिक्षया** इत्यत्र **भारतीं** भरतदेशसम्बन्धिनीं शिक्षां, **कैशिकीं** [२]कैशिकदेशसम्बधिनीं शिक्षाम् । पूर्वो देशः कैशिकदेशः । **सात्वतीं** यादवदेशसम्बन्धिनीं च शिक्षां **शिक्षया** अभ्यासेन दर्शयन् व्यचरदिति योजना ।

**आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।**
**त्वत्कृते व्यचरत् सङ्ख्ये स तु षोडशवर्षवत् ॥ ६६ ॥**

**वयसाऽशीतिपञ्चकः** इत्यत्र **अशीतिपञ्चकः** अशीतीनां पञ्चकं यस्य स तथोक्तः ।

---

१. **'भारतं कौशिकं चैव सात्वतं'** इति कुं पाठः ।
२. **केशिकदेश** सो.मु.पा.

**पराजयमथावाप्य परत्र च महद्भयम् ।**
**उभयेनैव ते हीनाः [१] नाविन्दन्धृतिमात्मनः ॥ ७८ ॥**

**उभयेनैव ते हीनाः** इत्यत्र **उभयेन** ऐहिकसुखेन पारत्रिकसुखेन च हीनास्ते कौरवाः नाविन्दन्निति योजना ।

॥ इति नवत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिनवत्यधिकशततमोऽध्यायः ॥

**[२] पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः ।**
**धर्मध्वजवता पापं कृतं तद्विदितं मम ॥ ४ ॥**

**धर्मध्वजवता पापं कृतम्** इत्यत्र **धर्मध्वजवता** छिन्नधर्मेण । 'धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः' [३] इत्यमरः ।

**मयि जीवति यत्तातः केशग्रहमवाप्तवान् ।**
**कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ ९ ॥**

**पुत्रेभ्यः पुत्रिणः स्पृहाम्** इत्यत्र अन्ये पुत्रिणः पुत्रेभ्यः स्पृहां कथं करिष्यन्ति । 'पुत्रेभ्यः' इति चतुर्थीबहुवचनम् । मया पितृऋणमपरिहृतं चेत् पुत्रस्पृहं केऽपि न कुर्वन्तीति भावः ।

**तस्यानुबन्धं [४] क्षुद्रस्य धृष्टद्युम्नस्य दारुणः ।**
**[५] अनार्यः परमं कृत्वा मिथ्यावादी च पाण्डवः ॥ १२ ॥**

---

१. BORI पृ. ९७२; 'व्यनिन्दन् मतिं' इति कुं पाठः ।
२. कुं. १९६ अध्यायः ।; ३.अ.को. २-८-५४
४. 'द्रष्टाऽसौ धृष्टद्युम्नः सुदारुणम्' इति कुं पाठः ।; ५.'अकार्यं' इति कुं पाठः ।

**तस्यानुबन्धं क्षुद्रस्य** इत्यत्र मिथ्यावादी **पाण्डवो** धर्मराजः क्षुद्रस्य तस्य धृष्टद्युम्नस्य **अनुबन्धं** स्नेहं कृत्वा अनार्योऽभूत् , दारुणश्चाभूत् इति योग्यक्रियाध्याहारः ।

**नारायणाय मे पित्रा प्रणम्य विधिपूर्वकम् ।**
**उपहारः पुरा दत्तो ब्रह्मरूप [1] उपस्थिते ॥ ३० ॥**

**उपहारः पुरा दत्तो** इत्यत्र **उपहारो** बलिः । 'अर्चा पूजा सपर्या स्यादुपहारो बलिः स्मृतः' [2] इति हलः । **ब्रह्मरूपे** ब्राह्मणरूपे ऊपस्थिते सतीत्यर्थः ।

**[3] मित्रब्रह्मगुरुद्वेषी जाल्मः सत्सु विगर्हितः ।**
**पाञ्चालापसदश्चाद्य न मे जीवन् विमोक्ष्यते ॥ ४४ ॥**

**मित्रब्रह्मगुरुद्वेषी जाल्मः** इत्यत्र **जाल्मः** क्षुल्लकः । 'निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः' [4] इत्यमरः ।

। इति त्रिनवत्यधिकशततमोऽध्यायः ।

## ॥ अथ चतुर्नवत्यधिकशततमोऽध्यायः ॥

**[5] प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे प्रभौ ।**
**प्रावात् [6] सुप्रहितो वायुः अनभ्रे स्तनयित्नुमान् ॥ ११ ॥**

१. BORI पृ. ९८६; **'उपस्थितः'** इति कुं पाठः ।; २. ह.को. १२८.
३. **'मित्रब्रह्मगुरद्रोही जाल्मकः सुविगर्हितः'** इति कुं पाठः ।
४. अ.को. २-१०-१६; ५. कुं. १९७ अध्यायः ।
६. **'सपृपतो'** इति कुं पाठः ।

**प्रावात् सुप्रहितो वायुः** इत्यत्र **सुप्रहितः** सुष्ठु प्रेरितः वायुः चण्डश्वसन इत्यर्थः । **प्रावात्** प्रकर्षेण ववौ ।

**कथङ्कथाऽभवत् तीव्रा दृष्ट्वा तद्व्याकुलं महत् ॥ ५ ॥**

**कथङ्कथाऽभवत् तीव्रा** इत्यत्र कथं स्यादिति कथा **कथङ्कथा** ।

**स सत्यकञ्चुकं नाम [१]प्रपृष्टेन ततोऽनृतम् ।**
**आचार्य उक्तो भवता हतः कुञ्जर इत्युत ॥ ३९ ॥**

**स सत्यकञ्चुकं नाम** इत्यत्र **सत्यकञ्चुकं** सत्यं कञ्चुकवदावरकं यस्य तत् सत्यकञ्चुकं नाम अनृतं प्रपृष्टेन भवता स आचार्य उक्त इति योजना ।

**यदा गतं वयो भूयः शिष्टमल्पतरं च नः ।**
**तस्येदानीं [२]विकारोऽयमधर्मो यत्कृतो महान् ॥ ४६ ॥**

**यदा गतं वयो भूयः शिष्टमल्पतरं च नः** इत्यत्र नः यदा **भूयः** भूयिष्ठं वयः गतं अल्पतरं वयश्च शिष्टं तस्य वयसः **विकारः** विरुद्धाकारः अयमधर्मः । 'विरोधि' इति पाठे विशेषेण रोधो यस्मादिति व्युत्पत्त्या विरोधि इत्यर्थः ।

**॥ इति चतुर्नवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ पञ्चनवत्यधिकशततमोऽध्यायः ॥

**[३]क्षतात् त्राता क्षताज्जीवन् क्षन्ता स्त्रीष्वथ साधुषु ।**
**क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्मं यशः श्रियम् ॥ ४ ॥**

---

१. **'प्रविष्टेन'** इति कुं पाठः ।; २.BORI पृ. ९९४; **'विरोधोऽयं'** इति कुं पाठः
३. कुं. १९८ **अध्यायः** ।

**क्षतात् त्राता क्षताज्जीवन्** इत्यत्र स्वसैन्यं क्षतात् त्रायते, परसैन्ये क्षतं त्रायते, स्त्रीषु साधुषु क्षमां त्रायते इति व्युत्पत्त्या क्षत्रिय इत्युच्यते इत्यर्थः। क्षताज्जीवन् इति तु फलितकथनमिति ज्ञेयम्।

**न चाद्भुतमहं मन्ये [1]यद्द्रौणिर्युद्धगर्जया।**
**घातयिष्यति कौरव्यान् परित्रातुमशक्नुवन्॥ ३१॥**

**न चाद्भुतमहं मन्ये यद्द्रौणिर्युद्धगर्जया** इत्यत्र द्रौणिः **युद्धगर्जया** युद्धगर्जनेन कौरव्यान् त्रातुमशक्नुवन् तानेव घातयिष्यतीति यत् एतदेवाद्भुतं न मन्ये। अस्मान् पातयिष्यतीति तु अन्तद्भुतमिति भावः।

**यस्य कार्यकार्यं वा युद्ध्यतः स्यात् समं रणे।**
**तं कथं ब्राह्मणं ब्रूयाः क्षत्रियं वा धनञ्जय॥ ३३॥**

**यस्य कार्यकार्यं वा** इत्यत्र रणे युद्ध्यतः यस्य ब्राह्मणस्य कार्यमकार्यं च समं भवेत्। कार्यमपि करोति अकार्यमपि करोतीत्यर्थः। तं ब्राह्मणं कथं ब्रूयाः ? क्षत्रियं या कथं ब्रूयाः ? ब्राह्मणजात्याक्रान्तत्वात् क्षत्रियो न। अस्त्रपाणिर्भूत्वा प्राणिहिंसानिरतत्वात् ब्राह्मणोऽपि न। किन्तूभयभ्रष्टत्वात् पतित एव। तस्य हनने को दोष इति भावः।

**[2]विधर्मिणो धर्मविदः प्रोक्तास्ते किं विषोपमाः॥ ३६॥**

**विधर्मिणो धर्मविदः** इत्यत्र विधर्मिणः पुरुषाः त्वया धर्मविदः प्रोच्यन्ते। ते अधर्मिणः पुरुषाः विषोपमाः किम् ? विषवत्त्वां हन्युः किम् ? येन तेभ्यो बिभेषीति भावः।

---

१. **'यद्द्रौणिश्चात्र गर्जति'** इति कुं पाठः।
२. **'विधर्मिणं धर्मविद्भिः प्रोक्तं तेषां विषोपमम्'** इति कुं पाठः।

**पितामहं रणे हत्वा मन्यसे धर्ममात्मनः ।**
**मया शत्रौ हते कस्मात् पापे धर्मं न मन्यसे ॥ ४३ ॥**

**मया शत्रौ हते कस्मात् पापे** इत्यत्र पापे शत्राविति पूर्वेण सम्बन्धः ।

**सम्बन्धावनतं पार्थ न मां त्वं [1]बहुमन्यसे ।**
**स्वगात्रकुतसोपानं निषण्णमिव दन्तिनम् ॥ ४४ ॥**

**सम्बन्धावनतं पार्थ** इत्यत्र स्वस्कन्धारोहणाय **निषण्णं** भूमावुपविष्टम् अत एव स्वगात्रकृतसोपानं स्वगात्रेण कृतं **सोपानं** सोपानमिव सोपानमारोहोपायो येन तं दन्तिनं महामात्र इवेति योजना ।

**नानृती पाण्डवो ज्येष्ठो नाहं वाऽधार्मिकोऽर्जुन ॥ ४७ ॥**
**[2]शिष्यध्रुङ्निहतः पापो युध्यस्व विजयस्तव ॥ ५० ॥**

**शिष्यध्रुङ्निहतः पापो** इत्यत्र **शिष्यध्रुक्** शिष्याणामस्माकं द्रोही । यथा गुरुद्रोहः पापाय तथा निरपराधिशिष्यद्रोहोऽपि पापायैवेति अम्बरीषद्रोहिणि दुर्वाससि दृष्टमिति भावः ।

**॥ इति पञ्चनवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ षण्णवत्यधिकशततमोऽध्यायः ॥

**[3]साङ्गा वेदा यथान्यायं येनाधीता महात्मना ।**
**यस्मिन् साक्षाद्धनुर्वेदो [4]ह्रीनिषेधः प्रतिष्ठितः ॥ ११ ॥**

---

१. BORI पृ. १००; **'वक्तुमर्हसि'** इति कुं पाठः ।
२. BORI पृ. १००; **'शिष्यद्रोही हतः'** इति कुं पाठः ।
३. **कुं. १९९ अध्यायः ।** ; ४. **'ह्रीनिषेवे'** इति कुं पाठः ।

**ह्रीनिषेधः प्रतिष्ठितः** इत्यत्र निषेधः पापकर्मणाम् ।

**उक्तवांश्चापि यत्पार्थं भीष्मं प्रति नरर्षभम् ।**
**तथान्तो विहितस्तेन स्वयमेव महात्मना ॥ १७ ॥**

**तथान्तो विहितस्तेन** इत्यत्र **तेन** भीष्मेण तथा अर्जुनशरपातेन । **अन्तः** नाशः । **विहितः** आज्ञप्तः ।

**[1]परं हि ते मृतं पाप न च ते वृत्तमीदृशम् ।**
**श्रोतुं वक्तव्यतामूलं नीचाचारस्य माधव ॥ २९ ॥**

**परं हि ते मृतं पाप** इत्यत्र हे पाप **माधव** सात्यके, नीचाचारस्य तव मृतं मरणमेवोत्तमम् । **वक्तव्यतामूलं** निन्द्यताया **मूलं** ते ईदृशं वृत्तं श्रोतुमपि **न च,** न योग्यमित्यर्थः ।

**अथवा सर्वमेवैतन्नीचस्य पुरुषस्य ह ।**
**वक्तुं च [2]पुरुषं क्लीब यथा सत्यक भाषसे ॥**

**अथवा सर्वमेवैतन्नीचस्य** इत्यत्र हे क्लीब सत्यक, त्वं यथा भाषसे एतत्सर्वं पुरुषं नीचस्य पुरुषस्य वक्तुं योग्यम् ।

[3]**कारणे चैव मां ब्रूहि,** इत्यत्र शास्त्रदृष्टेन कर्मणा कारणे सति मां ब्रूहि, न तु तूष्णीम् । क्षात्रम् **आत्मानं** स्वभावम् । 'आत्मा देहे धृतौ यत्ने स्वभावे परमात्मनि' इत्यमरः ।

---

१. 'वरं हि ते मृतिः पाप न च ते चित्तमीदृशम् । श्रोतुं वक्तव्यतामूलं नीचाचाराश्च मानवाः ॥' इति कुं पाठः ।

२. **परुषं** सो.मु.पा.

३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**अधर्मेणापकृष्टश्च मद्रराजः परैरितः ॥ ४३ ॥**

**अधर्मेणापकृष्टश्च** इत्यत्र **परैः** कौरवैः **अधर्मेण** कपटोपचाराख्या-धर्मेण **इतः** अस्मद्दलात् **अपकृष्टः** स्वदलं प्रापितः ।

**॥ इति षण्णवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्तनवत्यधिकशततमोऽध्यायः ॥

**[१]पश्यतेमौ हि मे बाहू नागराजकरोपमौ ।**
**समर्थौ पर्वतस्यापि शैशिरस्य [२]निवारणे ॥ ५४ ॥**

**शैशिरस्य निवारणे** इत्यत्र **शैशिरस्य शिशिरं** हिमं, तत्सम्बन्धिनः **पर्वतस्य** हिमवत्पर्वतस्येत्यर्थः ।

**॥ इति सप्तनवत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ अष्टनवत्यधिकशततमोऽध्यायः ॥

**[३]नालक्षयत तं कश्चिद्वारुणास्त्रेण संवृतम् ।**
**अर्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः ॥ २ ॥**

**नालक्षयत तं कश्चिद्वारुणास्त्रेण संवृतम्** इत्यत्र अर्जुनस्य **लघुत्वात्** लाघवेन कार्यकारित्वात् अन्तर्वारुणास्त्रेण संवृतं तं भीमं बहिस्तेजसा [४]संवृतत्वात् कश्चिदपि नालक्षयतेति योजना ।

**॥ इति अष्टनवत्यधिकशततमोऽध्यायः ॥**

---

१. कुं. २०० अध्यायः ।; २. **'निपातने'** इति कुं पाठः
३. कुं. २०१ अध्यायः ।; ४. **संवृतं आवृतं** सो.मु.पा.

## ।। अथ द्विशततमोऽध्यायः ।।

**[१]अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने ।**
**[२]पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ।। ७५ ।।**

**पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान्** इत्यत्र प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे । प्राज्ञः परस्मै पुरुषाय चेतसा गुहाशायायैव न देहमानिने ।' - इति श्रीभागवते शिवेनैव पार्वतीं प्रति उक्तत्वात् महाप्राज्ञेन नारायणेन क्रियमाणा स्तुतिः शिवान्तर्यामिणः [३]स्वस्यैव । ऋषिष्ववतीर्णस्य ऋषिवदेव [४]प्रवर्तनीयत्वाच्चेति ज्ञेयम् । किञ्च आदिसृष्टिर्हि उत्तरत्र [५]स्तुतौ सर्वत्र [६]स्तूयते । [७]अतोऽपीयं रुद्रान्तर्गतनारायणस्य स्तुतिरेव रुद्रस्य तु संहारकर्तृतैव न सृष्टिकर्तृतेति सर्वेषामविवादम् ।

**[८]दिव्यावृतौ मानसौ द्वौ सुपर्णौ अवाक्शाखः पिप्पलः सप्तगोप्ता**
**वाचश्चार्था देवता लोकपाला लोकानन्ये ये पुरा धारयित्वा ८१**

**दिव्यावृतौ मानसौ द्वौ सुपर्णौ** इत्यत्र **द्वौ सुपर्णौ** [९]जीवपरमौ । **पिप्पलः** संसाराख्याश्वत्थः **सप्तगोप्ता** सप्त महदहङ्कारपञ्चभूताख्यमूलकारणान्येव गोप्तृणि यस्याश्वत्थस्य स तथोक्तः ।

**कृष्ण एव हि यष्टव्यो यज्ञैश्चैष सनातनः ।**

---

१. कुं. २०१ अध्यायः । ; २. BORI पृ. १०३५; **'पद्महस्तं'** इति कुं. पाठः ।
३. **तस्यैव** सो.मु.पा. ; ४. **प्रवर्तमानत्वाच्चेति** सो.मु.पा. ५. **श्रुतौ** सो.मु.पा.
६. **श्रूयते** सो.मु.पा. ; ६. **अत्रापीयं** सो.मु.पा. ७. **'दिव्यामृतौ'** इति कुं पाठः
९. **'जीवपरमात्मानौ'** इति मुद्रितपुस्तके पाठान्तरम् ।

**सर्वभूतभुवं ज्ञात्वा [१] लिङ्गेऽर्चयति यः प्रभुम् ।**
**तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥ १०० ॥**

**कृष्ण एव हि यष्टव्यो यज्ञैश्चैष सनातनः । सर्वभूतभुवं ज्ञात्वा लिङ्गेऽर्चयति यः प्रभुम् । तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः** इत्यत्र एष सनातनः कृष्ण एव **यज्ञैः** देवयज्ञपितृयज्ञमनुष्ययज्ञैश्च तत्तदन्तर्यामितया यष्टव्यः न तु केवलं देवादय एव यष्टव्याः । तस्मात् **सर्वभूतभुवं** पृथिव्यादिसर्वभूतान्येव भूः स्थानं यस्य तं कृष्णं । शिला-सौवर्णादिलिङ्गेष्वपि विष्णोरेव सन्निधानज्ञापनार्थमिदं विशेषणम् । एवं ज्ञात्वा लिङ्गेऽपि प्रभुं कृष्णमेव यः अर्चयति तस्मिन्नभ्यधिकां प्रीतिं वृषध्वजः करोति, न तु केवललिङ्गपूजके इति मूल एव स्पष्टम् । लिङ्गेऽपि विष्णुसन्निधानस्यैव कथितत्वात् शिवान्तर्यामिण एव तत्र तत्र क्रियमाणं स्तुतिपूजादिकमिति सिद्धम् ।

॥ इति द्विशततमोऽध्यायः ॥

## ॥ अथ एकाधिकद्विशततमोऽध्यायः ॥

**रुद्रस्य यज्ञभागश्च विशिष्टं [२] समकल्पयन् ।**
**भयेन त्रिदशा राजन् शरणञ्च प्रपेदिरे ॥ ६२ ॥**

**विशिष्टं समकल्पयन्** इत्यत्र **विशिष्टम्** अवशिष्टम् ।

॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यं द्रोणपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण-विरचितलक्षालङ्काराख्यटीकायां एकाधिकद्विशततमोऽध्यायः ॥

॥ समाप्तं द्रोणपर्व ॥

---

१. 'लिङ्गमर्चति यः प्रभोः' इति कुं पाठः ।; २. 'ते त्वकल्पयन्' इति कुं पाठः ।

# अथ कर्णपर्व

## ।।अथ प्रथमोऽध्यायः ।।

[१] **दुर्मरत्वमहं मन्ये नृणां कृच्छ्रेऽपि वर्तताम् ।**
**यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ॥ २१ ॥**

**दुर्मरत्वमहं मन्ये नृणां कृच्छ्रेऽपि वर्तताम्** इत्यत्र मर्तुमशक्यं दुर्मरं, तस्य भावः **दुर्मरत्वम्** ।

॥ इति प्रथमोऽध्यायः ॥

## ।। अथ सप्तमोऽध्यायः ।।

[२] **मामकस्यास्य सैन्यस्य हृतोत्सेकस्य सञ्जय**
**अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १ ॥**

**अवशेषं न पश्यामि ककुदे मृदिते सति** इत्यत्र **ककुं** स्कन्धोपरि-स्थितभुजे स्थातुं ददातीति **ककुदो** वृषभः श्रेष्ठ इत्यर्थः । तस्मिन् ककुदे कर्णे मृदिते सतीति योजना ।

**आख्याता जीवमाना ये परे सैन्या यथायथम् ।**
[३] **इतीदमधिगच्छामि त्यक्तमर्थाभिपत्तितः ॥ २४ ॥**

---

१. $K_{3.v1}$, $D_{a\ 1}$; BORI पृ. ५; '**दुर्मरं तदहं मन्ये**' इति कुं पाठः ।
२. कुं.४.अध्यायः ।
३. '**इतीदमवगच्छामि व्यक्तम्**' इति कुं पाठः ।

**इतीदमधिगच्छामि त्यक्तमर्थाभिपत्तित** इत्यत्र **इति** त्वदुक्तप्रकारेण **इदं** त्वदुक्तं सैन्यम् **अर्थाभिपत्तितः** प्रयोजनसम्पत्तितः त्यक्तम् [१]**अधिगच्छामि** जानामि ।

॥ इति सप्तमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ॥

[२]**अपि स्यान्मेदिनी हीना [३]सूर्यसोमप्रभांशुभिः ।**
**न वधः पुरुषेन्द्रस्य संयुगेष्वपलायिनः ॥ ६८ ॥**

**अपि स्यान्मेदिनी हीना सूर्यसोमप्रभांशुभिः । न वधः पुरुषेन्द्रस्य** इत्यत्र [४]न चेद्वधः स्यादिति योग्यपदाध्याहारेण योजना ॥

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

[५]**न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति ।**
**सुनीतैरिह सर्वार्थैः दैवमप्यनुलोम्यते ॥ १६ ॥**

**सुनीतैरिह सर्वार्थैः**इत्यत्र सर्वे अर्था येषां ते सर्वार्थाः तैः पुरुषैः ।

**न्यस्तशस्त्रे तु भवति हतो भीष्मः पितामहः ।**
**शिखण्डिनं पुरस्कृत्य फल्गुनेन महाहवे ॥ ३० ॥**

---

१. 'अभिगच्छामि' सो.मु.पा.। ; २. कुं.६.अध्यायः ।
३. $B_1$,$D_6$, $T_2$; BORI पृ. ४१; **'सोमसूर्य–'** इति कुं पाठः ।
४. 'न चेत् वधो न स्यादिति' सो.मु.पा.।; ५.कुं.७.अध्यायः ।

**न्यस्तशस्त्रे तु भवति** इत्यत्र **भवति** त्वयि 'न्यस्तशस्त्रे सति' इति कर्णं प्रति वचनम् ।

**स भवान् धुर्यवत्सङ्ख्ये धुरमुद्वोढुमर्हति ।**
**अभिषेचय सैनान्ये स्वयमात्मानमात्मना ॥ ३५ ॥**

**स भवान् धुर्यवत्सङ्ख्ये धुरमुद्वोढुमर्हति** इत्यत्र **धुर्यवत्** सेनायां धुरन्धरभीष्मद्रोणवत् ।

**तोयपूर्णैर्विषाणैश्च द्विपखड्गमहर्षभैः ।**
**मणिमुक्तायुतैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥ ४७ ॥**

**तोयपूर्णैर्विषाणैश्च द्विपखगमहर्षभैः** इत्यत्र **द्विपो** गजः, **खड्गः** खड्गमृगः, **महर्षभो** नन्दी, एतेषां सम्बन्धिभिः **विषाणैः** विषाण-कृतरत्नखचितपात्रविशेषैः ।

**ततोऽभिषिक्ते राजेन्द्र निष्कैर्गोभिर्धनेन च ।**
**वाचयामास विप्राग्र्यान् राधेयः परवीरहा ॥ ५० ॥**

**वाचयामास विप्राग्र्यान्** इत्यत्र निष्कादिधनं दत्त्वा अस्मिन्नाशीर्वादं वाचयामास ।

**कर्णोऽपि राज्ञः सम्प्राप्य सैनापत्यमरिन्दमः ।**
**योगमाज्ञापयामास [१] सूर्यस्योदयनादधि ॥ ६४ ॥**

**कर्णोऽपि राज्ञ** इत्यत्र **अधि** अनन्तरं **योगं** सेनासन्नाहम् ।

॥ इति दशमोऽध्यायः ॥

१. $B_2$; BORI पृ. ५२; **'सूर्यस्योदयनं प्रति'** इति कुं पाठः ।।

## ॥ अथ एकादशोऽध्यायः ॥

[१]**कल्प्यतां नागमुख्यानां रथानाञ्च वरूथिनाम् ।**
**सन्नह्यतां नराणाञ्च वाजीनाञ्च विशाम्पते ॥ ५ ॥**

**कल्प्यतां नागमुख्यानां रथानाञ्च वरूथिनाम्** इत्यत्र **कल्प्यतां** युद्धोचितसन्नाहैः कल्प्यमानानाम् । **वरूथिनां** वरूथो रथसन्नाहः, तद्वताम् ।

**ततः श्वेतपताकेन बालार्काकारवाजिना ।**
**हेमपृष्ठेन धनुषा [२]हस्तिकक्ष्येण केतुना ॥ ७ ॥**

**हेमपृष्ठेन धनुषा हस्तिकक्ष्येण केतुना** इत्यत्र 'उत्पत्य तु महावेगः काकमभ्याहनत्कपिः' इति कर्णपर्वण्येव उपरि वक्ष्यमाणवचनात् **हस्तिकक्ष्येण**– हस्तः अस्यास्तीति **हस्ती** हस्तपरिमाणवानित्यर्थः । **कक्षो** वनम् । [३]अर्शवानर्श इतिवत् कक्षवान् वनवायस एव कक्ष इत्युच्यते । यद्वा 'कषयोगे क्षः' इति वचनात् **कं** शिरः तुण्डेन [४]कषतीति व्युत्पत्त्या **कक्षो** वायसः । हस्ती चासौ कक्षश्च **हस्तिकक्षः** । हस्तिकक्षस्येयं हस्तिकक्ष्येति व्युत्पत्त्या अयोमयी काकप्रतिमा यस्मिन् सः **हस्तिकक्ष्यः,** तेन केतुना । एवमुत्तरत्रापि 'त [५]हस्तिकक्ष्याप्रवरं बृहन्तम्' इति श्लोके **हस्तिकक्ष्यया** हस्तपरिमितकाकप्रतिमया प्रवरं

---

१. $V_1.B_1.Da_1.T_1.M$; BORI पृ. ५३; **'कल्पतां'** इति कुं पाठः । कुं.८.अध्यायः ।

२. BORI. पृ.५८३. **'नागकक्षेण'** इति कुं पाठः ।

३. **'अर्शवानर्श इतिवत्'** इति कचित् मूलपुस्तके नास्ति ।

४. **'कर्षतीति'** सो.मु.पा.।; ५. **'हस्तिकक्ष्यप्रवरम्'** सो.मु.पा.।

बृहन्तं तं ध्वजमिति सम्बन्धः । गुह्यभाषाप्रियत्वाद्व्यासस्येदृग्वचनम् । वक्ष्यमाणकपिकाककलहस्तु कस्यचिदसुरस्यापि काकप्रतिमायां प्रवेशादिति ज्ञेयम् ॥

**तं हत्वाद्य महाबाहो विजयस्तव फल्गुन ।**
**उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ॥ २६ ॥**

**उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिक** इत्यत्र **शल्यः** हृदि स्थितश्चिन्तारूपो वक्रशरः ।

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

[१] **स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः ।**
**क्रोधदीप्तवपुर्मेघैः सप्तसप्तिरिवांशुमान् ॥ ३३ ॥**

**सप्तसप्तिरिवांशुमान्** इत्यत्रः **सप्तसप्तिः** सप्ताश्वः । 'हयसैन्धवसप्तयः'[२] इत्यमरः ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

[३] **विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ।**
**भीमसेनस्तथा द्रौणिं कुर्वाणं कर्मदुष्करम् ॥ ६ ॥**

---

१. कुं.९.अध्यायः ।; २. अ.को.२.८.४४.
३. कुं.१०अध्यायः ।

**विन्दानुविन्दौ कैकेयौ** इत्यत्र **कैकेयौ** केकयविषयाधिपती । 'विन्दानुविन्दावावन्त्यौ' इत्यत्रोक्तौ तु अवन्तिदेशाधिपती विन्दानुविन्दौ भिन्नौ ॥

॥ इति त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

**[१]अभिसारस्तु तं राजन् नवभिर्निशितैः शरैः ।**
**श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः ॥ २ ॥**

**अभिसारस्तु तं राजन्** इत्यत्र **अभिसारः** अभिसारदेशाधिपतिश्चित्रसेनः ॥

॥ इति चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

**[२]तौ सायकौ महाराज द्योतमानौ चमूमुखे ।**
**आजघ्नतुः समासाद्य वज्रवेगौ दुरासदौ ॥ ४१ ॥**

**तौ सायकौ महाराज** इत्यत्र **सायकौ** ताभ्यामुभाभ्यां मुक्तौ **तौ** भीमाश्वत्थामानौ आजघ्नतुरिति सम्बन्धः ।

॥ इति पञ्चदशोऽध्यायः ॥

---

१. BORI.पृ.७०; 'चित्रसेनस्तु तं राजन्नवभिर्नतपर्वभिः' इति कुं पाठः । कुं.११. अध्यायः ।
२. कुं.१२अध्यायः ।

## ।। अथ षोडशोऽध्यायः ।।

**[१]आतिथ्यकर्माभ्यर्थाय दीयतां यदि [२]रोचते ।**
**एवमुक्तोऽवहत्पार्थं कृष्णो द्रोणात्मजान्तिके ।। २५ ।।**

**आतिथ्यकर्माभ्यर्थाय** इत्यत्र **अभ्यर्थाय अभि** समाभिमुख्येन **अर्थः** अर्थनं याञ्चा यस्य तस्मै अश्वत्थाम्ने अतिथ्यकर्म यदि रोचते तर्हि दीयतामिति योजना । **'अश्वत्थाम्नम्'** इति पाठे स्पष्टोऽर्थः ।

**तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत् ।**
**[३]जैत्रेण विधिनाऽऽहूतं वायुमिन्द्रमिवाध्वरे ।। २६ ।।**

**जैत्रेण विधिनाऽऽहूतं वायुमिन्द्रमिवाध्वर** इत्यत्र हे अर्जुन, अध्वरे वायुमिव इन्द्रमिव च **जैत्रेण** जयदायकेन **विधिना** दैवेन त्वामाहूतं मन्ये ।

**अश्वत्थामन् स्थिरो भूत्वा प्रहराशु सहस्व च ।**
**निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम् ।। २७ ।।**

**निर्वेष्टुं भर्तृपिण्डं हि** इत्यत्र **निर्वेष्टुम्** उपभोक्तुम् । 'निर्वेश उपभोगः स्यात्'[४] इत्यमरः ।

।। इति षोडशोऽध्यायः ।।

---

१. **'–कर्माभ्युत्थाय'** इति कुं पाठः । कुं. **५२ अध्यायः ।**
२. $D_{n1}$; BORI.पृ.८२ ; **'मन्यसे'** इति कुं पाठः ।
३. BORI.पृ.८२; **'शैक्ष्येण'** इति कुं पाठः ।
४. अ.को. २-२-२०.

## ॥ अथ सप्तदशोऽध्यायः ॥

[१]**तैराहतौ सर्वमनुष्यमुख्यौ असृक् क्षरन्तौ धनदेन्द्रकल्पौ ।**
**समाप्तविद्येन तथाभिभूतौ हतौ रणे ताविति मेनिरेऽन्ये ॥१९॥**

**समाप्तविद्येन** इत्यत्र **समाप्तविद्येन** सम्यगाप्तविद्येन ।

॥ इति सप्तदशोऽध्यायः ॥

## ॥ अथ अष्टादशोऽध्यायः ॥

[२]**ततोऽर्जुनं भिन्नकटेन दन्तिना घनाघनेनानिलतुल्यरंहसा ।**
**अतीव चुक्रोधयिषुर्जनार्दनं धनञ्जयं चाभिजधान तोमरैः ॥१२॥**

**घनाघनेनानिलतुल्यरंहसा** इत्यत्र **घनाघनेन** अत्यन्तं घनः **घनाघनः** तेन । **भिन्नकटेन** भिन्नगण्डस्थलेन । 'गण्डः कटो मदो दानम्'[३] इत्यमरः ।

॥ इति अष्टदशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

[४]**तेऽर्जुनं सर्वतः क्रुद्धा नानाशस्त्रैरवीवृषन् ।**
**मरुद्भिः प्रेषिता मेघाः हिमवन्तमिवोष्णगे ॥ ८ ॥**

**हिमवन्तमिवोष्णग** इत्यत्र गं गतं उष्णम् **उष्णगम्,** उष्णापाय इत्यर्थः ।

---

१. कुं. ५३ अध्यायः ।; २. कुं. ५४ अध्यायः ।
३. अ.को.२.८.३७.; ४. कुं ५५ अध्यायः ।

**[१]छिन्नत्रिवेणुसङ्घातान् [२]हताश्वपार्ष्णिसारथीन् ।**
**विम्रस्तहस्ततूणीरान् विचक्ररथकेतनान् ॥ १० ॥**

**छिन्नत्रिवेणुसङ्घातान् हताश्वपार्ष्णिसारथीन्** इत्यत्र हताः अश्वाः पार्ष्णिसारथयः पुरःसरसारथयश्च येषां तान् ।

**द्विपाः सम्भिन्नमर्माणो वज्राशनिसमैः शरैः ।**
**पेतुर्गिर्यग्रवेश्मानि वज्रवाताग्निभिर्यथा ॥ १३ ॥**

**पेतुर्गिर्यग्रवेश्मानि** इत्यत्र **गिर्यग्रवेश्मानि** गिरिशृङ्गाख्यवेश्मानि ।

**सारोहास्तुरगाः पेतुर्बहवोऽर्जुनताडिताः ।**
**[३]निर्जिह्वान्ताः क्षितौ क्षीणा रुधिरार्द्राः सुदुर्दृशः ॥ १५ ॥**

**निर्जिह्वान्ता** इत्यत्र निर्गताः **जिह्वान्ताः** जिह्वाग्रा येषां ते तथोक्ताः । मध्यमपदलोपी समासः ।

**अश्वांश्च बहुधा पश्य शोणितेन परिप्लुतान् ।**
**वैजयन्तीर्विचित्राश्च हतांश्च गजयोधिनः ॥ ४५ ॥**

**वैजयन्तीर्विचित्राश्च** इत्यत्र **वैजयन्तीः** पताकाः । 'पताका वैजयन्ती स्यात्'[४] इत्यमरः ।

॥ इति एकोनविंशोऽध्यायः ॥

---

१. B.$D_{a1}$.$D_{1.3-5.7}$; BORI.पृ.९६; **'–जङ्घेषान्'** इति कुं पाठः ।
२. $B_{1.3.4}$;$D_{a1}$; BORI.पृ.९६; **'हताश्वान् हतसारथीन्'** इति कुं पाठः ।
३. $K_2$; BORI.पृ.९६; **'निर्जिह्वान्त्रा'** इति कुं पाठः ।
४. अ.को.२.८.९९

## ।। अथ विंशोऽध्यायः ।।

**[१] स पाण्ड्योऽर्थपतिश्रेष्ठः सर्वशस्त्रभृतां वरः ।**
**कर्णस्यानीकमहनत् [२] परिक्षिप्तमिवान्तकः ।। ६ ।।**

**परिक्षिप्तमिवान्तक** इत्यत्र **परिक्षिप्तं** परितः **क्षिप्तं** निराकृतं आयुः-कालकर्मादिभिर्निराकृतं जनं अन्तक इव ।।

**ततोऽपरान्नवांस्तूर्णं नाराचान् कङ्कवाससः ।**
**गत्या दशम्या संयुक्तानश्वत्थामाऽप्यवासृजत् ।। २२ ।।**

**गत्या दशम्या संयुक्तानश्वत्थामाऽप्यवासृजत्** इत्यत्र **गत्या** वेगतो गमनेन **दशम्या** दशमीसङ्ख्यया च संयुक्तानित्यर्थः ।

**मणिप्रवेकोत्तमवज्रहाटकैरलङ्कृतं चांशुकमाल्यमौक्तिकैः ।**
**हतो मयाऽसीत्यसकृन्मुदा नदन् [३] पराहनद्द्रौणिवराङ्गभूषणम् ४०**

**पराहनद्द्रौणिवराङ्गभूषम्** इत्यत्र द्रौणेः **वराङ्गभूषणं** मकुटम् । 'वराङ्गं मूर्धगुह्ययोः' [४] इत्यमरः ।

**शिरश्च तत्पूर्णशशिप्रभाननं सरोषताम्रायतनेत्रमुन्नसम् ।**
**क्षितावपि भ्राजति तत्सकुण्डलं विशाखयोर्मध्यगतो [५] यथा शशी ।। ४५ ।।**

**विशाखयोर्मध्यगतो यथा शशी** इत्यत्र **विशाखयोः** विशाखानक्षत्रतारयोः ।

---

१. कुं ५६ अध्यायः ।; २. **'पताहस्त इवान्तकः'** इति कुं पाठः ।
३. $B_1D_{3.४}.T_3$; BORI.पृ.११३; **'पराभिन–'** इति कुं पाठः ।
४. अ.को.३.३.२६.; ५. **'शशी यथा'** इति कुं पाठः ।

स तु द्विपः पञ्चभिरुत्तमेषुभिः
कृतः षडंशश्चतुरो नृपस्त्रिभिः ।
कृतो दशांशः कुशलेन युध्यता
[1]हरिर्यथाद्रिं दशधैव तं तथा ॥ ४६ ॥

**हरिर्यथाद्रिं दशधैव तं तथा** इत्यत्र युध्यता कुलिशेन **हरिः** इन्द्रः अद्रिं यथा दशधा करोति तथा तं 'चक्रे' इति योग्यक्रियाध्याहारेण योजना ।

स [2]पादपान् राक्षसभोजनान् बहून्
[3]प्रदाह्य पाण्ड्योऽश्वमनुष्यकुञ्जरान् ।
[4]स्वधामवाप्य ज्वलनः पितृप्रिय-
स्ततः प्रशान्तः सलिलप्रवाहतः ॥ ४७ ॥

**स पादपान्राक्षसभोजनान्बहून्** इत्यत्र सः पाण्ड्याख्यः पितृप्रियो **ज्वलनः वनवह्निः, राक्षसभोजनान्** राक्षसानां भोजनं येभ्यस्तान् **अश्वमनुष्यकुञ्जरान् अश्वमनुष्यकुञ्जराख्यान् पादपान् प्रदाह्य स्वधां** कीर्तिरूपां स्वधामवाप्य ततः **सलिलप्रवाहतः** अश्वत्थामशराख्यस लिलप्रवाहं प्रापितः प्रशान्त इति योजना ।

॥ इति विंशोऽध्यायः ॥

---

१. **'यथा हविस्तद्दश दैवतं यथा'** इति कुं पाठः ।
२. $D_6$; BORI.पृ.११४; **'पादशो'** इति कुं पाठः ।
३. $D_4$; BORI.पृ.११४; **'प्रदाय'** इति कुं पाठः ।
४. $V_1$,$B_1$; BORI.पृ.११४; **'स्वधामिवाप्य'** इति कुं पाठः ।

## ।। अथ एकविंशोऽध्यायः ।।

**[१]समाप्तविद्यो बलवान् युक्तो [२]वीरः स पाण्डवः ।**
**सर्वभूतेष्वनुज्ञातः शङ्करेण महात्मना ।। २ ।।**

**युक्तो वीरः स पाण्डव** इत्यत्र सर्वभूतेषु वीरः शङ्करेणानुज्ञातः स पाण्डव इति योजना ।।

।। इति एकविंशोऽध्यायः ।।

## ।। अथ द्वाविंशोऽध्यायः ।।

**[३]तस्यावर्जितकायस्य द्विरदादुत्पतिष्यतः ।**
**नाराचेनाभिनद्धक्षः सात्यकिः सोऽपतद्भुवि ।। १३ ।।**

**तस्यावर्जितकायस्य** इत्यत्र **आवर्जितकायस्य** गजात्पतनसमये वक्रीभूतकायस्य ।

।। इति द्वाविंशोऽध्यायः ।।

## ।। अथ चतुर्विंशोऽध्यायः ।।

**[४]हीनांश्चाभरणैश्चैव खलीनैश्च विवर्जितान् ।**
**चामरैश्च कथाभिश्च तूणीरैः पतितैरपि ।। ६४ ।।**

---

१. कुं. ५७ अध्यायः ।
२. $B_{1.3-5}$.$Da_1$.$D_{1-5\cdot7}$.$T_2$; BORI.पृ.११४; 'वीरश्च' इति कुं पाठः।
३. कुं.६०अध्यायः ।
४. कुं १५ अध्यायः ।

**खलीनैश्च विवर्जितान्** इत्यत्र **खलीनैः** खुरैः । 'कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान्'[१] इत्यमरः ।

**तारकाजालसञ्छन्नान्[२] वरचण्डांशुशोभितान् ।**
**[३]वारणाननुपश्याम धावमानान् समन्ततः ॥ ७२ ॥**

**तारकाजालसञ्छन्नान् वरचण्डांशुशोभितान्** इत्यत्र **तारकाजालैः** तारकाकारेण कृतसौवर्णराजतवर्तुलाकारसमूहैः सञ्छन्नान् ॥

॥ इति चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**[४]शाकुनिं तु ततः षष्ट्या विव्याध भरतर्षभ ।**
**सारथिं त्रिभिरानर्च्छत्तं च भूयो व्यविध्यत ॥ ५ ॥**

**शाकुनिं तु तत** इत्यत्र **शाकुनीं** शकुनिपुत्रमुलूकम् ।

**स च्छिन्नधन्वा विरथः खड्गमुद्यम्य चानदत् ।**
**वैदूर्योत्पलवर्णाभं दन्तिदन्तमयत्सरुम् ॥ २८ ॥**

**दन्तिदन्तमयत्सरुम्** इत्यत्र **दन्तिदन्तमयः** हस्तिदन्तालङ्कृतः **त्सरुः** मुष्टियोग्यः खड्गस्य आदिभागो यस्य तम् । 'त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धने'[५] इत्यमरः ।

॥ इति पञ्चविंशोऽध्यायः ॥

---

१. **'कलिका'** सो.मु.पा.। ; २. **'वरघण्टाविशोभितान्'** इति कुं पाठः ।
३. **'वारणानन्नुपश्याम'** इति कुं पाठः ।
४. कुं. १६ अध्यायः । ; ५. अ.को.२.८.९०.

## ।। अथ षड्विंशोऽध्यायः ।।

**[१] यादृशं दृश्यते रूपमङ्कप्रतिमं रणे ।**
**गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः ।। ७ ।।**

**गमिष्यत्यद्य पदवीम्** इत्यत्र **पदवीं** कुरुसेनानायकत्वम् ।

**।। इति षड्विंशोऽध्यायः ।।**

## ।। अथ अष्टविंशोऽध्यायः ।।

**[२] प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे ।**
**निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ।। ३१ ।।**

**प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापर** इत्यत्र **प्रतिमानेषु** वाहित्थादधःप्रदेशेषु, दन्तमूलेष्विति यावत् । 'अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य च'[३] इत्यमरः । **दन्तवेष्टेषु** अधरोष्टेषु ।।

**।। इति अष्टविंशोऽध्यायः ।।**

## ।। अथ त्रिंशोऽध्यायः ।।

**[४] निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः ।**
**हन्यमानाः शरैरार्तास्तदा भीताः प्रदुद्रुवु ।। ३६ ।।**

**निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपा** इत्यत्र **निष्कैवल्यं** केवलस्य युद्धरहितस्य भावः कैवल्यं, तद्रहितं निष्कैवल्यम् **।।इति त्रिंशोऽध्यायः।।**

---

१. कुं. १७ अध्यायः ।; २. कुं. १९ अध्यायः ।
३. अ.को.२.८.३९.; ४. कुं २१ अध्यायः ।

## ।। अथ एकत्रिंशोऽध्यायः ।।

**[१] अथ प्रतीपकर्तारं [२] सततं विजयात्मनः ।**
**सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ।। १३ ।।**

**अथ प्रतीपकर्तारं सततं विजयात्मन** इत्यत्र **विजयात्मनः** अर्जुनप्रयत्नस्य । 'आत्मा देहे धृतौ यत्ने स्वभावे परमात्मनि' [३] इत्यमरः। सततं प्रतीपमिति योजना ।

।। इति एक त्रिंशोऽध्यायः ।।

## ।। अथ द्वात्रिंशोऽध्यायः ।।

**[४] उद्यन्नेव यथा सूर्यो बालसूर्यसमप्रभौ ।**
**कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथाः ।। २६ ।।**

**उद्यन्नेव यथा सूर्यो बालसूर्यसमप्रभौ** इत्यत्र उद्यन्नेव सूर्यो यथा तथा बालसूर्यसमप्रभाविति सम्बन्धः ।

**[५] तवातिकामं कौरव्य निधाय हृदये पुमान् ।**
**अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्किथाः ।। ४८ ।।**

**तवातिकामं कौरव्य** इत्यत्र **अतिकामम्** अतिशयितं कामं, नीच-सारथ्यकरणादन्यं काममित्यर्थः ।

---

१. कुं. २२ अध्यायः ।; २. **'प्रवीरं परवीरहा'** इति कुं पाठः ।
३. अ.को.२.३.१०९.
४. **'उद्यन्तौ च यथा सूर्यौ'** इति कुं पाठः । BORI.पृ.१७७ । कुं. २३ अध्यायः
५. **'न चापि कामान्'** इति कुं पाठः ।

[1]ब्राह्मणा ब्रह्मणा सृष्टा मुखात्क्षत्रमथोरसः ।
ऊरुभ्यामथ वैश्या वै शूद्राः पद्भ्यामिति श्रुतिः ॥ ३६ ॥
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ।
अथान्योन्यस्यसंयोगात् चातुर्वर्णस्य भारत ॥ ३७ ॥

**तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजा** इत्यत्र **वर्णविशेषाः** सूतवैदेहिकचण्डालाद्याः **प्रतिलोमानुलोमजाः** मातुरनुलोमत्वात् पितुः प्रतिलोमत्वाच्च जाताः । 'ब्राह्मण्यां क्षत्रियात् सूतः तस्यां वैदेहिको विशः । स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः'[2] इत्यनुशासनात् तद्विभागो ज्ञेयः ॥

अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ।
गोप्तारः सङ्ग्रहीतारो दातारः क्षत्रियाः स्मृताः ॥ ३८ ॥

**गोप्तारः सङ्ग्रहीतार** इत्यत्र **सङ्ग्रहीतारः** प्रजाभ्यः स्वयोग्यकरं ग्रहीतारः ।

॥ इति द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

[3]कश्चित् प्रजापतिर्घोरस्तेन सार्धं दुरात्मना ।
युद्धमासीन्महाघोरं देवानामिति नः श्रुतम् ॥

---

१. '**ब्रह्मणा ब्रांह्मणा सृष्टा मुखात्क्षत्रं च बाहुतः** ' इति कुं पाठः ।
२. अ.को.२.१०.३-४.
३. कुं २५ अध्यायः।'**कश्च प्रजापतिर्घोरांस्तान् सर्वान् जहि मा चिरम्**' इति कुं. पाठः ।

**कश्चित्प्रजापतिर्घोरस्तेन सार्धं दुरात्मना । युद्धमासीन्महाघोरं देवानामिति नः श्रुतम्** इत्यत्र घोरः **कश्चित्प्रजापतिः** दैत्यजनाधिपतिः ताराक्षाख्यः ज्येष्ठस्तारकासुरपुत्रः । तेन सार्धमित्यादियोजना ।

**।। इति त्रयस्त्रिंशोऽध्यायः ।।**

## ।। अथ चतुस्त्रिंशोऽध्यायः ।।

**[१]शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते ।**
**कुड्मलश्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा ।।**

**शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते । कुड्मलश्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा** इत्यत्र **शृङ्गं** शराग्रम् । **भल्लः** मध्ये भल्लाकारः । कुड्ममलं अयोग्राहकशरदण्डमुखम् ।

**[२]वृषभस्यास्थितो रुद्रो हयस्य च नरोत्तम ।**
**स्तनांस्तदाशातयत खुरांश्चैव द्विधाऽकरोत् ।।**

**वृषभस्यास्थितो रुद्र** इत्यत्र रथे आस्थितो रुद्रो वृषभस्य खुरान् द्विधाकरोत् । हयस्य पुंतुरगस्य स्तनानशातयत् । तुरगेतरमनुष्यादि-प्राणिनां पुंसामपि सूक्ष्मं स्तनद्वयमस्त्येव । तुरगानां तु तदपि नास्त्येवेति भावेनाशातयदित्युक्तम् ।

**।। इति चतुस्त्रिंशोऽध्यायः ।।**

---

१. BORI.पृ.१९२.
२. BORI.पृ.६३४.

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[१]ततो दुर्योधनो भूयो मद्रराजं तरस्विनम् ।**
**उवाच राजन् सङ्ग्रामेऽध्युषिते पर्युपस्थिते ॥ ४ ॥**

**उवाच राजन् सङ्ग्रामेऽध्युषिते पर्युपस्थित** इत्यत्र **अध्युषिते** मनसि स्थिते सङ्ग्रामे पर्युपस्थिते सतीति योजना ।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

**[२]ततो रथस्थः परवीरहन्ता [३]भीष्मद्रोणावसुवीर्यौ निरीक्ष्य ।**
**समुज्ज्वलन् भास्करपावकाभो वैकर्तनोऽसौ रथकुञ्जरो वृषा १२**

**भीष्मद्रोणावसुवीर्यौ निरीक्ष्य** इत्यत्र **असुवीर्यौ** सुवीर्यौ न भवत इत्यसुवीर्यौ असमर्थावित्यर्थः ।

**नेह ध्रुवं किञ्चिदपि प्रचिन्तयन्**
**विदुर्लोके कर्मणोतित्ययोगात् ।**
**सूर्योदये को हि विमुक्तसंशयो**
**भावं कुर्वीताद्य गुरौ निपातिते ॥ १९ ॥**

**सूर्योदये को हि विमुक्तसंशयो भावं कुर्वीताद्य गुरौ निपातित** इत्यत्र अद्य सूर्योदये जाते सति विमुक्तसंशयः कः गुरौ निपातिते भावं

---

१. कुं ३० अध्यायः ।; २. कुं ३१ अध्यायः ।
३. '**–तिवीर्यौ समीक्ष्य**'इति कुं पाठः ।

स्वजीवने मनोभावं कुर्वीतेति उषःकाले युद्धार्थं गच्छतः कर्णस्य वचनम् ।

**हुताशनादित्यसमानतेजसं पराक्रमे विष्णुपुरन्दरोपमम् ।**
**नये बृहस्पत्युशनः समं सदा न चैनमस्त्रं तदुपास्त दुःसहम् ॥२१॥**

**न चैनमस्त्रं तदुपास्त दुःसहम्** इत्यत्र दुःसहं तत् जन्मप्रभृति अभ्यस्तमस्त्रम् **एनं** द्रोणं **नोपास्त** युद्धकाले नोपासाञ्चकार, नोपकारायाभूदिति भावः ।

**सम्प्राक्रुष्टे रुदितस्त्रीकुमारे पराभूते पौरुषे धार्तराष्ट्रे ।**
**मया कृत्यमिति जानामि शल्य प्रयाहि तस्माद्द्विषतामनीकम् २२**

**सम्प्राक्रुष्टे रुदितस्त्रीकुमारे पराभूते पौरुषे धार्तराष्ट्र** इत्यत्र रुदितस्त्रीकुमारे रुदितेन युक्ता स्त्री रुदितस्त्री । तस्याः कुमारे पराकृष्टे परैर्बलादाकृष्यमाणे सति यथा तथा धार्तराष्ट्रे [१]धार्तराष्ट्रसम्बन्धिनि पौरुषे पराभूते सति मया कृत्यं कर्तव्यं कर्म कृत्यं कर्तुं योग्यमिति जानामि । तस्मात्प्रयाहीति योजना ।

॥ इति सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

[२]**तथा तस्मै पुनर्दद्यां श्वेतमश्वतरीरथम् ।**
**युक्तमञ्जनकेशीभिः यो मे ब्रूयाद्धनञ्जयम्** ॥ ५ ॥

१. 'धृतराष्ट्रसम्बन्धिनि' सो.मु.पा.
२. कुं ३२ अध्यायः ।

**युक्तमञ्जनकेशीभिः** इत्यत्र अञ्जनवर्णकन्धरकेशसहिताश्वतरीभिर्युक्तं रथमिति योजना।

**स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्।**
**अन्यं वाऽस्मै पुनर्दद्यां सौवर्णं [१] हस्तिषड्गतम्** ॥ ६ ॥

**सौवर्णं हस्तिषड्गतम्** इत्यत्र हस्तिषु षट्सु गतं **सौवर्णं** सुवर्णभारम्॥

॥ इति अष्टत्रिंशोध्यायः ॥

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

**[२] हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया।**
**श्रद्धस्वेदं मया प्रोक्तं यदि तेऽस्ति जिजीविषा** ॥ ११ ॥

**हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया** इत्यत्र धार्तराष्ट्रस्य हितार्थं त्वं ब्रवीमि। हिंसया न, प्रयोजनं नास्तीति योजना।

॥ इति एकोनचत्वरिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

**[३] येषां गृहेष्वशिष्टानां सक्तुमन्थाशिनां सदा।**
**पीत्वा [४] सीधुं सगोमांसं क्रन्दन्ति च हसन्ति च** ॥ २७ ॥

---

१. 'हस्तिषड्गवम्' इति कुं पाठः।; २. कुं ३३. अध्यायः। BORI.पृ.२२९
३. कुं ३४ अध्यायः।
४. 'शीधु' इति कुं पाठः।

**पीत्वा सीधुं सगोमांसं क्रन्दन्ति च हसन्ति च** इत्यत्र **सगोमांसं** गोमांसेन सहितं **सीधुं** मद्यम् । 'मैरेयमासवः सीधुर्मेदको[1] जगलः समौ'[2] इत्यमरः ।

**मद्रके सङ्गतं नास्ति हतं वृश्चिक ते विषम् ।**
**आथर्वणेन मन्त्रेण यथा शान्तिः कृता मया ॥ ३३ ॥**
**इति वृश्चिकदष्टस्य विषवेगहतस्य च ।**
**कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते ॥ ३४ ॥**

**हतं वृश्चिक ते विषम् । आथर्वणेन मन्त्रेण यथा शान्तिः कृता मया । इति वृश्चिकदष्टस्य विषवेगहतस्य च । कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यत** इत्यत्र आथर्वणेन मन्त्रेण यथा व्याध्यादेः शान्तिं कुर्वन्ति तथा [3]मया 'हतं वृश्चिक ते विषम्' इति आथर्वणेनैव मन्त्रेण वृश्चिकदष्टस्य वृश्चिकपुच्छेन दष्टस्य अत एव विषवेगहतस्य च पुरुषस्य प्राज्ञाः भेषजं कुर्वन्ति । तच्च सत्यमेव दृश्यते, न तु व्यर्थो भवति तथा तवापि [4]जन्मभूमेर्दोषोद्घाटनेन अहङ्काराख्यविषं [5]मया विनाशितमिति भावः ।

**यास्तिष्ठन्त्यः प्रमेहन्ति [6]यथैवोष्ट्री दशेरकी ।**
**तासां विभ्रष्टधर्माणां निर्लज्जानां ततस्ततः ।**
**त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि ॥ ३७ ॥**

---

१. **'मेचकः'** सो.मु.पा.; २. अ.को.२.१०.४१.
३. **'मया'** इत्यारभ्य **'प्राज्ञाः भेषजं कुर्वन्ति'** इत्यन्तो भागः क्वचित्पुस्तके नास्ति ।
४. **'जन्मभूमौ'** सो.मु.पा.; ५. **'मयापि' नाशितम्** सो.मु.पा.
६. **'यथैवोष्ट्रदशेरकाः'** इति कुं पाठः ।

**यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्री दशेरकी** इत्यत्र **उष्ट्री** उष्ट्रस्य स्त्री । **दशेरकी** दशन्तीति दशाः दशानाः तेषामीरकी प्रेरकी ।

'ईर प्रेरणे' इति धातुः । भक्षणाद्यर्थं सदा दन्तानावर्तयन्ती इत्यर्थः । 'दशेरकी' इति उष्ट्रजातौ स्त्रियो गुणनाम । 'दशेरकः क्रमेलक उष्ट्रोथ-पवणकरभशृङ्खलकाः'[१] इति हलः । दशेरक्याः पुत्रा हि [२]दशेरकाः मेहनसमयेऽपि खाद्यादिभक्षणतत्परा इति दोषान्तरसूचनायेदमुदितम् ।

**सौवीरकं याच्यामाना मद्रिका[३] प्रातिवेश्मिकैः ।**
**अदातुकामा वचनमिदं वदति दारुणम् ॥**
**मा मां सुवीरकं कश्चिद् याचतां दयितं मम ।**
**पुत्रं दद्यां पतिं दद्यां न तु दद्यां सुवीरकम्** ॥ ३८ ॥

**सौवीरकं याच्यामाना मद्रिका प्रातिवेश्मिकैः । मा मां सुवीरकं कश्चिद्** इत्यत्र **प्रातिवेश्मिकैः** प्रतिवेश्मसम्बन्धिभिः गृहे गृहे याचकैः पुरुषैः **सौवीरकं** आरनालं याच्यमाना **मद्रिका** मद्रदेशोद्भवा स्त्री । 'आरनालकसौवीरकुल्माषाभिषुतानि च'[४] इत्यमरः । 'अम्बली' इत्यपभ्रंशभाषा । तदपि अदातुकामा दारुणं इदं वक्ष्यमाणं वचनं वदति । 'मद्रिका कषती स्फिचौ'[५] इति पाठे [६]**स्फिचौ** [७]कटिप्रदेशौ । 'स्त्रियां स्फिचौ कटिप्रोथौ'[८] इत्यमरः । **कषती** कण्डूयनं कुर्वतीत्यर्थः ।

---

१. **'दाशेरकः'** सो.मु.पा. ह.को.२.२८०.; २. **'दाशेरकाः'** सो.मु.पा.
३. **'कर्षति स्फिचौ'** इति कुं पाठः ।; ४. अ.को.२.९.३९ ।
५. **'मद्रिका कृषती स्फिजौ'** इति BORI.पृ.२३१.
६. अत्र सर्वत्र **'स्फिजौ'** सो.मु.पा.; ७. **'कटिप्रदेशे'** सो.मु.पा.
८. अ.को.२.६.७५ ।

मम दयितं सुवीरकं सौवीरं कश्चित् मा मां प्रति मा याचताम्। अन्यत् स्पष्टम्।

**सारङ्ग इव [१] घर्मान्ते कामं विलप शुष्य च।**
**नाहं भीषयितुं शक्यः क्षत्रधर्मे व्यवस्थितः ॥ ४९ ॥**

**सारङ्ग इव घर्मान्त** इत्यत्र सारङ्गः चातकः। 'दार्वघाटोऽथ सारङ्ग-स्तोककश्चातकः समाः' इत्यमरः।

**मित्रप्रतीक्षया शल्य धार्तराष्ट्रस्य चोभयोः।**
**अपवादतिति [२] क्षाभ्यां त्रिभिरेतैर्हि जीवसि ॥ ५४ ॥**

**मित्रप्रतीक्षया शल्य धार्तराष्ट्रस्य चोभयोः। अपवादतिति क्षाभ्यां त्रिभिरेतैर्हि जीवसि** इत्यत्र धार्तराष्ट्रस्य **उभयोः** आवयोः त्वयि च मयि च **मित्रप्रतीक्षया** मित्रभूताविति प्रतीक्षया दृष्ट्या, **अपवादतितिक्षाभ्यां** अपवादः सारथिं हिंसितवानित्यपवादः, अत एव तितिक्षा मम क्षमा, इत्येतैस्त्रिभिर्जीवसि। दुर्योधनेन तवापि मित्रत्वेन स्वीकारात्, उक्तलोकापवादभयात्, मम क्षमथा च जीवसीति भावः।

**श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज।**
**कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ ॥ ५६ ॥**

**श्रोतारस्त्विदमद्येह** इत्यत्र हृदं कर्णं वा जघ्नतुः कृष्णौ, कर्णो वा निजघान तौ इतीदं प्रमेयं, अद्य सर्वे श्रोतारः श्रोष्यन्ति द्रष्टारो द्रक्ष्यन्तीति योजना। श्रोतारो द्रष्टार इति द्वयमपि लुटि बहुवचनम्।

॥ इति चत्वारिंशोऽध्यायः ॥

---

१. **'धर्मार्तः'** इति कुं पाठः। २. BORI पृ. २३३; **क्षाभिः** इति कुं पाठः।

## ।। अथ एकचत्वारिंशोऽध्यायः ।।

[१]**अथ हंसाः समुद्रान्ते प्रजग्मुरतिपातिनः ।**
**गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः** ।। १५ ।।

**गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतस** इत्यत्र **चक्राङ्गाः** हंसाः । 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः'[२] इत्यमरः ।

**कथं हंसं नु बलिनं चक्राङ्गं दूरपातिनम् ।**
**काको भूत्वा निपतने समाह्वयसि दुर्मते ।**
**कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत्** ।। २३ ।।

**कथं त्वं पतिता काक** इत्यत्र **पतिता** पतनकर्ता । ऋकारान्तमिदं पदम् । 'भविता' इतिवत् लुटो वा रूपम् ।

**शतमेकं च पातानां पतिताऽस्मि न संशयः ।**
**शतयोजनमेकैकं विचित्रं विविधं तथा** ।। २५ ।।

**शतमेकं च पातानां पतिताऽस्मि न संशय** इत्यत्र शतयोजनपर्यन्तं गत्वा श्रमपरिहाराय एकस्मिन् वृक्षे निवासे क्रियमाणे सति स एकः पातः । एवं सङ्ख्यया एकोत्तरशतं पातान् पतामि । उक्तविधया एकोत्तरशतपातैरपि दशसहस्रयोजनेभ्यः उपरि एकशतयोजनपर्यन्तं पतामि । न तु तदुपरि पतितुं शक्तोऽस्मीति भावः ।

**उड्डीनमवडीनञ्च प्रडीनं डीनमेव च ।**
**निडीनमथ सण्डीनं तिर्यग्डीनगतानि च** ।। २६ ।।

---
१. कुं ३५ अध्यायः ।;   २. अ.को.२.५.२३

**विडीनं परिडीनञ्च पराडीनं सुडीनकम् ।**
**अतिडीनं महाडीनं खडीनं [1]डीनडीनकम् ॥ २७ ॥**

**अवडीनं प्रडीनञ्च [2]सण्डीनं डीनडीनकम् ।**
**सण्डीनोड्डीनडीनञ्च पुनर्डीनविडीनकम् ।**
**सम्पातं समडीनं च [3]ततोऽन्यद्व्तिरश्चकम् ॥ २८ ॥**

**उड्डीनमवडीनञ्च प्रडीनं डीनमेव च** इत्यत्र **उड्डीनं** ऊर्ध्वगमनम् । **अवडीनं** अधोगमनम् । **प्रडीनं** शीघ्रगमनम् । **डीनं** समतया गमनम् । **निडीनं** ईषत्पक्षौ निगूह्य गमनम् । **सण्डीनं** सम्यक् पक्षौ विस्तार्य गमनम् । **विडीनं** विरोधे सति मुखमुद्यम्य गमनम् । **परिडीनं** परितो गमनम् । **पराडीनं** परावृत्य गमनम् । **सुडीनं** सुखेन गमनम् । **अतिडीनं** एकस्मादति श्येन गमनम् । **महाडीनं** क्षणे क्षणे पक्षपातेन गमनम् । **खडीनं** आकाशं प्रत्युद्गमनम् । **वरडीनं** वरेण वरणेन भक्षणयोग्यभेकादीनां सङ्ग्रहेण गमनम् । पुनरवडीनं प्रडीनश्चेत्यादिना स्वाधोगमन एव प्रडीनादिभेदाः कथ्यन्ते । **डीनडीनकं** मन्दमन्दगमनम् ।अत्राप्युड्डीनपदेन [4]अधोगमन एव शलभादिभक्षणाय किञ्चिदूर्ध्वगमनञ्च गृह्यते । सम्पातं शीघ्रगमनम् । समडीनं समतया गमनम् । ततोऽन्यत् वितिरश्चकं विशेषेण तिरश्चीनं, अधोगमनेऽपि कदाचित्तिर्यग्गमनम् ।

**[5]गतागतप्रतिगता बह्वीश्च [6]निकनीनकाः ।**
**कर्तास्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् ॥ २९ ॥**

---

१. **'वरडीनकम्'** इति कुं पाठः । ; २. **'सुडीनम्'** इति कुं पाठः ।
३. **'-व्यतिरिक्तकम्'** इति कुं पाठः ।; ४. **'रोधो गमन एव'** सो.मु.पा.।
५. **'गतागतं प्रतिगतम्'** सो.मु.पा.; ६. **'निकुडीनकाः'** इति कुं पाठः।

**गतागतप्रतिगता बह्वीश्च निकनीनका** इत्यत्र गतागतप्रतिगताः बह्वीः[1] निकनीनकाः[2] नितरां निकृष्टाः भूमावेव पदाभ्यां उत्प्लुत्योत्प्लुत्य गतीः[3] कर्ताऽस्मि । स्वस्य सर्वदा बल्यादिभक्षणाय अधोगमन एवातिपाण्डित्यात् तस्यैव विशिष्य वर्णनम् । 'प्रडीनाड्डीन-सण्डीनान्येताः खगगतिक्रियाः'[4] इत्यमरः । 'डीङ् विहायसा गतौ' इति धातुः ।

**शतमेकञ्च पातानां त्वं काक पतिता ध्रुवम् ।**
**एकमेव तु यं पातं विदुः सर्वे विहङ्गमाः ।**
**तमहं पतिता काक नान्यं जानाति कश्चन ॥ ३३ ॥**

**एकमेव तु यं पातम्** इत्यत्र शतं वा सहस्रं वा लक्षं वा अवधीकृत्य यत्र पतितुमिच्छा तावत्पर्यन्तं मध्ये अवच्छेदं विहाय यं पातं एकमेव विदुः तं पातं अहं पतितास्मीति योजना ।

**अथ काकाः प्रजहसुर्ये तत्रासन् समागताः ।**
**कथमेकेन पातेन हंसः पातशतं जयेत् ॥ ३४ ॥**
**एकेनैव[5] सताप्येष पातेनाभिपतिष्यति ।**
**हंसस्य[6] पतितं काको बलवानाशुविक्रमः ॥ ३५ ॥**

**एकेनैव सताप्येष पातेनाभिपतिष्यति । हंसस्य पतितं काका**

---

१. **'बह्वीः बह्व्यः'** सो.मु.पा.; २. **'निकुडीनकाः'** सो.मु.पा.।
३. **'गतयः'** सो.मु.पा.; ४. अ.को.२.५.३७।
५. **'एकेन वायस त्वैनं सताप्येष पातेनाभिविष्यति'** इति कुं पाठः ।
६. BORI.पृ.२३८. **'हंसश्चोत्पतितः'** इति इति कुं पाठः ।

इत्यत्र एष पुष्टाङ्गः काकः हंसस्य पतितं सता एकेनैव पातेन अभिपतिष्यतीति काकाः प्रजहसुरिति पूर्वेणान्वयः ।

**रोरुयन्निव चाप्येनं समाव्हयति वै मुहुः ।**
**[१]विशिशिष्मयिषुः पातैः दशयन्नात्मनः क्रियाम् ॥ ४१ ॥**

**विशिशिष्मयिषुः पातैः** इत्यत्र पातैः **विशिशिष्मयिषुः** हंसाद्विशेषयितुमिच्छुः ।

**उत्पत्योत्पत्य च प्राहुः मुहूर्तमिति चेति च ।**
**वृक्षाग्रेभ्यः स्थलैभ्यश्च निपतन्त्युत्पतन्ति च ॥ ४४ ॥**

**मुहूर्तमिति चेति च** इत्यत्र मुहूर्ते प्रतिक्षध्वमिति च मुहूर्ते प्रतीक्षध्वमिति च पुनः पुनः प्राहुः ।

**[२]मृदुनैकेन हंसस्तु विक्रान्तुमुपचक्रमे ।**
**प्रत्यहीयत काकाच्च मुहूर्तमिव मारिष ॥**

**मृदुनैकेन हंसस्तु** इत्यत्र **एकेन** एकप्रकारेण । **मृदुना** मन्दगमनेन ।

**उपर्युपरि वेगेन सागरं मकरालयम् ।**
**बहुसत्वसमाकीर्णं वीचिभिर्भीमदर्शनम् ॥ ४७ ॥**

**उपर्युपरि वेगेन** इत्यत्र **उपर्युपरि** अग्रेअग्रे ।

**[३]भीश्चैनं प्राविशत्तीव्रं काकं कर्णविचेतसम् ।**

---

१. '**विसिस्मापयिषुः**' इति कुं पाठः ।; २. BORI.पृ.२३९ .
३. '**भीश्चैनमाविशत्तीव्रम्**' इति कुं पाठः ।

**द्वीपान् द्रुमान्वितान् पश्यन् विश्रमार्थं श्रमातुरः ।**
**निपतेयं क्व नु श्रान्त इति [१] तस्मिन् महार्णवे ॥ ४९ ॥**

**निपतेयं क्व नु श्रान्त इति तस्मिन्महार्णव** इत्यत्र श्रान्तोऽहं महार्णवे क नु निपतेयं इति भीः प्राविशदिति पूर्वेणान्वयः ।

**[२] अविषह्यः समुद्रो हि बहुसत्त्वगणालयः ।**
**महान्भूतशतोद्भासी नभसस्तुविशिष्यते ॥ ५० ॥**

'अविषह्यः' इत्यादि शल्यवचनम् ।

**गाम्भीर्याद्धि समुद्रस्य न विशेषं [३] हि सूतज ।**
**[४] दिगम्बराम्भसा कर्ण समुद्रस्था विदुर्जनाः ।**
**[५] विदूरपातात् तोयस्य किं पुनः कर्ण वायसः ॥ ५१ ॥**

**न विशेषं हि सूतज** इत्यत्र समुद्रस्था जनाः दिगम्बराम्भसा दिगेव अम्बरमम्बरस्थानीयं यस्य तद्दिगम्बराम्भः, तेन कारणेन । दिगन्त-विश्रान्तोदकत्वादिति यावत् । समुद्रस्य गाम्भीर्यात् विशेषं न विदुः । हे कर्ण, वायसः विदूरपातात् तोयस्य समुद्रजलस्य गाम्भीर्याद्विशेषं न वेत्तीति किं पुनः ?

* * *

---

१. $K_3$.$Dn_1$; BORI पृ. २४०; **'तस्मिञ्जलार्णवे'** इति कुं पाठः ।
२. BORI. पृ.२४०. **'अविगाह्य'** इति कुं पाठः ।
३. $K_3$.$D_{2\text{-}5\cdot7\cdot8}$; BORI पृ. २४०; **'कुलाधम'** इति कुं पाठः ।
४. $K_4$; BORI पृ. २४१; **'दिशश्च नाम्भसां कर्ण'** इति कुं पाठः ।
५. BORI.पृ.२४१. **'विपश्चितोऽप्यपारत्वात्'** इति कुं पाठः ।

**अथ हंसोऽप्यतिक्रामन्[१] मुहूर्तमिति चेति च।**
**अवेक्षमाणस्तं काकं[२] नाशकद् व्यपसर्पितुम् ॥ ५३ ॥**

**मुहूर्तमिति चेति च। अवेक्षमाणस्तं काकं नाशक्नोद् व्यपसर्पितुम्** इत्यत्र मुहूर्तमिति चेति च उक्त्वा तम् अवेक्षमाणः हंसः तं काकं **व्यपसर्पितुं** विशेषेण अपसर्पयितुं प्रापयितुं नाशकदिति योजना।

**बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः।**
**पतस्यव्याहरन् खेदं ततो गर्ह्य प्रभाषसे ॥ ५५ ॥**

**बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः** इत्यत्र यस्त्वं बहूनि **पतितानि पतनानि मुहुर्मुहुराचक्षाण एव अपतः।**

**[३]पातवेगप्रमथितो हंसं काकोऽब्रवीदिदम्।**
**वयं काकाः कुतो नाम चरामः काकवाचकाः।**
**हंस प्राणैः प्रपद्ये त्वामुदकान्तं नयस्व माम्॥**

**चरामः काकवाचका** इत्यत्र **काकवाचकाः** स्वसहायभूतकाकान्तरं वदन्त्याह्वयन्तीति काकवाचकाः, का का इति स्वरवाचका वा, तत्रापि काकैरेव सह चरामः। न तु विशिष्टैस्त्वादृशैः सहेति-स्वदोषोत्कीर्तनम्।

**शतमेकं च पातानां[४] पताम्यहमनुस्मर।**

---

१. BORI पृ.२४१.'मुहूर्तमिव दूरतः' इति कु पाठः।
२. $S_2, K_3, V_1$; BORI पृ. २४१; **'प्रत्यागम्य हसन्निव'** इति इति कुं पाठः।
३. BORI.पृ.२४२.
४. $B_{1,3-5}$; BORI पृ. २४२; **'पताम्यहमिति स्म ह'** इति कुं पाठः।

**[१]श्लाघमानस्त्वमात्मानं काक भाषितवानसि ॥ ६० ॥**

**शतमेकं च पातानाम्** इत्यत्र हे काक, आत्मानं श्लाघमानस्त्वं पातानां शतं तदुपरि एकं च पतामीति यद्भाषितवानसि तदनुस्मरेति योजना ।

॥ इति एकचत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

**[२]सूत त्वया ह्याप्तमिदं तवास्त्रं**
**न कर्मकाले [३]प्रतिभास्यति त्वाम् ।**
**अन्यत्र [४]तस्मात् तव मृत्युकाला-**
**दब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ॥ ११ ॥**

**अन्यत्र तस्मात्तव मृत्युकालादब्राह्मणे ब्रह्म नहि ध्रुवं स्यात्** इत्यत्र तस्मात् कारणात् तव मृत्युकालादन्यत्र कर्मकाले कञ्चिद्धन्तुं प्रयोगकाले तव त्वया आप्तमिदमस्त्रं त्वां प्रति न प्रतिभास्यतीति योजना । मृत्युकाले प्रतिभास्यति न तु ततोऽन्यत्रेति भावः । **अब्राह्मणे** ब्रह्मक्षत्रियवैश्याख्यब्राह्मणादन्यस्मिन् सूतादौ ।

**कालस्त्वयं प्रत्युपयाति दारुणो**
**दुर्योधनो युद्धमुपागमद्यत् ।**

---

१. $K_4.B_5$; BORI पृ. २४२; '**श्लाघन्नात्मानमद्यत्वम्**' इति कुं पाठः ।
२. कुं ३६ अध्यायः ।
३. BORI.पृ.२४७.'–तीति' कुं पाठः ।
४. $K_1.V_1.B.Dn_1.D_{2\text{-}4\text{-}6\text{-}8}.T_{1\text{-}2}.M$; BORI पृ. २४७; '**तु स्यात्**' इति कुं पाठः ।

**तस्यार्थसिद्धिमभिकांक्षमाण-**
**[१]स्त्वं मन्यसे यत्र नैकान्त्यमस्ति ॥ ३२ ॥**

**तस्यार्थसिद्धिमभिकांक्षमाणस्त्वं मन्यसे यत्र नैकान्त्यमस्ति** इत्यत्र यत्र **ऐकान्त्यं** दार्ढ्यं नास्ति तत् मन्यसे । दुर्योधनहिताय प्रवृत्तस्त्वं तदर्थं योद्धुं मम दार्ढ्यं यथा न भवति तथा वदसीति भावः ।

**[२]मित्रं मित्रे वै नन्दते प्रीयते वा**
**संह्लादते मानद मोदते वा ।**
**दुर्योधने सर्वमिदं ममास्ति**
**तच्चापि सर्वं मम वेति राजा ॥ ३४ ॥**

**मित्रं मित्रे वै नन्दते प्रीयते वा** इत्यत्र नन्दप्रीतिह्लादमोदशब्दैः, मित्रकृतधर्मदर्शनात् य आनन्दः, तदर्थलाभदर्शनाद्या प्रीतिः, एतेन भुज्यमानकामदर्शनाद्य आह्लादः, तत्कृतमोक्षोपयोगिप्रयत्नदर्शनाद्यो मोदः स चोच्यते ।

**[३]शत्रुः सदा शातते शासते च**
**शृणोति वा शंसते वाऽपि शल्य ।**
**उपसर्गाद्बहुधा सीदते च**
**प्रायेण सर्वं त्वयि तच्च मह्यम् ॥ ३५ ॥**

---

१. '–स्तमन्वेष्ये यत्र चैकान्तयमस्ति' इति कुं पाठः ।
२. 'मित्रं मिन्देर्नन्दतेः प्रियतेर्वा संत्रायतेर्मिनुतेर्मोदतेर्वा' इति कुं पाठः ।
३. 'शत्रुः शदेः शासतेर्वा श्यतेर्वा शृणुतेर्त्रा श्वसतेः सीदतेर्वा । श्रमेः शुचो बहुशः सूदतेश्च' इति कुं पाठः ।

**शत्रुः सदा शातते शासते च शृणोति वा शंसते वाऽपि शल्य** इत्यत्र **शातते** शस्त्रेण हन्तीति शत्रुः । **शासते** शिक्षते इति च शत्रुः । 'शृ पाके' इति धातोः **शृणोति** गृहदाहादिना दहतीति च शत्रुः । **शंसते** 'शंसु स्तुतौ' इति धातोः सदा शत्रुं स्तौतीति च शत्रुः । **उपसर्गात्** नानोपद्रवात् बहुधा **सीदते** व्यथयतीति च शत्रुः, शकारानुप्रवेशाय शीर्यते अनेनेति व्युपत्तिरत्रोह्या ॥

**अस्त्रं ब्राह्मं मनसा सञ्जपन् वै**
**यदास्यते क्रोधितः सव्यसाची ।**
**तदापि मे नैव मुच्येत पार्थो**
**न चेत् पतेद्विषमे मेऽद्य चक्रम्** ॥ ३८ ॥

**न चेत् पतेद्विषमे मेऽद्य चक्रम्** इत्यत्र मे मम चक्रं रथचक्रं विषमे कर्दमादौ न पतेच्चेदिति योजना ।

**श्वभ्रे ते पततां चक्रं इति मां ब्राह्मणोऽब्रवीत् ।**
**युध्यमानस्य सङ्ग्रामे प्राप्तस्यैकायने भयम्** ॥ ४३ ॥

**श्वभ्रे ते पततां चक्रम्** इत्यत्र श्वभ्रे भूगर्ते । 'रन्ध्रं श्वभ्रं वपा शुषिः'[१] इत्यमरः ।

**तस्माद्बिभेमि बलवद् ब्राह्मणव्याहृतादहम् ।**
**एते हि सोमराजान ईश्वराः सुखदुःखयोः** ॥ ४४ ॥

**एते हि सोमराजान** इत्यत्र सोमेन सोमरसेन राजन्त इति **सोमराजानः** सोमपायिनो ब्राह्मणाः ।

---

१. अ.को.१.८.२ ।

**मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं त्वया कृतम् ॥ ५७ ॥**

[१] **मा त्वं ब्रह्मगतिं हिंस्याः** इत्यत्र यत्प्रायश्चित्तं त्वया कृत तेन ब्रह्मगतिं ब्राह्मणगतिं सत्यवादाख्यगतिं मा हिंस्याः इति योजना ।

॥ इति द्विचत्वारिंशोऽध्यायः ॥

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

**शल्य उवाच –**

**[२] आर्तप्रलापांस्त्वं कर्ण यान् ब्रवीषि परान् प्रति ।**
**न ते कर्णसहस्रेण शक्या जेतुं परा युधि ॥ ११ ॥**

[३] **शक्या जेतुं परा युधि** इत्यत्र मयापीति योग्यपदाध्याहारेण योजना ।

**हे हते हे हतेत्येवं स्वामिभर्तृहतेति च ।**
**आक्रोशन्त्यः प्रनृत्यन्ति मन्दाः पर्वस्वसंयताः ॥ २५ ॥**

**हे हते हे हतेत्येवं स्वामिभर्तृहतेति च** इत्यत्र हे हते जारेण हते ताडिते इति कस्याश्चिदाक्रोशः । त्वमपि हता जारेण हता इत्यन्यस्याः आक्रोशः.। स्वामिभर्तृहता स्वामिनी श्वश्रूः भर्ता च हतौ ययेति पुनरन्यस्याः आक्रोशः ।

**सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ।**
**कश्चिद्वाल्हीकदुष्टानां नातिहृष्टमना जगौ ॥ २६ ॥**

---

१. 'मात्र' सो.मु.पा.; २. BORI.पृ.२५८ । कुं. ३७ अध्यायः ।
३. 'शक्यं जेतुं परान् युधि' सो.मु.पा.।

**कश्चिद्बाल्हीकदुष्टानां नातिहृष्टमना** इत्यत्र बाल्हीकदुष्टानां मध्ये विद्यामानः कश्चित्पुरुषः ।

**शतद्रुं नु कदा तीर्त्वा तां च रम्यामिरावतीम् ।**
**गत्वा स्वदेशं द्रक्ष्यामि [१]स्थूलशङ्खाः शुभाः स्त्रियः ।**
**[२]मनःशिलोज्ज्वलापाङ्गाः [३]गौर्यस्त्रिककुदाञ्जनाः ॥ २७ ॥**

**स्थूलशङ्खाः शुभाः स्त्रियः । मनःशिलोज्ज्वलापाङ्गाः गौर्यस्त्रिककुदाञ्जना** इत्यत्र **स्थूलशङ्खाः** शङ्खकृतताटङ्का यासां ताः । **त्रिककुदाञ्जनाः** त्रिभिः ककुदैः श्रेष्ठद्रव्यैः कृतमञ्जनं यासां ताः तथोक्ताः ।

**नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ॥ ३५ ॥**
**[४]कदा च हैलिका गाथाः पुनर्गास्यामि शाकले ॥ ३६ ॥**

**कदा च हैलिका गाथा** इत्यत्र हेला लीला, तत्सम्बन्धिन्यः **हैलिकाः** ।

**शतद्रुश्च विपाशा च तृतीयैरावती तथा ।**
**पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्यपि ॥ ४२ ॥**

**यत्र पीलुवनान्यपि** इत्यत्र पीलुः मद्यजनको मधुवृक्षः । 'पीलुर्गुडफलः स्रंसी'[५] इत्यमरः ।

---

१. BORI.पृ.२६०. **'स्थूलजङ्घा'** इति कुं पाठः ।
२. BORI.पृ.२६०.**'मनःशीलोज्ज्वलापाङ्गो'** इति कुं पाठः ।
३. BORI.पृ.२६०. **'गौर्यसताः काकुपूजिताः'** इति कुं पाठः ।
४. **'कथं वस्तादृशो गाथाः'** इति कुं पाठः । BORI.पृ.२६२.
५. अ.को.२.४.२८ ।

**व्रात्यानां दासमीयानां विदेहानामयज्वनाम् ।**
**न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ॥ ४४ ॥**
**तेषां प्रणनष्टधर्माणां बाह्लीकानामिति श्रुतिः ॥ ४५ ॥**

**व्रात्यानां दासमीयानाम्** इत्यत्र दासैः शूद्रैः ब्राह्मण्यां मीयन्ते जायन्ते इति दासमीयाः । 'माङ् माने' इति धातुः । जातिभ्रष्टा इत्यर्थः। तेषाम् । हीनदेशस्था[१] जातिभ्रष्टाः जातिविशेषा वा वैश्यात् ब्राह्मण्यां जाता वैदेहिकाः 'तस्यां [२]वैदेहिको विशसः'[३] इत्यमरः ।

**युगान्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ।**
**तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ॥ ५० ॥**

**तद्वद्भूतिलये स्नात्वा** इत्यत्र भूतिर्भस्म । 'लीङ् श्लेषणे' इति धातोः लयः सम्बन्धः । भस्मकलिलोदके इत्यर्थः । 'भूतिर्भसितं भस्म क्षारो रक्षा च निर्दिष्टम्'[४] इति हलः ।

॥ इति त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः॥

**[५]अटता तु मया देशान् नानाधर्मसमाकुलान् ।**
**आगच्छता महाराज बाह्लीकेषु निशामितम् ॥ ५ ॥**

**बाह्लीकेषु निशामितम्** इत्यत्र निशामितं दृष्टम् ।

---

१. 'देशभ्रष्टाः' सो.मु.पा.; २. 'वैदेहकः' सो.मु.पा.
३. अ.को.२.१०.३ ; ४. ह.को.१.६९
५. कुं.३८ अध्यायः ।

**बालां बन्धुमतीं यन्मामधर्मेणोपगच्छथ ।**
**[१]तस्मान्नार्यो भविष्यन्ति बन्धक्यो वै कुलेषु वः ॥ १२ ॥**

**बन्धक्यो वैकुलेषु व** इत्यत्र बन्धक्यः स्वैरिण्यः । 'पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी'[२] इत्यमरः ।

**चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम् ।**
**नानादेशेष्वसन्तश्च [३]प्रायो बाह्यालयादृते ॥ १५ ॥**

**प्रायो बाह्यालयादृत** इत्यत्र बाह्यालयात् चाण्डालगृहात् ऋते ।

**पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते ।**
**धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥ १९ ॥**

**धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामह** इत्यत्र **पाञ्चनदं** पञ्चनदीसम्बन्धदेशस्थानाचारं दृष्ट्वा पितामहः ब्रह्मा धर्मं प्रति धिगित्याह । सर्वत्र सञ्चरतस्तव अस्मिन् पाञ्चनददेशे प्रवृत्तिर्नाभूदिति भावः ।

**व्रात्यानां दाशकीयानां [४]कृतेऽप्यशुभकारिणम् ।**
**[५]इदं पञ्चनदं धर्ममवमेने पितामहः ॥ २० ॥**

**कृतेऽप्यशुभकारिणम्** इत्यत्र **कृतेऽपि** कृतयुगेऽपि **इदं** पाञ्चनदमाचारं दृष्ट्वा धर्ममवमेने । अत्र तव [६]प्रचारशक्तिर्नाभूदित्यवमेने ।

---

१. **'तस्मात् कुमार्यः स्वैरिण्यः भविष्यन्ति कुलेषु वः'** इति कुं पाठः ।
२. अ.को.२.६.१० ।; ३. BORI.पृ.२६७; **'–यानृते'** इति कुं पाठः ।
४. $G_{1\cdot 2}$; BORI.पृ.२६३; **'–कर्मणाम्'** इति कुं पाठः ।; ५. **'इति'** कुं पाठः
६. **'प्रचाराय शक्तिः'** सो.मु.पा.।

**स्वधर्मस्थेषु वर्णेषु सोऽप्येतान् नाभ्यपूजयत् ॥ २१ ॥**

**स्वधर्मस्थेषु वर्णेषु** इत्यत्र अन्यत्र वर्णेषु स्वधर्मस्थेषु सत्स्वपि एते तथा नेति एतान् स पितामहः नाभ्यपूजयदिति योजना ।

**मानुषाणां मलं म्लेच्छा [१]म्लेच्छानामौष्ट्रिका मलम् ।**
**मुष्टिकानां मलं षण्ढाः षण्ढानां राजयाजकाः ॥ २५ ॥**

**म्लेच्छानामौष्ट्रिका मलम्** इत्यत्र **औष्ट्रिकाः** उष्ट्रमांसभक्षकाः । 'म्लेच्छानां मौष्टिका मलम्' इति पाठे **मौष्टिका** मुष्टिकाख्यकुले माता इत्यर्थः ।

**राजयाजकयाज्यानां मद्रकाणां च यन्मलम् ।**
**तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ॥ २६ ॥**

**राजयाजकयाज्यानाम्** इत्यत्र राजयाजकेन याज्यानां पोष्याणाम् । हे राजन्, यदि अस्मान् न विमुञ्चसि, [२]राक्षस इति कृत्वा घातयसि तर्हि राजयाजकयाज्यानां मद्रकाणां च यन्मलं तन्मलं तव भवेदिति योजना ।

**इति [३]रक्षोविसृष्टेषु विषवीर्यहतेषु च ।**
**[४]रक्षसा भैषजं प्रोक्तं संसिद्धश्च नचोत्तरम् ॥ २७ ॥**

**रक्षसा भैषजं प्रोक्तं संसिद्धश्च नचोत्तरम्** इत्यत्र रक्षोविसृष्टेषु

---

१. $B_{1\cdot3\cdot5}$; BORI.पृ.२६८; **'म्लेच्छानां मुष्टिका मलम्'** इति कुं पाठः ।
२. **'राजसः'** सो.मु.पा.; ३. **'रक्षोप'** सो.मु.पा.
४. **'विद्वद्भिर्भेषजं दृष्टं संसिद्धवचनोत्तरम्'** इति कुं पाठः ।

रक्षोभिः विविधतया सृष्टेषु । विषवीर्यहतेषु, विषमिव विषं द्वेषेर्ष्यादिकं, तेन हता लोका यैस्ते विषवीर्यहताः, तेषु भवादृशेषु । रक्षसा **भैषजं** भवतां विषवीर्यप्रशमनाय नीत्याख्यमौषधं प्रोक्तम् । हे शल्य **अतः** परं तव उत्तरं च न संसिद्धम् ।

**ब्राह्मं[1] पाञ्चालाः कौरवेयास्तु धर्म्याः**
**सत्या मत्स्याः शूरसेनाश्च [2]यज्ञम् ।**
**प्रच्या दासा वृषला दाक्षिणात्याः**
**स्तेना बाल्हीकाः सङ्करा वै सुराष्ट्राः ॥ २८ ॥**

**ब्राह्मं पाञ्चाला** इत्यत्र **ब्राह्मं** ब्राह्मणपूजनम् । 'शूरसेनाश्च यज्ञम्' इत्यतः परं कुर्वन्तीति क्रिया योज्या ।

**येषां धर्मस्तान् प्रति नास्त्यधर्म**
**[3]ह्यारदेजान् पाञ्चनदान् धिगस्तु ।**
**आपञ्चालाः कुरवो नैमिशाश्य**
**मत्स्याश्चैवाप्यनुजानन्ति धर्मम् ॥ २९ ॥**

**आरदेजान् पाञ्चनदान्** इत्यत्र **आरदेजान्** आरदाख्यदेशे जातान् ।

**सर्वज्ञा यवना राजन् शूराश्चैव विशेषतः ।**
**पार्वतीयाश्च विषमा यथैव गिरयस्तथा ॥ ३५ ॥**

**पार्वतीयाश्च विषमा** इत्यत्र विषमाः उक्तस्य प्रतीपकारिणः ।

---

१. **'ब्रह्माः पञ्चालाः'** इति कुं पाठः ।; २. **'याज्याः'** इति कुं पाठः ।
३. **'आरट्टजान्'** इति कुं पाठः ।

**म्लेच्छाः स्वसञ्ज्ञानियता नानुक्तमितरे जनाः ॥ ३५ ॥**

**म्लेच्छाः स्वसञ्ज्ञानियता** इत्यत्र म्लेच्छाः **स्वसञ्ज्ञानियताः** स्वकृतसङ्केतनियताः । **इतरे** पामरजनाः अनुक्तं न जानन्ति, उक्तमेव जानन्तीत्यर्थः ।

**प्रतिरब्धास्तु बाह्लीका न च केचन मद्रकाः ।**
**सत्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ॥ ३६ ॥**

**प्रतिरब्धास्तु बाह्लीका** इत्यत्र **प्रतिरब्धाः**, प्रतिरम्भः संरम्भः कोपः,तेन सहिताः । मद्रकास्तु केचन प्रतिरब्धा न, प्रायशः प्रतिरब्धा एवेत्यर्थः ।

**रमन्ते चोपहासेन पुरुषाः पुरुषैः सह ।**
**अन्योन्येन रताः क्षीबाः देशे देशे [1]समैथुनाः ॥ ४१ ॥**

**देशे देशे समैथुना** इत्यत्र योग्यमैथुनाभावे सन्तानाभिवृद्धे-रेवायोगात् मैथुनमात्राच्च न दोष इति भावेनोक्तम् – 'देशे देशे समैथुनाः' इति ।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

**[2]पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे ।**
**युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ ४२ ॥**

---

१. BORI. पृ.२७२. 'च मैथुनम्' इति कुं पाठः ।; २. कुं ४१ अयायः ।

**परानीकं प्रकाशत** इत्यत्र तेन व्यूहेनेति योग्यपदाध्याहारः ।

**[१]अग्निर्वैश्वानरः पूर्वं ब्रह्मेन्दुः सप्तितां गतः ।**
**तस्माद्यः प्रथमो जातस्तं देवा ब्राह्मणा विदुः ॥**

**अग्निर्वैश्वानर** इत्यत्र वैश्वानर इत्यग्नेर्विशेषणम् । सप्तितां सप्तीनां तुरगाणं भावः सप्तिता, ताम् । [२]'सप्तिर्वाजी तुरङ्गमस्तुरगः' इति हलः । अर्जुनरथाश्वषु अग्न्यादीनां सन्निधानादेवमुक्तिरिति ज्ञेयम् । तस्मात्कारणात् यः अर्जुनरथः प्रथमः सर्वरथानां श्रेष्ठः ।

**[३]एतच्चक्रं गदा शार्ङ्गं शङ्खः कृष्णस्य धीमतः ।**
**अत्यर्थं भ्राजते कृष्णे कौस्तुभस्तु मणिस्ततः ॥**

**एतच्चक्रं गदा शार्ङ्गं शङ्ख** इत्यत्र स्वस्य परमपुरुषत्वद्योतनाय चक्रशङ्खगदाशार्ङ्गादिकमपि कृष्णेन स्वागमनसमये प्रदर्शितमिति भावः ।

**[४]दृश्यन्त एते कार्ष्णेयाः पञ्च पञ्चाचला इव ।**
**व्यवस्थिता योत्स्यमानाः सर्वेऽर्जुनसमा युधि ॥**

**[५]कार्ष्णेयाः पञ्च पञ्चाचला** इत्यत्र [६]**कार्ष्णेयाः** कृष्णासुताः ।

॥ इति पञ्चचत्वारिंशोऽध्यायः ॥

---

१. BORI. पृ.२७७.; २.ह.को.२.४३६.
३. BORI. पृ.६३७.
४. BORI. पृ.२८२.
५. **'कार्ष्णेयाः पञ्च पाञ्चाला इत्यत्र'** सो.मु.पा.
६. **'कार्ष्णेयाः कृष्णसुताः'** सो.मु.पा.

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

[१]एते च त्वरिता वीरा वसुषेणमताडयन्
जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ॥ ३७ ॥

**वसुषेणमताडयन्** इत्यत्र **वसुषेणं** कर्णम् ।

आगच्छत प्रहरत [२]प्रैताभिपततेति च ।
इति ब्रुवाणा ह्यन्योन्यं जघ्नुर्योधा महारणे ॥

**प्रैताभिपततेति च** इत्यत्र **प्रैत** प्रकर्षेण इत गच्छत ।

व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणा क्षितीश्वराः ।
[३]प्रणवादिव शैलानां वज्रभिन्नानि मारिष ॥ ९० ॥

**प्रवणादिव** [४]**शैलानां** इत्यत्र प्रवणात् क्रमनिम्नभूप्रदेशात् । [५]'प्रवणः क्रमनिम्नोर्व्याम्' इत्यमरः ।

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

[६]ऐष त्वां प्रेक्षते कर्णः सकटाक्षं [७]विशाम्पते ।
उत्तमं यत्नमास्थाय ध्रुवमष्यति संयुगे ॥ २० ॥

---

१. कुं.४४ अध्यायः ।; २. BORI. पृ.२९९.'क्षिप्रं विपरिधावत' कुं पाठः
३. 'शिखराणीव' इति कुं पाठः ।; ४.'शैलानि' सो.मु.पा.।
५. अ.को.३.३.५६.; ६. कुं. ६२ अध्यायः ।
७. BORI. पृ.३६५. 'धनञ्जय' इति कुं पाठः ।

**एष त्वां प्रेक्षते कर्णः सकटाक्षं विशाम्पत** इत्यत्र **सकटाक्षं** कटाक्षेण सहितं यथा भवति तथा।

॥ इति एकोनषष्ठितमोऽध्यायः ॥

## ॥ अथ षष्टितमोऽध्यायः ॥

[१]**अभीक्ष्णं चोदयन्नश्वान् प्रक्षते मां मुहुर्मुहुः।**
**न च [२]पश्यामि समरे [३]कर्णं प्रति पलायितुम्** ॥ ६३ ॥

**न च पश्यामि समरे कर्णं प्रति** इत्यत्र कर्णं प्रति **पलायितुं** गन्तुं मां विना अन्यं न पश्यामीति योजना।

॥ इति षष्टितमोऽध्यायः ॥

## ॥ अथ एकषष्टितमोऽध्यायः ॥

[४]**तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय।**
**आत्मनो मरणं जानन् [५]वार्ध्रानस इव द्विपात्** ॥ १९ ॥

**आत्मनो मरणं जानन् वार्ध्रानस इव द्विपात्** इत्यत्र कर्णकृत-पराभवमेव आत्मनो मरणं जानन्नहं **वार्ध्रानसः** महिषः द्विपादिव परिदह्य इति योजना।'महिषः सैरभ उक्तो रक्ताक्षः कासरो लुलायश्च। वार्ध्रानसश्च खड्गी दण्डक इति कथ्यते सद्भिः'[६] इति हलः ॥अ.६१॥

---

१. कुं. ६७ अध्यायः।
२. BORI. पृ.३८४.'–शक्ष्यामि कर्णस्य' इति कुं पाठः।
३. $V_1.B_{1-3-4}$; BORI.पृ.३८४; 'संयुगेऽहम्' इति कुं पाठः।
४. कुं. ६९ अध्यायः।; ५. 'वार्ध्रीणस इव द्विजः' इति कुं पाठः।
६. ह.को.२.२२७.

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

**[१]क्षणास्थावित् समरूपो बभूव**
**समार्दितो मद्विसृष्टैः पृषत्कैः ॥**

**क्षणास्थावित् समरूप** इत्यत्र क्षणं **आस्था** युद्धरङ्गे आ सम्यक् स्था स्थितिः, धैर्येण स्थितिरिति यावत् । तां न जानातीति **क्षणास्थावित्** । तस्य समं रूपं यस्य स तथोक्तः । क्षणमात्रं चित्तपारवश्यमभूदिति भावः ।

॥ इति द्विषष्टितमोऽध्यायः ॥

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

**[२]भीतो भीमं त्यज्य चायास्तथा त्वं यन्नाशकः कर्णमथो निहन्तुम् ।**
**हेय स्तयाऽपार्थकृतः पृथाया गर्भं समाविश्य यथा न साधु ॥**

**हेय स्तयाऽपार्थकृत** इत्यत्र अपार्थं व्यर्थं कृतं कर्म यस्य सः अपार्थकृतः । तादृशस्त्वं तया तदैव हेयः । क्षत्रयोनावुत्पत्तुमयोग्यस्य शूरस्य[३] तव गर्भस्राव एवोचित इति भावः ।

**[४]प्रच्छादितं बडिशमिवामिषेण**
**सञ्छादितो गलक इवाशनेन ।**

---

१. **'क्षणास्थावित् समरूपो'** इयं टीका केषुचित् मूलपुस्तकेषु नास्ति ।
२. BORI. पृ.४०१.
३. कचित्पुस्तकेषु 'शूरस्य' इति नास्ति ।
४. BORI. पृ.४०३.

**अनर्थकं मे दर्शितवानसि त्वं**
**राज्यार्थिनो राज्यरूपं विनाशम् ॥**

**सञ्छादितो गलक इवाशनेन** इत्यत्र **अशनेन** अन्नकवलेन सञ्छादितः **गलकः** कण्ठ इवेति दृष्टान्तान्तरमिदम् ।

१
**तथा परेषामृशिसत्तमानां श्रुत्वा गिरः पूजायतां सदा त्वाम् ।**
**न सन्नतिं २प्रैमि सुयोधनस्य न त्वां जानाम्याधिरथेर्भयार्तम् १६**

**न सन्नतिं प्रैमि सुयोधनस्य न त्वां जानाम्याधिरथेर्भयार्तम्** इत्यत्र अतः सुयोधनस्य सन्नतिं न प्रैमीति अतः शब्दाध्याहारेण योजना ।

**त्वष्ट्रा कृतं वाहमकूजनाक्षं**
**शुभं समास्थाय कपिध्वजं त्वम् ।**
**खड्गं गृहीत्वा हेमचित्रावनद्धं**
**धनुर्वरं गाण्डिवं तालमात्रम् ।**
**त्वं वासुदेवेनोह्यमानः कथं नु**
**कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥ १७ ॥**

**त्वष्ट्रा कृतं वाहमकूजनाक्षम्** इत्यत्र न विद्यते कूजनं ध्वनिर्यस्य तदकूजनं, तादृशमक्षं रथचक्रान्तस्थदारु यस्य तं । वहति रथिनमिति **वाहं** रथं इति योजना ।

॥ इति त्रिपष्टितमोऽध्यायः ॥

---

१. कुं ७१ अध्यायः ।; २. BORI. पृ.४०४. **'यामि'** इति कुं पाठः ।

## ।। अथ चतुःषष्टितमोऽध्यायः ।।

[१] तादृशं मन्यतेबालो यस्य सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ।। ३६ ।।

**तादृशं मन्यतेबाल** इत्यत्र अबाल इति पदच्छेदः ।

**प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।। ५९ ।।**

**प्रभवार्थाय भूतानाम्** इत्यत्र प्रभवः अभ्युदयः, तदर्थम् ।

[२] **यश्चात्राधारसंयुक्तः स धर्म इति निश्चयः ।। ५९ ।।**

**यश्चात्राधारसंयुक्तः स धर्म इति निश्चयः** इत्यत्र **आधारः** एकत्राभ्युदयः, अन्यत्राहिंसा ।

**तद्धत्वा सर्वभूतानामभावकृतनिश्चयम् ।**
[३] **ततो बलाकः स्वरगात् एवं धर्मः सुदुर्विदः ।। ४६ ।।**

**ततो बलाकः स्वरगात्** इत्यत्र ततः अन्धवृकहिंसायामपि लोकाभ्युदयाख्याधारस्य सम्पादितत्वात् स्वः स्वर्गमगात् ।

**तत्र [४] तल्लक्षणादेशः कश्चिदेव भविष्यति ।**
**दुष्करं प्रतिसङ्ख्यानं कात्स्न्येंनात्र ह्यवस्थितिः ।। ५५।।**

---

१. कुं.७२ अध्यायः । $S_2.B_5.D_8$; BORI.पृ.४०४; **'तादृशो हन्यते बालो'** इति कुं पाठः ।

२. **'यस्मात्प्रभव'** इति कुं पाठः ।

३. BORI. पृ.४११.**'बलाकोऽगात् स्वर्गलोकम्'** इति कुं पाठः ।

४. **'ते लक्षणोद्देशः'** इति कुं पाठः ।

**तत्र तल्लक्षणादेश** इत्यत्र तेषां सूक्ष्मधर्माणां लक्षणान्यादिशतीति तल्लक्षणादेशः कश्चित्पुरुषः भविष्यतीति योजना ।

**श्रुतिस्तु धार्या इत्येके वदन्ति बहवो जनाः ।**
**[1]तत्त्वेन तत्प्रसूयामि नहि सर्वं विधीयते ॥ ५७ ॥**

**तत्त्वेन तत्प्रसूयामि नहि सर्वं विधीयत** इत्यत्र **तत्** धर्मरहस्यज्ञानं तत्त्वेन **प्रसूयामि** उत्पादयामि । एकस्मिन् वाक्ये सर्वं न विधीयते हि । अतः श्रुतिमीमांसानिपुणैर्बोधनीयमिति भावः।

**यः स्तेनैः सह सम्बन्धो मुच्यते शपथैरपि ।**
**[2]श्रेयस्तत्रानृतं वक्तुं तत् सत्यमविचारितम् ॥ ६४ ॥**

**तत् सत्यमविचारितम्** इत्यत्र **अविचारितम्** असंशयमित्यर्थः ।

**सम्मानितः पार्थिवोऽयं सदैव त्वया च भीमेन तथा यमाभ्याम् ।**
**वृद्धैश्च लोके पुरुषैश्च शूरैस्तस्यावमानं कलया प्रयुङ्क्ष्व ॥८२॥**

**तस्यावमानं कलया प्रयुङ्क्ष्व** इत्यत्र **कलया** लेशेन । महादुरुत्तरं मा ब्रूहीति भावः ।

**त्वमित्यत्र भवन्तं [3]त्वं ब्रूहि पार्थ युधिष्ठिरम् ।**
**त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ८३ ॥**

---

१. '**नत्वेतत्प्रत्य–**' इति कुं पाठः ।

२. BORI. पृ.४१५.'**भवेत् तत्रानृतं श्रेयः सत्यादिति विचारितम्**' इति कुं पाठः ।

३. BORI. पृ.४१८.'**हि**' इति कुं पाठः ।

**त्वमित्यत्र भवन्तं त्वं ब्रूहि पार्थ युधिष्ठिरम्** इत्यत्र हे पार्थ, त्वं अत्र भवन्तं पूज्यं युधिष्ठिरं त्वमिति ब्रूहि । [१] 'अत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते पूज्ये' इति हलः ।

**एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे ।**
**अधर्मयुक्तं [२] त्वं योगं कुरुष्वैनं कुरूद्वह** ॥ ८४ ॥

**अधर्मयुक्तं त्वं योगं कुरुष्वैनं कुरूद्वह** इत्यत्र अधर्मयुक्तं यथा भवति तथा **त्वंयोगं** त्वमिति योगो यस्य तं त्वंयोगं एनं कुरुष्वेति योजना ।

**अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः**
**तद्ब्रूहि त्वं यन्मयोक्तं धर्मराजस्य धर्मवित्** ॥ ८६ ॥

**अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः** इत्यत्र प्रभुर्गुरुः त्वमिति प्रोक्त इति यत् सः अवधेन वधः इति अथर्ववेदवाक्यस्यार्थः ।

॥ इति चतुःषष्टितमोऽध्यायः ॥

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

**[३] प्रोक्तः स्वयं सत्यसन्धेन मृत्यु-**
**स्तव प्रियार्थं नरदेव यूद्धे ।**
**[४] वीरः शिखण्डी द्रौपदोऽसौ महात्मा**
**मयाऽभिगुप्तेन हतश्च [५] तेन** ॥ २९ ॥

---

१. ह.को.१.१५५.; २. 'संयोगम्' इति कुं पाठः ।
३. कुं.७३अध्यायः ।
४. BORI.पृ.४२२.'शिखण्डिनामना प्रधने तवार्थे'कुं पाठः; ५. भीष्म कुं.पा

**प्रोक्तः स्वयं सत्यसन्धेन मृत्युः** इत्यत्र [१]महात्मा असौ द्रौपदः शिखण्डी सत्यसन्धेन भीष्मेण **मृत्युः** मम मृत्युरिति प्रोक्तः । मयाभिगुप्तेन तेन शिखण्डिना हतश्च इति योजना ।

[२]**धर्मात्मानं भ्रातरं ज्येष्ठमद्य**
**खड्गेन चैनं यदि हन्या नृवीर ।**
**धर्माद्भीतस्त्वं कथं नाम तस्मात्**
**किं चोत्तरं वा करिष्यस्त्वमेव ॥**

**धर्माद्भीतस्त्वं कथं नाम तस्मात्** इत्यत्र धर्मादिति ल्यब्लोपनिमित्ता पञ्चमी । धर्मं विनाश्य भीतस्त्वं **तस्मात्** धर्मनाशादेव **उत्तरं** आत्मवधाख्यं कर्म च त्वमेव किं कथं नामाऽकरिष्यः ? ज्येष्ठवधाद्धर्मनाशो जात इति भीतेन त्वया आत्मवधे कृते पुनरपि धर्मनाश एव भवति । अत इदमपि न कर्तव्यमिति भावः ।

**॥ इति पञ्चषष्टितमोऽध्यायः ॥**

## ॥ अथ सप्तषष्ठितमोऽध्यायः ॥

[३]**चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर ।**
**प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम्** ॥ ४ ॥

**चाषाश्च शतपत्राश्च** इत्यत्र **शतपत्राः** दारुकुट्टकाः । 'अथ स्याच्छतपत्रकः । दार्वाघाटः'[४] इत्यमरः **॥ इति सप्तषष्टितमोऽध्यायः ॥**

---

१. **'महान्'** सो.मु.पा. । ; २. BORI.पृ.४२४; ३. कुं ७६ **अध्यायः** ।
४. अ. को.२.५.१७ ।

## ।। अथ अष्टषष्टितमोऽध्यायः ।।

**[१]गोवासदासमीयानां वसातीनां च भारत ।**
**प्रच्य्यानां वाटधानानां भोजानां चाभिमानिनाम् ।। १७ ।।**

**गोवासदासमीयानाम्** इत्यत्र **गोवासाः** गोपालाः । **दासमीयाः** हीनदेशस्था जातिभ्रष्टा जातिविशेषाः ।

**गत्या दशम्या ते गत्वा जघ्नुर्वाजिरथद्विपान् ।**
**हित्वा नव [२]गतीर्जुष्टाः स्वबाणानाहवेऽमुचन् ।। ३३ ।।**

**गत्या दशम्या ते गत्वा** इत्यत्र **दशम्या** दशसङ्ख्यायुक्तया **गत्या** [३]पदानां गमनेन, दशपदान्यग्रतो गत्वेत्यर्थः । **ते** भीष्मपक्षीयाः । **जुष्टाः** पूर्वं सेविताः **नव गतीः** नव पदानि **हित्वा** त्यक्त्वा, भीष्मशरशक्त्या नव पदानि पृष्ठतः प्राप्येत्यर्थः । पाण्डवपक्षीयाः स्वबाणान् आहवेऽमुचन्निति योजना ।

**एतत्ते सुकृतं कर्म नात्र किञ्चन [४]युज्यते ।**
**वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ।। ६३ ।।**

**नात्र किञ्चन युज्यत** इत्यत्र **किञ्चन** पूर्ववदवधे कारणम् ।

**[५]दहते यत्सपुत्राया निशि मातुस्तवानघ ।**

---

१. कुं ७७ अध्यायः । BORI.पृ.४४१. **'गणाश्च'** इति कुं पाठः।
२. **'गतीर्दुष्टाः स बाणानाहवेऽत्यजत'** इति कुं पाठः ।
३. **'पादानाम्'** सो.मु.पा ।; ४. BORI.पृ.४२६. **'विद्यते'** इति कुं पाठः ।
५. **'दहने'** इति कुं पाठः ।

**द्यूतार्थे यच्च युष्मासु प्रावर्तत सुयोधनः ।**
**तत्र सर्वत्र दुष्टात्मा कर्णो वै मूलमित्युत ॥ ६५ ॥**

**दहते यत्सपुत्राया निशि मातुस्तवानघ** इत्यत्र हृदयमिति योग्यपदाध्याहारः ।

॥ इति अष्टषष्टितमोऽध्यायः ॥

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

[१]**अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।**
**गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ॥ ८ ॥**

**अद्य कृष्ण विकर्णा मे कर्णम्** इत्यत्र **विकर्णाः** विशिष्ट-वराहकर्णाकाराः शराः ।

॥ इति एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

[२]**शतानीको नाकुलिः कर्णपुत्रं युवा युवानं बृषसेनं शरौघैः ।**
**समापर्यत् कर्णपुत्रश्च शूरः पाञ्चालेयं शरवर्षैरनेकैः ॥ १० ॥**

**पाञ्चालेयं शरवर्षैरनेकैः** इत्यत्र **पाञ्चालेयः** पाञ्चाल्याः पुत्रो **नाकुलिः** शतानीकः ।

॥ इति सप्ततितमोऽध्यायः ॥

---

१. कुं ७८ अध्यायः ।
२. कुं ७९ अध्यायः ।

## ।। अथ एकसप्ततितमोऽध्यायः ।।

**[१]धनुष्काशां शरावापां गदापरिघकेतनाम् ।**
**हसं छत्रध्वजोपेतामुष्णीषवरखेनिलाम्** ।। ४२ ।।

**धनुष्काशां शरावापाम्** इत्यत्र **शरावापां** शराख्यतरङ्गवतीम् ।

।। इति एकसप्ततितमोऽध्यायः ।।

## ।। अथ चतुःसप्ततीतमोऽध्यायः ।।

**[२]न चास्य रक्षां पश्यामि पृष्ठतो न च पार्श्वतः ।**
**एक एवाभियाति त्वां पश्य [३]साकल्यमात्मनः** ।। ४० ।।

**पश्य साकल्यमात्मन** इत्यत्र **साकल्यं** सकलप्रयत्नसमूहं त्वाम् । **पश्य साकल्यमात्मन** इत्यत्र साकल्यं सकलप्रयत्नसमूहं [४]पश्येति योजना ।

**महात्मनः शङ्खचक्रासिपाणे-**
**र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ।**
**[५]भयश्च मे जायते साध्वसश्च**
**दृष्ट्वा कृष्णावेकरथे समेतौ** ।। ६६ ।।

---

१. कुं ८१ अध्यायः । BORI.पृ.४७५.‘धनुः काशाम्’ इति कुं पाठः ।
२. कुं ८३ अध्यायः । ३. ‘साफल्यमात्मनः’ इति कुं पाठः ।
४. ‘यस्येति’ श्री.सो.मु.पा ।
५. $K_{3}.B_{1.3-5}.D_{a1}.D_{n1}.D_{1.3-5.7}.T_{1.2}.M$; BORI पृ. ४९३; ‘भयं च’ इति कुं पाठः ।

**भयश्च मे जायते साध्वसश्च** इत्यत्र **भयं** मानसं भयम्, **साध्वसं** अङ्गस्वेदादिकम्। कृष्णादपि भयं, अर्जुनादपि भयमिति वा।

**यथोग्ररश्मिः शुचि[१] शुक्रमध्यगः सुखं विवस्वान् हरते जलौघान्**
**तथार्जुनो बाणगणान् निरस्य ददाह सेनां तव पार्थिवेन्द्र ॥८१॥**

**स गाण्डिवव्यायतपूर्णमण्डल-**
**स्तपन् रिपूनर्जुनभास्करो बभौ।**
**शरोग्ररश्मिः शुचि[२] शुक्रमध्यगो**
**यथैव सूर्यः परिवेषवांस्तथा** ॥ ८४ ॥

**शुचिशुक्रमध्यग** इत्यत्र, **शुचिशुक्रमध्यग** इत्यत्र च शुचिशुक्रमध्यगः आषाढज्येष्ठयोर्मध्यगतः।'चैत्रादिमासौ मधुमाधवौ द्वौ ततः परौ शुक्रशुची क्रमेण'[३] इति हलः।

**कृपस्य पार्थः सशरं शरासनं**
**हयान् ध्वजान् सारथिमेव पत्रिभिः।**
**समार्पयद् बाहुसहस्रविक्रमः**
**तथा यथा वज्रधरः पुरा बलेः** ॥ ९० ॥

**बाहुसहस्रविक्रम** इत्यत्र बाहूनां सहस्रं यस्य सः बाहुसहस्रः कार्तवीर्यार्जुनः।

॥ इति चतुः सप्ततितमोऽध्यायः ॥

१. $S_2.M_{1.4}$; BORI पृ. ४९६; **'शुक्र'** इति कुं पाठः।
२. $S_2.M_{1.4}$.; BORI पृ. ४९६; **'शुक्र'** इति कुं पाठः।
३. ह.को.१.११४।

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

[1]ते पञ्च पाञ्चालरथाः समेता
वैकर्तनं कर्णमभिद्रवन्तः ।
तस्माद्रथाच्च्यावयितुं न शेकुः
धैर्यात् कृतात्मानमिवेन्द्रियार्थाः ॥ १८ ॥

धैर्यात् कृतात्मानमिवेन्द्रियार्था इत्यत्र कृतात्मानं वशीकृतचित्तम् ।

॥ इति सप्तसप्ततितमोऽध्यायः ॥

## ॥ अथ अष्टसप्ततितमोऽध्यायः ॥

[2]दुःशासनस्य रिपुशासनस्य
उद्धृत्य वक्षः पतितस्य भूमौ ।
[3]तथापिबच्छोणितमस्य कोष्णम्
आस्वाद्य चास्वाद्य च वीक्षमाणः ॥ ३० ॥

तथापिबच्छोणितमस्य कोष्णम् इत्यत्र कोष्णं ईषदुष्णम् । 'कोष्णं कवोष्णं मन्दोष्णं कदुष्णम्'[4] इत्यमरः ।

[5]अथाह भीमः पुनरुग्रकर्मा दुःशासनं क्रोधपरीतचेताः ।
गतासुमालोक्य विहस्य सुस्वरं किं वा कुर्यां मृत्युना रक्षितोऽसि॥

१. कुं ८६ अध्यायः ।; २. कुं ८७ अध्यायः ।
३. G.M; BORI पृ. ५१८; 'ततोऽपि' इति कुं पाठः ।
४. अ.को. १.४.३५ ।; ५. BORI.पृ.५१९.

**किं वा कुर्यां मृत्युना रक्षितोऽसि** इत्यत्र मृत्युना परलोकं प्रति नीतत्वाद्रक्षितोऽसि । नो चेज्जीवमानं त्वां अथापि घातयामीति भावः ।

॥ इति अष्टसप्ततितमोऽध्यायः ॥

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[१]वनायुजान् [२]सुकुमारस्य शुभ्रान् अलङ्कृतान् जातरूपेण शीघ्रान्**
**जयान चाश्वान्नकुलस्य वीरो रणाजिरे सूतपुत्रस्यपुत्रः ॥ ४२ ॥**

**[३]वनायुजान् सुकुमारस्य शुभ्रान्** इत्यत्र **वनायुजान्** [४]वनायुदेशजान्। 'वनायुजाः [५] पारसीकाः काम्बोजा बाह्लिका हयाः' [६] इत्यमरः ।

**ततोऽस्य पक्षाननायद्यमाय द्विसाहस्रान्नकुलः क्षिप्रकारी ।**
**ते प्रापतन्नसिना गां विशस्ता यथाश्वमेधे पशवः शमित्रा ॥४४॥**

**पशवः शमित्रा** इत्यत्र **शमित्रा** यज्ञपशुघातकेन ।

**[७]तस्मिन् रथे निहते पाण्डवस्य क्षिप्रं च खड्गे विशिखैर्निकृत्ते ।**
**भीमार्जुनौ वृषसेनाय क्रुद्धौ ववर्षतुः शरवर्षं सुघोरम् ॥**

**तस्मिन् रथे निहते पाण्डवस्य क्षिप्रं च खड्गे विशिखैर्निकृत्त** इत्यत्र **पाण्डवस्य** नकुलस्य ।

---

१. कुं ८८ अध्यायः ।; २. BORI.पृ.५२५. 'सुकुमारान् सुशुभ्रान्' कुं पाठः ।
३. 'वानायुजान्' सो.मु.पा.।; ४. 'वानायुदेशजान्' सो.मु.पा. ।
५. 'पारुशकाः' सो.मु.पा.।
६. 'वानायुजाः' सो.मु.पा.।
७. BORI.पृ.६६२.

[१] स तन्निशम्यैव वचः किरीटी रथं समासाद्य वृकोदरस्य ।
कपिध्वजं केशवसङ्गृहीतं प्रैषीदुदग्रो वृषसेनाय वाहम् ॥

**रथं समासाद्य वृकोदरस्य** इत्यत्र वृकोदरस्य वचो निशम्येति पूर्वेणान्वयः ।

[२] नकुलमथ विदित्वा छिन्नबाणासनासिं
विरथमरिशरार्तं कर्णपुत्रास्त्रभग्नम् ।
पवनधुतपताका ह्रादिनो वल्गिताश्वाः
[३] पुरुषवरनियुक्तास्ते रथाः शीघ्रमीयुः ॥ ५२ ॥

**पुरुषवरनियुक्तास्ते रथाः शीघ्रमीयुः** इत्यत्र [४] **पुरुषवरनियुक्ताः** सेनानायकेन धृष्टद्युम्नेन प्रेरिताः ।

**कुणिन्दपुत्रप्रहितोऽपरो द्विपः क्रथं ससूताश्वरथं व्यपोथयत् ।**
**ततोऽपतत् क्राथशराभिघातितः सहेश्वरो वज्रहतो यथागिरिः** ७

**कुणिन्दपुत्रप्रहितोऽपरो द्विप** इत्यत्र **कुणिन्दपुत्रः** कौरवदलस्थः । **क्रथः** पाण्डवदलस्थः । गजगजेश्वरयोः पाते गजो नष्टः, गजेश्वरः कुणिन्दपुत्रस्तु न नष्टः । 'कुणिन्दपुत्रो नकुलात्मजं स्मयन्' इति तद्युद्धस्य पुनरपि वक्ष्यमाणत्वात् ।

**पपात बाणैः सुबलस्य सूनुना [५] विषाणपुच्छापरगात्रघातिना** ११

---

१. BORI.पृ.६६२.;   २. कुं ८९ अध्यायः ।
३. $Da_1$; BORI पृ. ५३०; 'परपुरुषनियुक्तास्त्वै रथैः' इति कुं पाठः ।
४. 'पुरुषपरनियुक्ताः' सो.मु.पा.
५. $V_1.B_{2\cdot3}.Da_1.D_{1\cdot5}$.; BORI पृ. ५३१; '–पातिना' इति कुं पाठः ।

**गजेन वाह्यान्शकुनेः कुणिन्दजो**
**निनाय वैवस्वतमन्दिरं रणे ।**
**रथं च सङ्क्षुभ्य ननाद नर्दत-**
**स्ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥ १२ ॥**

**विषाणपुच्छापरगात्रघातिना । गजेन,** इत्यत्रोक्तो गजः चरणैवृक मर्दितुं तद्दलं प्रविष्टः गिरिराजवासिनो गजः ।

॥ इति एकोशीतितमोऽध्यायः ॥

॥ अथ अशीतितमोऽध्यायः ॥

[1]**श्रुत्वा तयोर्द्वैरथं च तत्र तष योधाः समन्ततः ।**
[2]**चक्रुर्बाहुबलं चैव तथा चेलवलं महत् ॥ ९ ॥**

**चक्रुर्बाहुबलं चैव तथा चेलवलं महत्** इत्यत्र **चेलवलं,** चेलानां वस्त्राणां वलं धूननम् । 'वल परिवर्तने' इति धातुः ।

**द्यौरासीत्** [3]**कर्णतो व्यग्रा सनक्षत्रा विशाम्पते ।**
**भूमिर्विशाला** [4]**पार्थस्य मातेव जयकाङ्क्षिणी ॥ ४१ ॥**

**द्यौरासीत् कर्णतो व्यग्रा** इत्यत्र भूभारभूतदुर्योधनपक्षपातित्वात् भूमिः कर्णे पक्षपातं नाकरोत्, किन्त्वर्जुन एव । द्यौस्तुमृतोऽयं कर्णः

---

१. कुं ९१ अध्यायः ।
२. 'चक्रुर्बाहुस्वनांश्चैव तथा बाणवरं' इति कुं पाठः ।
३. BORI.पृ.५३८.'कर्णपक्षेऽत्र' इति कुं पाठः ।
४. BORI.पृ.५३८.'पार्थमाता पुत्रस्य' इति कुं पाठः ।

असत्पक्षपातं विहाय शुद्धः वीरस्वर्गभोगाय मां प्रत्यायास्यतीति कर्णे पक्षपातमकरोदिति भावः ।

**ईहामृगा व्यालमृगा मङ्गला मृगपक्षिणः ।**
**मङ्गला पशवश्चैव सिंहव्याघ्रास्तथैव च ।**
**पार्थस्य विजये राजन् सर्व एव ससंश्रिताः ॥ ४७ ॥**

**ईहामृगा व्यालमृगा** इत्यत्र ईहामृगा वृकाः । 'कोकस्त्वीहामृगो वृकः'[१] इत्यमरः ।

**देवर्षिब्रह्मर्षिगणाः सर्वे च खचराश्च ये ।**
**[२]प्रावेयाः सहमौनेया शुभाश्चाप्सरसां गणाः ॥ ५१ ॥**

**प्रावेयाः सहमौनेया** इत्यत्र **प्रावेयाः** प्रावानाम्याः कश्यपपत्न्याः पुत्राः गन्धर्वाः । **मौनेयाः** मुनिनाम्न्याः कश्यपपत्न्याः पुत्राः ।

**[३]सम्पन्नस्तपसा चैव पर्याप्तः पुरुषर्षभः ।**
**अतिक्रामेच्च महात्म्यात्[४] दिष्टमप्यस्य पर्ययात् ॥ ११ ॥**

**अतिक्रामेच्च महात्म्यादिष्टमप्यस्य पर्ययात्** इत्यत्र **अस्य** अर्जुनस्य **दिष्टं** दैवं कृष्णः [५]**पर्ययात्** क्रमात् माहात्म्यात् अतिक्रामेत् कर्णमतिक्रामेत् । सारथ्यं कुर्वन् महाप्रभुः कर्णादप्यधिकसामर्थ्यमर्जुनस्य दास्यतीति भावः ।

---

१. अ.को.२.५.७।
२. BORI.पृ.५४०.**'प्रालेया'** इति कुं पाठः ।
३. कुं ९२ अध्यायः । ; ४. **'दिष्टमप्यविचारयन्'** इति कुं पाठः ।
५. **'पर्यायात्'** श्री.सो.मु.पा ।

**अनियम्यौ नियन्तारौ [1]अभीतौ स्म परन्तपा ।**
**नैतमोस्तु समः कश्चित् दिवि वा मानुषेषु वा ॥ १४ ॥**

**अभीतौ स्म परन्तपौ** इत्यत्र 'अतीतौस्म परन्तपौ' इति पाठे **अतीतौ** अति अतिशयेन इतौ प्राप्तौ व्याप्ताविल्यर्थः ।

[2]**तयोर्ध्वजौ हि विमलौ शुशुभाते रथे स्थितौ ।**
**राहुकेतू यथाकाशौ [3]क्रुद्धौ युद्धे परस्परम् ॥ ३ ॥**

**क्रुद्धौ युद्धे परस्परम्** इत्यत्र ध्वजयोः क्रोधो नाम तत्केतुभूतकपिका कयोः क्रोधः ।

**कर्णस्याशीविषनिभा रत्नसारमयी दृढा ।**
**पुरन्दरधनुःप्रख्या [4]हस्तकाक्या व्यराजत ॥ ४ ॥**

**हस्तकाक्या व्यराजत** इत्यत्र **हस्तकाक्या** हस्तपरिमितायोमय-काकवती । ध्वजयष्टिरिति विशेष्याध्याहारः ।

**सा किङ्किणीकाभरणा कालपाशोपमा तदा ।**
**अभ्यद्रवत् सुसंरब्धा [5]हस्तकाक्याथ तं कपिम् ॥ ८ ॥**

**हस्तकाक्याथ तं कपिम्** इत्यत्र **काक्या** केनचिद्दैत्येनाविष्टा काकसम्बन्धिनी अयोमयप्रतिमा ।

---

१. BORI.पृ.५४४.'**जगतः पुरुषर्षभौ**' इति कुं पाठः ।
२. कुं ९३ अध्यायः ।
३. '**उद्रितौ जगतः क्षये**' इति कुं पाठः ।
४. '**हस्तिकक्ष्या विराजते**' इति कुं पाठः ।
५. '**हस्तिकक्ष्याथ**' इति कुं पाठः ।

यद्यर्जुनो[1] रणे हन्याद् अद्य मामिह कर्हिचित् ।
किमुत्तरं[2] तदा ते स्यात् शल्य सत्यमथोच्यताम् ॥ १३ ॥

**यद्यर्जुनो रणे हन्याद्** इत्यत्र **उत्तरं** उत्तरकार्यं किं स्यात्?

यदि चैतत् कथञ्चित्स्याल्लोकपर्यसनं भवेत् ।
हन्यां कर्णं तथश शल्यं बाहुभ्यामेव संयुगे ॥ १७ ॥

**लोकपर्यसनं भवेत्** इत्यत्र **लोकपर्यसनं** लोकस्य पर्यसनं परितो नाशः । लोकनाशोपमस्त्वन्नाश इति भावः ।

॥ इति अशीतितमोऽध्यायः ॥

## ॥ अथ एकाशीतितमोऽध्यायः ॥

न[3] चातिसर्तव्यम्[4] इति प्रचोदिताः
परे त्वदीयाश्च तथावतस्थिरे ।
महारथौ तौ परिवार्य सर्वतः
सुरासुरौ वासवशम्बराविव ॥ ८ ॥

**न चातिसर्तव्यम्** इत्यत्र **अतिसर्तव्यम्** अतिशयेन गन्तव्यम् । कैरप्यग्रतो न गन्तव्यमित्यर्थः ।

॥ इति एकाशीतितमोऽध्यायः ॥

---

१. **'यदि पार्थो'** इति कुं पाठः ।
२. **'किं करिण्यसि सङ्ग्रामे'** इति कुं पाठः ।
३. कुं ९४ अध्यायः ।
४. $B_{3.4}.D_{3.4.6.7}$; BORI पृ. ५५८; **'चाभिसर्तव्यम्'** इति कुं पाठः ।

**अनियम्यौ नियन्तारौ [१]अभीतौ स्म परन्तपा ।**
**नैतमोस्तु समः कश्चित् दिवि वा मानुषेषु वा ॥ १४ ॥**

**अभीतौ स्म परन्तपौ** इत्यत्र 'अतीतौस्म परन्तपौ' इति पाठे **अतीतौ** अति अतिशयेन इतौ प्राप्तौ व्याप्तावित्यर्थः ।

**[२]तयोर्ध्वजौ हि विमलौ शुशुभाते रथे स्थितौ ।**
**राहुकेतू यथाकाशौ [३]क्रुद्धौ युद्धे परस्परम् ॥ ३ ॥**

**क्रुद्धौ युद्धे परस्परम्** इत्यत्र ध्वजयोः क्रोधो नाम तत्केतुभूतकपिकायोः क्रोधः ।

**कर्णस्याशीविषनिभा रत्नसारमयी दृढा ।**
**पुरन्दरधनुःप्रख्या [४]हस्तकाक्या व्यराजत ॥ ४ ॥**

**हस्तकाक्या व्यराजत** इत्यत्र **हस्तकाक्या** हस्तपरिमितायोमयकाकवती । ध्वजयष्टिरिति विशेष्याध्याहारः ।

**सा किङ्किणीकाभरणा कालपाशोपमा तदा ।**
**अभ्यद्रवत् सुसंरब्धा [५]हस्तकाक्याथ तं कपिम् ॥ ८ ॥**

**हस्तकाक्याथ तं कपिम्** इत्यत्र **काक्या** केनचिद्दैत्येनाविष्टा काकसम्बन्धिनी अयोमयप्रतिमा ।

---

१. BORI.पृ.५४४.**'जगतः पुरुषर्षभौ'** इति कुं पाठः ।
२. कुं ९३ अध्यायः ।
३. **'उद्रितौ जगतः क्षये'** इति कुं पाठः ।
४. **'हस्तिकक्ष्या विराजते'** इति कुं पाठः ।
५. **'हस्तिकक्ष्याथ'** इति कुं पाठः ।

[१]यद्यर्जुनो रणे हन्याद् अद्य मामिह कर्हिचित् ।
[२]किमुत्तरं तदा ते स्यात् शल्य सत्यमथोच्यताम् ॥ १३ ॥

**यद्यर्जुनो रणे हन्याद्** इत्यत्र **उत्तरं** उत्तरकार्यं किं स्यात्?

**यदि चैतत् कथञ्चित्स्याल्लोकपर्यसनं भवेत् ।**
**हन्यां कर्णं तथश शल्यं बाहुभ्यामेव संयुगे ॥ १७ ॥**

**लोकपर्यसनं भवेत्** इत्यत्र **लोकपर्यसनं** लोकस्य पर्यसनं परितो नाशः । लोकनाशोपमस्त्वन्नाश इति भावः ।

॥ इति अशीतितमोऽध्यायः ॥

## ॥ अथ एकाशीतितमोऽध्यायः ॥

**[३]न [४]चातिसर्तव्यम् इति प्रचोदिताः**
**परे त्वदीयाश्च तथावतस्थिरे ।**
**महारथौ तौ परिवार्य सर्वतः**
**सुरासुरौ वासवशम्बराविव ॥ ८ ॥**

न **चातिसर्तव्यम्** इत्यत्र **अतिसर्तव्यम्** अतिशयेन गन्तव्यम् । नात्यग्रतो न गन्तव्यमित्यर्थः ।

॥ इति एकाशीतितमोऽध्यायः ॥

---

१. **'यदि पार्थो'** इति कुं पाठः ।
२. **'किं करिण्यसि सङ्ग्रामे'** इति कुं पाठः ।
३. कुं ९४ अध्यायः ।
४. $B_{1.4}.D_{3.4.6.7}$; BORI पृ. ५५८; **'चाभिसर्तव्यम्'** इति कुं पाठः ।

## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

**[१] ततः कर्णः प्रथमं तत्र पार्थं महेषुभिर्दशभिः पर्यविध्यत् ।**
**तमर्जुनः प्रत्यविध्यच्छिताग्रैः कक्षान्तरे दशभिरतीव क्रुद्धः ॥**

**कक्षान्तरे दशभिरतीव क्रुद्ध** इत्यत्र कक्षयोर्बाहुमूलयोरन्तरे मध्ये वक्षसि । 'बाहुमूले उभे कक्षौ'[२] इत्यमरः ।

॥ इति द्व्यशीतितमोऽध्यायः ॥

## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

**[३] पुनश्च पाञ्चालवरा निपेतुस्तदन्तरे कर्णधनञ्जयाभ्याम् ।**
**प्रस्कन्दिनो बलिनः साधुमुक्तैः कर्णेन बाणैर्निहताः प्रसह्य ॥**

**तदन्तरे कर्णधनञ्जयाभ्याम्** इत्यत्र कर्णधनञ्जयाभ्यां निमित्ताभ्यां **प्रस्कन्दिनः** आगच्छन्तः पाञ्चालवराः । कर्णं हन्तुं अर्जुनं रक्षितुं च आगच्छन्त इति यावत् ।

**[४] सुवर्णचित्रं पुरुषोत्तमस्य वर्माथ भित्त्वाभ्यपतन् सुपुङ्खाः ।**
**वेगेन गां ते विविशुश्च राजन् स्नात्वा च कर्णाभिमुखाः प्रतीयुः**
**॥ २९ ॥**

**स्नात्वा च कर्णाभिमुखाः प्रतीयुः** इत्यत्र तक्षकपुत्रस्याश्वसेनस्य सहायभूतसर्पैराविष्टत्वात् पुनः कर्णाभिमुखाः प्रतीयुरिति भावः ।

॥ इति त्र्यशीतितमोऽध्यायः ॥

---

१. BORI.पृ.५५९.; २.अ.को.२.६.७९.
३. BORI.पृ.५६९.; ४. कुं ९६ अध्यायः ।

## ।। अथ चतुरशीतितमोऽध्यायः ।।

[१] ततस्तु जिष्णुः परिवृत्य रोषाच्चिच्छेद षड्भिर्निशितैः सुधारैः ।
नागं वियत्[२] तिर्यगथापतन्तं स च्छिन्नगात्रो निपपात भूमौ ४७

**तिर्यगथापतन्तम्** इत्यत्र तिर्यक् परावृत्य ।

[३] **त्राताश्च पार्थः प्रणताश्च वाहाः**
**संस्थाप्य कृष्णेन पुनस्तदीयाः ।।**

**त्राताश्च पार्थः प्रणताश्च वाहाःसंस्थाप्य कृष्णेन पुनस्तदीया** इत्यत्र **तदीयाः** अर्जुनस्य विद्यमानाः, **प्रणताः** प्रकर्षेण नताः भारवशाज्जानुभिर्भूमिं गता वाहाः कृष्णेन पुनः संस्थाप्य त्राता इति योजना ।

स चित्रवर्मेषुवरो विदार्य प्राणान्निरस्यन्निव साधुमुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश वसुन्धरां शोणितदिग्धवाजः ५१

**शोणितदिग्धवाज** इत्यत्र **वाजः** पत्रम् । 'पक्षो वाजस्त्रिषूत्तरे'[४] अमरः ।

ततश्चक्रमपतत्तस्य भूमौ स विह्वलः समरे सूतपुत्रः ।
सचैत्यदिकश्चैत्य इवातिमात्रः सुपुष्पितो भूतितले निमग्नः ।।७८।।

१. बी. ५७ अध्यायः ।; २. 'तिर्यगिवोत्पतन्तम्' इति कुं पाठः ।
३. BORI पृ.५७६. प्राप्तस्य पार्थः प्रणाताः स्व स्वाहाः संस्थाप्य कृष्णेन पुनस्तदीयम् ।
४. अ.को. २.८.८७.

**ततश्चक्रमपतत्तस्य भूमौ** इत्यत्र 'अपतत्' इत्युक्त्या भूमावीषत्पात एव ।

**ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ॥ ९७ ॥**

**ततोऽग्रसन्मही चक्रम्** इत्यत्र तु 'अग्रसत्' इत्युक्त्या सम्यग्भूमौ प्रवेशनमिति विवेकः । अतो न पौनरुक्त्यम् ।

**कालो ह्यदृश्यो नृप [१]विप्रशापं**
**निदर्शयन् [२]कर्णरथं ब्रुवाणः ।**
**[३]भूमिश्च चक्रं ग्रसतीत्यवोचत्**
**कर्णस्य तस्मिन् वधकाल आगते ॥ ७५ ॥**

**भूमिश्च चक्रं ग्रसतीत्यवोचत्** इत्यत्र कर्णरथं प्रति विप्रशापं ब्रुवाणः **अदृश्यः कालः** मृत्युः भूमिश्चक्रं ग्रसतीत्यवोचदिति योजना ।

॥ इति चतुरशीतितमोऽध्यायः ॥

## ॥ अथ षडशीतिमोऽध्यायः ॥

**[४]तस्य [५]क्रोधेन सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः ।**
**प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ॥ २० ॥**

---

१. $V_1$.B.$D_{3.4.6.7}$.$T_2$.; BORI पृ. ५८६; **'विप्रशापात्'** इति कुं पाठः ।
२. $D_{a1}$.$D_{1.3.5}$.$T_2$; BORI पृ. ५८६; **'कर्णवधम्'** इति कुं पाठः ।
३. $B_{1.4.5}$.$V_{1.Da1}$.$D_{1.5}$; BORI पृ. ५८६; **'भूतिस्तु'** इति कुं पाठः ।
४. **कुं ९८ अध्यायः ।**
५. BORI.पृ.५९३; **'क्रुद्धस्य'** इति कुं पाठः।

**तस्य क्रोधेन सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिष** इत्यत्र स्रोतेभ्यः स्रवन्तीन्द्रियाणि एभ्यः इति व्युत्पत्त्या स्रोतांसि नवद्वाराणि, तेभ्यः।

**ततोऽस्य देहं सततं सुखैधितं स्वरूपमत्यर्थसुखं सुगन्धि च।**
**परेण कृच्छ्रेण शिरः समत्यजद्गृहं [१] महर्द्धीव सभङ्गमीश्वरः॥५३॥**

**परेण कृच्छ्रेण शिरः समत्यजद् गृहं महर्द्धीव सभङ्गमीश्वर** इत्यत्र **सभङ्गं** भङ्गेन नाशेन सहितं, महती ऋद्धिः समृद्धिर्यस्मिन् तत् गृहं **ईश्वरः** यजमान इव समत्यजदित्यन्वयः।

**अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष।**
**छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ ६४ ॥**

**अपराह्णेऽपराह्णस्य** इत्यत्र कुन्त्याः कन्यादशायां जातत्वात् **अपराणि सर्वेभ्योऽपि बहूनि अहानि दिनानि यस्य सोऽयमपराह्णः** कर्णः, तस्य। बहुवयस्कस्येत्यर्थः। **सोत्सेधं** कन्दुकवत् कायादिषदुद्गमनेन सहितं यथा भवति तथा। 'उत्सेधः काय उन्नतिः' [२] इत्यमरः।

**उपर्युपरि सैन्यानां विनिघ्नन्नितरान् जनान्।**
**शिरः कर्णस्य सोत्सेधमिषुः सोऽप्याहरद्द्रुतम् ॥ ६५ ॥**

**उपर्युपरि सैन्यानाम्** इत्यत्र **उपर्युपरि** ईषदुपरि। 'उपर्यध्यधसः सामीप्ये' इत्यनुशासनम्।

॥ इति षडशीतितमोऽध्यायः॥

---

१. **'महर्धीन्निवसन्निवेश्वरः'** इति कुं पाठः।; २. अ.को.३.३.९६.

## ॥ अथ एकोननवतितमोऽध्यायः ॥

[१]कर्णस्य देहं रुधिराम्बुसिक्तं
पुत्रानुकम्पी भगवान् विवस्वान् ।
[२]स्पृष्ट्वांशुभिर्लोहितरक्तरूपः
[३]सिष्णासुरभ्येति परं समुद्रम् ॥ ४३ ॥

स्पृष्ट्वांशुभिर्लोहितरक्तरूपः सिष्णासुरभ्येति परं समुद्रम् इत्यत्र [४]सिष्णासुः स्नानं कर्तुमिच्छुः ।

॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां कर्णपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायाम् एकोननवतितमोऽध्यायः ॥

॥ समाप्तं कर्णपर्व ॥

---

१. कुं ९९ अध्यायः ।
२. 'स्पृष्ट्वा कराग्रैः क्षतजानुरूपैः' इति कुं. पाठः ।
३. 'स्नातुं तदागादपरम्' इति कुं पाठः ।
४. 'सिस्नासुः' सो.मु.पा.।

# अथ शल्यपर्व

## ।। अथ प्रथमोऽध्यायः ।।

**तस्मिंस्तु निहते वीरे [१] हतशिष्टास्त्रयो रथाः**
**कृतवर्मा कृपो द्रौणिः जघ्नुः पाण्डवसैनिकान् ।। १३ ।।**

**हतशिष्टास्त्रयो रथा** इत्यत्र हतेभ्यः शिष्टाः **त्रयः** [२] कृपकृपीपुत्रकृत-वर्माणः ।

**अहो सुबलवान् कालो गतिश्च [३] विषमा तथा ।**
**शक्रतुल्यबलाः सर्वे यत्राहन्यन्त पार्थिवाः ।। १८ ।।**

**अहो सुबलवान् कालो गतिश्च विषमा तथा** इत्यत्र **गतिः** कालस्य गतिः ।

**दुर्योधनो हतो [४] राजन् यथोक्तं पाण्डवेन [५] हि ।**
**[६] भग्नसक्थिर्महाराज शेते पांसुषु रूषितः ।। २९ ।।**

**दुर्योधनो हतो राजन् यथोक्तं पाण्डवेन हि** इत्यत्र **पाण्डवेन** भीमसेनेन द्यूतसमये यथा **उक्तं** 'दुर्योधनस्य ऊरू भेत्स्ये' इति यदुक्तं

---

१. BORI. पृ. ५ **'महेष्वासास्त्रयो रणे'** इति कुं पाठः ।
२. **'कृपकृपीपुत्रकृतवर्माद्याः'** सो.मु.पा.।
३. $K_4$.B.$D_{8.9.11}$; BORI पृ. ५; **'परमा'** इति कुं पाठः ।
४. BORI. पृ. ७ ; **'राजा'** इति कुं पाठः ।
५. **'ह'** इति कुं पाठः ।
६. $T_{1.2}$.$M_{2-4}$ ; BORI पृ. ७; **'भग्नसक्थो महराज' इति कुं पाठः ।**

तथैव हत इति योजना। **भग्नसक्थिर्महाराज** इत्यत्र भग्ने सक्थिनी यस्य सः भग्नसक्थिः। 'सक्थि क्लीबे पुमानूरुः'[१] इत्यमरः।

**निःसञ्ज्ञं पतितं भूमौ तदासीद्राजमण्डलम्।**
**विलाप मुक्तोपहतं चित्रं न्यस्तं पटे यथा ॥ ४१ ॥**

**तदासीद्राजमण्डलम्** इत्यत्र **राजमण्डलं** राजान्तःपुरजनसमूहः।

**राजानं शोचमानस्तु तं शोचन्तं मुहुर्मुहुः।**
**समाश्वासयत क्षत्ता वचसा मधुरेण च ॥ ५५ ॥**

**समाश्वासयत क्षत्ता** इत्यत्र **क्षत्ता** सारथिः सञ्जयः। 'क्षत्ता स्यात्सारथौ द्वाःस्थे वेश्यायामपि शूद्रजे'[२] इत्यमरः।

**॥ इति प्रथमोऽध्यायः ॥**

## ॥ अथ द्वितीयोऽध्यायः ॥

**अन्धत्वाद्यदि[३] तेषां तु न मे रूपनिदर्शनम्।**
**पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ॥ ६ ॥**

**अन्धत्वाद्यदि तेषां तु** इत्यत्र **यदि** यद्यपि।

**परिष्वज्य च कं कण्ठे स्नेहेन क्लिन्नलोचनः।**
**अनुशास्ताऽस्मि कौरव्य तत्साधु वद मे वचः ॥ १४ ॥**

---

१. अ.को. २.६.७३
२. अ.को. ३.३.६३। 'क्षत्रियायां च शूद्रजे' इति उपलब्धपाठः।
३. BORI. पृ. १२; 'पुत्राणां' इति कुं पाठः।

**अनुशास्ताऽस्मि कौरव्य** इत्यत्र कमनुशास्तास्मीति योजना ।

**केचिन्न सम्यक् पश्यन्ति मूढाः सम्यगवेक्ष्य च ।**
**तदिदं मम मूढस्य तथाभूतं वचः स्म तत्** ॥ ६१ ॥

**केचिन्न सम्यक् पश्यन्ति मूढाः सम्यगवेक्ष्य च** इत्यत्र केचिन्मूढाः सम्यगवेक्ष्य च सम्यक् न पश्यन्तीति योजना ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः॥

[१]**विशस्त्रकवचाः सर्वे कान्दिशीका विचेतसः ।**
**अन्योन्यमभिनिध्नन्तो वीक्षमाणा भयाद्दिशः** ॥ १० ॥

**विशस्त्रकवचाः सर्वे कान्दिशीका विचेतस** इत्यत्र **कान्दिशीकाः** रणे शस्त्रादिना कृतव्रणाः । 'कान्दिशीको रणे क्षतः'[२] इत्यमरः ।

**नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितम् ।**
**जघने वर्तमानं मां तूर्णमश्वान् प्रचोदय** ॥ १७ ॥

**जघने वर्तमानं माम्** इत्यत्र **जघने** सेनासमुद्रस्य [३]पारे ।

॥ इति तृतीयोऽध्यायः ॥

* * *

---

१. **'विध्वस्त'** इति कुं पाठः ।
२. अ.को. ३.१.४२ । '–भयद्रुतः' इति उपलब्धपाठः ।
३. **'पार्श्वे'; 'पाते'** सो.मु.पा.।

## ।। अथ पञ्चमोऽध्यायः ।।

**[१]उग्रं तेपे तपः कृष्णा भर्तृणामर्थसिद्धये ।**
**स्थण्डिले नित्यदा शेते यावद्वैरस्य [२]यातना ।। १९ ।।**

**यावद्वैरस्य यातना** इत्यत्र **यातना** प्रापणं पारगमनमित्यर्थः ।

**इति [३]वैरं समुन्नद्धं न [४]निर्वाति कथञ्चन ।**
**अभिमन्योर्विनाशेन स सन्धेयः कथं मया ।। २१ ।।**

**इति वैरं समुन्नद्धं न निर्वाति कथञ्चन** इत्यत्र **इति** पूर्वोक्तप्रकारेण समुन्नद्धं वैरं अभिमन्योर्विनाशेन **कथञ्चन** येन केनापि प्रकारेण **न निर्वाति** निर्वाणं नाशं न गच्छति । स्वसेवानिरतसुभद्रापुत्रनाशस्य द्रौपद्याः स्वपुत्रनाशादप्यधिकदुःखकरत्वात् अभिमन्युनाशाज्जातं वैरं द्रौपदी न विस्मरत्येव । अतः [५]**सः** अस्याः पतिर्धर्मराजः ।

**सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम् ।**
**सुयुद्धेन हतः स्वर्गं प्राप्स्यामि न तदन्यथा ।। ४७ ।।**

**जगतोऽस्य पराभवम्** इत्यत्र अस्य जगतः **पराभवं** पराजयं, उपेक्षणमिति यावत् ।

**।। इति पञ्चमोऽध्यायः ।।**

---

१. कुं. ४ अध्यायः ।
२. BORI. पृ. ३१; **'यातनम्'** इति कुं पाठः ।
३. $D_n$; BORI पृ. ३१; **'सर्वम्'** इति कुं पाठः ।
४. **'निर्याति'** सो.मु.पा.।
५. **'स पतिः'** सो.मु.पा.।

## ।। अथ षष्ठोऽध्यायः ।।

**[१]रणे कर्णे हते वीरे त्रासिता जितकाशिभिः ।**
**नालभन् शर्म ते पुत्रा हिमवन्तमृते गिरिम् ।। ४ ।।**

**त्रासिता जितकाशिभिः** इत्यत्र **जितकाशिभिः**, जितं जयः जयेच्छुभिः, पाण्डवैः त्रासितास्ते **पुत्राः** दुर्योधनव्यतिरिक्ताः कैश्चि-दुर्बलभटैः सह हिमवन्तं गिरिमृते शर्म नालभन् । भीत्या हिमवतः प्रस्थे स्थिता इत्यर्थः ।ताननुनेतुं दुर्योधनादिभिरपि यत्र गतमिति ज्ञेयम् ।

**अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः ।**
**जहि शत्रून् रणे वीर महेन्द्रो दानवानिव ।। ३० ।।**

**अभिषिच्यस्व राजेन्द्र** इत्यत्र **अभिषिच्यस्व** मया अभिषिच्यो भव । कर्मणि लोटि मध्यमपुरुषैकवचनम् ।

**।। इति षष्ठोऽध्यायः ।।**

## ।। अथ सप्तमोऽध्यायः ।।

**[२]भीष्मद्रोणावति विभो सूतपुत्रं च संयुगे ।**
**विचरिष्ये रणमुखे प्रियार्थं तव कौरव ।। १३ ।।**

**भीष्मद्रोणावति विभो** इत्यत्र **अति** अतिक्रम्य ।

**।। इति सप्तमोऽध्यायः ।।**

---

१. कुं. ५ **अध्यायः ।**

२. $D_4$.S; BORI पृ.४२; **'द्रोणभीष्माविति'** इति कुं पाठः । **कुं. ६ अध्यायः**

## ।। अथ अष्टमोऽध्यायः ।।

[१] **तस्य सीता महाराज रथस्थोऽशोभयद्रथम् ।**
**स तेन संवृतो वीरो रथेनामित्रकर्शनः ।**
**तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत्** ।। २२ ।।

**तस्य सीता महाराज** इत्यत्र **सीता** [२]सुवर्णफलिकायां लाङ्गलेन कृता रेखा । 'सीता लाङ्गलपद्धतिः'[३] इत्यमरः ।

**हयानीकेन महता सौबलश्चापि संवृतः ।**
**प्रययौ सर्वसैन्येन कैतव्यश्च महारथः** ।। २६ ।।

**कैतव्यश्च महारथ** इत्यत्र कितवस्य भावः कैतव्यम् । अर्शवानर्शं इतिवत् तद्वान् कैतव्यः ।

**।। इति अष्टमोऽध्यायः ।।**

## ।। अथ नवमोऽध्यायः ।।

[४] **हयाश्च पर्यधावन्त चामरैरुपशोभिताः ।**
**हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम्** ।। १२ ।।

**हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम्** इत्यत्र मेदिनीं पिबन्त इव स्थिता हयाः हिमवतः प्रस्थे हंसा इव पर्यधावन्तेति इवशब्दावृत्त्या योजना ।

**।। इति नवमोऽध्यायः ।।**

---

१. BORI. पृ. ४८; **'तस्य सूतो'** इति कुं पाठः । **कुं. ७ अध्यायः ।**
२. **'सुवर्णफलकायां'** सो.मु.पा.; ३. अ.को. २.९.१४; ४. कुं. ८ अध्यायः

## ॥ अथ दशमोऽध्यायः ॥

**[१]परिवार्य रणे वीराः सिंहनादं प्रचक्रिरे ।**
**बाणशङ्खरवांस्तीव्रान् क्ष्वेलाश्च विविधा [२]मुहुः ॥ ५९ ॥**

**क्ष्वेलाश्च विविधा मुहुः** इत्यत्र **क्ष्वेलाः** सिंहनादान् । 'क्ष्वेला तु सिंहनादः स्यात्'[३] इत्यमरः ।

**॥ इति दशमोऽध्यायः ॥**

## ॥ अथ एकादशोऽध्यायः ॥

**जीववद्विह्वलत्वात्तु महापाणिर्वृकोदरः ।**
**निमेषात् पुनरुत्थाय समाह्वयत मद्रपम् ॥ २७ ॥**

**जीववद्विह्वलत्वात्तु महापाणिर्वृकोदर** इत्यत्र **जीववत्** मनुष्य-जीववत् । लोकनटनयेत्यर्थः ।

**॥ इति एकादशोऽध्यायः ॥**

## ॥ अथ पञ्चदशोऽध्यायः ॥

**युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः ।**
**स्वयं [४]सञ्चोदयानोऽश्वान् दन्तवर्णान् मनोजवान् ॥ ४७ ॥**

---

१. **कुं. ९ अध्यायः ।**

२. $B_{(B2\ missing)}$ $D_n$,$D_{2.6.8.9}$; BORI पृ. ६४; **'दधुः'** इति कुं.पाठः ।

३. **अ.को. २.८.१०७**

४. $T_{3.4}$, $G_{2.3}$; BORI पृ. १०४; **'सन्नोदयन्नश्वान्'** इति कुं पाठः ।

**स्वयं सञ्चोदयानोऽश्वान् दन्तवर्णान्** इत्यत्र अश्वान् शल्यरथं प्रेषयेति स्वसूतं [१] स्वयं सञ्चोदयान इति योजना ।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**यदद्भुतं कर्म न शक्यमन्यैः सुदुःसहं तत्कृतवन्तमेकम् ।**
**शल्यो नरेन्द्रः स विषण्णभावाद्विचिन्तयामास मृदङ्गकेतुः ॥१९**

**विचिन्तयामास मृदङ्गकेतुः** इत्यत्र **मृदङ्गकेतुः** धर्मराजः ।

**तथापरेणास्य जहार यन्तुः कायाच्छिरः [२] सन्नहनीयमध्यात्**
**जघान चाश्वांश्चतुरः सुशीघ्रं तथा भृशं कुपितो भीमसेनः ॥२२॥**

**सन्नहनीयमध्यात्** इत्यत्र **सन्नहनीयं** सन्नाहयोग्यं युद्धं, तस्य मध्यात् ।

**आवर्तनाकुञ्चितबाहुदण्डः सन्ध्याविहारी तनुवृत्तमध्यः ।**
**विशालवक्षा भगवान् हरो यथा सुदुर्निरीक्ष्योऽभवदर्जुनाग्रजः**
**॥ ४५ ॥**

**सन्ध्याविहारी तनुवृत्तमध्य** इत्यत्र सन्ध्याकाले धर्मरक्षणाय शूलमुद्यम्य विहरतीति **सन्ध्याविहारी** रुद्रः ।

॥ इति षोडशोऽध्यायः ॥

---

१. क्वचित्पुस्तकेषु **'स्वयम्'** इति नास्ति ।
२. BORI. पृ. १११; **'संहननीय–'** इति कुं. पाठः ।

## ।। अथ अष्टादशोऽध्यायः ।।

**न भर्तुः शासनं वीरा रणे कुर्वन्त्यमर्षिताः ।**
**अलं [1] रोद्धुं तवैतेषां नायं काल उपेक्षितुम् ।। २१ ।।**

**अलं रोद्धुं तवैतेषां नायं काल उपेक्षितुम्** इत्यत्र एतेषां रोद्धुं प्रयत्नः अलम् । पाण्डवानुपेक्षितुं अयं कालो न । एतेषां रोधादिना कालक्षेपो न कर्तव्यः,किन्तु अस्माभिरेव योद्धव्यमिति भावः ।

**पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान् ।**
**सहितानभ्यवर्तन्त गुल्ममास्थाय मध्यमम् ।। २६ ।।**

**गुल्ममास्थाय मध्यमम्** इत्यत्र **मध्यमं गुल्मं** सेनामुखं आस्थाय, त्वरामकृत्वेत्यर्थः । 'सेनामुखं गुल्मगणौ' [2] इत्यमरः ।

**ते मुहूर्ताद्रणे वीरा [3] हस्ताहस्तं विशाम्पते ।**
**निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ।। २७ ।।**

**हस्ताहस्तं विशाम्पत** इत्यत्र हस्तेषु हस्तेषु गृहीत्वा यद्युद्धं प्रवर्तते तद्यथा भवति तथा ।

।। इति अष्टादशोऽध्यायः ।।

* * *

---

१. $T_{1.2}$; BORI पृ. १२५; '**–क्रोद्धुमथैतेषाम्**' इति कुं पाठः ।
२. अ.को. २.८.८१
३. $D_{10.11}.T_3.G.M_3$; BORI पृ. १२६; '**हस्ताहस्ति**' इति कुं पाठः ।

## ।। अथ विंशोऽध्यायः ।।

**[१] योऽसौ महान् भद्रकुलप्रसूतः**
**सुपूजितो धार्तराष्ट्रेण नित्यम् ।**
**सुकल्पितः शास्त्रविनिश्चयज्ञैः**
**सदौपवाह्यः [२] सततं च राज्ञः ।। ३ ।।**

**सततं च राज्ञ** इत्यत्र **औपवाह्यः** राजारोहणयोग्यो गजः । 'औपवाह्यो राजवाहः सन्नाहः समरोचितः' [३] इति हलः ।

।। इति विंशोऽध्यायः ।।

## ।। अथ द्वाविंशोऽध्यायः ।।

**[४] लाघवात् सौष्ठवाच्चापि वीर्याच्चापि महात्मनः ।**
**अति सर्वाणि भूतानि ददृशुः सर्वपार्थिवाः ।। ६ ।।**

**अति सर्वाणि भूतानि ददृशुः** इत्यत्र **अति** अतिक्रम्य वर्तमानम् ।

।। इति द्वाविंशोऽध्यायः ।।

## ।। अथ पञ्चविंशोऽध्यायः ।।

**[५] सज्जयित्वा रथान् केचिद् यथामुख्यं विशाम्पते ।**
**आवृत्य पाण्डवानीकं पुनर्युद्धमरोचयन् ।। १४ ।।**

---

१. कुं. १९ अध्यायः ।; २. 'समरेषु राजन्' इति कुं पाठः ।
३. ह.को. २.२२४; ४. कुं. २१ अध्यायः ।; ५. कुं. २४ अध्यायः ।

**यथामुख्यं विशाम्पत** इत्यत्र मुख्यान् सेनानायकान् अनतिक्रम्य **यथामुख्यम्** ।

**राजन् बलेन त्र्यङ्गेन त्यक्त्वा जीवितमात्मनः ।**
**आत्मना पञ्चमोऽयुध्यं [१]पाण्डवस्य [२]महाबलम् ॥ ५१ ॥**

**आत्मना [३]पञ्चमोऽयुध्यं पाण्डवस्य महाबलम्** इत्यत्र आत्मना पञ्चम इति युद्धमध्ये अश्वं गजं वा आरुह्य खड्गी कवची भूत्वा स्थितस्य सञ्जयस्य वचनम् । दुर्योधनः, कृपः, कृतवर्मा, अश्वत्थामा स्वयञ्चेति पञ्च । अतः **आत्मना** स्वेन पञ्चमः सन् इत्युक्तम् ।

**अभिपिष्टैर्महानागैः समन्तात् पर्वतोपमैः ।**
**[४]नातिप्रसिद्धैव गतिः पाण्डवानाम् अजायत ॥ ५९ ॥**

**रथमार्गं ततश्चक्रे भीमसेनो महाबलः ।**
**पाण्डवानां महाराज [५]व्यपकर्षन् महागजान् ॥ ६० ॥**

**नातिप्रसिद्धेव गतिः पाण्डवानाम्** इत्यत्र **अभिपिष्टैः** भीमगदया अभितः **पिष्टैः** पेषणं कारितैः नागैः पाण्डवानां **गतिः** रथमार्गः नाति-प्रसिद्धा । अत्यन्तं प्रकर्षेण सिद्धा **अतिप्रसिद्धा,** सा न जायते वा । महागजान् व्यपकर्षन् भीमसेनः पाण्डवानां रथमार्गं चक्र इति योजना ।

॥ इति पञ्चविंशोऽध्यायः ॥

---

१. G ; BORI पृ. १७९; **'पाञ्चालस्य'** इति कुं. पाठः ।
२. **'बलेन ह' इति कुं पाठः, 'महद्बलम्'** सो.मु.पा.।
३. **'पञ्चमो युध्यन्'** सो.मु.पा.; ४. **नातिप्रसन्नेव,नातिप्रसङ्गेन** सो.मु.पा.।
५. BORI. पृ. १८१; **'व्यपाकर्षन्'** इति कुं. पाठः ।

## ।। अथ अष्टाविंशोऽध्यायः ।।

[१] स तच्छिरो वेगवता शरेण सुवर्णपुङ्खेन शिलाशितेन ।
[२] प्रावेपयत् कुपितः पाण्डुपुत्रो यत्तत्कुरूणामनयस्य मूलम् ।।६१।।

**प्रावेपयत् कुपितः पाण्डुपुत्र** इत्यत्र **प्रावेपयत्** इतस्ततः पातयामास। 'विप प्रवर्तने' इति धातुः ।।

**।। इति अष्टाविंशोऽध्यायः ।।**

## ।। अथ त्रिंशोऽध्यायः ।।

[३] भवनाद्भवनं राजन् प्रयातुं पृथिवीपते ।
[४] देवालयप्रवेशे च पन्था यस्य हिरण्मयः ।। ३० ।।

**भवनाद्भवनं राजन् प्रयातुं पृथिवीपत** इत्यत्र स्वगृहान्तर्वर्तिभवनेषु भवनाद्भवनं प्रयातुं स्वगृहान्तर्वर्तिदेवमन्दिर [५] प्रवेशायेत्यर्थः ।

आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत ।
[६] लुलुवुश्च तदा केशान् क्रोशन्त्यस्तत्र तत्र ह ।। ५८ ।।

**लुलुवुश्च तदा केशान्** इत्यत्र **लुलुवुः** चिच्छिदुः । 'लूञ् छेदने' इति धातुः ।

---

१. कुं. २७ अध्यायः । ; २. 'प्राव्रेरयत्' इति कुं पाठः ।
३. कुं. २९ अध्यायः ।
४. T.G, BORI. पृ. २०८; 'देवालयप्रदेशे' इति कुं पाठः ।
५. 'प्रवेशे चेत्यर्थः' सो.मु.पा.
६. BORI. पृ. २११; 'लुलुचुश्च' इति कुं पाठः ।

**प्राप्तकालमिदं सर्वं [1] भवतो भरतक्षये ।**
**[2] संस्मृतः कुलधर्मश्च सानुक्रोशतया त्वया ॥ ८५ ॥**

**प्राप्तकालमिदं सर्वं भवतो भरतक्षय** इत्यत्र भरतक्षये जाते सति **भवतः** तव **इदं सर्वं** पाण्डवेषु मैत्री, युद्धे दुर्योधनादिषु मृतेष्वपि धृतराष्ट्रपुत्रस्यापि तव मरणाभाव इत्यादिकं सर्वे **प्राप्तकालं** काल-प्रेरकनारायणात्प्राप्तं मन्ये । त्वया **सानुक्रोशतया** दयायुक्ततया **कुलधर्मः** अस्मत्कुलधर्मः संस्मृतः । त्वमेकः कुलधर्मं रक्षितवानसीति भावः । 'ब्रुवतो भरतक्षयम्' इति पाठे भरतक्षयं ब्रुवतस्तवेत्यर्थः । शेषं पूर्ववत् ।

**॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शल्यपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायां त्रिंशत्तमोध्यायः ॥**

**॥ समाप्तं शल्यपर्व ॥**

---

१. BORI. पृ. २१४; **'ब्रुवता'** इति कुं पाठः ।
२. $S_1$.K.$D_{n3}$,$D_{1.5.7-11}$; BORI पृ. २१४; **'रक्षितः'** इति कुं पाठः ।

# [1]अथ गदापर्व

## ॥ अथ प्रथमोऽध्यायः ॥

[2]**दुर्योधनं ख्यापयामो धनं दास्यति पाण्डवः ।**
**सुव्यक्तमिह नः ख्यातो ह्रदे दुर्योधनो नृपः ॥ ३२ ॥**

**सुव्यक्तमिह नः ख्यातो ह्रदे दुर्योधनो नृप** इत्यत्र **नः** अस्माकं इह ह्रदे **ख्यातः** ज्ञातः ।

**॥ इति प्रथमोऽध्यायः ॥**

## ॥ अथ द्वितीयोऽध्यायः ॥

[3]**क्रियाभ्युपायैर्बहुभिः मायामप्सु प्रयोज्य च ।**
**जहि त्वं भरतश्रेष्ठ मायात्मानं सुयोधनम् ॥ ७ ॥**

**क्रियाभ्युपायैर्बहुभिः** इत्यत्र क्रियया सहिता अभ्युपायाः क्रियाभ्युपायाः । केवलमुपायचिन्तामात्रेण न स्थातव्यम्, तदुचित-क्रियाश्च कर्तव्या इति भावः ।

**॥ इति द्वितीयोऽध्यायः ॥**

---

१. कुं. पाठानुसारेण इतः परमपि शल्यपर्व एव प्रवर्तते ।
२. कुं. ३० **अध्यायः ।**
३. कुं. ३१ **अध्यायः ।**

## ॥ अथ तृतीयोऽध्यायः ॥

**[1]अयमिष्टं च ते कामं वीर भूयो ददाम्यहम् ।**
**[2]हनैकं भवतो राज्यं हतो वा स्वर्गमाप्नुहि ॥ २७ ॥**

**हनैकं भवतो राज्यम्** इत्यत्र त्वं अस्मासु एकं हन । तर्हि भवतः राज्यं स्यादिति योजना ।

**सर्वो विमृशते जन्तुः कृच्छ्रस्थो धर्मदर्शनम् ।**
**[3]यदसौ पिहितं द्वारं परलोकस्य पश्यति ॥ ५९ ॥**

**यदसौ पिहितं द्वारम्** इत्यत्र **यत्** धर्मामर्षणम् ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**[4]एतेन हि कृता [5]योध्या वर्षाणीह त्रयोदश ।**
**आयसे पुरुषे राजन् भीमसेनजिघांसया ॥ ४ ॥**

**एतेन हि कृता योध्या** इत्यत्र **योध्या** युद्धयोग्यक्रिया । अभ्यास इत्यर्थः ।

**एते चान्ये च निहता बहवः क्षत्रियर्षभाः ।**
**प्रातिकामी तथा पापो द्रौपद्याः क्लेषकृद्धतः ॥ ४९ ॥**

---

१. कुं. ३२ अध्यायः ।; २. **'हत्वैकं भव नो राजा'** इति कुं पाठः ।
३. **'पदस्थः'** इति कुं पाठः ।; ४. कुं. ३३ अध्यायः ।
५. **'योग्या'** इति कुं पाठः ।

**प्रातिकामी तथा पाप** इत्यत्र **प्रातिकामी** दुर्योधनसारथिः ।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥

**[१]सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे ।**
**फलं च द्विपदां श्रेष्ठ [२]निवृत्तिमपि कर्मणाम्** ॥ ३९ ॥

**निवृत्तिमपि कर्मणाम्** इत्यत्र **कर्मणां** तस्मिंस्तस्मिंस्तीर्थे क्रियमाणपुण्यकर्मणां **निवृत्तिं** नितरां प्रवर्तनम् ।

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**[३]नक्षत्रयोगनिरताः सङ्ख्यानार्थं च ता भवन् ।**
**पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभकर्मणः** ॥ ४ ॥

**सङ्ख्यानार्थं च ता भवन्** इत्यत्र **संख्यानार्थं** सम्यक् शुभाशुभ-फलयोः ख्यानमाख्यानम्, ज्ञापनमिति यावत् । तदर्थं **ताः** देव्यः **भवन्** अभवन् ।

**[४]रत्नानि मुक्तामणिविद्रुमं [५]च भृङ्गीसुवर्णं रजतश्च शुद्धम् ।**
**अयस्मयं ताम्रमयं च भाण्डं ददौ द्विजातिप्रवरेषु रामः** ॥ ३७ ॥

---

१. कुं. ३५ अध्यायः ।
२. S ; BORI पृ. २५८; '**कर्म निर्वृत्तिमेव च**' इति कुं पाठः ।
३. कुं. ३६ अध्यायः । ; ४. कुं. पाठे अयं श्लोकः ३५ अध्याये वर्तते ।
५. '**चाप्यग्रं सुवर्णं रजतं सुशुद्धम्**' इति कुं पाठः ।

**भृङ्गीसुवर्णं रजतश्च शुद्धम्** इत्यत्र [1] **भृङ्गीसुवर्णं** अलङ्कारार्थ-सुवर्णम् । 'अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः' [2] इत्यमरः ।

**॥ इति सप्तमोऽध्यायः ॥**

## ॥ अथ अष्टमोऽध्यायः ॥

**तस्मान्नदीगतं चापि [3] उदपानं [4] महात्मनः ।**
**त्रितस्य च महाराज जगामाथ हलायुधः ॥ १ ॥**

**तस्मान्नदीगतं चापि उदपानं महात्मन** इत्यत्र महात्मनः **त्रितस्य** त्रिताख्यऋषेः **नदीगतं** नद्या मध्ये वर्तमानं **उदपानं** कूपम् । 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' [5] इत्यमरः ।

**ग्रावाणः शर्कराः कृत्वा प्रचक्रेऽभिषवं नृप ।**
**आज्यं च सलिलं चक्रे भागांश्च त्रिदिवौकसाम् ॥ ३३ ॥**

**प्रचक्रेऽभिषवम्** इत्यत्र **अभिषवं** लताया अभितः पेषणेन [6] सोम-रसप्रस्रवम् । 'सन्धानं स्यादभिषवः' [7] इत्यमरः ।

**वर्तमाने महायज्ञे त्रितस्य सुमहात्मनः ।**
**आविग्नं त्रिदिवं सर्वं कारणं च न बुध्यते ॥ ३६ ॥**

---

१. इयं टीका केचिन्मूलपुस्तकेषु नास्ति ।
२. अ.को. २.९.९६; ३. BORI. पृ. २६१; **'ह्युदपानं'** इति कुं पाठः ।
४. $T_2.G_{1.3}$,M; BORI पृ. २६१; **'यशस्विनः'** इति कुं पाठः ।
५. अ.को. १.१०.२६; ६. **'सोमरसप्रसवम्'** सो.मु.पा.
७. अ.को. २.१०.४२

**आविग्नं त्रिदिवं सर्वम्** इत्यत्र **आविग्नं** भीतम् ।

**भवितारौ मया शप्तौ पापेनानेन कर्मणा ।**
**प्रसवश्चैव युवयोः गोलाङ्गूलर्क्षवानराः** ॥ ५० ॥

**गोलाङ्लर्क्षवानरा** इत्यत्र **गोलाङ्गूलः** कृष्णवक्त्रो मर्कटः । 'गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः'[१] इति हलः ।

**॥ इति अष्टमोऽध्यायः ॥**

## ॥ अथ नवमोऽध्यायः ॥

[२]**ततो विनशनं राजन्नाजगाम हलायुधः ।**
[३]**शूद्राभीरान् प्रति द्वेषाद्यत्र नष्टा सरस्वती** ॥ १ ॥

**तत्तामृषो नित्यं प्राहुर्विनशनेति च ।**

**शूद्राभीरान् प्रति द्वेषाद्यत्र नष्टा सरस्वती** इत्यत्र **नष्टा** 'णश अदर्शने' इति धातोः अदर्शनं प्राप्ता ।

**तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिन्दमः ।**
**गर्गस्रोतो महातीर्थं आजगामैक**[४]**कुण्डलः** ॥ १३ ॥

**आजगामैककुण्डल** इत्यत्र **एककुण्डलः** शेषरूपी बलरामः । 'सीरी च सात्वतः स्यात्तालध्वज एककुण्डलोऽनन्तः'[५] इति हलः ।

---

१. ह.को. २.२३२; २. कुं. ३८ अध्यायः ।
३. **'शूद्राभीरा निषादाश्च'** सो.मु.पा.
४. $S_{\text{except M1}}$; BORI पृ. २७०; **'कुण्डली'** इति कुं पाठः ।
५. ह.को. १.२८

**तत्रापश्यन्महाशङ्खं महामेरुमिवोच्छ्रितम् ।**
**श्वेतपर्वतसङ्काशमृषिसङ्घैर्निषेवितम् ।**
**सरस्वत्यास्तटे जातं नगं तालध्वजो [१] बली ॥ ५० ॥**

**नगं तालध्वजो बली** इत्यत्र **नगं** वृक्षम् । 'शैलवृक्षौ नगावगौ' [२] इत्यमरः ।

**ततो यज्ञोपवीतैः तैः [३] तत्तीर्थं निर्विमाय वै ।**
**जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः ॥ ५१ ॥**

**ततो यज्ञोपवीतैः तैः तत्तीर्थं निर्विमाय वै** इत्यत्र कुशावर्ते कुशैर्गोदावर्यां शिलायां मार्गकरणवत् स्वैः यज्ञोपवीतैः तत्तीर्थं **निर्विमाय** कृत्वा, मार्गं कृत्वा आनीयेत्यर्थः ।

**ततः कुञ्जान् बहून् कृत्वा सन्निवृत्ता सरस्वती ।**
**ऋषीणां पुण्यतपसां [४] सम्मानार्थं महात्मनाम् ॥ ५३ ॥**

**ततः कुञ्जान् बहून् कृत्वा** इत्यत्र तेषां महात्मनां **सम्मानार्थं** प्रत्येकमाश्रमकरणेन सम्मानार्थं बहून् कुञ्जान् स्वजलद्रवणेन लतादिपिहितस्थलानि कृत्वा निवृत्तेति योजना । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' [५] इत्यमरः ।

---

१. 'बलः' सो.मु.पा.
२. अ.को. ३.३.१९
३. '-स्वैस्तत्रकृत्वा सरस्वतीम्' इति कुं पाठः ।
४. 'कारुण्याज्जनमेजय' इति कुं पाठः ।
५. अ.को. २.३.८

**एवं स कुञ्जो राजन् वै नैमिषीय इति स्मृतः ।**
**कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियाम् ॥ ५५ ॥**

**कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियाम्** इति जनमेजयं प्रति हितार्थं वचनम् ॥

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

**[१]पुण्याहघोषैर्विमलैर्वेदानां निनदैस्तथा ।**
**[२]वेदेषु चैव त्र्यङ्गेषु तस्मिन्यज्ञविधौ तदा ॥ ६ ॥**

**वेदेषु चैव त्र्यङ्गेषु** इत्यत्र त्र्यङ्गेषु संहितापदक्रमाख्याङ्गत्रयसहितेषु वेदेषु ।

॥ इति दशमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

**[३]ततस्त्वौशनसं तीर्थमाजगाम हलायुधः ।**
**कपालमोचनं नाम यत्र मुक्तो महामुनिः ॥ ४ ॥**

**महता शिरसा राजन् ग्रस्तजङ्घो महोदरः ।**
**राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा ॥ ५ ॥**

---

१. कुं. ३९ अध्यायः ।
२. 'देवेषु चैव व्यग्रेषु' इति कुं पाठः ।
३. कुं. ४० अध्यायः ।

**महता शिरसा राजन् ग्रस्तजङ्घो महोदर** इत्यत्र **रामक्षिप्तस्य** रामशरेण दूरं क्षिप्तशिरसः राक्षसस्य महता **शिरसा** राक्षसशिरसा **ग्रस्तजङ्घः** सन्दष्टजङ्घो **महोदरः** महोदराख्यो ब्राह्मणः **यत्र** यस्मिन् तीर्थे **मुक्तः** जङ्घास्थितराक्षसकपालान्मुक्तः ।

**तत्र पूर्वं तपस्तप्तं काव्येन सुमहतात्मना ।**
**यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः ।**
**[१]तत्रस्थश्चिन्तयामास [२]देवदानवविग्रहम् ॥ ६ ॥**

**देवदानवविग्रहम्** इत्यत्र विग्रहं भाविकलहम् ।

**[३]सपूतिना विस्रवता वेदनार्तो महामुनिः ।**
**जगाम सर्वतीर्थानि पृथिव्यां चेति नः श्रुतम् ॥ १३ ॥**

**सपूतिना विस्रवता** इत्यत्र **सपूतिना** दुर्गन्धसहितेन ।

**ततः स विरुजो [४]भूत्वा पूतात्मा वीतकल्मषः ।**
**आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः ॥ २० ॥**

**ततः स विरुजो भूत्वा** इत्यत्र **विरुजः** विगता रुजा क्लेशो यस्य सः । 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः'[५] इत्यमरः ।

॥ इति एकादशोऽध्यायः ॥

---

१. BORI. पृ. २८५; **'यत्रस्थ–'** इति कुं पाठः ।
२. $D_4$.S.($M_{2\text{-}4}$ om); BORI पृ. २८५; **'दैत्य–'** इति कुं पाठः ।
३. **'स पूतिना'** इति कुं पाठः ।
४. BORI. पृ. २८७; **'राजन्'** इति कुं पाठः ।
५. अ.को. २.६.५

## ।। अथ त्रयोदशोऽध्यायः ।।

[१]**वैशम्पायन उवाच –**

**ब्रह्मयोनिभिराकीर्णं जगाम यदुनन्दनः ।**
**यत्र दाल्भ्यो बको राजन् पश्वर्थं सुमहातपाः ।**
**जुहाव धृतराष्ट्रस्य राष्ट्रं कोपसमन्वितः ।। १ ।।**

**पश्वर्थं सुमहातपा** इत्यत्र बकाख्य ऋषिः धृतराष्ट्राख्यं राजानं पशून् याचितवान् । तेन औदासीन्ये कृते राष्ट्रनाशाय होमं कृत्वा शरणागतात्तस्मात् पशुलाभार्थमित्यर्थः ।

**पुरा हि नैमिशीयानां सत्रे द्वादशवार्षिके ।**
**वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ।। ३ ।।**

**तत्रेश्वरमयाचन्त दक्षिणार्थं मनस्विनः ।। ४ ।।**

**वृत्ते विश्वजितोऽन्ते वै** इत्यत्र **विश्वजितः** सर्वस्वदक्षिणात्मक-विश्वजिद्यागस्य । ईश्वरं राजानम् ।

**दृष्ट्वा** [२]**तदवकीर्णं तु राष्ट्रं स मनुजाधिपः ।**
**बभूव दुर्मना राजा चिन्तयामास च प्रभुः ।। १६ ।।**

**दृष्ट्वा तदवकीर्णम्** इत्यत्र **अवकीर्णं** नष्टम् ।

**ततो विप्रादिकाः प्राहुः पशुविप्रकृतस्त्वया ।**
**मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः ।। २० ।।**

---

१. कुं. ४२ अध्यायः ।   २. 'तथा-' इति कुं. पाठः ।

**पशुविप्रकृतस्त्वया** इत्यत्र **पशुविप्रकृतः** पशुभिः विपरीतं कृतः, मृतपशून् नयेत्युक्त इत्यर्थः ।

॥ इति त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

**[1]तेन कूलापहारेण मैत्रावरुणिरौह्यत ।**
**उह्यमानः स तुष्टाव तदा राजन् सरस्वतीम् ॥ २९ ॥**

**मैत्रावरुणिरौह्यत** इत्यत्र **मैत्रावरुणिः** वसिष्ठः ।

॥ इति चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

**[2]वयं च क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात् ।**
**न च नः कामकारोऽयं यद्वयं पापकारिणा ॥ १९ ॥**

**न च नः कामकारोऽयं यद्वयम्** इत्यत्र **अयं** क्षुधापरिहारः **नः** अस्माकं **कामकारः** कामेन कर्तुं योग्यो न च ।

**युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा ।**
**पक्षोऽयं वर्धतेऽस्माकं [3]यतः स्मो ब्रह्मराक्षसाः ॥ २० ॥**

**यतः स्मो ब्रह्मराक्षसा** इत्यत्र ब्रह्मधिक्करणादिना राक्षसाः **ब्रह्मराक्षसाः**, न तु स्वभावराक्षसाः । तेषामुपरि वक्ष्यमाणस्वर्गायोगात् । तदेव स्पष्टयति– **योषितां चैव** इत्यादिना ।

---

१. कुं. ४३ अध्यायः ।; २. कुं. ४४ अध्यायः ।; ३. **'यतस्ते'** सो.मु.पा.।

योषितां चैव पापेन योनिदोषकृतेन च ॥ २० ॥

एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान् प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥ २१ ॥

शक्तिमन्तोऽपि ये केचिदाश्रितानां च रक्षणम् ।
न कुर्वन्ति मनुष्यास्ते सम्भवन्तीह राक्षसाः ॥ २२ ॥

आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा ।
प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः ॥ २३ ॥

इति ।

[१]हुतं कीटावपन्नं च यच्चोच्छिष्टाचितं भवेत्
सकेशमवधूतं च रुदितोपहतं च यत् ॥ २६ ॥

श्वभिः संसृष्टमन्नं च भागोऽसौ रक्षसामिह ।
तस्माज्ज्ञात्वा सदा विद्वानेतान्यत्नाद्विवर्जयेत् ॥ २७ ॥

**हुतं कीटावपन्नं च** इत्यत्र हुतं दग्धम् । [२]भिःसटमित्यर्थः ।

राक्षसान्नमसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् ॥ २७ ॥
महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा ।
अरुणामानयामास स्वां तनुं पुरुषर्षभ ॥ २९ ॥

**अरुणामानयामास** इत्यत्र **अरुणां** गोदावरीसमीपस्थां अरुणाख्यां नदीं स्वां तनुं प्रति आनयामास ।'अरुणावरुणयोर्मध्ये यत्र प्राची

१. 'क्षुतं' इति कुं पाठः । ; २. 'विसर्गमित्यर्थः' इत्यपि पाठः दृश्यते ।

सरस्वती। तत्र स्नात्वा च पीत्वा च ब्रह्महत्यां व्यपोहति' इति वचनात् अरुणासङ्गमेनैव स्वस्याः ब्रह्महत्यापरिहारशक्तेः प्रसिद्धत्वादत्रापि तामानयामासेति भावः।

**एवं स कृत्वा समयं [१]सृष्ट्वा नीहारमीश्वरः।**
**चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥ ३६ ॥**

**एवं स कृत्वा समयं सृष्ट्वा नीहारमीश्वर** इत्यत्र **नीहारं** हिमानीम्। घनतरहिमसम्प्लवे सति सूर्यकिरणप्रचाराभावादहोऽपि न भवति, तमसोऽभावाद्रात्रिरपि न भवतीति भावः।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**[२]विकृताविकृताकारा विकृताभरणध्वजाः ॥ २४ ॥**

**व्याघ्रसिंहर्क्षवदना बिडालमकराननाः।**
**वृषदंशमुखाश्चैव[३] गजोष्ट्रवदनास्तथा ॥ २५ ॥**

**वृषदंशमुखाश्चैव** इत्यत्र [४]**वृषदंशो** वनमार्जारः। 'वृषदंशक आखुभुक्'[५] इति [६]अमरः।

**ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् प्रभुः।**

१. BORI. पृ. ३८७; **'दृष्ट्वा'** इति कुं पाठः।; २. कुं. ४५ अध्यायः।
३. $T_{1,2}$,G.M; BORI पृ. ३१२; **'–श्चान्ये'** इति कुं पाठः।
४. पृषदंश इत्यादिरूपेण केवलौष्ठ्यादिरयं शब्दः क्वचित्।
५. अ.को. २.५.६; ६. **'हलः'** सो.मु.पा.।

[१]स्कन्दः शाखो विशाखश्च [२]नैगमेषश्च पृष्ठतः ॥ ३७ ॥

**एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान् प्रभुः ।**
**यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः ॥ ३८ ॥**

**ततोऽभवच्चतुर्मूर्तिः** इत्यत्र एकः प्रागेव विद्यमानः कुमारः । शाख-विशाखनैगमेषाख्यन्तु रूपत्रयं पश्चाद्गृहीतम् । एवं चतुर्मूर्तिरिति भावः ।

॥ इति षोडशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

[३]**तच्चास्या वचनं नित्यमावर्तद्धृदि भारत ।**
**सर्वथा बदराण्येव पक्तव्यानीति कन्यका ॥ २६ ॥**

**तच्चास्या वचनं नित्यमावर्तद्धृदि भारत** इत्यत्र **तद्वचनं** ऋषिरूपेन्द्रवचनं अस्या हृदि आवर्तदिति योजना ।

॥ इति एकोनविंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः ॥

[४]**सन्न्यासे कृतबुद्धिं तं भूतानि पितृभिः सह ।**
**ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान् संविभजिष्यति ॥ ५५ ॥**

१. BORI. पृ. ३१४ ; **'तस्य'** इति कुं पाठः ।
२. BORI. पृ. ३१४; **'नैगमेयश्च'** इति कुं पाठः ।
३. B.D.S; BORI पृ. ३५४; **'तच्चास्या पचने यत्नं न न्यवर्तत'** इति कुं पाठः। कुं. ४९ अध्यायः ।; ४. कुं. ५१ अध्यायः ।

**कोऽस्मान् संविभजिष्यति** इत्यत्र अस्मान् कः **संविभजिष्यति** देवपितृकार्यादिना विभागं कृत्वा पूजयिष्यति ।

**॥ इति द्वाविंशोऽध्यायः ॥**

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**[१]नरन्तुकारन्दुकयोर्यदन्तरं रामह्रदानां च नरन्दुकस्य ।**
**[२]एतत्कुरुक्षेत्रस्यमन्तपञ्चकं [३]पितामहस्योत्तरवेदिरुच्यते ॥२८॥**

**नरन्तुकारन्दुकयोर्यदन्तरं रामह्रदानां च नरन्दुकस्य** इत्यत्र नरन्दुक इति प्रख्यातो देश एकस्यां दिशि कुरुक्षेत्रस्यावधिः । अरन्दुकाख्यस्तु अपरस्यां दिश्यवधिः । रामह्रदाः एकस्यां दिशि । नरन्तुकाख्यस्तु, अपरस्यां दिशि । तेषां चतुर्णामवधीनां यदन्तरं मध्ये स्थितं क्षेत्रं, एतत् कुरुक्षेत्रस्यमन्तपञ्चकं कुरुक्षेत्राख्यं स्यमन्तपञ्चकं पितामहस्य उत्तरवेदिरुच्यते ॥

**॥ इति चतुर्विंशोऽध्यायः ॥**

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**[४]सरस्वतीवाससमा कुतो रतिः**
**सरस्वतीवाससमाः कृतो गुणाः ।**

---

१. **'तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य च'** इति कुं पाठः । कुं. ५४ अध्यायः ।

२. $D_{n2}$,$G_2$; BORI पृ. ३८४; **'एतत्कुरुक्षेत्रसमन्तपञ्चकम्'** इति कुं पाठः ।

३. $B_2$,S; BORI पृ. ३८४; **'प्रजापतेरुत्तरवेदिरुच्यते'** इति कुं पाठः ।

४. कुं. ५५ अध्यायः ।

**[१] सरस्वतीहीनविदेशवासिनः**
**सदा स्मरिष्यन्ति नदीं सरस्वतीम्** ॥ ३७ ॥

**सरस्वतीहीनविदेशवासिन** इत्यत्र **सरस्वत्या** सरस्वतीनद्या हीनो योऽयं विदेशः तत्र वासिन इत्यर्थः ।

॥ इति पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

**[२] वार्तिकाश्च नरव्याघ्रं दृष्ट्वा ते हर्षमागताः** ॥ ८ ॥

**वार्तिकाश्च नरव्याघ्रम्** इत्यत्र **वार्तिकाः** लोकवार्तां कुर्वाणाः ।

**प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते ।**
**दक्षिणेन सरस्वत्याः [३] स्नपनं तीर्थमुत्तमम्** ॥ ११ ॥
**तस्मिन् देशे त्वनिरिणे ते तु युद्धमरोचयन्** ॥१२॥

**दक्षिणेन सरस्वत्याः स्नपनं तीर्थमुत्तमम्** इत्यत्र यत्र देशे सरस्वत्याः नद्याः **दक्षिणेन** [४] दक्षिणाभिमुख्येन दक्षिणतो गमने सतीत्यर्थः, स्नपनं नाम तीर्थमस्ति तस्मिन् देशे ततः पूर्वतने देशे इति योजना ।

॥ इति षड्विंशोऽध्यायः ॥

---

१. $T_{1,2}$,G; BORI पृ. ३९०; **'सरस्वतीं प्राप्य दिवं गता जनाः'** इति कुं पाठः ।

२. $D_2$; BORI पृ. ३९२; **'वादकाश्च नरास्तत्र'** इति कुं पाठः । कुं. ५६ **अध्यायः ।**

३. **'स्वयनम्'** इति कुं पाठः ।; ४. **'दक्षिणाभिमुखेन'** सो.मु.पा.।

## ।। अथ अष्टाविंशोऽध्यायः ।।

[१] **स महात्मा महात्मानं भीमं भीमपराक्रमः ।**
**अताडयच्छङ्खदेशे न चचालाचलोपमः ॥ ६१ ॥**

**अताडयच्छङ्खदेश** इत्यत्र **शङ्खदेशे** शङ्खोपमग्रीवादेशे ॥

**॥ इति अष्टाविंशोऽध्यायः ॥**

## ।। अथ त्रिंशोऽध्यायः ।।

[२] **गृह्य सञ्ज्ञां ततो भीमो गदया व्यचरद्रणे ।**
**मण्डलानि विचित्राणि यमकानीतराणि च ॥ २१ ॥**

**यमकानीतराणि च** इत्यत्र यमयोर्द्वन्द्वयोः सम्बन्धीनि **यमकानि, इतराणि** एकैकसञ्चारवन्ति ।

**॥ इति त्रिंशोऽध्यायः ॥**

## ।। अथ द्वात्रिंशोऽध्यायः ।।

[३] **आत्मवृद्धिर्मित्रवृद्धिः मित्रमित्रोदयस्तथा**
**विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मनः ॥ १५ ॥**

**आत्मवृद्धिर्मित्रवृद्धिः** इत्यत्र आत्मवृद्धिः, मित्रवृद्धिः, **मित्रमित्रोदयः** मित्राणां ये मित्रभूतास्तेषामुदयश्चेति वृद्धित्रयं स्वपक्षे । शत्रुनाशः, शत्रुमित्रनाशः, शत्रूणां ये मित्रभूताः तेषां ये मित्राः तेषां

---

१. कुं. ५८ अध्यायः । ; २. कुं. ५९ अध्यायः ।
३. कुं. ६१ अध्यायः ।

नाशश्चेति शत्रुपक्षे यन्नाशत्रयं तदपि स्ववृद्धिरित्येवोच्यते । एवं षड्विधा वृद्धिः ।

**आत्मन्यपि च मित्रे च विपरीतं यदा भवेत् ।**
**तदा [१]विद्वान् मनोज्ञाभिः आशु शान्तिकरो भवेत् ॥ १६ ॥**

**तदा विद्वान् मनोज्ञाभिः** इत्यत्र **मनोज्ञाभिः** वाग्भिः उपकारक्रियाभिश्च ।

**[२]योनैर्हार्दैश्च सम्बन्धैः सम्बन्धः सह पाण्डवैः ।**
**तेषां वृद्ध्या हि वृद्धिर्नो मा क्रुधः पुरुषर्षभ ॥ २१ ॥**

**योनैर्हार्दैश्च सम्बन्धैः** इत्यत्र **योनैः** योनिसम्बन्धनिमित्तः कुन्तीसुभद्रयोर्दाननिमित्तैरित्यर्थः । **हार्दैः** हृदयस्नेहनिमित्तैः ।

**[३]धर्मश्च धारितः सद्भिः [४]सह द्वाभ्यां नियच्छति ।**
**अर्थश्चाप्यतिलुब्धस्य कामश्चातिप्रसङ्गिणः ॥ २३ ॥**
**धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन् ।**
**धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते ॥ २४ ॥**

**धर्मश्च धारितः सद्भिः** इत्यत्र **द्वाभ्यां** अर्थकामाभ्यां सह सद्भिर्धारितो धर्मः **नियच्छति** सुखं नियच्छतीति वक्ष्यमाणसुखपदाऽवृत्त्या योजना । अतिलुब्धस्य अर्थः सुखं न नियच्छति । **अतिप्रसङ्गिनः**

---

१. **'विद्यान्मनोग्लानिम्'** इति कुं. पाठः ।
२. **'यौनः स्वैः सुखहार्दैश्च'** इति कुं पाठः ।
३. $T_2$, BORI पृ. ४२६; **'धर्मस्तु'** इति कुं पाठः ।
४. BORI. पृ. ४२६; **'स च'** इति कुं पाठः ।

अतिविषयासक्तस्य कामश्च सुखं न नियच्छति । **धर्मार्थौ अपीडयन्** धर्मेण अर्थमपीडयन्नित्यर्थः । एवं धर्मकामौ कामार्थौ च अपीडयन् धर्मेण काममपीडयन् कामेन धर्ममपीडयन्नित्यपि ग्राह्यम् ।

॥ इति द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**[1]नैतान् हर्षसमाविष्टानियं सेहे वसुन्धरा ॥ ४ ॥**

**नैतान् हर्षसमाविष्टानियं सेहे वसुन्धरा** इत्यत्र तेषां सम्भ्रमेण वसुन्धरा चकम्प इति भावः ।

**अमित्राणामधिष्ठानात् वधाद्दुर्योधनस्य च ।**
**भीम दिष्ट्या पृथिव्यां ते प्रथितं सुमहद्यशः ॥ १४ ॥**

**अमित्राणामधिष्ठानात्** इत्यत्र अमित्राणां मध्ये **अधिष्ठानात्** अधिकतया स्थानात् स्थितेः ।

**दुर्योधनवधे यानि रोमाणि हृषितानि नः ।**
**अद्यापि न [2]विहृश्यन्ते तानि तद्विद्धि भारत ॥ १६ ॥**

**अद्यापि न विहृश्यन्त** इत्यत्र न **विहृश्यन्ते** विरुद्धतया दृश्यन्ते, तथैव तिष्ठन्तीति भावः । **तद्विद्धि** त्वमपि पश्य ।

**तान् हृष्टान् पुरुषव्याघ्रान् पाञ्चालान् पाण्डवैः सह ।**
**ब्रुवतोऽसदृशं तत्र प्रोवाच मधुसूदनः ॥ १७ ॥**

---

१. कुं. ६२ अध्यायः । ; २. 'विकृष्यन्ते' इति कुं पाठः ।

**[१]नान्यायान्निहतः शत्रुः इति वक्तुं जनाधिपान्** ॥ १८ ॥

**नान्यायान्निहतः शत्रुः इति वक्तुं जनाधिपान्** इत्यत्र **शत्रुः** दुर्योधनः अन्यायान्न निहत इति जनाधिपान् प्रति वक्तुं मधुसूदनः प्रोवाचेति पूर्वेण सम्बन्धः ।

**असकृद्वाग्भिरुग्राभिः निहतो ह्येष मन्दधीः** ॥ १८ ॥

**असकृद्वाग्भिरुग्राभिः** इत्यत्र **असकृत्** बहुवारं **उग्राभिर्वाग्भिः** सभायां प्रागुक्तोग्रवाग्भिः ।

**[२]नैष योग्योऽत्र मित्रं वा शत्रुर्वा पुरुषाधमः ।**
**[३]किमनेनातिनुन्नेन वाग्भिः काष्ठसधर्मणा** ॥ २१ ॥

**नैष योग्योऽत्र मित्रं वा शत्रुर्वा पुरुषाधम** इत्यत्र एष पुरुषाधमः **अत्र** अस्यां दशायां मित्रमिति वक्तुं वा शत्रुरिति वक्तुं वा योग्यो न । **किमनेनातिनुन्नेन** इत्यत्र **अतिनुन्नेन** अतिव्यथितेन ।

**कंसदासस्य दायाद न ते लज्जास्त्यनेन वै ।**
**अधर्मेण गदायुद्धे यदहं विनिपातितः ।**
**ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्याप्रयच्छता** ॥ २७ ॥

**कंसदासस्य दायाद** इत्यत्र दासस्येति जात्येकवचनम् । कंसभृत्यानां **दायाद** द्रव्यभक्षक ।

---

१. **'न न्याय्यं निहतं शत्रुं भूयो हन्तुं नराधिपाः'** इति कुं पाठः ।
२. **'नैव तेभ्योऽद्य'** इति कुं पाठः ।
३. **'किमनेन वितुन्नेन'** इति कुं पाठः ।

**दुर्योधन उवाच –**

**अधीतं विधिवद्दत्तं भूः प्रभुक्ता ससागरा ।**
**मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ॥ ५९ ॥**

**को नु स्वन्ततरो मया** इत्यत्र सुष्ठु **अन्तो** नाशो यस्य सः स्वन्तः । अतिशयेन स्वन्तः **स्वन्ततरः** ।

**सञ्जय उवाच –**

**अस्य वाक्यस्य निधने कुरुराजस्य धीमतः ।**
**अपतत् सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ॥ ६४ ॥**

**अस्य वाक्यस्य निधन** इत्यत्र **निधने** अवसाने । दुर्योधने कृष्णं बहुधा निन्दति सति देवैः कृतं पुष्पवर्षादिकं पुनरपि तस्य कृष्णद्वेषातिशयं दृढीकर्तुमेव, न तु दुर्योधने प्रीत्या । तथा सति [१] 'अथ शोणितवर्षं च पांसुवर्षं च भारत । ववर्ष मघवान् देवस्तव पुत्रे निपातिते' इत्यत्रोक्तेन्द्रकृतशोणितपांसुवर्षादेर्विरोधात्, भूभारभूतदुर्योधनहरणाय श्वेतद्वीपं गत्वा कृष्णावताराय कृतप्रयत्नानां दुर्योधने महाद्वेषवतां देवानां पुनस्तस्मिन्नेव प्रीतेरसम्भावितत्वाच्च ।

**देवानां मतमाज्ञाय तेषां प्रियहितेप्सया ।**
**अर्जुनस्य [२] नते नागं मया व्यंसितमस्त्रजम् ॥ ५२ ॥**

**अर्जुनस्य नते नागं** इत्यत्र **नते** नम्रे शिरसि अस्त्रजं **नागं** नागसम्बन्धि पौरुषं मया व्यंसितम् ।

---

१. शल्य.५९.५०
२. 'महानागं' इति कुं पाठः ।

**नैतन्मनसि कर्तव्यं यदयं निहतो नृपः ।**
**[१]मिथ्यावध्याच्छलोपायैः बहवः शत्रवो हताः　　॥ ७५ ॥**

**मिथ्यावध्याच्छलोपायैः** इत्यत्र **मिथ्यावध्यात्** मिथ्यावधसम्बन्ध्युपायात् ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[२]ततस्ते प्रययुः सर्वे निवासाय महीक्षितः ।**
**शङ्खान् प्रध्मापयन्तो वै हृष्टाः परिघबाहवः　　॥ १ ॥**
**दुर्योधनस्य शिबिरं रङ्गवन्निःसृते जने　　॥ ४ ॥**
**गतोत्सवं पुरमिव हृतनागमिव ह्रदम् ।**
**[३]स्त्रीवर्षधरभूयिष्ठं वृद्धामात्यैरधिष्ठितम्　　॥ ५ ॥**

**रङ्गवन्निःसृते जन** इत्यत्र जने निःसृते सति **रङ्गवत्** रङ्गमिव स्थितम् । जनरहितनाट्यरङ्गोपममित्यर्थः । **स्त्रीवर्षधरभूयिष्ठं** स्त्रीभिः **वर्षधरैः** षण्ढैश्च भूयिष्ठम् । 'षण्ढो वर्षधरस्तुल्यौ'[४] इत्यमरः ।

**तत्रैतान् पर्युपातिष्ठन् दुर्योधनपुरःसराः ।**
**कृताञ्जलिपुटा राजन् काषायमलिनाम्बराः　　॥ ६ ॥**

---

१. G; BORI पृ. ४३७; '**मिथ्याचर्याच्छलोपायैः**' इति कुं पाठः ।
२. कुं.६३ अध्यायः ।
३. $D_{1.3.6.8.11}$; BORI पृ. ४३९; '**स्त्रीवर्षैवरभूयिष्ठम्**' इति कुं पाठः ।
४. अ.को.२.८.९.

**दुर्योधनपुरःसरा** इत्यत्र दुर्योधनस्य पुरतः सरन्तीति **दुर्योधनपुरःसराः** वृद्धामात्या इत्यर्थः ।

**अवरोपय गाण्डीवम् अक्षयौ च महेषुधी ।**
**अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ।**
**स्वयं चैवावरोह त्वमेतच्छ्रेयस्तवानघ ॥ ९ ॥**

**अवरोपय गाण्डीवम्** इत्यत्र गाण्डीवं **अवरोपय** ज्यारहितं कुरु । गाण्डीवस्य ज्याऽनवरोपणे युद्धसन्नद्धत्वात् ब्रह्मास्त्रशिखा अर्जुनं स्पृशेदेव । अतो ज्याऽवरोपणं कारितमित्यनुसन्धेयम् ।

**द्रोणकर्णास्त्रनिर्दग्धः पूर्वमेवायमर्जुन ।**
**मदधिष्ठितत्वात्[१] समरे न विशीर्णः परन्तप ॥ १८ ॥**

**मदधिष्ठितत्वात् समर** इत्यत्र युद्धकाले मदधिष्ठितत्वात्, युद्धात् स्वशिबिरं प्रति गते सति दैविकध्वजेन हनुमता चाधिष्ठितत्वादित्यपि ज्ञेयम् । अत एव दाहसमये कपेर्ध्वजस्य चापसरणं कृतम् ।

**मुक्ता वीरक्षयादस्मात् सङ्ग्रामान्निहतद्विषः ।**
**क्षिप्रमुत्तरकालानि कुरु कार्याणि भारत ॥ २२ ॥**

**क्षिप्रमुत्तरकालानि** इत्यत्र उत्तरकाले विद्यमानानि **उत्तर कालानि** ।

**[२]उपयातमुपप्लाव्यं सह गाण्डीवधन्वना ।**
**आनीय मधुपर्कं मां यत्पुरा त्वमवोचथाः ॥ २३ ॥**

---

१. BORI. पृ. १८; '**मदास्थितत्वात्**' इति कुं पाठः ।
२. '**उपायान्तमुपप्लाव्यम्**' सो.मु.पा.।

**सह गाण्डीवधन्वना** इत्यत्र उपप्लाव्यमुपयातं मां गाण्डीवधन्वना सह यदवोचथा इत्यनेन सम्बन्धः ।

**स एष सर्वाण्यस्त्राणि दिव्यानि प्राप्य शङ्करात् ।**
**मत्समो [१] मद्विशिष्टो वा रणे त्वमिति पाण्डव ।**
**अनुज्ञातः पाण्डुसुतः पुनः प्रत्यागमन्महीम् ॥ ३३ ॥**

**मत्समो मद्विशिष्टो वा** इत्यत्र नरावेशात् मत्समः, हर्यावेशात् मद्विशिष्ट इति विवेकः ।

**भूतं भव्यं भविष्यच्च अनुज्ञातस्त्वया विभो ।**
**निमेषार्धान्नरव्याघ्रो नयेदिति मतिर्मम ॥ ३४ ॥**

**नयेदिति मतिर्मम** इत्यत्र नयेत् संहारं नयेत् ।

**सदेवासुरगन्धर्वान् सयक्षोरगराक्षसान् ।**
**[२] जित्वा लोकान् विजेतुं हि शक्तः किमिह मानुषान् ॥ ३६ ॥**

**जित्वा लोकान् विजेतुं हि** यजनशीलो यज्वेतिवत्, [३] 'सजित्वानं सदासहम्' इति वैदिकप्रयोगाच्च **जित्वा** जयशीलः ।

**विधिना [४] महितश्चासौ मया सञ्चोदितोऽपि सन् ।**
**न चकार मतिम हन्तुं [५] कृतान्तो बलवत्तरः ॥ ३७ ॥**

**विधिना महितश्चासौ** इत्यत्र **विधिना** गुरुर्माननीय इत्यादिविधि-

---

१. '**वा विशिष्टो**' इति कुं. पाठः ।; २. '**त्रीन् वा लोकान् विजेतुं स**' कुं पाठः
३. ऋ.सं.१.८.१. ; ४. '**विहितं चासौ**' इति कुं पाठः ।
५. '**ततस्ते बलवत्तराः**' इति कुं पाठः ।

वाक्येन **महितः** महत्वं प्रापितः मया सञ्चोदितोऽपि सन् बलवत्तरः **असौ** अर्जुनः **कृतान्तः** कृतः अन्तः न हन्म्येवेति निश्चयो येन सः ।'अन्तोऽस्त्री निश्चये नाशे'[१] इत्यमरः । हन्तुं मतिं न चकारेति योजना ।

**अत्र गीता मया सुष्ठु गिरः सत्या महीपते ।**
**दर्शितं मयि [२]सर्वत्वं तेनासौ जितवान्रिपून् ॥ ३८ ॥**

**अत्र गीता मया सुष्ठु** इत्यत्र **अत्र** अस्मिन् विषये **सुष्ठु गिरः** भगवद्गीतारूपा गिरः मया गीताः । मयि **सर्वत्वं** 'सर्वं समाप्नोषि ततोऽसि सर्वः'[३] इत्यत्रैवोक्तत्वात् सर्वव्यापित्वम् ।

**अथाब्रवीत् महाराज वासुदेवो महायशाः ।**
**अस्माभिर्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः ॥ ४५ ॥**

**अस्माभिर्मङ्गलार्थाय** इत्यत्र **मङ्गलार्थाय** मङ्गलस्नानार्थाय ।

**[४]तत्र मे गमनं प्रायो रोचते तव माधव ।**
**गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिन्दम ॥ ४९ ॥**

**तत्र मे गमनं प्राय** इत्यत्र **तत्र** हस्तिनपट्टणे ।

**[५]हेतुकारणयुक्तैस्तैः वाक्यैः कालसमीरितैः ।**

---

१. अ.को.२.८.११६,'अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनो स्त्रियाम्' इति मुद्रितकोशेषु ।
२. **'सर्वं च'** इति कुं पाठः ।; ३. भ.गी.११-४०.
४. **'तत्र ते गमनं प्राप्तम्'** कुं पाठः ।; ५. **'हेतुकारणयुक्तैश्च'** इति कुं. पाठः ।

**क्षिप्रमेव महाभाग गान्धारीं प्रशमिष्यसि ।**
**पितामहश्च भगवान् व्यासस्तत्र भविष्यति ॥ ५० ॥**

**हेतुकारणयुक्तैस्तैः** इत्यत्र **हेतुः** सर्वहेतुर्नारायणः । **कारणं** तत्तत्कृतं कर्म तत्तद्योग्यता च ।

**स प्रायात् पाण्डवैरुक्तस्तत्पुरं सात्वतां वरः ।**
**[1]आसिसादयिषुः क्षिप्रं गान्धारीं निहतात्मजाम् ॥ ५४ ॥**

**आसिसादयिषुः क्षिप्रम्** इत्यत्र **आ** सम्यक् **सिसादयिषुः** प्रसादयितुमिच्छुः ।

॥ इति चतुस्त्रिंशोध्यायः ॥

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

**[2]दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम् ।**
**अमित्रा बाधिताः सर्वे को नु स्वन्ततरो मया ॥ १९ ॥**

**को नु स्वन्ततरो मया** इत्यादौ मया विना **स्वन्ततरः** सुष्ठु अन्तः स्वन्तः, अतिशयेन स्वन्तः **स्वन्ततरः** को नु? न कोऽपि ।

**आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः ।**
**आजानेयैस्तथा यातं को नु स्वन्ततरो मया ॥ २१ ॥**

**आजानेयैस्तथा यात** इत्यत्र **आजानेयैः** कुलीनाश्वैः । 'आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः'[3] इत्यमरः ।

---

१. $S_1$,$K_{1.3}$; BORI पृ. ४४३; **'आससाद ततः क्षिप्रम्'** इति कुं पाठः ।
२. कुं.६५.अध्यायः; ३. अ.को.२.८.४४.

**दिष्ट्या नाहं जितः सङ्ख्ये परान् प्रेष्यवदाश्रितः ।**
**दिष्ट्या मे विपुला लक्ष्मीः मृते त्वन्यगता विभो ॥ २४ ॥**

**दिष्ट्या नाहं जित** इत्यत्र **परान्** वैरिणः पाण्डवान् प्रेष्यवदाश्रितः सन् सङ्ख्ये दिष्ट्या **न जितः** जीवग्राहं न गतः ।

**दिष्ट्या नाहं परावृत्तो वैरात् प्राकृतवज्जितः ।**
**दिष्ट्या न विमतिं काश्चित् भजित्वा तु पराजितः ॥ २६ ॥**

**दिष्ट्या नाहं परावृत्त** इत्यत्र [१]वैरात् प्राकृतवत् जितः अहं दिष्ट्या न परावृत्तः । **विमतिं** शत्रुशरणागत्याख्यविरुद्धमतिं भजित्वा पराजितोऽपि न ।

**वार्तिकांश्चाब्रवीद् राजा पुत्रस्ते सत्यविक्रमः ।**
**अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ॥ ३० ॥**

**वार्तिकांश्चाब्रवीत्** इत्यत्र **वार्तिकान्** सिद्धगन्धर्वादीनां वार्तया सिद्धानर्थान् ।

**एतांश्चान्यांश्च सुबहून् मदीयांश्च सहस्रशः ।**
**पृष्ठतोऽनुगमिष्यामि सार्थहीन [२]इवाध्वगः ॥ ३४ ॥**

**सार्थहीन इवाध्वग** इत्यत्र **सार्थः** सहायभूतजनसङ्घः ।

**यदि [३]जीवति चार्वाकः परिव्राड्वाग्विशारदः ।**
**करिष्यति महाभागो ध्रुवं चापचितिं मम ॥ ३८ ॥**

---

१. **'वैरान्'** सो.मु.पा.।; २. BORI. पृ. ४५७; **'यथाध्वगः'** इति कुं. पाठः
३. S(T3.4. missing); BORI पृ. ४६१; **'जानाति'** इति कुं. पाठः ।

**यदि जीवति चार्वाक** इत्यत्र चार्वाकः **त्रिदण्डी** दुर्योधनसहायः सन्न्यासी । **अपचितिं** प्रत्युपकारेण मम पूजाम् । 'पूजा नमस्याऽपचितिः'[१] इत्यमरः ।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशत्तमोऽध्यायः ॥

[२]**विवर्तमानं बहुशो रुधिरौघपरिप्लुतम् ।**
**यदृच्छया निपतितं चन्द्रमादित्यगोचरात्** ॥ ५ ॥

**चन्द्रमादित्यगोचरात्** इत्यत्र **आदित्यगोचरात्** आदित्यमार्गात् । आकाशमार्गादित्यर्थः ।

**दुःखं [३]शक्या कृतान्तस्य गतिं ज्ञातुं कथञ्चन ।**
**लोकनाथो भवान्यत्र शेषे पांसुषु रूषितः** ॥ १५ ॥

**दुःखं शक्या कृतान्तस्य** इत्यत्र **दुःखं** दुःखं यथा भवति तथा ज्ञातुं शक्या । न तु सुखेन ज्ञातुं शक्येत्यर्थः ।

**एष मूर्धाभिषिक्तानामग्रे गत्वा परन्तपः ।**
**सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम्** ॥ १६ ॥

**पश्य कालस्य पर्ययम्** इत्यत्र **पर्ययं** विपर्ययम् ।

**दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे ।**
**यौ वै लोकगुरुर्नाथो भवानेतां दशां गतः** ॥ १८ ॥

---

१. अ.को.२.७.३४.; २. कुं.६६.अध्यायः ।
३. -S.K.$B_{1,4,5}$; BORI पृ. १४; **'नूनम्'** इति कुं. पाठः ।

**कार्याणां कारणान्तर** इत्यत्र **कारणान्तरे** विपरीतकार्यकारण-कर्मान्तरे ।

**सोऽयं मां समनुप्राप्तः प्रत्यक्षो भवतां हि यः ।**
**पृथिवीं पालयित्वाहं एतां निष्ठामुपागतः ॥ २३ ॥**

**एतां निष्ठामुपागत** इत्यत्र **निष्ठां** नाशम् । 'निष्ठा निष्पत्ति-नाशान्ताः'[१] इत्यमरः ।

**कृतं भवद्भिः सदृशमनुरूपमिवात्मनः ।**
**[२]यदि तं विजये शक्त्या दैवं तु दुरतिक्रमम् ॥ २९ ॥**

**यदि तं विजये शक्त्या** इत्यत्र **यदि** यद्यपि तं भीमं शक्त्या विजये, तथापि ।

**॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां गदापर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालङ्काराख्यटीकायां सप्तत्रिंशत्तमोऽध्यायः ॥**

**॥ समाप्तं गदापर्व ॥**

---

१. अ.को.३.३.४१.
२. 'यतितम्' इति कुं. पाठः ।

# सौप्तिकपर्व

## ।। अथ प्रथमोऽध्यायः ।।

**प्रभुज्य पृथिवीं सर्वां स्थिता मूर्धनि च सञ्जय ।**
**कथमद्य भविष्यामि [1]प्रेष्यभूतां दुरन्तकृत् ।। १३ ।।**

**प्रेष्यभूतां दुरन्तकृत्** इत्यत्र प्रेष्यभूतां दशां गत इति योग्यपदाध्याहारेण योजना । **दुरन्तकृत्** दुरन्तानि पापानि करोतीति स तथोक्तः ।

।। इति प्रथमोऽध्यायः ।।

## ।। अथ द्वितीयोऽध्यायः ।।

**उत्थानं चापि [2]सर्वस्य अनुत्थानञ्च दैवतम् ।**
**व्यर्थं भवति सर्वत्र पूर्वस्तत्र विनिश्चयः ।। ६ ।।**

**उत्थानं चापि सर्वस्य** इत्यत्र **सर्वस्य** कार्यस्य उत्थानमपि दैवाधीनं, अनुत्थानञ्च **दैवतं** दैवाधीनमित्यर्थः ।

**तयोर्दैवं तु दुश्चिन्त्यं स्ववशेनैव वर्तते ।**
**प्राज्ञाः पुरुषकारे तु वर्तन्ते देवमास्थिताः ।। ८ ।।**

**स्ववशेनैव वर्तत** इत्यत्र स्ववशो नैव वर्तते इति पदच्छेदः ।

---

१. **'प्रेष्यभूतो'** इति कुं. पाठः ।
२. **'दैवस्य ह्यनु–'** इति कुं. पाठः ।

**उत्थानं [1]हि मनुष्याणां दक्षाणां दैववर्जितम् ।**
**अफलं दृश्यते लोके सम्यगप्युपपादितम् ॥ ११ ॥**

**उत्थानं हि मनुष्याणाम्** इत्यत्र उत्थानं [2]प्रयत्नः । **दक्षाणां** दक्षाणामपि ।

**प्रायशो हि कृतं कर्म नाफलं दृश्यते भुवि ।**
**अकृत्वा च पुनर्दुःखं कर्म [3]दृश्येन्महत्फलम् ॥ १३ ॥**

**कर्म दृश्येन्महत्फलम्** इत्यत्र कर्म अकृत्वापि दुःखं वा महत्फलं वा **दृश्येत्** दर्शयति ।

**चेष्टामकुर्वन् लभते यदि किञ्चिद्यदृच्छया ।**
**यो वा न लभते कृत्वा [4]दुर्दर्शौ तावुभावपि ॥ १४ ॥**

**चेष्टामकुर्वन् लभत** इत्यत्र चेष्टामकुर्वन् किञ्चित्फलं यदृच्छया लभते, कृत्वापि अस्मिन् जन्मनि न लभते **तौ** तद्धेतू **दुर्दर्शौ** अविवेकिनां दुर्दर्शौ, विवेकी तु कर्माभावेऽपि फलप्राप्तिः प्राचीनकर्मणा, कृतेऽपि कर्माणि फलस्याप्राप्तिः भविष्यज्जन्मनि फलापेक्षयेति विवेचयति ।

**[5]अकृत्वा कर्म लोकेऽस्मिन् फलं विन्दति कर्हिचित् ।**
**स तु वक्तव्यतां याति द्वेष्यो भवति भूयशः ॥ १७ ॥**

---

१. S; BORI पृ. १४; 'च' इति कुं. पाठः ।

२. '**प्रयत्नम्**' सो.मु.पा.।; ३. BORI. पृ. १४; '**पश्येत्**' इति कुं. पाठः ।

४. '**दुर्दशौ**' सो.मु.पा.।

५. '**नाकृत्वा कर्म लोके हि**' इति कुं पाठः ।

**अकृत्वा कर्म लोकेऽस्मिन्** इत्यत्र **कर्म** नित्यनैमित्तिकादिकं कर्म अकृत्वा **फलं** वाणिज्यादिना द्रव्यलाभं [१] विन्दति ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**सर्वो हि मन्यते लोके आत्मानं बुद्धिमत्तरम् ।**
**सर्वस्यात्मा बहुमतः सर्वो त्मानं प्रशंसति** ॥ ४ ॥

**सर्वो त्मानं प्रशंसति** इत्यत्र **त्मानं** आत्मानम् ।

[२] **अन्यथा यौवने बाल्ये बुद्ध्या भवति मोहितः ।**
[३] **मध्येऽन्यथा जरायां तु सोऽन्यां रोचयते मतिम्** ॥ ११ ॥

**अन्यथा यौवने बाल्ये बुद्ध्या भवति मोहित** इत्यत्र लोके पुरुषः बाल्ये बुद्ध्या मोहितो भवति । **मध्ये** जराबाल्ययोर्मध्ये यौवने बुद्ध्या **अन्यथा** विपरीतो भवति, स्त्रीधनादिनिमित्तकामक्रोधादिना मदान्ध-बुद्धिर्भवतीत्यर्थः । अन्यत् स्पष्टम् ।

**व्यसनं वा महाघोरं समृद्धिं चापि तादृशीम् ।**
**अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम्** ॥ १२ ॥

**अवाप्य पुरुषो भोज** इत्यत्र भोजेति कृतवर्मणः सम्बुद्धिः ।

---

१. **'वदन्ति'** सो.मु.पा.।
२. **'अन्यया'** इति कुं. पाठः ।
३. $K_3$; BORI पृ. १९; **'मध्येऽन्यया'** इति कुं पाठः ।

**अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः ।**
**विमुक्तयुग्यकवचा हर्षेण च समन्विताः ।**
**वयं जिता मताश्चैषां श्रान्ता [1] व्यायामनेन च ॥ २५ ॥**

**श्रान्ता व्यायामनेन च** इत्यत्र **व्यायामनं** व्यायामः, तेन ।

**तेषां निशि प्रसुप्तानां [2] स्वस्थानां शिबिरे स्वके ।**
**अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करम् ॥ २६ ॥**

**अवस्कन्दं करिष्यामि** इत्यत्र स्वके शिबिरे निशि प्रसुप्तानां स्वस्थानां **तेषां** पाञ्चालानां शिबिरस्य **अवस्कन्दं** लोडनं करिष्यामि ।

**दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि ।**
**गमिष्यामि [3] निशामेनां पदवीमद्य दुर्गमाम् ॥ ३३ ॥**

**गमिष्यामि निशामेनाम्** इत्यत्र 'निशामेनाम्' इति द्वितीया सप्तम्यर्थे । अस्यां निशीत्यर्थः ।

**अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके ।**
**कृतकृत्यः सुखी चैव भविष्यामि महामते ॥ ३६ ॥**

**सौप्तिक** इत्यत्र **सौप्तिके** सुप्त्यवस्थायाम् ।

॥ इति तृतीयोऽध्यायः ॥

---

१. BORI. पृ. २१; **'व्यायामकर्षिताः'** इति कुं. पाठः ।
२. BORI. पृ. २१; **'सुस्थानां'** इति कुं. पाठः ।
३. **'निशावेलां'** इति कुं. पाठः ।

## ।। अथ चतुर्थोऽध्यायः ।।

**शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमाम् ।**
**[१]चरञ्चरे जागरितं स्वप तात निशामिमाम् ।। ५ ।।**

**चरञ्चरे जागरितं स्वप तात** इत्यत्र **चरञ्चरे** इतस्ततः सञ्चरणे सति त्वया **जागरितं** निद्राविहीनेनैव स्थितम् ।

**आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च ।**
**अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ।। २२ ।।**

**अर्थांश्चिन्तयतश्चापि** इत्यत्र नष्टानर्थानिति योग्यपदाध्याहारेण सम्बन्धः ।

।। इति चतुर्थोऽध्यायः ।।

* * *

## ।। अथ पञ्चमोऽध्यायः ।।

**नाथवन्तं तु [२]सुहृदं प्रतिषेधति पातकात् ।**
**निवर्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ।। ७ ।।**

**नाथवन्तं तु सुहृदं प्रतिषेधति पातकात्** इत्यत्र पातकात् लक्ष्मीवान् निवर्तते इत्युत्तरेणान्वयः ।

**।। इति पञ्चमोऽध्यायः ।।**

---

१. **'चिरं ते जाग्रतस्तात स्वप तावत्'** इति कुं. पाठः ।
२. **'सुहृदः प्रतिषेधन्ति'** इति कुं. पाठः ।

## ॥ अथ षष्ठोऽध्यायः ॥

**तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् ।**
**सोऽपश्यद् द्वारमावृत्य तिष्ठन्तं रोमहर्षणम्** ॥ ३ ॥

**तत्र भूतं महाकायम्** इत्यत्र भूतं सुमहद्भूतं रुद्रम् ।

**ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः ।**
**अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः** ॥ १७ ॥

**अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः** इत्यत्र **जनार्दनैः** जनार्दनरूपैः ।

**शास्त्रदृष्टमवज्ञाय[1] समतीत्य जिघांसति ।**
**स पथः प्रच्युतो धर्म्यात्कुपथे प्रतिहन्यते** ॥ २० ॥

**शास्त्रदृष्टमवज्ञाय** इत्यत्र अवज्ञाय, **समतीत्य** अतिक्रम्य चेति योजना ।

**गोब्राह्मणनृपस्त्रीषु [2]सख्युर्भ्रातुर्गुरोस्तथा ।**
**वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च** ॥ २१ ॥

**सख्युर्भ्रातुर्गुरोस्तथा** इत्यत्र सख्युभ्रातुर्गुरोरुपरि इति योग्यपदाध्याहारेण योजना । उत्थितेषु बुद्ध्वा **उत्थितेषु**, पलायितेष्वित्यर्थः ।

**तदिदं दुष्प्रणीतेन भयं मां समुपस्थितम् ।**
**न हि द्रोणसुतः सङ्ख्ये निवर्तेत कथञ्चन** ॥ २८ ॥

---

१. G.$T_2$ ; BORI पृ. ३४; '**शस्त्रदृष्टानविद्वान् यः**' इति कुं. पाठः ।
२. '**सख्युर्मातु–**' इति कुं. पाठः ।

**तदिदं दुष्प्रणीतेन** इत्यत्र 'भावे क्तः' इति वचनात् **दुष्प्रणीतं** दुर्विनयः, तेन ।

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**[१] यथावदहमाराध्यः कृष्णोनाक्लिष्टकर्मणा ।**
**तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ ६२ ॥**

**यथावदहमाराध्यः कृष्णोनाक्लिष्टकर्मणा** इत्यत्र **कृष्णेन** अर्जुनेन ।

**एवमुक्त्वा [२] महेष्वासं भगवानात्मनस्तनुम् ।**
**आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ ६५ ॥**

**एवमुक्त्वा महेष्वासं भगवानात्मनस्तनुम्** इत्यत्र आत्मनस्तनुमित्युक्त्या रुद्रस्य द्रौणेश्चैकत्वोक्त्या पूज्यपूजक भावायोगात् अश्वत्थामकृतात्मोपहारादिकं रुद्रान्तर्गतश्रीमहाविष्णु विषयकमिति ज्ञेयम् । अत एव 'आत्मस्थायैव विष्णवे'[३] इति प्राचां वाचः । 'गुहाशयायैव न देहमानिने'[४] इति श्रीभागवते रुद्रोक्तिश्च । अतो न कुत्रापि पूर्वोत्तरविरोध इत्यनुसन्धेयम् ॥

॥ इति सप्तमोऽध्यायः ॥

---

१. $D_{n1}$.S; BORI पृ. ४५; **'यथावदहमारद्धः'** इति कुं. पाठः ।
२. **'महात्मानम्'** इति कुं. पाठः ।
३. म.ता.नि.२८.१३३.
४. भा.४.४.२२.

## ।। अथ अष्टमोऽध्यायः ।।

**तमाक्रम्य पदा राजन् कण्ठे चोरसि पादयोः ।**
**नदन्तं विस्फुरन्तं च पशुमारममारयत् ।। २४ ।।**

**पशुमारममारयत्** इत्यत्र पशुमिव स्वसेनां मारयतीति **पशुमारः**, तम् ।

**तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ।**
**अध्यतिष्ठत तेजस्वी [1] रथं प्राप्य सुदर्शनम् ।। ३३ ।।**

**रथं प्राप्य सुदर्शनम्** इत्यत्र **सुदर्शनं** सुदर्शननामकम्[2] ।

**स्त्रियस्तु राजन् वित्रस्ता भारद्वाजं निरीक्ष्य ताः ।**
**अब्रुवन् दीनकण्ठेन क्षिप्रमाद्रवतेति वै ।। ३८ ।।**

**भारद्वाजं निरीक्ष्य ता** इत्यत्र **भारद्वाजं** भरद्वाजकुलोत्पन्नं द्रौणिम्।

**संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ।**
**पाञ्चालवीरानाक्रम्य क्रुद्धो न्यहनदन्तिके ।**
**स्फुरतो वेपमानांश्च शमितेव पशून् मखे ।। ४६ ।।**

**शमितेव पशून् मख** इत्यत्र यज्ञे पशुमारकः **शमिता**, स इव ।

**[3]अघोररूपो व्यचरत् कालवच्छिबिरे तदा ।**
**अपश्यद् द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ।। ५४ ।।**

---

१. **'क्रथम्'** सो.मु.पा.।

२. कचित्पुस्तके **'पाञ्चालम्'** इति, कचिच्च **'पाञ्चल्यम्'** इति, कचिच्च **'पाञ्चजन्यम्'** इति पदमेकं अत्र अधिकमुपलभ्यते । ; ३. **'स घोररूपो'** इति कुं. पाठः ।

**अघोररूपो व्यचरत्** इत्यत्र **अघोररूपः** [१]अघोराख्यशिवरूपः ।

**दद्दशुः कालरात्रिं ते स्मयमानामिव स्थिताम् ।**
**नराश्वकुञ्जरान् पाशैर्बद्ध्वा घोरैः प्रतस्थुषीम्** ॥ ७७ ॥

**वहन्तीं विविधान् प्रेतान् [२]पाशहस्तान् विमूर्धजान् ।**
**तथैव च सदा राजन् न्यस्तशस्त्रान् महारथान्** ॥ ७८ ॥

**स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष ।**
**दद्दशुर्योधमुख्यास्ते घ्नन्तं द्रौणिश्च नित्यदा** ॥ ७९ ॥

**पाशहस्तान् विमूर्धजान् स्वप्ने सुप्तान्नयन्तीम्** इत्यत्र सुप्तान् नयन्तीं तां कालरात्रिं घ्नन्तं द्रौणिश्च स्वप्ने नित्यदा दद्दशुः । आगामिस्वक्षयसूचकतया पाञ्चालाद्याः सर्वे भटाः प्रतिदिनमेवं स्वप्ने पश्यन्तीति भावः ।

**यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो ।**
**दुर्गमां पदवीं गच्छन् [३]पितुरासीद् गतव्यथः** ॥ १५७ ॥

**पितुरासीद् गतव्यथ** इत्यत्र पितुर्विषये इत्यर्थः ।

**॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सौप्तिकपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण-विरचितलक्षालङ्काराख्यटीकायां अष्टमोऽध्यायः ॥**

**॥ समाप्तं सौप्तिकपर्व ॥**

---

१. **'अघोराख्यविश्वरूपः'** सो.मु.पा.।

२. N,$D_n$.$M_{3.4}$; BORI पृ. ५४; **'पाशबध्दान्'** इति कुं. पाठः ।

३. T,$G_{2.3}$,M; BORI पृ. ६४; **'पितुरासीद्गतज्वरः'** इति कुं. पाठः ।

# अथ ऐषीकपर्व

## ।। अथ चतुर्थोऽध्यायः ।।

**अमृष्यमाणस्तान् शूरान् दिव्यायुधधरान् स्थितान् ।**[1]
**अपाण्डवायेति रुषा वाचमुत्सृज्य दारुणम् ।। १९ ।।**

**अपाण्डवायेति रुषा** इत्यत्र अपाण्डवाय अपाण्डवत्वाय । भावप्रधानो निर्देशः ।

।। इति चतुर्थोऽध्यायः ।।

## ।। अथ षष्ठोऽध्यायः ।।

**अयं मणिरयं चाहमिषीका तु पतिष्यति ।**[2]
**गर्भेषु पाण्डुपुत्राणामुत्तरायास्तथोदरे ।। ३१ ।।**

**अयं मणिरयं चाहमिषीका तु पतिष्यति** इत्यत्र अयं मणिः अयमहमेव । चशब्द एवार्थे ।

।। इति षष्ठोऽध्यायः ।।

## ।। अथ सप्तमोऽध्यायः ।।

**सहैव भवता ब्रह्मन् स्थास्यामि मनुजेष्विह ।**
**सत्यवागस्तु भगवानयं च पुरुषोत्तमः ।। १५ ।।**

---

१. कुं.१३.अध्यायः ।
२. कुं.१५.अध्यायः ।

**सहैव भवता ब्रम्हन् स्थास्यामि मनुजेष्वहम्** इत्यत्र **भवता** ध्येयतया मम हृदि गतेन भवता सह[१] स्थास्यामीति योजना ।।

।। इति सप्तमोऽध्यायः ।।

## ।। अथ अष्टमोऽध्यायः ।।

**[२]वैरस्य गतमानृण्यं न स्म वाच्या [३]विवक्षता ।। २८ ।।**

**न स्म वाच्या विवक्षता** इत्यत्र **विवक्षता** वचनकौशलवता वयं **वाच्याः** निन्द्याः न स्म ।

।। इति अष्टमोऽध्यायः ।।

## ।। अथ नवमोऽध्यायः ।।

**[४]बहुरूपाः प्रजाः सृष्टा विवृद्धाश्च स्वतेजसा ।**
**चुक्रोध बलवद् दृष्ट्वा लिङ्गं स्वं [५]प्रत्यविध्यत ।। २१ ।।**

**लिङ्गं स्वं प्रत्यविध्यत** इत्यत्र **स्वं** स्वगले लम्बमानं बाणलिङ्गं **प्रत्यविध्यत** कोपेन छित्त्वा भूमौ विक्षिप्तवान् ।

**[६]तपसाधिगतत्वान्नः प्रजार्थं [७]हि पितामह ।**
**ओषध्यः [८]परिवर्तन्ते यथैवं सततं प्रजाः ।। २५ ।।**

---

१. क्वचित् पुस्तके **'सह'** इति नास्ति । ; २. कुं. १६.अध्यायः ।
३. **'विवक्षताम्'** इति कुं. पाठः ।; ४. कुं. १७.अध्यायः ।
५. **'चाप्यविध्यत'** इति कुं. पाठः ।
६. **'तपसाधिगतं चान्नम्'** इति कुं. पाठः । ; ७.**'मे'** इति कुं. पाठः ।
८. $G_1$, $M_3$; BORI पृ. १०२; **'परिवर्तेरन्'** इति कुं. पाठः ।

**तपसाधिगतत्वान्नः प्रजार्थं हि पितामह** इत्यत्र **नः** अस्माकं प्रजार्थं तपसा **अधिगतत्वात्** अधिकं प्राप्तत्वात् ओषध्यः परिवर्तन्ते इति योजना ॥

॥ इति श्रीमन्महाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां ऐषीकपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण-विरचितलक्षालङ्कारारव्यटीकायां नवमोऽध्यायः ।

॥ समाप्तं ऐषीकपर्व ॥

# अथ स्त्रीपर्व

## ।। अथ प्रथमोऽध्यायः ।।

**अश्वत्थाम्नः कृतं कर्म शापश्चान्योन्यकारितः ।**
**वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ।। ३ ।।**

**शापश्चान्योन्यकारित** इत्यत्र कृष्णेन व्यासादिभिश्च अन्योन्यं विचार्य कारितः **अन्योन्यकारितः** ।

।। इति प्रथमोऽध्यायः ।।

## ।। अथ द्वितीयोऽध्यायः ।।

**सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।**
**संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ।। ३ ।।**

**सर्वे क्षयान्ता निचया** इत्यत्र नितरां **चीयन्ते** अर्ज्यन्ते इति **निचयाः** धनकनकादिद्रव्याणि ।

**अभावादीनि भूतानि भावमध्यानि भारत ।**
**अभावनिधनान्येव तत्र का परिदेवना ।। ६ ।।**

**अभावादीनि भूतानि** इति श्लोके अभावादीनीत्यत्र **अभावः** प्रागभावः । **अभावनिधनानि** अभावः **निधने** अन्ते येषां तानि । [१]प्रध्वंसाभावीनि इत्यर्थः ।

---

१. **'प्रध्वंसाभाव'** इति भाव्यमिति भाति ।

**अदर्शनादापतिताः पुनश्चादर्शनं गताः ।**
**नैते तव न तेषां त्वं तत्र का परिदेवना ॥ १३ ॥**

**अदर्शनादापतिताः** इत्यत्र **आपतिताः** मातुर्गर्भे पतिताः ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ।**
**कस्मादन्योन्यमिच्छन्ति [१] विप्रलम्भाधयो नराः ॥ ७ ॥**

**विप्रलम्भाधयो नराः** इत्यत्र **विप्रलम्भः** वञ्चना, **आधिः** मनोव्यथा येषां ते विप्रलम्भाधयः ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**[२] अनुतर्षुकमेवैतत् दुःखं भवति मारिष ।**
**राज्यनाशः सुहृन्नाशः सुतनाशश्च भारत ॥ २० ॥**

**अनुतर्पुकमेवैतत्** इत्यत्र **तर्षुकं** तृष्णाशीलं पुरुषमनुसृत्य वर्तमानमनुतर्पुकम् । 'कामोऽभिलाषस्तर्षश्च' [३] इत्यमरः ।

॥ इति सप्तमोऽध्यायः ॥

---

१ 'विप्रलब्धधियो' इति कुं. पाठः ।
२ 'अनुतर्पुलमेवैतत्' इति कुं. पाठः ।
३ अ.को. १.७.२८.

## ।। अथ नवमोऽध्यायः ।।

**श्वेतपर्वतरूपेभ्यो गृहेभ्यस्ता निराक्रमन् ।**
**गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ।। ११ ।।**

**पृषत्यो हतयूथपाः** इत्यत्र **पृषत्यः** मृग्यः । 'पृषतो रुरुश्च'[१] इति हलः ।

**तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः ।**
**शोकार्तान्यद्रवन् राजन्[२] किशोराणामिवाङ्कणे ।। १२ ।।**

**किशोराणामिवाङ्कण** इत्यत्र **किशोराणां** किशोरावस्थागतानां स्वशिशूनां अङ्कणे इव । यथा स्वशिशूनामङ्कणे प्राक् द्रवन्ति तथेत्यर्थः ।

**प्रगृह्य बाहून् क्रोशान्त्यः पुत्रान् भ्रातॄन् पितॄनपि ।**
**[३]दर्शयन्त्य इवाभस्म युगान्ते [४]लोकसङ्क्ये ।। १३ ।।**

**दर्शयन्त्य इवाभस्म** इत्यत्र युगान्ते लोकसङ्क्ये **आभस्म** आ समन्ताद्ध्रियमानं भस्म दर्शयन्त्य इव ।

**।। इति नवमोऽध्यायः ।।**

## ।। अथ चतुर्दशोऽध्यायः ।।

**हताश्वे नकुले [५]यत्तद् वृषसेनेन भारत ।**
**अपिबः शोणितं सङ्ख्ये दुःशासनशरीरजम् ।। १३ ।।**

---

१. ह.को.२.२३०; २. '**किशोरीणामिवाङ्गणे**' इति कुं. पाठः ।
३. '**दर्शयन्ति हता हि स्म**' इति कुं. पाठः।; ४. '**लोकसंख्ययम्**' इति कुं. पाठः
५. '**यत्तु वृपसेनेन**' इति कुं. पाठः ।

**हताश्वे नकुल** इत्यत्र **नकुले** वृषसेनेन हताश्वे सति **यत्** कृतं नकुलावमानादिकं तदर्थम् ।

**गान्धार्युवाच–**

**वृद्धस्यास्य शतं पुत्रान् निघ्नंस्त्वमपराजितः ।**
**[1]कस्मान्न शेषितः कश्चित् येनाल्पमपराधितम् ॥ २२ ॥**

**कस्मान्न शेषित** इत्यत्र येन पुत्रेण अल्पमपराधितं सोऽपि कस्मान्न शेषित इति योजना ।

॥ इति चतुर्दशोऽध्यायः ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

**स्वशिरः पञ्चशाखाभ्यां अभिहत्यायतेक्षणा ।**
**पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ ३० ॥**

**स्वशिरः पञ्चशाखाभ्याम्** इत्यत्र **पञ्चशाखाभ्यां** कराभ्याम् । 'पञ्चशाखः शयः पाणिः'[2] इत्यमरः ।

॥ इति सप्तदशोऽध्यायः ॥

## ॥ अथ अष्टादशोऽध्यायः ॥

**दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरम् ।**
**राजपुत्रीं महाबाहो मनो [3]मेऽभ्युपताम्यति ॥ ६ ॥**

---

१. **'कस्मान्नाशेषयः कश्चित्'** इति कुं. पाठः ।; २. अ.को. २.६.८१
३. **'न ह्युपशाम्यति'** इति कुं. पाठः ।

**मनो मेऽभ्युपताम्यति** इत्यत्र 'तमु ग्लानौ' इति धातोः **ताम्यति** ग्लानिं प्राप्नोति।

॥ इति अष्टादशोऽध्यायः ॥

## ॥ अथ एकोनविंशोऽध्यायः ॥

**युवा [1]वृन्दारकः [2]शूरो विकर्णः पुरुषर्षभ।**
**सुखोषितः सुखार्हश्च शेते पांसुषु माधव** ॥ ५ ॥

**युवा वृन्दारकः शूर** इत्यत्र वृन्दारक इव विद्यमानः **वृन्दारकः**। लुप्तोपमा।

॥ इति एकोनविंशोऽध्यायः ॥

## ॥ अथ एकाविंशोऽध्यायः ॥

**आचार्यशापोऽनुगतो ध्रुवं त्वां यदग्रसच्चक्रमियं धरित्री।**
**ततः शरेणापहृतं शिरस्ते धनञ्जयेनाहवचक्रमध्ये** ॥ ११ ॥

**आचार्यशापोऽनुगता** इत्यत्र **आचार्यः** कर्णहतगोवत्सस्वामी ब्राह्मणः, तस्य शाप इति योजना।

॥ इति एकविंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः ॥

**प्रातिपेयं महेष्वासं हतं भीमेन बाह्लिकम्।**
**प्रसुप्तमिव शार्दूलं पश्य कृष्णमनस्विनम्** ॥ ५ ॥

---

१. BORI. पृ. ७१; '**वृन्दारकसमो**' इति कुं. पाठः।
२. '**नित्यं प्रवसस्त्रीनिषेवितः**' सो.मु.पा.।

**प्रातिपेयं महेष्वासम्** इत्यत्र प्रतीपनामकस्य शन्तनुपितुः पुत्रः प्रातिपेयः ।

**पुत्रशोकाभितप्तेन प्रतिज्ञां चाभिरक्षता ।**
**पाकशासनिना सङ्ख्ये [1] वार्द्धक्षत्रिर्निपातितः ॥ ७ ॥**

**वार्द्धक्षत्रिर्निपातित** इत्यत्र वृद्धक्षत्रपुत्रः सैन्धवः **वार्द्धक्षत्रिः** ।

**एकादश चमूर्भित्त्वा रक्ष्यमाणं महात्मना [2] ।**
**सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ८ ॥**

**रक्ष्यमाणं महात्मना** इत्यत्र **रक्ष्यमाणं** द्रोणादिभी रक्ष्यमाणम् ।

॥ इति द्वाविंशोऽध्यायः ॥

## ॥ अथ त्रयोविंशोऽध्यायः ॥

**अतूलपूर्णं गाङ्गेयः त्रिभिर्बाणैः समन्वितम् ।**
**उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना ॥ २० ॥**

**अतूलपूर्णं गाङ्गेय** इत्यत्र **तूलेन** कार्पासेन पूर्णं न भवतीत्य-तूलपूर्णमिति उपाधानस्य विशेषणम् ।

**धर्मात्मा तात सर्वज्ञः [3] पारम्पर्ये च निर्णये ।**
**अमर्त्य इव मर्त्यः सन्नेषः प्राणानधारयत् ॥ २२ ॥**

---

१. BORI. पृ. ८१; **'वार्धक्षत्रिर्निपातितः'** इति कुं. पाठः ।
२. **'महात्मभिः'** इति कुं. पाठः । BORI. पृ. ८१; **'महात्मानः'** सो.मु.पा. ।
३. $S_2$,$K_{0.4}$ ; BORI पृ. ८५; **'पारावर्येण निर्णये'** इति कुं. पाठः ।

**पारम्पर्ये च निर्णय** इत्यत्र **पारम्पर्ये** मुमुक्षूणां परम्पराप्राप्ते, निर्णये निर्णीयते सद्भिरिति **निर्णयः** उत्तरायणकालः, तस्मिन् । तादर्थ्ये सप्तमी । उत्तरायणकालप्राप्त्यर्थमित्यर्थः ।

**धर्मेण कुरवः कं नु [१]परिप्रक्ष्यन्ति माधव ।**
**गते देवव्रते भीष्मे देवकल्पे नरर्षभे ॥ २६ ॥**

**परिप्रक्ष्यन्ति माधव** इत्यत्र **परिप्रक्ष्यन्ति** परितः प्रश्नं कुर्वन्ति ।

॥ इति त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

**इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना ।**
**तामेतामनुशोचन्ति सपत्न्यः [२]स्वामिनः स्नुषाः ॥ २२ ॥**

**सपत्न्यः स्वामिनः स्नुषा** इत्यत्र **स्वामिनः** देवरस्य **सपत्न्यः** ज्येष्ठपत्नीसमानाः पत्न्यः स्वश्वश्र्वाः स्नुषाः इति विवेकः । 'स्वामिनो देवृदेवरौ'[३] इत्यमरः ।

॥ इति चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

**इमौ तौ परिघप्रख्यौ बाहू चन्दनरूषितौ ।**
**ययोर्विवरमापन्नां न रतिर्मां पुराऽजहत् ॥ ३ ॥**

---

१. BORI. पृ. ८६; '**परिद्रक्ष्यन्ति**' कुं. पाठः । '**परिस्प्रक्ष्यन्ति**' सो.मु.पा. ।
२. '**स्वामिव स्नुषाम्**' इति कुं. पाठः ।
३. अ.को.२.६.३२

इति काम्बोजराजपत्न्या वचनम् ।

[1]**दाशार्हीपुत्रजं वीरं शयानं सत्यविक्रमम् ।**
**आरोप्याङ्के रुदन्त्येताश्चेदिराजवराङ्गनाः ॥ २४ ॥**

**दाशार्हीपुत्रजं वीरम्** इत्यत्र **दाशार्ही** वासुदेवस्वसा, तस्याः पुत्रः शिशुपालः तस्माज्जातमिति धृष्टकेतोर्विशेषणम् ।

**जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये ।**
**दैवादेव विनश्यन्ति वृष्णयो नात्र संशयः ॥ ४८ ॥**

**चीर्णं चरसि क्षत्रिय** इत्यत्र मम सङ्कल्पात् **चीर्णम्** आचरितमेव यादवनाशं त्वमपि **चरसि** वाचा अनुसरसि, अनुजानासीत्यर्थः ।

॥ इति पञ्चविंशोऽध्यायः ॥

* * *

## ॥ अथ षड्विंशोऽध्यायः ॥

**पात्यमानाः परैर्ये तु हीयमाना निरायुधाः ।**
[2]**ह्रीनिषेधा महात्मानः परानभिमुखा रणे ॥ १५ ॥**

**ह्रीनिषेधा महात्मान** इत्यत्र ह्रिया परावृत्य गमने लज्जया **निषेधाः** शत्रूणामेव निषेधा येषां ते तथोक्ताः ।

॥ इति षड्विंशोऽध्यायः ॥

---

१. BORI. पृ. ९५; '**दाशार्हपुत्रजम्**' इति कुं. पाठः ।
२. BORI. पृ. १०१; '**ह्रीनिषेवा**' इति कुं. पाठः ।

## ।। अथ सप्तविंशोऽध्यायः ।।

**उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।**
**सूपतीर्थाऽभवद्गङ्गा भूयो विप्रससार च** ।। ५ ।।

**सूपतीर्थाभवद्गङ्गा** इत्यत्र तेषां सर्वेषां मृतानां गतिप्रदानाय सुष्ठु उपपन्नानि **तीर्थानि ब्रह्माण्डान्तर्गततीर्थानि यस्यां सा तथोक्ता ।**

।। इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां स्त्रीपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण- विरचितलक्षालङ्काराख्यटीकायां सप्तविंशतितमोऽध्यायः ।।

।। समाप्तं स्त्रीपर्व ।।

# ॥ अथ शान्तिपर्व ॥

## ॥ अथ प्रथमोऽध्यायः ॥

**तत्र ते सुमहात्मानो न्यवसन् कुरुनन्दनाः ।**
**शौचं निवर्तयिष्यन्तो मासमात्रं बहिः पुरात्** ॥ २ ॥

**शौचं निवर्तयिष्यन्त** इत्यत्र **निवर्तयिष्यन्तः** नितरां वर्तयिष्यन्तः ।

**सोऽब्रवीन्मातरं धीमान् वेपमानां कृताञ्जलिः ।**
**प्राप्तान्[१] विसह्यांश्चतुरो न हनिष्यामि ते सुतान्** ॥३२॥

**प्राप्तान् विसह्यांश्चतुर** इत्यत्र **विसह्यान्** विशेषेण सोढुं शक्यान्, संहर्तुं शक्यानपीति यावत् ।

॥ इति प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

**क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो ।**
**सङ्घर्षजननस्तस्मात्कन्यागर्भो [२]विनिर्मितः** ॥ ४ ॥

**क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो । सङ्घर्षजननस्तस्मात् कन्यागर्भो विनिर्मित** इत्यत्र अयं भावः । कर्णस्य क्षत्रियायां जनना-भावे क्षत्रं शस्त्रपूतं स्वर्गं गच्छेदिति प्रमेयं न सिद्ध्येत् । अतः क्षत्रियायां जननमावश्यकम् । तच्चार्जुनादिवत् स्पष्टं कुन्त्यां जनने क्षत्रियत्वस्य

---

१. **'प्राप्तान्विषह्यांश्चतुरो'** इति कुं. पाठः ।
२. BORI. पृ. ८ ; **'विसर्जितः'** इति कुं. पाठः ।

सुप्रसिद्धत्वात् द्रोणाद्वा परशुरामाद्वा ब्रह्मक्षत्रयोरुभयोरपि योग्यं ब्रह्मास्त्रं लभेतैव । ब्रह्मास्त्रलाभे च कर्णस्य न कुतश्चिच्छस्त्रघातः स्यात्, प्रत्युत स्वशत्रुमेव तेन हन्यात् । अतश्च कर्णस्य शस्त्रघातसाध्यस्वर्गोऽपि न स्यात् । कन्यागर्भाज्जनने तु क्षत्रजातिरपि जाता । पुनः सूतपुत्रत्व-प्रसिद्धौ च ब्रह्मास्त्रलाभोऽपि नाभूत् । अतः क्षत्रजातिमतः कर्णस्य शस्त्रपूतं मरणमपि न्यायप्राप्तमित्युभयलाभाय कन्यायां जननं देवैर्निर्मितमिति वक्तुर्नारदस्य हृदयमिति । **सङ्घर्षजननः** देवानामन्योन्यं सङ्घर्षणेन मथनेन जननं यस्य । 'संहर्षजननः' इति पाठे स्पष्टोऽर्थः ।

॥ इति द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

**स दृष्टमात्रो रामेण क्रिमिः प्राणानवासृजत् ।**
**तस्मिन्नेवास्रविक्लिन्ने**[1] **तदद्भुतमिवाभवत्** ॥ १४ ॥

**तस्मिन्नेवास्रविक्लिन्न** इत्यत्र **अस्रेण** रक्तेन विक्लिन्ने **तस्मिन्** स्थले इत्यर्थः । [2] 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः ।

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

**ततः समुपविष्टेषु तेषु राजसु भारत ।**
**विवेश रङ्गं सा कन्या**[3] **धात्रीवर्षधरान्विता** ॥ १० ॥

१. $B_{02.4}.D_{a}.S$ ; BORI. पृ. १२ ; '**–वासृजि क्लिन्नः**' इति कुं. पाठः ।
२. अ.को. २-६-६४
३. BORI. पृ. १५; '**धात्रीवर्षवरान्विता**' इति कुं. पाठः ।

**धात्रीवर्षधरान्विता** इत्यत्र **वर्षधराः** षण्ढाः । 'षण्ढो वर्षधर-स्तुल्यौ'[१] इत्यमरः ।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**अमित्रा न समृद्धार्थाः वृत्तार्थाः कुरवः किल ।**
**आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः ॥ ४ ॥**

**अमित्रा न समृद्धार्था वृत्तार्थाः कुरवः किल** इत्यत्र **वृत्तार्थाः** प्रवृत्तसर्वार्थाः[२] कुरवः[३] अमित्राः किल अस्माभिर्नाशितत्वात् समृद्धा न किल । एवञ्च आत्मना **आत्मानं** स्वशरीरसमानं कुरुवंशं हत्वा किं धर्मफलमाप्नुम इति योजना ।

**आमिषे गृध्यमानानामशुभं वै शुनामिव ।**
**आमिषं चैव नो नष्टमामिषस्य च भोजिनाम् ॥१०॥**

**आमिषं चैव नो नष्टमामिषस्य च भोजिनाम्** इत्यत्र **आमिषस्य** आमिषप्रायस्य राज्यस्य भोजिनां नः **आमिषं** आमिषस्थानीयं राज्यं **नष्टं** हतबन्धुजनत्वात् नष्टप्रायम् ।

**अभुक्त्वा पार्थिवान् भोगान्[४] ऋणान्यन्नं विहाय च ।**
**पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम् ॥ १७ ॥**

---

१. अ.को. २.८.९; २. **'प्रवृद्ध'** सो.मु.पा. ।
३. **'समित्राः'** सो.मु.पा. ।
४. **'ऋणान्यनपहाय च'** इति कुं. पाठः ।

**पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम्** इत्यत्र पितृभ्यो देवताभ्यश्च ऋणानि मनुष्येभ्यः अन्नं च विहाय वैवस्वतक्षयं गता इति योजना।

**पाञ्चालानां कुरूणाञ्च हता एव हि ये हताः।**
**न सकामा वयं ते च न चास्माभिर्न तैर्जितम्** ॥ २० ॥

**पाञ्चालानां कुरूणाञ्च** इत्यत्र पाञ्चालानां कुरूणां च मध्ये ये हताः ते हता एव, ऐहिकफलस्य ईषदप्यननुभवात्। **न सकामा वयं ते च** इत्यत्र वयमपि सकामा न भवामः, पुत्रपौत्रादीनां नष्टत्वात्। ते कुरुपाञ्चालास्तु मृतत्वादेव सकामा न। तैरपि न जितम्। अस्माभिरपि बन्धूनामेव वधात् न जितम्। शत्रुजयो हि जयः बन्धुजयस्तु नैव जय इति भावः।

**नामात्यसमितौ[१] वाक्यं न च श्रुतवतां श्रुतम्**
**न रत्नानि पराध्यानि न भूर्न द्रविणागमः** ॥ २१ ॥

**नामात्यसमितौ** इत्यत्र अमात्यसमितौ **वाक्यं** नीतिवाक्यं न च श्रुतम्। **श्रुतवतां वाक्यम्** अध्यात्मवाक्यञ्च न श्रुतमिति योजना।

**न च धर्म्यानिमांल्लोकान् प्रपद्याम स्वकर्मभिः**
**वयमेवास्य लोकस्य विनाशे कारणं स्मृताः।**
**धृतराष्ट्रस्य पुत्रेण निकृतिप्रीतिसंयुतः** ॥ २२ ॥

**धृतराष्ट्रस्य पुत्रेण** इत्यत्र धृतराष्ट्रस्य पुत्रेण कारणेन वयमेवास्य लोकस्य विनाशे कारणं स्मृता इति योजना। तस्य धृतराष्ट्रपुत्रस्य

१. BORI. पृ. २२; 'सुहृदां' इति कुं. पाठः।

दुर्गुणानाह– **निकृतिप्रीतिसंयुत** इत्यादिना । 'धृतराष्ट्रस्य पुत्रेषु' इति पाठे धृतराष्ट्रपुत्राणां मध्ये ज्येष्ठो दुर्योधनः **निकृत्यां** कपटे प्रीतिसंयुत इत्यादियोजना ।

**तं पिता पुत्रगृध्नुत्वादनुमेनेऽनये स्थितम् ।**
**अनपेक्ष्यैव पितरं गाङ्गेयं विदुरं तथा ॥ २५ ॥**
**असंशयं [1]स्वयं राजा [2]यथैवायं तथा गतः ।**
**अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम् ॥ २६ ॥**

**अनपेक्ष्यैव पितरं गाङ्गेयम्** इत्यत्र पितरं गाङ्गेयं विदुरं चानपेक्ष्य **राजा** धृतराष्ट्रः **यं** दुर्योधनं असंशयं अनुमेने । अशुचिं लुब्धं काम-वशानुगं पुत्रं अनियम्य, यथा **अयं** दुर्योधनो गच्छति तथा स्वयञ्च गत इति योजना ।

**आत्मनो हि वयं दोषात् विनष्टाः शाश्वतीः समाः ।**
**प्रदहन्तो दिशः सर्वा भास्वरा इव तेजसा ॥ २९ ॥**

**आत्मनो हि वयं दोषात्** इत्यत्र **आत्मनः** दुर्योधनस्य दोषात् ।

**हताः शूराः कृतं पापं विषयः [3]स्वो विनाशितः ।**
**हत्वा नो विगतो मन्युः शोको मां [4]रन्धयत्ययम् ॥ ३३ ॥**

**शोको मां रन्धयत्ययम्** इत्यत्र **रन्धयति** दहति ।

---

१. **'त्वयं'** इति कुं. पाठः ।
२. $D_{11}$; BORI. पृ. २३ ; **'यथैवाहं'** इति कुं. पाठः ।
३. BORI. पृ. २४ ; **'असौ'** इति कुं. पाठः ।
४. $M_2$ ; BORI. पृ. २४ ; **'दारयत्ययम्'** इति कुं. पाठः ।

**धनञ्जयकृतं पापं कल्याणेनोपहन्यते ।**
**ख्यापनेनानुतापेन दानेन तपसापि वा ।**
**निवृत्त्या तीर्थगमनाच्छ्रुतिस्मृतिजपेन वा ॥ ३४ ॥**

**धनञ्जयकृतं पापं कल्याणेनोपहन्यत** इत्यत्र **धनस्य** शत्रुधनस्य जयः **धनञ्जयः** तेन कृतं पापं, **धनञ्जयेन** अर्जुनेन कृतं पापं स्वज्येष्ठ-कर्णवधाख्यपापं वा । **कल्याणेन** पुण्यकर्मकरणेन । **निवृत्त्या** विषयेभ्यो निवृत्त्या, वैराग्येणेत्यर्थः ।

**त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ।**
**त्यागवान् जन्ममरणे नाप्नोतीति श्रुतिर्यतः ।**
**प्राप्तवर्त्मा कृतमतिर्ब्रह्म सम्पद्यते तदा ॥ ३५ ॥**

**त्यागवान् जन्ममरण** इत्यत्र **त्यागवान्** वैराग्यवान् ।

**स धनञ्जयनिर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः ।**
**वनमामन्त्र्य वः सर्वान् गमिष्यामि परन्तप ॥ ३६ ॥**

**स धनञ्जयनिर्द्वन्द्व** इत्यत्र धनस्य जयः **धनञ्जयः** तेन निर्द्वन्द्वः सोऽहम् ।

**मया निसृष्टं पापं हि परिग्रहमभीप्सता ।**
**जन्मक्षयनिमित्तं च प्राप्तुं शक्यमिति श्रुतिः ॥ ३८ ॥**

**जन्मक्षयनिमित्तं च** इत्यत्र जन्मक्षयनिमित्तं कैवल्यञ्च यत्ने कृते सति प्राप्तुं शक्यमिति श्रुतिराह । अतः पापमात्रपरिहारः किं वक्तव्य इति भावः ।

**॥ इति सप्तमोऽध्यायः ॥**

## ।। अथ अष्टमोऽध्यायः ।।

**यो ह्याजिजीविषेद्भैक्षं कर्मणा नैव [1] केनचित् ।**
**[2] स माऽऽरम्भाद् बुभूषेत हतस्वस्तिरकिञ्चनः ।**
**सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः ।। ६ ।।**

**कर्मणा नैव केनचित्** इत्यत्र **कर्मणा** स्वयोग्यकर्मणा । हतस्वस्तिः **अकिञ्चनः** स निर्भाग्यः **आरम्भात्** युद्धाद्यारम्भात् मा बुभूषेत ।

**कापालीं नृप पापिष्ठां वृत्तिमास्थाय [3] जीवतः ।**
**सन्त्यज्य राज्यमृद्धं [4] त्वां लोकोऽयं [5] प्रवदिष्यति ।। ७ ।।**

**सन्त्यज्य राज्यमृद्धं त्वाम्** इत्यत्र ऋद्धं राज्यं सन्त्यज्य गतं त्वां अयं लोकः प्रवदिष्यतीति योजना ।

**आकिञ्चन्यं मुनीनां स्यादिति वै नहुषोऽब्रवीत् ।। ११ ।।**

**आकिञ्चन्यं मुनीनाम्** इत्यत्र अकिञ्चनस्य भावः **आकिञ्चन्यं** वैराग्यम् ।

**कृत्वा नृशंसं [6] निधने धिगस्त्वधनतामिह ।। ११ ।।**

**कृत्वा नृशंसं निधन** इत्यत्र **निधने** युद्धे नृशंसं कृत्वा **पुनः** अधनतां धनाशाराहित्यं वैराग्यमित्यर्थः, धिगस्तु ।

---

१. BORI. पृ. २५; **'कस्यचित्'** इति कुं. पाठः ।
२. $D_8$ ; BORI. पृ. २६ ;**'समारम्भान्'** इति कुं. पाठः ।
३. BORI. पृ. २६; **'–मासाद्य'** इति कुं. पाठः ।
४. $T, G_{2,4}$; BORI. पृ. २६ ;**'ते'** इति कुं. पाठः ।
५. **'किं वदिष्यति'** इति कुं. पाठः ।
६. $D_{n1}, D_7, T_1, G_{2,3}$; BORI. पृ. २६ ;**'ह्यधने'** इति कुं. पाठः ।

[1]अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान् ।
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ॥ १२ ॥

**अश्वस्तनमृषीणां हि** इत्यत्र श्वस्तनधनधान्याद्यभावः **अश्वस्तनम्** ।

**अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।**
**दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति ॥ १४ ॥**

**अभिशस्तं प्रपश्यन्ति** इत्यत्र पार्श्वतः स्थितं दरिद्रम् **अभिशस्तं** अभितः **शासनं** शिक्षां प्राप्तं, सर्वैर्धिकृतमित्यर्थः, प्रपश्यन्ति । **शंसितुं** स्तोतुं । 'शंसु स्तुतौ' इति धातुः ।

**अधनेनार्थकामेन नार्थः शक्यो विधित्सितुम् ।**
**अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ २० ॥**

**अधनेनार्थकामेन** इत्यत्र **अर्थकामेन** प्रयोजनकामेन ।

**नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।**
**धनाद्धि धर्मः स्रवति [2]शैलाद्गिरिनदी यथा ॥ २३ ॥**

**शैलाद्गिरिनदी यथा** इत्यत्र **गिरिनदी** गिरिमूला नदी शैलादिव ।

**अवेक्षस्व यथान्यायं पश्य [3]दैवासुरं यथा ।**
**राजन् किमन्यज्ज्ञातीनां वधाद् गृध्यन्ति देवताः ॥ २५ ॥**

---

१. BORI. पृ. २६; '**आश्वस्तन्यमृषीणां**' इति कुं. पाठः ।
२. BORI. पृ. २८; '**शैलादभिनदी**' इति कुं. पाठः ।
३. '**देवासुरं**' इति कुं. पाठः ।

**अवेक्षस्व यथान्यायं पश्य दैवासुरं यथा** इत्यत्र **दैवासुरं** देवासुर-सम्बन्धि कर्म, स्वज्येष्ठदायादान् असुरान् हत्वा कनिष्ठदायादाः सुराः राज्यमनुभवन्ति तत् **यथा** यथावत् पश्य । **यथान्यायं** तन्न्यायमन-तिक्रम्य **अवेक्षस्व** स्वज्ञातिवधेऽपि दृष्टिं दिशेति योजना ।

**न चेद्धर्तव्यमन्यस्य कथं [1]तद्धर्ममाचरेत् ।**
**एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥२९॥**

**न चेद्धर्तव्यमन्यस्य** इत्यत्र **न चेत्** दुष्टज्ञातिवधं कृत्वा तद्द्रव्याहरणं धर्मो न चेत् **अन्यस्य** दैत्यवर्गस्य **हर्तव्यं** हर्तुं योग्यं द्रव्यमाहृत्य देवता-समूहः कथं धर्ममाचरेत् ।

**कृत्स्नं तदेव तच्छ्रेयो यदप्याददतेऽन्यतः ।**
**न पश्यामोऽनपहृतं[2] धनं किञ्चित्क्वचिद्वयम् ॥ ३० ॥**

**न पश्यामोऽनपहृतम्** इत्यत्र याचनेन अन्यस्मादपहृतं शौर्येण वा अपहृतं यद्धनं ततोऽन्यत् **अनपहृतम्** । तन्न पश्याम इति योजना ।

**॥ इति अष्टमोऽध्यायः ॥**

## ॥ अथ नवमोऽध्यायः ॥

**[3]सार्थागम्यमहं मार्गं न जातु त्वत्कृते पुनः ।**
**गच्छेयं तं गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ २ ॥**

---

१. $D_{2.3.5.6}$ ; BORI. पृ. २८ ; '**तद्धर्ममारभेत्**' इति कुं. पाठः ।
२. BORI. पृ. २८; '**–अनपकृतं**' इति कुं. पाठः ।
३. '**सार्थ–**' इति कुं. पाठः ।

**सार्थागम्यमहं मार्गम्** इत्यत्र सार्थेन सतां समूहेन अगम्यं मार्गं त्वत्कृते जातु न गच्छेयमिति योजना ।

**गमने निरपेक्षश्च पश्चादनवलोकयन् ।**
**ऋजुः प्रणिहितो गच्छन् [१] त्रसंस्थावरवर्जकः ॥ १९ ॥**

**त्रसंस्थावरवर्जक** इत्यत्र **त्रसन्** पापात् त्रसन् । **स्थावरवर्जकः** स्थावराणां छेदादिवर्जकः । मध्यमपदलोपी समासः ।

**वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।**
**नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः ॥ २५ ॥**

**वास्यैकं तक्षत** इत्यत्र एकं बाहुं **चन्दनेन** हर्याराधनार्थं **चन्दन-काष्ठस्य पेषणेन तक्षतः** 'तक्ष तनूकरणे' इति धातोः पापानां तनूकरणे भर्त्सने च, **वास्य** स्थापयित्वा । एकं बाहुम् **उक्षतः** हर्यर्चनार्थं भूप्रोक्षणे **वास्य** स्थापयित्वा ।

**याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।**
**सर्वास्ताः समभित्यज्य निमेषादि[२]ष्ववस्थिताः ॥ २६ ॥**

**निमेषादिष्ववस्थिता** इत्यत्र **निमेषादिषु** चक्षुषोर्निमेषणे आदिपदेन उन्मेषणे च स्थितः ।

**विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः ।**
**न वशे कस्यचित्तिष्ठन् सधर्मा मातरिश्वनः ॥ २८ ॥**

---

१. $D_{n2}$,$M_4$; BORI. पृ. ३२ ;'**स्त्रीसंस्थापरिवर्जकः**' इति कुं. पाठः ।
२. '**–व्यवस्थितः**' इति कुं. पाठः ।

**व्यतीतः सर्ववागुरा** इत्यत्र **सर्ववागुराः** समस्तसंसारबन्धनानि । 'वागुरा मृगबन्धनी'[1] इत्यमरः ।

**एवं संसारचक्रेऽस्मिन् व्याविद्धे रथचक्रवत् ।**
**समेति भूतग्रामोऽयं भूतग्रामेण कार्यवान्** ॥ ३२ ॥

**समेति भूतग्रामोऽयं भूतग्रामेण कार्यवान्** इत्यत्र **भूतग्रामेण** पञ्चमहाभूतसमूहेन **कार्यो** यो देहस्तद्वान् अयं **भूतग्रामः** प्राणिसमूहः समेतीति योजना ।

॥ इति नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

**श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः ।**
**अनुवाकहता बुद्धिः नैषा तत्त्वार्थदर्शिनी** ॥ १ ॥

**अनुवाकहता बुद्धिः** इत्यत्र **अनुवाकः** आपातरमणीयवेदवाक्यं, तेन हता बुद्धिः ।

**क्षमानुकम्पा कारुण्यमानृशंस्यं न विद्यते ।**
**क्षात्रमाचरतो मार्गमपि [2]बन्धौ त्वदन्तरा** ॥ ३ ॥

**मार्गमपि बन्धौ त्वदन्तरा** इत्यत्र **त्वदन्तरा** त्वां विना ।

**[3]दुर्गतीनगतीनस्मान् नष्टार्थानर्थसिद्धये ।**
**कथं वै नानुपश्येयुर्जनाः पश्यत यादृशम्** ॥ १६ ॥

---

१. अ.को. २-१०-२६ ; २. 'बन्धोस्त्वदन्तरे' इति कुं. पाठः ।
३. $D_7$.S; BORI. पृ. ३६; 'अगतीकगतीन्' इति कुं. पाठः ।

**कथं वै नानुपश्येयुर्जनाः पश्यत यादृशम्** इत्यत्र हे **जनाः**, भवन्तः अर्थसिद्धये नष्टार्थानस्मान् कथं नानुपश्येयुः । यादृशामर्थं यूयं पश्यत तस्यै अर्थसिद्धये कथं नानुपश्येयुरिति पूर्वेणान्वयः ।

**कथं तस्मात् समुत्पन्नाः तन्निष्ठास्तदुपाश्रयाः ।**
**तदेव निन्दां भाषेयुर्धाता तत्र न गर्ह्यते** ॥ १९ ॥

**कथं तस्मात् समुत्पन्ना** इत्यत्र **तस्मात्** क्षत्रधर्मात् ।

**श्रिया विहीनैरधनैर्नास्तिकैः सम्प्रवर्तितम् ।**
**[१]वेदाभासस्य विज्ञानं सत्याभासमिवानृतम्** ॥ २० ॥

**वेदाभासस्य विज्ञानम्** इत्यत्र **वेदाभासस्य** पूर्वोत्तरविरुद्धार्थकतया योज्यमानवेदाभासस्य विज्ञानं, **सत्याभासं** सत्यवदवभासमानम् **अनृतं** [२]चोरान् प्रति यथार्थकथनरूपमनृतफलकं वाक्यमिव हेयम् ।

**अथ चेदात्मभोग्येषु नान्येषां सिद्धिमश्नुते ।**
**तस्मात् कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः** ॥ २६ ॥

**अथ चेदात्मभोग्येषु नान्येषां सिद्धिमश्नुत** इत्यत्र **अथ चेत्** यदि आत्मभोगेषु भुक्तेष्वपि सत्सु **अन्येषां** आत्मभोगेष्वसक्तानां देवर्ष्यादिपूजकानां सिद्धिमश्नुते तर्हि तस्मादेव कारणात् **कर्म** नित्यनैमित्तिकं कर्मैव कर्तव्यमिति योजना ।

॥ इति दशमोऽध्यायः ॥

---

१. **'वेदावादस्य'** इति कुं. पाठः ।
२. **'नीचान्'** सो.मु.पा. ।

## ॥ अथ एकादशोऽध्यायः ॥

**स तान् बभाषे मघवान् पक्षीभूत्वा हिरण्मयः ।**
**सुदुष्करं मनुष्यैस्तु यत्कृतं विघसाशिभिः ॥ ४ ॥**

**यत्कृतं विघसाशिभिः** इत्यत्र **विघसं** यज्ञावशिष्टमन्नं तदश्नन्तीति **विघसाशिनः**, तैः यत्कृतं तत् मनुष्यैः सुदुष्करम् ।

**ऋषय ऊचुः –**

**अहो बतायं शकुनिर्विघसाशान् प्रशंसति ।**
**अस्मान्नूनमयं शास्ति वयं[1] हि विघसाशिनः ॥ ६ ॥**

**वयं हि विघसाशिन** इत्यत्र याज्ञिकगृहादन्नमाहृत्य भोजनात् स्वयमपि विघसाशिन इति तेषां भ्रमः ।

**अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते ।**
**आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते ॥ १३ ॥**

**आम्नायदृढवादीनि** इत्यत्र आम्नाय एव दृढवादी येषां तानि तथोक्तानि ।

**एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः ।**
**एतस्माद्वनमध्ये तु लोकेषु तप उच्यते ॥ २२ ॥**

**एतस्माद्वनमध्ये तु लोकेषु तप उच्यत** इत्यत्र **एतस्मात्** गार्हस्थ्याश्रमादनन्तरं वनमध्ये तु लोकेषु तप उच्यते इति योजना ।

॥ इति एकादशोऽध्यायः ॥

१. $V_1, B_4, D_a, D_{n2}, T, G_{2.48}M$; BORI. पृ. ३९; 'च' इति कुं. पाठः ।

## ।। अथ द्वादशोऽध्यायः ।।

**[१]विशास्ययूपे देवानां सर्वेषामग्रयश्रिताः ।**
**तस्माद्विद्धि महाराज देवाः कर्मफले स्थिताः ।। ३ ।।**

**विशास्ययूपे देवानाम्** इत्यत्र **विशास्यः** पशुविशसनयोग्यो यूपः तस्मिन् ।

**अत्याश्रमानयं सर्वान् इत्याहुर्वेदनिश्चयाः ।**
**ब्राह्मणाः अतिसम्पन्ना [२]स्तं निबोध नराधिप ।। ६ ।।**

**अत्याश्रमानयं सर्वान्** इत्यत्र अयमाश्रमः सर्वानाश्रमान् **अति** अतिक्रम्य वर्तमानः । **तम्** आश्रमं निबोध ।

**यदा कामान् समीक्षेत धर्मवैतंसिको नरः ।**
**अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् ।। १९ ।।**

**धर्मवैतंसिको नर** इत्यत्र **धर्मवैतंसिकः** धर्मध्वजी ।

**इदमन्यन्महाराज विद्वद्भिः कथितं मम ।**
**भूमिरग्निश्च वायुश्च [३]नभश्च न दिवाकरः ।। २५ ।।**
**नक्षत्राणि न चन्द्रश्च न दिशः काल एव च ।**
**शब्दः स्पर्शश्च रूपं च न गन्धो न रसः क्वचित् ।। २६ ।।**
**न च सन्ति प्रमाणानि यैः प्रमेयं प्रसाध्यते ।**
**प्रत्यक्षमनुमानं च नोपमानमथागमः ।। २७ ।।**

---

१. 'विशाख–' इति कुं. पाठः । ; २. BORI. पृ. ४२ ;'स्तान्' इति कुं. पाठः
३. 'न चापो' इति कुं. पाठः ।

**भूमिरग्निश्च वायुश्च नभश्च न दिवाकर** इत्यत्र प्रलयकाले भूम्यादिकं किमपि नासीदित्यर्थः ।

**न चात्मा विद्यमानोऽपि मनसा योगमृच्छति**
**अचेतनं मनस्त्वासीदात्मा एव सचेतनः ॥ ३० ॥**

**न चात्मा विद्यमानोऽपि** इत्यत्र य **आत्मा** जीवः स सृष्टिकाले मनसा आधिगच्छति स **आत्मा** जीवः प्रलये विद्यमानोऽपि **अचेतनः** सुप्तिगतत्वात् बाह्यज्ञानरहित आसीत् । **आत्मा** परमात्मा एक एव सर्वज्ञत्वात् सचेतनो हि ।

**ईश्वरश्चेतनस्त्वेकस्तेनेदं गहनीकृतम् ।**
**मन्त्राश्च चेतना राजन् न च देहेन योजिताः ॥ ३१ ॥**

**मन्त्राश्च चेतना राजन्** इत्यत्र **मन्त्राः** मन्त्राभिमानिनः **चेतनाः** देवादिजीवाः ।

**इष्ट्वा विश्वसृजं यज्ञं [१] निर्मितं प्रपितामहः ।**
**सृष्टिस्तेन समारब्धा प्रसादादीश्वरस्य च ॥ ३३ ॥**

**इष्ट्वा विश्वसृजं यज्ञं निर्मितं प्रपितामह** इत्यत्र **निर्मितं** परमात्मना निर्मितं यज्ञं कृत्वा विश्वसृजं तमेव परमात्मानं इष्ट्वा तोषयामासेति योग्यपदाध्याहारः ।

**[२] चैतन्यमीश्वरस्यैतत् सचेतनमिदं जगत् ।**
**योगेन च समाविष्टं जगत्कृत्स्नं च शम्भुना ॥ ३४ ॥**

१. **'निर्मितः'** इति कुं. पाठः । ; २. **'–स्येदं'** इति कुं. पाठः ।

**चैतन्यमीश्वरस्यैतत्** इत्यत्र एतत् जीवस्य **चैतन्यं** ज्ञानम् ईश्वरस्याधीनम् ।

**धर्मश्चार्थश्च कामश्च उक्तो मोक्षश्च सङ्क्ये ।**
**ब्रह्मणः परमेशस्य ईश्वरेण यदृच्छया** ॥ ३५ ॥

**ब्रह्मणः परमेशस्य ईश्वरेण यदृच्छया** इत्यत्र परमेशस्य ब्रह्मणश्चैतन्यं च ईश्वरेण यदृच्छया निर्मितम् ।

**अज्ञो जन्तुरनीशश्च भाजनं सुखदुःखयोः ।**
**ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा** ॥ ३६ ॥

**अज्ञो जन्तुरनीशश्च** इत्यत्र **जन्तुः** जीवः । **श्वभ्रं** भूगर्तं नरकम् ।

**यदि तत्र भवेत्पापं कथं ते स्वर्गमास्थिताः ।**
**न प्राप्ता नरकं राजन् वेष्टिताः पापकर्मभिः** ॥ ४३ ॥

**न प्राप्ता नरकं राजन् वेष्टिताः पापकर्मभिः** इत्यत्र पापकर्मभिर्वेष्टिता नेति नञावृत्त्या योजना ।

**ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च ।**
**अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।**
**वयं**[१] **तु राजकलयो भविष्यामो विशाम्पते** ॥ ५० ॥

**वयं तु राजकलय** इत्यत्र राजाकाराः कलयः **राजकलयः**, कलिस्वरूपा इत्यर्थः ।

---

१. 'वयं ते' इति कुं. पाठः ।

**अन्तर्बहिश्च यत्किञ्चिन्मनोव्यासङ्गकारकम् ।**
**परित्यज्य भवेत्त्यागी न[1] यो हित्वा प्रतिष्ठते ॥ ५४ ॥**

**न यो हित्वा प्रतिष्ठत** इत्यत्र यः **हित्वा** तूष्णीं राज्यादिकं हित्वा प्रतिष्ठते सः त्यागी न ।

॥ इति द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**बाह्यद्रव्यविमुक्तस्य शरीरेष्वनु गृध्यतः ।**
**यो धर्मो यत्सुखं वा स्यात् [2] दुर्हृदां तत्तथास्तु नः ॥ २ ॥**

**दुर्हृदां तत्तथास्तु न** इत्यत्र तत् पूर्वोक्तं सुखं नः दुर्हृदामस्तु न त्वस्माकमित्यर्थः ।

**शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।**
**यो धर्मो यत् सुखं वा स्यात् सुहृदां तत्तथाऽस्तु नः ॥ ३ ॥**

**शारीरं द्रव्यमुत्सृज्य** इत्यत्र शरीरपोषणार्थं विद्यमानमन्नपानादिकं **शारीरं द्रव्यम्** ।

**अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत ।**
**हित्त्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥ ६ ॥**

**अविनाशोऽस्य सत्त्वस्य** इत्यत्र **सत्त्वस्य** सत्त्वगुणोत्पन्नज्ञानस्य ।

---

१. BORI. पृ. ४६; **'न हित्वा प्रतितिष्ठति'** इति कुं. पाठः ।
२. **'द्विषताम्'** इति कुं. पाठः ।

**लब्ध्वापि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।**
**न भुङ्क्ते यो नृपः सम्यक् किं फलं तस्य जीवितम् ॥ ११ ॥**

**न भुङ्क्ते यो नृप** इत्यत्र भुङ्क्ते पालयति । 'भुज पालनाभ्यवहारयोः' इति धातुः ।

॥ इति त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

**इमे ते भ्रातरः पार्थ शुष्यन्ते स्तोकका इव ।**
**वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ॥ ६ ॥**

**शुष्यन्ते स्तोकका इव** इत्यत्र **स्तोकका:** अल्पकाः । 'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु'[१] इत्यमरः ।

**चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ।**
**यस्मादेषां सुरेन्द्राणां[२] सम्भवन्तीश्वरा नृपाः ॥ १९ ॥**
**तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ २० ॥**

**मात्रा निर्हृत्य शाश्वतीः** इत्यत्र यस्मादेषां सुरेन्द्राणां शाश्वतीः **मात्राः** अंशान् **निर्हृत्य** आदाय **ईश्वराः** समर्थाः नृपाः सम्भवन्ति । **एषः** राजा ।

**कुरुते धर्मसिद्ध्यर्थं[३] वैश्वरूपं पुनः पुनः ।**
**तस्य प्रसादे[४] पद्मात्मा श्रीविदश्च पराक्रमे ॥ २८ ॥**

---

१. अ.को. ३-१-६१; २. **'सम्भवत्यंशतो नृपाः'** इति कुं. पाठः ।
३. $T_2$ $G_1$; BORI. पृ. ६१९; **'वैश्वरूप्यं'** इति कुं. पाठः ।
४. **'पद्मा श्रीर्विजयश्च'** इति कुं. पाठः ।

**वैश्वरूपं** नानारूपं कर्म, **सिद्ध्यर्थं** कार्यसिद्ध्यर्थं कुरुते । तस्य प्रसादे सति आश्रितो जनः **पद्मात्मा** पद्मा सम्पत् आत्मनि यस्यासौ पद्मात्मा भवति । 'लक्ष्मीः पद्मालया पद्मा'[१] इत्यमरः । पराक्रमे सति शत्रवः श्रियं स्वसम्पदं वेदयन्तीति **श्रीविदो** भवन्ति ।

**तस्माद्धर्मं यदिष्टेषु स व्यवस्यति पार्थिवः ।**
**अनिष्टं चाप्यनिष्टेषु तद्धर्मं न [२]विचारयेत्** ॥ ३१ ॥

**तद्धर्मं न विचारयेत्** इत्यत्र **तद्धर्मं** राजधर्मम् ।

**यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।**
**प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति** ॥ ४३ ॥

**यत्र श्यामो लोहिताक्षो दण्डश्चरति** इत्यत्र कोपात् **श्यामः** श्यामवदनः लोहिताक्षश्च **दण्डः** दण्डको राजा ।

**लोकपालैश्च भूतैश्च [३]पार्थिवैश्च कृतात्मभिः ।**
**धर्माद्विचलिता राजन् धार्तराष्ट्रा निपातिताः** ॥ ५४ ॥

**पार्थिवैश्च कृतात्मभिः** इत्यत्र आचरितादिति योग्यपदाध्याहारः ।

**तान्निहत्य न दोषस्ते स्वल्पोऽपि जगतीपते ।**
**[४]बलाद्धर्मपथा वा तान् क्षत्रधर्मेण वा नृप** ॥ ५५ ॥

---

१. अ.को. १.१.२७

२. $M_{1,3}$; BORI पृ. ६१९; '**विचालयेत्**' इति कुं. पाठः ।

३. '**पाण्डवैश्च कृतात्मभिः**' इति कुं. पाठः ।

४. '**छलेन मायया वाऽथ**' इति कुं. पाठः ।

**बलाद्धर्मपथा वा तान् क्षत्रधर्मेण वा नृप** इत्यत्र बलात् धर्मपथा वा क्षत्रधर्मेण वा तान्निहत्य न दोष इति पूर्वेणान्वयः ।

**आत्महन्ताऽर्थहन्ता च बन्धुहन्ता विषप्रदः ।**
**आथर्वणेन[1] हन्ता च यश्च भार्यां परामृशेत् ॥ ८० ॥**

**आथर्वणेन हन्ता च** इत्यत्र **आथर्वणेन** अथर्ववेदोक्तकृत्या-प्रयोगमन्त्रेण ।

**[2]न ब्राह्मणायावगुरेत् नैव शस्त्रं निपातयेत् ।**
**शोणितं यावतः पांसून् [3]गृह्णातीह हि धारणान् ।**
**तावतीः स समाः पापो नरके परिवर्तते ॥ ९३ ॥**

**गृह्णातीह हि धारणान्** इत्यत्र **अवगुरेत्** निन्दां कुर्यात् । [4]'गुरी उद्यमने' इति धातुः । **धारणान्** धरण्यां विद्यमानान् ।

**द्विगुणा ब्रह्महत्येयं सर्वैः प्रोक्ता महर्षिभिः ।**
**प्रायश्चित्तमकुर्वाणं कृताङ्कं विप्रवासयेत् ॥ ९६ ॥**

**कृताङ्कं विप्रवासयेत्** इत्यत्र **कृताङ्कं** कृतश्वानमुद्राद्यङ्कम् ।

**कृष्णवर्णा [5]असुरूपा नर्मघ्ना लम्बमूर्धजा ।**
**दुनोत्यदुष्टकर्तारं[6] ब्रह्महत्येति तां विदुः ॥ १०३ ॥**

---

१. BORI पृ. ६२१; **'अकारणेन हन्ता च'** इति कुं. पाठः ।
२. **'तस्मान्नैवागुर्याद्धि'** इति कुं. पाठः ।
३. **'गृह्णातीति हि धारणा'** इति कुं. पाठः ।; ४. **'गॄ निगरणे'** सो.मु.पा. ।
५. **'विरूपा च निर्णीता'** इति कुं. पाठः ।
६. **'–त्यदृष्टकर्तारं'** इति कुं. पाठः ।

**असुरूपा नर्मघ्ना** इत्यत्र कृष्णवर्णा **असुरूपा** क्रूररूपा नर्मघ्ना लम्बमूर्धजा ब्रह्महत्या **अदुष्टकर्तारं** पुण्याकर्तारं **दुनोति** पीडयति ।

**ब्राह्मणं पापकर्माणं विप्राणामाततायिनम् ।**
**क्षत्रियं वैश्यशूद्रौ च नेत्रोद्धारेण योजयेत् ॥ १०५ ॥**

**ब्राह्मणं पापकर्माणम्** इत्यत्र विप्राणां मध्ये आततायिनं पापकर्माणं ब्राह्मणं नरके पातयेत्, न तु राजा तेषां नेत्रोत्पाटनादिकं कुर्यादिति भावः ।

**सदोषमपि यो हन्याद् अश्राव्य [१] जगतीपतिः ।**
**दुर्बलं बलवन्तं वा स पराजयमर्हति ॥ १०७ ॥**

**सदोषमपि यो हन्याद्** इत्यत्र ब्राह्मणमित्यनुवर्तते ।

**राजाज्ञां प्राड्विवाकश्च नेच्छेद् यच्चापि निष्पतेत् ।**
**साक्षिणं साधुवाक्यश्च जितं तमपि निर्दिशेत् ॥ १०८ ॥**

**जितं तमपि निर्दिशेत्** इत्यत्र **जितं** जयवन्तम् ।

**बन्धनान्निष्पतेद्यच्च प्रतिभूर्न ददाति च ।**
**कुलजश्च धनाढ्यश्च स पराजयमर्हति ॥ १०९ ॥**

**प्रतिभूर्न ददाति च** इत्यत्र प्रतिभवतीति **प्रतिभूः**, विपरीत इत्यर्थः।

**तं दण्डेन विनिर्जित्य महासाहसिकं नरम् ।**
**वियुक्तदेहसर्वस्वं परलोकं विसर्जयेत् ॥ १११ ॥**

---

१. $G_3$; BORI. पृ. ६२२ ;'**जगतीपते**' इति कुं. पाठः ।

**परलोकं विसर्जयेत्** इत्यत्र परलोकं प्रति विसर्जयेत् ।

**ब्रह्मघ्नेन पिबन्तश्च विप्रा देशाः पुराणि च**
**अचिरादेव पीड्यन्ते दुर्भिक्षव्याधितस्करैः** ॥ १०४ ॥

**ब्रह्मघ्नेन पिबन्तश्च** इत्यत्र ब्रह्मघ्नेन सह **पिबन्तः** [१] मद्यादिकं पिबन्तः ।

**मृतस्यापि न देयानि पिण्डदानानि केनचित् ।**
**दत्त्वा दण्डं प्रयच्छेत मध्यमं** [२] **पूर्वसाहसात्** ॥ ११२ ॥

**दत्त्वा दण्डम्** इत्यत्र **दत्वा** बलात्पिण्डादिकं दापयित्वा, मध्यमं दण्डं प्रयच्छेत् । पूर्वं साहसं न करोमीति सत्त्वं यस्य तस्मात् **पूर्वसाहसात्** ।

॥ इति चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

**वाचि दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।**
**धनदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते** ॥ ९ ॥

**क्षत्रियाणां भुजार्पणम्** इत्यत्र **भुजार्पणम्** अन्योन्यं युद्धाय भुजयोरर्पणम् ।

**नाच्छित्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।**
**नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम्** ॥ १४ ॥

---

१. 'आज्यादिकं' सो.मु.पा. ।; २. 'पूर्वसाहसं' इति कुं. पाठः ।

**नाच्छित्वा परमर्माणि** इत्यत्र परमर्माणि अच्छित्वा महतीं श्रियं न प्राप्नोतीति सर्वत्र उत्तरेणान्वयः ।

**विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः ।**
**विना वधं न कुर्वन्ति तापसाः प्राणयापनम्** ॥ २४ ॥

**विना वधम्** इत्यत्र वधं कन्दमूलादिस्थावरवधम् ।

**उदके बहवः प्राणाः पृथिव्याश्च फलेषु च ।**
**न च कश्चिन्न तान् हन्ति किमन्यत्प्राणयापनम्** ॥ २५ ॥

**न च कश्चिन्न तान् हन्ति** इत्यत्र कश्चिदपि तान्न हन्तीति न ।

**सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।**
**पक्ष्मणोऽपि निपातेन येषां स्यात् स्कन्धपर्ययः** ॥ २६ ॥

**स्कन्धपर्यय** इत्यत्र [1]**स्कन्धस्य पर्ययः** विपर्ययो नाशः ।

**पशूनां वृषणं छित्त्वा ततो मिन्दन्ति नस्सु तान् ।**
**वहन्ति बहवो भारान् विघ्नन्ति दमयन्ति च** ॥ ५१ ॥

**ततो भिन्दन्ति नस्सु तान्** इत्यत्र **नस्सु** नासापुटेषु ।

**आततायी हि यो हन्यादाततायिनमागतम् ।**
**न तेन भ्रूणहा स स्यात् मन्युस्तं [2]मन्युमृच्छति** ॥ ५५ ॥

---

१. **'स्कन्दस्य'** सो.मु.पा. ।
२. BORI. पृ. ५९; **'मार्च्छति'** इति कुं. पाठः ।

**मन्युस्तं मन्युमृच्छति** इत्यत्र **मन्युः** एकस्य मन्युः **मन्युम्** अपरस्य तं मन्युमृच्छति। एकस्य मन्युना अपरस्य मन्युनाशो भवतीत्यर्थः।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**आगतिश्च गतिश्चैव लोकस्य विदिता तव।**
**आयत्याश्च तदात्वे च न तेऽस्त्यविदितं प्रभो** ॥ ६ ॥

**आयत्याश्च तदात्व** इत्यत्र **तदात्वे** तत्काले, **आयत्यां** उत्तरकाले च यत्कार्यं तत्ते अविदितं नास्ति। [१] 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः।

**शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः।**
**तेषां गुणानां साम्यं यत् तदाहुः स्वस्थलक्षणम्** ॥ ११ ॥
**तेषामन्यतमोद्रेके विधानमुपदिश्यते** ॥ १२ ॥

**विधानमुपदिश्यत** इत्यत्र **विधानं** परिहारः।

**दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम्।**
**मिषतां पाण्डुपुत्राणां [२] न तत् स्मर्तुमिहार्हसि** ॥ १७ ॥
**प्रव्राजनश्च नगरादजिनैश्च विवासनम्।**
**महारण्यनिवासश्च न [३] तत् स्मर्तुमिहार्हसि** ॥ १८ ॥

---

१. अ.को. २-८-२९; २. '**तस्य**' इति कुं. पाठः।
३. '**तस्य स्मर्तुमिहार्हसि**' इति कुं. पाठः।

**जटासुरात् परिक्लेशं चित्रसेनेन चावहम् ।**
**सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ॥ १९ ॥**

**न तत् स्मर्तुमिहार्हसि** इत्यत्र 'कथं' इति वक्ष्यमाणं पदमिहाप्यावर्त्य कथं स्मर्तुं नार्हसीति योजना कार्या ।

**यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम ।**
**मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ २१ ॥**

**मनसैकेन योद्धव्यम्** इत्यत्र एकेन तव मनसा इदानीं योद्धव्यम् ।

**यत्र नास्ति शरैः कार्यं न मित्रैर्न च बन्धुभिः ।**
**आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ २२ ॥**

**आत्मनैकेन** इत्यत्र **आत्मना** मनसा ।

[१]**परमव्यक्तधर्मस्य व्यक्तं त्यक्त्वा स्वकर्मभिः ॥ २५ ॥**

**तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि ॥ २६ ॥**

**परमव्यक्तधर्मस्य** इत्यत्र **अव्यक्तधर्मस्य** [२]अतिसूक्ष्मस्य मनोविवेकस्य, **त्यक्त्वा** अज्ञजनसदृशं भावं त्यक्त्वा तस्मिन् मनसि अर्जिते[३] सति कामवस्थां गमिष्यसीत्यर्थः ।

**दिष्ट्या दुर्योधनः पापो निहतो सानुगो युधि ।**
**द्रौपद्याः केशपक्षस्य दिष्ट्या ते पदवीं गताः ॥ २८ ॥**

---

१. **'परमव्यक्तरूपस्य'** इति कुं. पाठः ।

२. **'अतिसूक्ष्मधर्मस्य'** सो.मु.पा. ।; ३. **'अनिर्जिते'** इति सम्भाव्यते ।

**द्रौपद्याः केशपक्षस्य** इत्यत्र द्रौपद्याः केशपक्षस्य पदवीं दुर्योधनादयो दिष्ट्या गताः । यथा द्रौपद्याः केशपक्षस्पर्शाकर्षणादिना तैर्घातितं, तथा मयापि केशादौ पादस्पर्शेन इतस्तत आकर्षणेन च घातिता इति भावः ।

॥ इति षोडशोऽध्यायः ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

**य इमामखिलां भूमिं शिष्यादेको महीपतिः ।**
**तस्याप्युदरमेकं वै किमिदं त्वं प्रशंससि ॥ ३ ॥**

**शिष्यादेको महीपतिः** इत्यत्र **शिष्यात्** शासनं कुर्यात् । तस्यापि एकमेव उदरं, न तु द्वयमस्ति ।

**नाह्ना पूरयितुं शक्या न मासैर्भरतर्षभ ।**
**अपूर्यां पूरयन्निच्छां आयुषापि न शक्नुयात् ॥ ४ ॥**

**अपूर्यां पूरयन्निच्छाम्** इत्यत्र इच्छां **न शक्नुयात्** पूरयितुं न शक्नुयादिति योग्यपदाध्याहारेण योजना ।

**आत्मोदरकृतेऽप्राज्ञः करोति विशसं बहु ।**
**जयोदरं पृथिव्या ते श्रेयो निर्जितया जितम् ॥ ६ ॥**

**करोति विशसं बहु** इत्यत्र **विशसं** विशसनं प्राणिहिंसनम् । **जयोदरं पृथिव्या त** इत्यत्र उदरं जय । निर्जितया तया पृथिव्या तव श्रेयो भवतीति योजना ।

**विषयान् प्रतिसङ्गृह्य सन्न्यासे कुरुते मतिम् ।**
**न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा ॥ १० ॥**

**पश्य बुद्ध्यन्तरं यथा** इत्यत्र **बुद्ध्यन्तरं** ऋषिराजबुद्ध्योरन्तरं वैलक्षण्यं यथा तथा पश्य ।

**आमिषं बन्धनं लोके कर्मेहोक्तं तथाऽमिषम् ।**
**ताभ्यां विमुक्तः पापाभ्यां पदमाप्नोति तत्परम् ॥ १७ ॥**

**आमिषं बन्धनं लोक** इत्यत्र [1]तथा **आमिषं** आमिषसम्बन्धिकर्म राज्यपरिपालनमृगयादिकञ्च इह लोके बन्धनमुक्तम् ।

**यस्तु मानं विजानाति बहुमानमियात्स वै ।**
**ब्रह्मभावप्रभूतानां वैद्यानां भावितात्मनाम् ॥ २२ ॥**

**ब्रह्मभावप्रभूतानाम्** इत्यत्र ब्रह्माख्यभावात् पदार्थात् प्रभूतानां **वैद्यानां** विद्यासम्बन्धिनां [2]भावितात्मनां मध्ये यस्तु वाचं विजानीयादिति योजना ।

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ २३ ॥**
**ते जनास्तां गतिं यान्ति नाविद्वांसोऽल्पचेतसः ॥ २४ ॥**

**यदा भूतपृथग्भावमेकस्थमनुपश्यति** इत्यत्र यदा **एकस्थं** प्रलये एकस्मिन् ब्रह्मणि स्थितं **भूतानां** प्राणिनां **पृथग्भावं** भेदमनुपश्यति,

१. **'यथा'** सो.मु.पा. ।
२. **'भावितानाम्'** सो.मु.पा. ।

**ततः** ब्रह्मण एव **विस्तारं** सृष्टिकाले विस्तारश्च पश्यति **ते जनाः** उक्त-विधया सृष्टिप्रलययोर्भेदं जानन्तो जनाः ।

॥ इति सप्तदशोऽध्यायः ॥

## ॥ अथ अष्टादशोऽध्यायः ॥

**य इमां कुण्डिकां भिन्यात् [१]त्रिविष्टत्वञ्च यो हरेत् ।**
**वासश्चापि हरेत्तस्मिन् कथं ते मानसं भवेत् ॥ १९ ॥**

**त्रिविष्टत्वञ्च यो हरेत्** इत्यत्र त्रिषु लोकेषु विष्टो निविष्टो यस्मिन् कृष्णाजिनादौ तस्य भावः **त्रिविष्टत्वम्** ।

**श्रियां निराशैरधनैस्त्यक्तमित्रैरकिञ्चनैः ।**
**[२]सौष्ठिकैः सम्भृतानर्थान् यः सन्त्यजति किन्नु तम् ॥ २३ ॥**

**सौष्ठिकैः सम्भृतान्** इत्यत्र सुष्ठु शोभनं भवेदित्याशा येषां ते **सौष्ठिकाः**, तैः ।

**त्यागान्न भिक्षुकं विन्यात् न मौढ्यान्न च याचनात् ।**
**ऋजुस्तु योऽर्थं त्यजति तं मुक्तं विद्धि भिक्षुकम् ॥३०॥**

**त्यागान्न भिक्षुकं विन्यात्** इत्यत्र **त्यागात्** भार्यादिषु कोपेन त्यागात् ।

**असक्तः [३]सक्तवद्गच्छन्निःसङ्गो मुक्तबन्धनः ।**
**समः शत्रौ च मित्रे च स वै मुक्तो महीपते ॥ ३१ ॥**

---

१. $D_{2.3.5.6.}V_1$; BORI पृ. ६९; '**त्रिविष्टब्धं च**' इति कुं. पाठः ।
२. '**सौखिकैः सम्भृतो योऽर्थः स सन्त्यजति**' इति कुं. पाठः ।
३. BORI. पृ. ७०; '**शक्तवत्**' इति कुं. पाठः ।

**असक्तः सक्तवत्** इत्यत्र **असक्तः** मनसा सङ्गरहितः, **सक्तवत्** बहिः सक्तवत् गच्छन् ।

**परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः ।**
**सिता बहुविधैः पाशैः सञ्चिन्वन्तो वृथामिषम् ॥ ३२ ॥**

**सिता बहुविधैः पाशैः सञ्चिन्वन्तो वृथामिषम्** इत्यत्र **सिताः** बद्धाः । **आमिषं** स्वोदरमांसं सञ्चिन्वन्तः पोषयन्तः ।

**त्रयीं च नाम वार्तां च त्यक्त्वा पुत्रान् व्रजन्ति ये ।**
**त्रिविष्टब्धश्च वासश्च प्रतिगृह्णन्त्यबुद्धयः ॥ ३३ ॥**

**त्रयीं च नाम वार्तां च** इत्यत्र **वार्तां** वृत्तिं जीवनोपायं, **नाम** पूर्वं विद्यमानं गोत्रनामादिकम् ।

**अनिष्कषाये काषायमीहार्थमिति विद्धि तम् ।**
**धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः ॥ ३४ ॥**

**काषायैरजिनैः चीरैर्नग्नान् मुण्डान् जटाधरान् ।**
**बिभ्रत् साधून् महाराज जयेल्लोकाञ्जितेन्द्रियः ॥ ३५ ॥**

**काषायैरजिनैः** इत्यत्र वृत्त्यर्थमिति प्राचीनपद[१]मावर्त्य **वृत्त्यर्थं** स्वोदरपूरणार्थं काषायैरजिनैश्चीरैश्च संवृतो भवति । तथा नग्नः मुण्डः जटी च भवति । **साधून्** सज्जनान् **बिभ्रत्** धनदानादिना पोषयन् जितेन्द्रियो गृहस्थः लोकान् जयेत्, नतु प्रागुक्तो डम्भः सन्यासीति भावः । **॥ इति अष्टादशोऽध्यायः ॥**

१. **'आवृत्य'** श्री.सो.मु.पा ।

## ।। अथ एकोनविंशोऽध्यायः ।।

**महेश्वरसमं सत्त्वं ब्रह्मणा चैव यत्समम् ।**
**वासुदेवसमं चैव न भूतं न भविष्यति** ।। ६ ।।
[1]**तद्वत्त्वं योधमुख्येषु सत्त्वं परममिष्यते** ।। ७ ।।

**तद्वत्त्वं योधमुख्येषु** इत्यत्र त्वं यौधमुख्येषु **तद्वत्** महेश्वरादिवत् । त्वयि परमं सत्त्वमिष्यते ।

**धर्मसूक्ष्मं तु यद्वाच्यं** [2]**तच्च दुष्प्रतरं त्वया ।**
**धनञ्जय न मे बुद्धिमतिशङ्कितुमर्हसि** ।। ११ ।।

**तच्च दुष्प्रतरं त्वया** इत्यत्र प्रकर्षेण तर्तुं योग्यं प्रतरम्, प्रतरं न भवतीति **दुष्प्रतरम् ।**

[3]**युद्धशास्त्रविदस्तत्त्वं न वृद्धाः सेवितास्त्वया ।**
**समासविस्तरविदां न तेषां वेत्सि निश्चयम्** ।। १२ ।।

**तत्त्वं न वृद्धा** इत्यत्र **तत्त्वं** तत्त्वतः ।

**अनुस्मृत्य तु शास्त्राणि कवयः समवस्थिताः ।**
**अपीह स्यादपीह स्यात् सारासारदिदृक्षया** ।। २० ।।

**अपीह स्यादपीह स्यात्** इत्यत्र सारासारदिदृक्षया इह स्यादपि इह स्यादपीति क्रियायोगे विचारयन्ति ।

---

१. $G_2M_{2\text{-}4}$; BORI पृ. ७२; '**तथा त्वं**' इति कुं. पाठः ।
२. '**तत्र**' इति कुं. पाठः ।
३. '**–विदेव त्वं**' इति कुं. पाठः ।

**वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च।**
**विपाट्य कदलीस्तम्भं सारं ददृशिरे न ते ॥ २१ ॥**

**विपाट्य कदलीस्तम्भम्** इत्यत्र ते कदलीस्तम्भं विपाट्येव सारं न ददृशिरे।

**अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके।**
**इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिङ्गितैः ॥ २२ ॥**

**एकान्तव्युदासेन** इत्यत्र व्युदासः [१] औदासीन्यमुपेक्षा।

**अग्राह्यं चक्षुषा सोऽपि अनिर्देश्यश्च तद्गिरा।**
**कर्महेतुपुरस्कारं भूतेषु परिवर्तते ॥ २३ ॥**

**तद्गिरा** इत्यत्र तत् जीवस्वरूपम्।

[२] **अस्मिन् वै सूक्ष्मगम्ये च मार्गे सद्भिर्निषेविते।**
[३] **कथमर्थमनर्थाख्यं अर्जुन त्वं प्रशंससि ॥ २५ ॥**

**अस्मिन् वै सूक्ष्मगम्ये च** इत्यत्र अस्मिन् मार्गे विद्यमानम् **अर्थं** पुरुषार्थं अनर्थाख्यं कथं **प्रशंससि** प्रकर्षेण शंससि पुनः पुनः कथयसीत्यर्थः।

**भवन्ति सुदुरावर्ता हेतुमन्तोऽपि पण्डिताः।**
**दृढपूर्वे स्मृता मूढा नैतदस्तीति वादिनः ॥ २७ ॥**

---

१. '**औदासीनम्**' सो.मु.पा.

२. $V_1$, $B_{0.2.5}$, $D_a$.$D_{3.5}$; BORI पृ. ७४; '**अस्मिन्नेवं**' इति कुं. पाठः।

३. $B_1$.$D_{3.5.6}$; BORI पृ. ७४; '**-मनर्थाढ्यं**' इति कुं. पाठः।

**नैतदस्तीति वादिन** इत्यत्र एतत् योगशास्त्रम् ।

**[१] यान्वयं न विजानीमः कस्तां ज्ञातुमिहार्हति ।**
**एवं प्राज्ञाः श्रुताश्चापि महान्तः शास्त्रवित्तमाः ॥ २९ ॥**

**यान्वयं न विजानीम** इत्यत्र **यान्** ज्ञाननिष्ठान् वयमपि न विजानीमः ।

॥ इति एकोनविंशोऽध्यायः ॥

* * *

## ॥ अथ विंशोऽध्यायः ॥

**अस्मिन् वाक्यान्तरे वक्ता देवस्थानो महातपाः ।**
**अभिनीततरं वाक्यमित्युवाच युधिष्ठिरम् ॥ १ ॥**

**देवस्थानो महातपा** इत्यत्र **देवस्थानः** देवस्थानाख्यऋषिः ।

**[२] चतुष्पदा हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।**
**तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥ ४ ॥**

**ब्रह्मण्येषा प्रतिष्ठिता** इत्यत्र **चतुष्पदा** ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति चतुःस्थानवती, पूर्वमेकं तदुपर्येकं तदुपर्येकमित्यादिक्रमेण चतुष्पदा चतुःस्थानवती **निःश्रेणी** स्वर्गारोहणसोपानविशेषः **ब्रह्मणि** वेदे प्रतिष्ठिता ।

---

१. $K_5.V_1.B.D_n.D_{2-8}.S$, BORI. पृ. ७९; **'पार्थ यन्न विजानीमः'** इति कुं. पाठः ।

२. $G_2$; BORI पृ. ७५; **'चतुष्पदी'** इति कुं. पाठः ।

**ईहेत [1]धर्महेतोर्यः तस्यानीहा गरीयसी ॥ ७ ॥**

**ईहेत धर्महेतोर्य** इत्यत्र यः धर्महेतोः ईहेत तस्य सा ईहा गरीयसी अनीहैव । केवलं स्वोदरभरणाय ईहाया अकरणात् ।

**भूयान् [2]दोषोऽभिवर्धेत यस्तत्कर्म समाश्रयेत् ॥ ७ ॥**

**भूयान् दोष** इत्यत्र सर्वथा अनीहायाः भूयान् दोषः अभिवर्धेत ।

**कृत्स्नं च धनसंहारं कुर्वन्ति विधिकारणात् ।**
**आत्मना तृषितो बुद्ध्या भ्रूणहत्यां न बुद्ध्यते ॥ ८ ॥**

**आत्मना तृषित** इत्यत्र **आत्मना** स्वेन कारणेन **तृषितः** तृष्णावान् ।

**आविक्षितः पार्थिवोऽसौ मरुत्तः**
**वृद्ध्या शक्रं योऽजयद्देवराजम् ।**
**यज्ञे यस्य श्रीः स्वयं सन्निविष्टा**
**यस्मिन् भाण्डं काञ्चनं सर्वमासीत् ॥ १३ ॥**

**आविक्षितः पार्थिव** इत्यत्र [3]अविक्षितः पुत्रः **आविक्षितः** ।

॥ इति विंशोऽध्यायः ॥

* * *

---

१. $G_2$; BORI पृ. ७६; **'धनहेतो'** इति कुं. पाठः ।
२. $M_{2\cdot 4}$ BORI पृ. ७६; **'दोषो हि वर्धेत'** इति कुं. पाठः ।
३. **'आविक्षित्पुत्रः'** सो.मु.पा ।

## ॥ अथ एकविंशोऽध्यायः ॥

**अन्ये साम प्रशंसन्ति व्यायाममपरे जनाः ।**
**नैकं न चापरं केचिदुभयश्च तथापरे** ॥ ७ ॥

**अन्ये साम प्रशंसन्ति** इत्यत्र **साम** प्रियवचनम् । एकं प्रागुक्तं साम, अपरं पश्चादुक्तं व्यायामश्च न प्रशंसन्ति , अरण्ये तपस्येव वर्तन्त इति भावः ।

**पुत्रसङ्क्रामितश्रीश्च वने वन्येन वर्तयेत् ।**
[१]**विधिना श्रावणेनैव कुर्यात् कर्माण्यन्द्रितः** ॥ १६ ॥

**विधिना श्रावणेनैव** इत्यत्र **श्रावणेन** श्रवणानुकूलेन ।

[२]**निर्वाणं च सुदुष्प्राप्यं बहुविघ्नश्च मे मतम्** ॥ १८ ॥

**निर्वाणञ्च सुदुष्प्राप्यम्** इत्यत्र **निर्वाणं** सर्वपरित्यागरूपः सन्न्यासः।

॥ इति एकविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

[३]**तयोरावसथावास्तां रमणीयौ पृथक्पृथक् ।**
**नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु** ॥ १९ ॥

**बाहुदामनु** इत्यत्र **बाहुदां** बाहुदां नाम नदीम् ।

---

१. $K_5$, $M_4$; BORI पृ. ७९; 'विधिनामाश्रमाणां वै' इति कुं. पाठः ।
२. $S_1$, $K_1$, $T_2$, $G_1$ ; BORI पृ. ७९; 'हि' इति कुं. पाठः ।
३. कुं. २३ अध्यायः ।

**एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।**
**प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ ३१ ॥**

**प्रतिश्रुत्य करिष्येति** इत्यत्र 'अकरिष्ये' इति लृङि आत्मनेपदे उत्तमपुरुषवचनम् ।

**सुद्युम्न उवाच –**

**प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।**
**अनुज्ञायामपि तथा हेतुः स्यात् ब्राह्मणर्षभ ॥ ३३ ॥**

**स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।**
**ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ ३४ ॥**

**अनुज्ञायामपि तथा** इत्यत्र अनुज्ञायां कर्तव्यायामपि **तथा** ज्येष्ठवत् राजापि हेतुः स्यात् स भवान् **अभ्यनुज्ञातः** मया अभ्यनुज्ञातः ।

**लिखित उवाच –**

**[1]किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते ।**
**यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥ ४९ ॥**

**किं नु नाहं त्वया पूत** इत्यत्र अहं त्वयैव हस्तच्छेदं कृत्वा पूर्वमेव किं नु न पूतः ।

॥ इति चतुर्विंशोऽध्यायः ॥

* * *

१. BORI. पृ. ८७; **'किन्तु'** इति कुं. पाठः ।

## ।। अथ पञ्चविंशोऽध्यायः ।।

[1] **प्रत्यक्षमनुमानञ्च सर्वेषां योनिरुच्यते ।**
**प्रमाणज्ञो हि शक्नोति दण्डयोनौ विचक्षणः ।। १४ ।।**

**सर्वेषां योनिरुच्यत** इत्यत्र **योनिः** प्रमाणम् ।

**शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।**
**गोमिनो धनिनश्चैव परिपाल्या विशेषतः ।। २० ।।**

**गोमिनो धनिनश्चैव** इत्यत्र **गोमिनः** बहुगोधनवन्तो गोपालाः । 'द्वौ गवीश्वरे । गोमान् गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे'[2] इत्यमरः ।

**आन्वीक्षिकीत्रयीवार्तादण्डनीतिषु पारगाः ।**
**ते तु सर्वत्र योक्तव्यास्ते च बुद्धेः परं गताः ।। २५ ।।**

**आन्वीक्षिकीत्रयीवार्ता** इत्यत्र अनुकूला **ईक्षा** परमात्मापरोक्षज्ञानम् , तत्सम्बन्धिनी विद्या **आन्वीक्षिकी** ।

**ये रक्ष्यमाणा हीयन्ते दैवेनाभ्याहता नृप ।**
**तस्करैश्चापि हीयन्ते सर्वं तद्राजकिल्बिषम् ।। २८ ।।**

**दैवेनाभ्याहता नृप** इत्यत्र **दैवेन** देवविषये यज्ञादिकर्मणा **अभ्याहता** रहिताः ।

---

१. कुं. २४ अध्यायः ।
२. अ.को. २.९.५८

**धनुर्यूपो रशना ज्या शरः स्रुक्**
**स्रुवः खड्गो रुधिरं यत्र चाज्यम् ।**
**रथो वेदी कामजो युद्धमग्नि-**
**श्चातुर्होत्रं चतुरो वाजिमुख्याः ॥३५॥**

**धनुर्यूपो रशना ज्या शरः स्रुक्** इत्यत्र **ज्या रशना** यूपबन्धनमेखला ।

॥ इति पञ्चविंशोऽध्यायः ॥

* * *

## ॥ अथ षड्विंशोऽध्यायः ॥

**[१]जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥ २१ ॥**

**[२]दुःखमेवाति न सुखं तस्मात्तदुपलभ्यते ॥ २२ ॥**

**दुःखमेवाति न सुखम्** इत्यत्र **अति** अतिशयेन नियमेन दुःखमेव न, सुखमपि न । **तस्माद्** दुःखादनन्तरं **तत्सुखम्**, **तस्मात्** सुखादनन्तरं **तद्दुःखमि**त्यावृत्त्या योजना ।

**परदुःखेन यो दुःखी न जातु स सुखी भवेत् ।**
**दुःखानां हि क्षयो नास्ति जायते ह्यपरात्परम् ॥ ३० ॥**

**परदुःखेन यो दुःखी** इत्यत्र **परदुःखेन** पुत्रदारादीनां दुःखेन ।

॥ इति षड्विंशोऽध्यायः ॥

---

१. कुं. २५ अध्यायः ।
२. 'दुःखमेवास्ति' इति कुं. पाठः ।

## ।। अथ सप्तविंशोऽध्यायः ।।

[१] **अजाश्च पृश्नयश्चैव सिकताश्चैव भारत ।**
**अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ।। ७ ।।**

**अजाश्च पृश्नयश्चैव** इत्यत्र **अजाः** अजनामकाः । **पृश्नयः** पृश्निनामकाः । एवमुत्तरत्रापि ।

**ये वित्तमभिपद्यन्ते सम्यक्त्वं तेषु दुर्लभम् ।**
**द्रुह्यतः प्रैति तत्प्राहुः प्रतिकूलं यथातथम् ।। २० ।।**

**द्रुह्यतः प्रैति तत्प्राहुः** इत्यत्र **द्रुह्यतः** पुरुषस्य प्रतिकूलं यथा भवति तथा तत् परलोकसुखं **प्रैति** नश्यति ।

**यस्तु सम्भिन्नवृत्तः स्यद्वीतशोकभयो नरः ।**
**अल्पेन तृषितो द्रुह्यन् भ्रूणहत्यां न बुध्यते ।। २१ ।।**

**अल्पेन तृषित** इत्यत्र **तृषितः** धनतृष्णावान् ।

**।। इति सप्तविंशोऽध्यायः ।।**

## ।। अथ अष्टाविंशोऽध्यायः ।।

[२] **यस्याङ्के क्रीडमानेन मया विपरिवर्तितम् ।**
**स मया राज्यलुब्धेन गाङ्गेयो युधि पातितः ।। ४ ।।**

**मया विपरिवर्तितम्** इत्यत्र **विपरिवर्तितम्** इतस्ततो वेष्टनं कृतम् ।

---

१. अध्यायोऽयं कुम्भकोणपाठे पञ्चविंशाध्यायानन्तरं प्रक्षिप्तत्वेनोद्धृतः ।

२. कुं. २६ अध्यायः ।

**प्राङ्मुखं सीदमानं च रथात्पररथारुजम् ।**
**घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् ॥ ७ ॥**

**रथात्पररथारुजम्** इत्यत्र **रथात्** स्वरथात् पररथानाम् आ समन्तात् रुक् यस्मात्तं **पररथारुजम्** ।

॥ इति अष्टाविंशोऽध्यायः ॥

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

**[१] स प्रसिक्तमना भोगान् विसृज्य पितृसञ्चितान् ।**
**परिक्षीणः परस्वानामादानं साधु मन्यते ॥ ८ ॥**

**स प्रसिक्तमना भोगान्** इत्यत्र **भोगान्** भोगसाधनद्रव्याणि ।

**ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः ।**
**परेण ते [२] वर्षशता न भविष्यन्ति पार्थिव ॥ १० ॥**

**परेण ते वर्षशता** इत्यत्र **परेण** वैरिणा वर्षाणां शतं येषां ते **वर्षशताः** ।

**गन्धवर्णरसस्पर्शा निवर्तन्ते स्वभावतः ।**
**तथैव सुखदुःखानि विधानमनुवर्तते ॥ २० ॥**

**गन्धवर्णरसस्पर्शा निवर्तन्त** इत्यत्र **निवर्तन्ते** नितरां वर्तन्ते ।

**अहमेतत् करोमीति मन्यते कालनोदितः ।**
**यद्यदिष्टमसन्तोषात् दुरात्मा पापमाचरेत् ॥ ३० ॥**

---

१. कुं. २७ अध्यायः । BORI. पृ. १०२; **'सम्प्रसक्तमनाः'** इति कुं. पाठः ।
२. $B_2 D_a$; BORI पृ. १०२; **'वर्षशतान्'** इति कुं. पाठः ।

**यद्यदिष्टमसन्तोषात्** इत्यत्र यदि **अदिष्टम्** अप्राप्तम् ।

**इति कालेन सर्वार्थानीप्सितानीप्सितानि ह ।**
**स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते** ॥ ३२ ॥

**निमित्तं नोपलभ्यत** इत्यत्र **निमित्तं** निमित्तभूतः सर्वेश्वरः ।

**न ह्यहानि निवर्तन्ते न मासा न पुनः समाः ।**
**जातानां सर्वभूतानां न पुनर्वै समागमः** ॥ ४९ ॥

**न ह्यहानि निवर्तन्त** इत्यत्र **अहानि** गताहानि **न निवर्तन्ते** पुनर्नायान्ति । एवमुत्तरत्रापि ।

**देहो वा [१] जीवतोऽप्येति जीवो वाप्येति देहतः ।**
**पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः** ॥ ५१ ॥

**देहो वा जीवत** इत्यत्र **जीवतः** जीवात् देहो गच्छेत्, शिरश्छेद-दाहादौ [२] देहस्यैव प्राग्गमनात् । जीवोऽप्येति देहतः योगाभ्यासादिना मरणे सति देहतः जीवः **अप्येति** नाशं प्राप्नोति ।

**चरितब्रह्मचर्यो हि प्रजायेत यजेत च ।**
**पितृदेवमनुष्याणामानृण्यादानसूयकः** ॥ ५५ ॥

**प्रजायेत यजेत च** इत्यत्र **प्रजायेत** प्रजां जनयेत् ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

---

१. **'जीविताद्धेति देही'** इति कुं. पाठः ।
२. **'दाहस्यैव'** सो.मु.पा. ।

## ॥ अथ त्रिंशोऽध्यायः ॥

[१] **पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।**
**अदक्षिण्यमयज्वानं [२] चैत्त्य संशाम्य मा शुचः** ॥ ३० ॥

**चैत्त्य संशाम्य मा शुच** इत्यत्र **चैत्त्य** चित्तसमाधानयुक्तः ।

**स चतुर्दश वर्षाणि वने प्रोष्य महातपाः ।**
**दशाश्वमेधान् [३] जारुथ्यामाजहार निरर्गलान्** ॥ ५९ ॥

**जारुथ्यामाजहार निरर्गलान्** इत्यत्र **जारुथ्यां** [४] जारुथीसञ्ज्ञायां नद्याम् ।

**उपह्वरे निवसतो यस्याङ्के निषसाद ह ।**
**गङ्गा भागीरथी तस्मादुर्वशी चाभवत्पुरा** ॥ ६८ ॥

**उपह्वरे निवसत** इत्यत्र **उपह्वरे** समीपे एकान्ते वा ।

[५] **चषालौ यस्य सौवर्णौ तस्मिन् यूपे हिरण्मये ।**
**ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा** ॥ ७५ ॥

**चषालौ यस्य सौवर्णौ** इत्यत्र **चषालौ** यूपकटकौ । 'चषालो यूपकटकः' [६] इत्यमरः ।

---

१. कुं. २८ अध्यायः । ; २. $K_{2-4}$; BORI पृ. १११; **'श्वेत्य'** इति कुं.पाठः
३. $M_{1.3.4}$; BORI पृ. ११५; **'जागरुथ्यान्'** इति कुं. पाठः ।
४. **'जारुथिसञ्ज्ञायाम्'** सो.मु.पा. ।
५. **'चषाले यस्य सौवर्णे'** इति कुं. पाठः ।
६. अ.को. २-७-१८

**संवृद्धो युवनाश्वस्य जठरे यो महात्मनः ।**
**पृषदाज्योद्भवः श्रीमान् त्रिलोकविजयी नृपः ॥ ८२ ॥**

**पृषदाज्योद्भवः श्रीमान्** इत्यत्र **पृषदाज्यं** सर्पिषा मिश्रःहविः । 'पृषदाज्यं हविः सर्पिः'[१] इत्यमरः ।

**तं पिबन् पाणिमिन्द्रस्य [२]समामह्ना व्यवर्धत ।**
**स आसीद् द्वादशसमो द्वादशाहेन पार्थिवः ॥ ८६ ॥**

**समामह्ना व्यवर्धत** इत्यत्र **अह्ना** एकदिवसेन समां एकवर्षं व्यवर्धत । एकदिवसेन एकवर्षबालोपमोऽभूदित्यर्थः ।

**[३]शम्यापातेनाभ्यगच्छत् वेदीभिश्चित्रयन्महीम् ।**
**ईजानः क्रतुभिः मुख्यैः पर्यगच्छद्वसुन्धराम् ॥ ९५ ॥**

**शम्यापातेनाभ्यगच्छन्** इत्यत्र आ समन्तात् पततीत्यापातो रथचक्रम् । शमीमयः आपातो यस्य तेन रथेन ।

**शतं राजसहस्राणि शतं राजशतानि च ।**
**सर्वेऽश्वमेधैरीजानाः [४]तेऽभ्ययुर्दक्षिणायनम् ॥ १०३ ॥**

**तेऽभ्ययुर्दक्षिणायनम्** इत्यत्र **दक्षिणायनं** [५]दक्षिणामार्गम् । दक्षिणामिति यावत् ।

---

१. अ.को. २.९.५२ । 'घृतमाज्यं' इति मुद्रितकोशेषु ।
२. BORI. पृ. ११८ ; **'शतमह्ना'** इति कुं. पाठः ।
३. S; BORI पृ. ११९; **'शम्यापाते नाभ्यतीयात्'** इति कुं. पाठः ।
४. BORI. पृ. १२०; **'तेऽन्वयुर्दक्षिणायनम्'** इति कुं. पाठः ।
५. **'दक्षिणमार्गम्'** सो.मु.पा. ।

**सहस्रं तु सहस्राणां [1] यस्यासञ्शाशबिन्दवः ।**
**हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ॥ १०६ ॥**

**यस्यासञ्शाशबिन्दव** इत्यत्र **शाशबिन्दवः** शशबिन्दुकुमाराः ।

**सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम् ।**
**दक्षिणामददद्राजा वाजिमेधे महाक्रतौ ॥ ११७ ॥**

**दशव्यामां द्विरायताम्** इत्यत्र **दशव्यामां** दशप्रमाणेन व्यामो विस्तारो यस्याः सा ताम् । **द्विरायतां** ततो द्विः प्रमाणेन दीर्घाम् ।

**अकृष्टपच्या पृथिवी पुटके पुटके मधु ।**
**सर्वा द्रोणदुघा गावो वैन्यस्यासन्प्रशासतः ॥ १४० ॥**

**पुटके पुटके मधु** इत्यत्र **पुटके पुटके** वृक्षादीनां कोटरे कोटरे ।

॥ इति त्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

**[2] तदद्भुततमं लोके पप्रथे कुरुसत्तम ।**
**बुबुधे तच्च देवेन्द्रो वरदानं मनीषिणोः ॥ २५ ॥**

**पप्रथे कुरुसत्तम** इत्यत्र **पप्रथे** प्रथितमभूत् ।

**सहसोत्पतितं व्याघ्रमाससाद महाबलम् ॥ ३२ ॥**
**स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः ॥ ३३ ॥**

---

१. BORI. पृ. १२०; 'शाशबिन्दवाः' इति कुं. पाठः ।
२. कुं. ३० अध्यायः ।

**सहसोत्पतितं व्याघ्रमाससाद महाबलम् । स बालस्तेन निष्पिष्ट** इत्यत्र व्याघ्रहिंसितत्वेनोक्तं स्वर्णष्ठीविरूपं प्राक् । चोरै[1] र्नाशितस्य तस्य नारदेन दत्तं प्रतिरूपं इदानीं पुनः पर्वतेन रक्षितम् । तस्मात्कथा-द्वयस्यापि न विरोधः ।

॥ इति द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**[2]ईश्वरो वा भवेत्कर्ता पुरुषो वापि भारत ।**
**[3]भद्रे वा वर्तते लोकः कर्मजं वा फलं स्मृतम्** ॥ १२ ॥

**भद्रे वा वर्तते लोक** इत्यत्र 'वा' पदेन अभद्रे वर्तत इत्यध्या-हरणीयम् । **कर्मजम्** उभयविधकर्मजं फलं **स्मृतं** स्मृतियुक्तम् ।

**ईश्वरेण नियुक्तो हि साध्वसाधु च भारत ।**
**कुरुते पुरुषः कर्म फलमीश्वरगामि तत्** ॥ १३ ॥

**फलमीश्वरगामि तत्** इत्यत्र **ईश्वरगामि** लोकदृष्ट्या ईश्वरगामि । तस्य चातिसमर्थत्वात् न फलभोक्तृतेति भावः । तर्हि निष्फलं कर्मेत्यत आह– **अथवा** इति ।

**अथवा तदुपादानात् प्राप्नुयात् कर्मणः फलम् ।**
**दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते** ॥ १५ ॥

---

१. **'नाशितम्'** सो.मु.पा. ।
२. **कुं. ३१ अध्यायः ।**
३. **'हठो वा वर्तते लोके'** इति कुं. पाठः ।

**तदुपादानात्** तेन ईश्वरेण उपादानात् जडविलक्षणजीवस्य ईषत्कर्तृत्वसम्भवेन फलोपादनात्।

**न चैतदिष्टं कौन्तेय [1]यद्यन्येन फलं कृतम्।**
**प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥ १६ ॥**

**यद्यन्येन फलं कृतम्** इत्यत्र यदि अन्येन कृतं फलम् अन्यः प्राप्नुयादिति नेष्टं तर्हि तत्सामर्थ्यं **ईश्वरे निवेशय,** ईश्वरसामर्थ्या-देतज्ज्ञातमिति स्मर।

**अथापि पुरुषः कर्ता कर्मणोः शुभपापयोः।**
**न परो विद्यते तस्मादेवमप्यशुभं कुतः ॥ १७ ॥**

**अथापि पुरुषः कर्ता** इत्यत्र **अथापि** ईश्वरस्य सर्वकर्तृत्वेऽपि। **तस्मात्** ईश्वरदत्तकर्तृत्वात्।

**यदि वा मन्यसे राजन् [2]हठे सर्वं प्रतिष्ठितम्।**
**एवमप्यशुभं कर्म न भूतं न भविष्यति ॥ १९ ॥**

**हठे सर्वं प्रतिष्ठितम् एवमपि** इत्यत्र **हठे** त्रिविधजीवानां योग्यतालक्षणस्वभावे। **एवमपि** शिक्षायोग्यानां दुष्टानां शिक्षणात् अशुभं कर्म त्वयि न भूतं, न भविष्यति।

**अथाभिपत्तिः लोकस्य कर्तव्या [3]शुभपापयोः।**
**अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् ॥ २० ॥**

---

१. $K_1$; BORI पृ. १३७; **'यदन्येन परो'** इति कुं. पाठः।
२. S; BORI पृ. १३८; **'हतमेकं'** इति कुं. पाठः।
३. BORI.पृ. १३८; **'पुण्यपापयोः'** इति कुं. पाठः।

**अथाभिपत्तिः** इत्यत्र **अथ** तस्मात्कारणात् शुभपापयोः **अभिपत्तिः** प्राप्तिः लोकस्य कर्तव्या । **उद्यतदण्डनं** उद्यतं सन्नद्धं दण्डन दुष्टानां शिक्षणं यस्मिन् तदिदं राज्यं **अभिपन्नं** तव प्राप्तम् ।

**स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।**
**एवमात्मपरित्यागस्तव राजन्न शोभनः ॥ २३ ॥**

**स्वधर्मे वर्तमानस्य** इत्यत्र **सापवादे** कचिद् दुष्टानां शिक्षणं कर्तव्यमित्यपवादसहिते स्वधर्मे ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**[1]त्वष्ट्रेव विहितं यन्त्रं यथा चेष्टयितुर्वशे ।**
**कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥ १० ॥**

**कर्मणा कालयुक्तेन** इत्यत्र **कालः** संहारको नारायणः ।

**पुरुषस्य दृष्ट्वेमां उत्पत्तिमनिमित्ततः ।**
**यदृच्छया विनाशश्च शोकहर्षावनर्थकौ ॥ ११ ॥**

**उत्पत्तिमनिमित्तत** इत्यत्र **अनिमित्ततः** अकारवाच्यनारायणाख्य स्वतन्त्रनिमित्ततः ।

**व्यलीकमपि यत्त्वत्र [2]चित्तं वैतंसिकं तव ।**
**तदर्थमिष्यते राजन् प्रायश्चित्तं तदाचर ॥ १२ ॥**

१. कुं. ३२ अध्यायः ।; २. 'चित्तवैतंसिक' इति कुं. पाठः ।

**चित्तं वैतंसिकं तव** इत्यत्र **वैतंसिकं** कुटिलम् । 'वैतंसिकः कौटिकश्च'[1] इत्यमरः ।

**अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप**
**धर्मरूपो ह्यधर्मश्च तच्च ज्ञेयं विपश्चिता ॥ २० ॥**

**अधर्मरूपो धर्मो हि** इत्यत्र **कश्चिद्धर्मः** दुष्टवधाख्यो धर्मः **अधर्मरूपः** हिंसामात्रेण अज्ञानिनां अधर्मवद्रूपं यस्य सः अधर्मरूपः । **धर्मः** चोरैः प्रश्ने कृते सति अनेन पथा ब्राह्मणा गता इति सत्यरूपत्वात् धर्मः अज्ञानां धर्मवत्प्रतीयमानः **अधर्मः** विप्रहिंसाहेतुत्वान्महानधर्मः ।

**त्वं तु शुक्लाभिजातीयः परदोषेण कारितः**
**अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ २५ ॥**

**परदोषेण कारित** इत्यत्र **परेषां** दुर्योधनादीनां **दोषेण** कपटद्यूत-राज्यापहारलाक्षागृहादिकरणदोषेण ।

**॥ इति चतुस्त्रिंशोऽध्यायः ॥**

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

**[2]सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत ।**
**तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ॥ ३ ॥**

**सूर्येणाभ्युदित** इत्यत्र यश्च ब्रह्मचारी अर्घ्यात्पूर्वं सूर्येण अभ्युदितो भवति सोऽपि प्रायश्चित्ती । तथा सायमर्घ्यकाले सूर्येण **अभिनिर्मुक्तः**

---

१. अ.को. २.१०.१४; २. कुं. ३३ अध्यायः ।

अर्घ्यकाले सूर्यरहित इत्यर्थः । तावुभौ प्रायश्चित्तिनौ । 'पूर्वां सन्ध्यां सनक्षत्रामुत्तरां सदिवाकराम्' इति स्मृतेः ।

**परिवित्तिः परिवेत्ता ब्रह्मेज्यायाश्च दूषकः ।**
**[1]दिधिषूपपतिश्चैव अग्रेदिधिषुरेव च ॥ ४ ॥**

**दिधिषूपपतिश्चैव** इत्यत्र **परिवेत्ता** ज्येष्ठे अनूढे सति विवाहकर्ता अनुजः । **परिवित्तिः** तस्य भार्या । 'परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्ज्यायान्'[2] इत्यमरः । द्विः ऊढा नारी **दिधिषूः** तस्या **उपपतिः** जारः । **अग्रेदिधिषुः** द्विरूढायाः पतिः । 'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः'[3] इत्यमरः । द्विः ऊढा नारी पुनर्भूः दिधिषूः इत्युच्यते । तस्याः पतिः दिधिषुः इत्युच्यते इत्यर्थः ।

**अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा ।**
**अतीर्थे ब्रह्मणस्त्यागी तीर्थे चाप्रतिपादकः ॥ ५ ॥**

**अवकीर्णी** इत्यत्र **अवकीर्णी** रेतःस्खलनादिना क्षतव्रतो ब्रह्मचारी । 'अवकीर्णी क्षतव्रतः'[4] इत्यमरः । **अतीर्थे** अपात्रे **ब्रह्मणः** ब्राह्मणस्य त्यागी । 'निदानागमयोस्तीर्थमृषिजुष्टे जले गुरौ'[5] इत्यमरः । **निदानं दानस्यादिकारणम्, पात्रमित्यर्थः ।**

**उक्तान्येतानि कर्माणि विस्तरेणेतरेण च ॥ १७ ॥**
**यानि कुर्वन्नकुर्वंश्च प्रायश्चित्तीयते नरः ॥ १८ ॥**

---

१. **'दधिषूपतिस्तथा'** इति कुं. पाठः ।; २. अ.को. २.८.५५
३. अ.को. २.६.२३; ४. अ.को. २.८.५४
५. अ.को. २.३.८६

**यानि कुर्वन्नकुर्वंश्च** इत्यत्र **यानि** अविहितानि तानि कुर्वन्, यानि विहितानि तान्यकुर्वन्।

**प्राणात्यये तथा ज्ञानात् आचरन्मदिरामपि।**
**आदेशितो धर्मपरैः पुनः संस्कारमर्हति ॥ २२ ॥**

**आचरन्मदिरामपि** इत्यत्र 'चर गतिभक्षणयोः' इति धातुः।

**नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथञ्चन।**
**आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥ २८ ॥**

**नावर्तते व्रतम्** इत्यत्र **नावर्तते** तस्मात्परावृत्य नायाति। तत्रैव तिष्ठतीत्यर्थः।

**पारिवित्त्यन्तु पतिते नास्ति प्रव्रजिते तथा।**
**भिक्षिते पारदार्यं च तद्धर्मस्य न दूषकम् ॥ २९ ॥**

**पारिवित्त्यन्तु पतित** इत्यत्र ज्येष्ठे पतिते सति प्रव्रजिते च सति **पारिवित्त्यं** परिवित्त्याख्यदोषो नास्ति।

**अनर्हे ब्राह्मणे दत्तमज्ञानत्तन्न दूषकम्।**
**सत्काराणां तथातीर्थे नित्यं वा प्रतिपादनम् ॥ ३१ ॥**

**तथातीर्थ** इत्यत्र अतीर्थे इति पदच्छेदः।

**स्त्रियास्तथापचारिण्या निष्कृतिः स्याददूषिका।**
**अपि सा पूयते तेन न तु भर्ता प्रदुष्यति ॥ ३२ ॥**

**निष्कृतिः स्याददूषिका** इत्यत्र **निष्कृतिः** विक्रयणम्।

**तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददोषवान्**
**असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान्** ॥ ३३ ॥

**तत्त्वं ज्ञात्वा तु सोमस्य** इत्यत्र **सोमस्य** सोमलतायाः **तत्त्वं** याथार्थ्यम् । अन्यलतामानीय सोमलतेत्यनृतेन विक्रयणं निषिद्धमिति सूचयितुं 'तत्त्वं ज्ञात्वा' इत्युक्तम् ।

॥ इति पञ्चत्रिंशोऽध्यायः ॥

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

[1]**कपालपाणिः खद्वाङ्गी ब्रह्मचारी सदोत्थितः** ॥ २ ॥
**अनसूयुरधःशायी कर्म लोके प्रकाशयन् ।**
**पूर्णैर्द्वादशभिर्वर्षैः ब्रह्महा विप्रमुच्यते** ॥ ३ ॥

**कपालपाणिः खद्वाङ्गी** इत्यत्र **कपालपाणिः** भिक्षासङ्ग्रहाय मृण्मय-कपालपाणिः । **खद्वाङ्गी** पश्वादिनिवारणाय खद्वाङ्गो लगुडं, तद्वान् ।

**लक्ष्यः शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ।**
**प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः** ॥ ४ ॥
**जपन् वान्यतमं वेदं योजनानां शतं व्रजेत् ।**
**सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्** ॥ ५ ॥

**त्रिरवाक्शिरा** इत्यत्र ऋगादिवेदानां मध्ये एकं वेदं त्रिर्जपन् ।

**षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः ।**
**मासे मासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते** ॥ ७ ॥

१. कुं. ३४ अध्यायः ।

**मासे मासे समश्नंस्तु** इत्यत्र समश्नन् मासोपवासं कृत्वा मासे सम्पूर्णे सति समश्नन् ।

**सुरापानं सकृत्कृत्वा योऽग्निवर्णां सुरां पिबेत् ।**
**स पावयत्यथात्मानमिह लोके परत्र च ॥ १६ ॥**

**योऽग्निवर्णां सुरां पिबेत्** इत्यत्र **अग्निवर्णां** पुनः पुनः क्वथनेन अग्निसमानवर्णाम् ।

**मरुप्रपातं प्रपतञ्ज्वलनं वा समाविशन् ।**
**महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषैः ॥ १७ ॥**

**मरुप्रपातम्** इत्यत्र **मरुप्रपातं** मरुदेशस्थकूपम् ।

**कृच्छ्राद् द्वादशरात्रेण संयतात्मा व्रते स्थितः ।**
**परिवेत्ता भवेत् पूतः परिवित्तिस्तथैव च ॥ २७ ॥**

**कृच्छ्राद् द्वादशरात्रेण** इत्यत्र ल्यब्लोपनिमित्ता पञ्चमी । **कृच्छ्रात्** कृच्छ्रव्रतं सम्पाद्य ।

**[१]निवेश्यस्तु भवेत्तेन सदा तारयता पितॄन् ।**
**न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ॥ २८ ॥**

**निवेश्यस्तु भवेत्तेन सदा** इत्यत्र प्रायश्चित्तेन **निवेश्यः** निवेशनं गृहं कृत्वा स्थातुं योग्यः ।

**भोजनं ह्यन्तराशुद्धं चातुर्मास्यं विधीयते ।**
**स्त्रियस्तेन प्रशुद्ध्यन्ति इति धर्मविदो विदुः ॥ २९ ॥**

---

१. $B_1$ $M_4$, BORI. पृ. १५२; **'निवेश्यन्तु पुनस्तेन भवेत्'** इति कुं. पाठः ।

**भोजनं ह्यन्तरा** इत्यत्र भोजनं **अन्तरा** विना ।

**स्त्रियस्त्वाशङ्किताः पापे नोपगम्या [१]विजानतीः ।**
**रजसा ता विशुद्ध्यन्ते भस्मना भाजनं यथा ॥ ३० ॥**

**पापे नोपगम्या विजानतीः** इत्यत्र **पापेन** पापिष्ठेन जारादिना **उपगम्य** कापट्येन बलेन वा उपागम्य ।

**शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकम् ।**
**[२]अतिरिच्येत यो यत्र तत्कर्ता लभते फलम् ॥ ४० ॥**

**अतिरिच्येत यो यत्र** इत्यत्र **अतिरिच्येत** पुण्येन अतिरिच्येत ।

**भक्ष्याभक्ष्येषु चान्ये वाच्यावाच्ये तथैव च ।**
**अज्ञानज्ञानयो राजन् [३]विहितान्यविजानता ॥ ४४ ॥**

**विहितान्यविजानता** इत्यत्र अविजानता **विहितानि** पापानि लघूनि ।

॥ इति षट्त्रिंशोऽध्यायः ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

**[४]अनादेशे जपो होमः उपवासस्तथैव च ।**
**आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्पराः ॥ ६ ॥**

१. **'विजानता'** इति कुं. पाठः ।
२. $K_{2,3}$, $V_1$, B,; BORI पृ. १५३; **'अतिरिच्येत्तयोर्यस्तु'** इति कुं. पाठः ।
३. **'विहितान्यनुजानता'** इति कुं. पाठः ।
४. कुं. ३५ अध्यायः ।

**अनादिष्टं तथैतानि पुण्यानि धरणीभृथः ॥ ७ ॥**

**अनादेशो जपो होम** इत्यत्र **आदेशः** धनदानेन जपं कुर्वित्याज्ञा, **अनादेशो** तदभावेऽपि ।

**य एव धर्मः सोऽधर्मो देशकाले प्रतिष्ठितः ।**
**आदानमनृतं हिंसा धर्मो [१] ह्यावस्थिकः स्मृतः ॥ ११ ॥**

**धर्मो ह्यावस्थिकः स्मृत** इत्यत्र **आवस्थिकः** अवस्थाविशेषं प्राप्तः । अनादिर्धर्मो हि अपात्रेष्वदानं ब्राह्मणार्थे अनृतं गवार्थे व्याघ्रादीनां हिंसा च धर्म एवेत्यर्थः । उक्तस्थलादन्यत्रायमेवाधर्मः ।

**द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम् ।**
**अप्रवृत्तिः प्रवृतिश्च द्वैविध्यं लोकवेदयोः ॥ १२ ॥**

**अप्रवृत्तिः प्रवृतिश्च** इत्यत्र **अप्रवृत्तिः** प्रवृत्तिधर्मादन्यः निवृत्तिधर्मः । **प्रवृत्तिः** प्रवृत्तिधर्मः ।

**अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम् ।**
**अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च ॥ १३ ॥**

**अप्रवृत्तेरमर्त्यत्वम्** इत्यत्र **अमर्त्यत्वं** मुक्तत्वम् । **कर्मणः** प्रवृत्तिकर्मणः फलं मर्त्यत्वम् ।

**दैवं च [२] दैवयुक्तश्च प्राणश्च प्रलयस्तथा ।**
**अपेक्षापूर्वकरणादशुभानां शुभं फलम् ॥ १४ ॥**

---

१. $K_{3,5}$,V; BORI पृ. १५६; '**ह्यात्यन्तिकः स्मृतः**' इति कुं. पाठः ।
२. BORI. पृ. १५६; '**दैवसंयुक्तं**' इति कुं. पाठः ।

**दैवं च दैवयुक्तश्च** इत्यत्र **दैवं** फलापेक्षया देवसम्बन्धिपूजनादिकम् **दैवयुक्तं** फलापेक्षया दैवेन **युक्तं** [१] प्रयुक्तं वेदाध्ययनादिकं च यत्, **प्राणः** प्रकृष्टचेष्टारूपं यज्ञादिकञ्च यत्, **प्रलयः** फलापेक्षया तदर्थं पशु-हिंसनादिकञ्च यत्, एतेषामशुभानां चतुर्णामपि कर्मणाम् । **अपेक्षया** फलापेक्षया **पूर्वं** यत्र तदपेक्षापूर्वम् तादृशकरणात्, फलमनपेक्ष्य करणादित्यर्थः । शुभं फलं भवति ।

**ऊर्ध्वं भवति [३] सन्दोहात् इह दृष्टार्थमेव च ।**
**अप्रेक्षापूर्वकरणात् प्रायश्चित्तं विधीयते ॥ १५ ॥**

**ऊर्ध्वं भवति सन्दोहात्** इत्यत्र धर्माख्यकामधेनोः **सं** सम्यक् **दोहात्** फलापेक्षां विना करणादित्यर्थः । **ऊर्ध्वम्** ऊर्ध्वं पदं भवति । **इह** निवृत्तिमार्गे दृष्टार्थं फलञ्च भवति ।

**[४] उपवासमेकरात्रं दण्डोत्सर्गे नराधिपः ।**
**विशुद्ध्येदात्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः ॥ १७ ॥**

**उपवासमेकरात्रम्** इत्यत्र एकरात्रमुपवासं कृत्वा । **दण्डोत्सर्गे** दण्ड्यानां [५] दण्डनस्योत्सर्गे ।

**अभक्ष्या ब्राह्मणैर्मत्स्याः शकलैर्ये विवर्जिताः ।**
**[६] चतुष्पात्कच्छपाज्जन्यो मण्डूका जलजाश्च ये ॥ २२ ॥**

१. **'प्रयुक्तम्'** इति क्वचित्पुस्तकेषु नास्ति ।
२. BORI. पृ. १५६; **'सन्देहात् इहादिष्टार्थमेव च'** इति कुं. पाठः ।
३. BORI. पृ. १५७; **'उपवासेनैकारात्रं'** इति कुं. पाठः ।
४. **'उपवासेनैकरात्रं'** इति कुं. पाठः ।; ५. **दण्डानां** सो.मु.पा. ।
६. **'कच्छापादन्यां'** इति कुं. पाठः ।

**भासा हंसाः सुपर्णाश्च चक्रवाका प्लवा बकाः ।**
**[१] मद्गवश्चैव गृध्राश्च काकोलूकं तथैव च ॥ २३ ॥**

**चतुष्पात्कच्छपाज्जन्य** इत्यत्र **कच्छपात्** कच्छपजातिमादाय जन्यः जातः चतुष्पात् प्राणी । **मद्गवः** जलवायसाः । 'मद्गुः स्याज्जलवायसः'[२] इति हलः ।

**[३]आचारं [४]चापि वायसः** इत्यत्र **नापितः** नापितस्य ।

**यथा षण्ढोऽफलः स्त्रीषु यथा [५]गौर्भुवि चाफला ।**
**शकुनिर्वाप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा ॥ ४७ ॥**

**यथा गौर्भुवि चाफला** इत्यत्र भुवि दुग्धा गौः अफला ।

॥ इति सप्तत्रिंशोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

**[६]उशना वेद यच्छास्त्रं देवासुरगुरुर्द्विजः ।**
**[७]तच्च सर्वं सवैयाख्यं प्राप्तवान् कुरुसत्तमः ॥ १० ॥**

**तच्च सर्वं सवैयाख्यम्** इत्यत्र व्याख्यासम्बन्धि प्रमेयं वैयाख्यम्, तेन सहितं **सवैयाख्यम्** ।

---

१. $D_7$ S; BORI पृ. १५७; '**काको मद्गुश्च गृध्रश्च श्येनोलूकस्तथैव च**' इति कुं. पाठः ।

२. ह.को. २.२५० ; ३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

४. **वापि; पापि** सो.मु.पा.; ५. '**गौर्गत्रि**' इति कुं. पाठः ।

६. कुं. ३६ अध्यायः ।; ७. BORI. पृ. १६२; '**स च धर्मं**' इति कुं. पाठः ।

**पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम् ।**
**अध्यात्मगतितत्त्वज्ञम् उपाशिक्षत यः पुरा ॥ १२ ॥**

**उपाशिक्षत यः पुरा** इत्यत्र **उपाशिक्षत** उपसृत्य तस्माद्धर्मानशिक्षत।

**स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मार्थतत्त्ववित् ।**
**तमभ्येहि पुरा प्राणान् स विमुञ्चति धर्मवित् ॥ १६ ॥**

**तमभ्येहि पुरा प्राणान्** इत्यत्र यदा प्राणान् विमुञ्चति ततः पुरा ।

॥ इति अष्टत्रिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

[१] **वरेण छन्द्यमानश्च ब्रह्मणा स पुनः पुनः ।**
**अभयं सर्वभूतेभ्यो वरयामास भारत ॥ ४ ॥**

**अभयं सर्वभूतेभ्य** इत्यत्र सर्वभूतेभ्यः स्वस्य अभयम् ।

॥ इति चत्वारिंशोऽध्यायः ॥

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

[२] **सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः ।**
**निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्पृथक् ॥ ५ ॥**

**सुधर्मा विदुर** इत्यत्र सुष्ठु धर्मो यस्य सः **सुधर्मा** इति विशेषणम् ।

---

१. कुं. ३८ अध्यायः । ; २. अत्र कुं. पाठानुसारेण पूर्वाध्याय एव अनुसरति ।

**तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् ।**
**स्वस्तिकानक्षतान् भूमिं सुवर्णं रजतं मणीन् ॥ ७ ॥**

**भूमिं सुवर्णं रजतं मणीन्** इत्यत्र **भूमिम्** अभिषेके सह योजनीयां शोभनगोष्ठवृन्दावनादिमृत्तिकाम् ।

॥ इति एकचत्वारिंशोऽध्यायः ॥

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

**चतुर्थं[१] ध्यानमार्गं त्वमालम्ब्य पुरुषर्षभ ।**
**अपक्रान्तो यतो जीवस्तेन मे विस्मितं मनः ॥ २ ॥**

**चतुर्थं ध्यानमार्गं त्वम्** इत्यत्र वैराग्यभक्तिशास्त्राभ्यासेभ्यः अनन्तरं विद्यमानत्वाच्चतुर्थं ध्यानमार्गम् ।

**यथा दीपो निवातस्थो निरिङ्गो ज्वलतेऽच्युत ।**
**तथासि भगवन् देव निश्चलो योगनिश्चयात् ॥ ६ ॥**

**निरिङ्गो ज्वलतेऽच्युत** इत्यत्र **निरिङ्गः** चेष्टारहितः । 'इङ्ग चेष्टायाम्' इति धातुः ।

**आवृत्ते भगवत्यर्के स हि लोकान् गमिष्यति ।**
**त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ॥ २९ ॥**

**आवृत्ते भगवत्यर्के** इत्यत्र **आवृत्ते** दक्षिणायनादुत्तरायणं प्रत्यागते ।

॥ इति त्रिचत्वारिंशोऽध्यायः ॥

---

१. कुं. ४५ अध्यायः ।

## ।। अथ चतुश्चत्वारिंशोऽध्यायः ।।

**[1]आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् ।**
**तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः** ।। १७ ।।

**जिगदिषामि याम्** इत्यत्र **जिगदिषामि** गदितुमिच्छामि ।

**यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।**
**गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु** ।। २८ ।।

**निषत्सूपनिषत्सु च** इत्यत्र नितरां भगवति सीदन्तीति **निषदो** वेदाः ।

**हिरण्यवर्णं यं गर्भमदितिर्दैत्यनाशनम् ।**
**एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः** ।। ३९ ।।

**तस्मै सूर्यात्मने नम** इत्यत्र **सूर्यात्मने** सूर्यव्याप्ताय सूर्यस्वामिने वा । एवमुत्तरत्रापि द्रष्टव्यम् । 'विष्ण्वात्मने' 'क्रोडात्मने' इत्यादौ भगवद्रूपविषये तु विष्णुस्वरूपाय क्रोढस्वरूपाय इत्याद्यर्थ ऊह्यः ।

**यं देवं देवकी देवी वसुदेवादजीजनत् ।**
**भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः** ।। ३१ ।।

**भौमस्य ब्रह्मणो गुप्त्या** इत्यत्र **भौमस्य** भूगतस्य । **ब्रह्मणः** ब्राह्मण-समूहस्य देवस्य वा ।

**यतः सर्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः ।**
**उन्मादः सर्वभूतानां तस्मै कामात्मने नमः** ।। ५२ ।।

---

१. कुं. ४६ अध्यायः ।

**अनङ्गात्माङ्गदेहिन** इत्यत्र अनङ्गेन व्याप्तानि अङ्गानि देहाश्च येषां ते । **उन्मादः** उत्कर्षेण मादयति हर्षयतीत्युन्मादः ।

**यं दृगात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।**
**प्राहुः सप्तदशं साङ्ख्यास्तस्मै साङ्ख्यात्मने नमः ॥ ५४ ॥**

**वृतं षोडशभिर्गुणैः** इत्यत्र गुणैः अप्रधानभूतैः षोडशभिः पञ्चभूतैकादशेन्द्रियाख्यैः षोडशभिर्वृतं यं [1] सप्तदशं प्राहुः ।

**अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।**
**शान्ताः सन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ५६ ॥**

**पुनर्भवनिर्भया** इत्यत्र **पुनर्भवनिर्भयाः** पुनर्भवभयरहिताः ।

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

[2] **एतन्मे छिन्धि वार्ष्णेय संशयं तार्क्ष्यकेतन ।**
**अगमो हि परः कृष्ण त्वत्तो नो वासवानुज ॥ १५ ॥**

**अगमो हि परः कृष्ण** इत्यत्र **आगमः** सकलतत्त्वानामवगमनम् ।

॥ इति अष्टचत्वारिंशोऽध्यायः ॥

## ॥ अथ एकोनपञ्चाशोऽध्यायः ॥

[3] **आहूय चाह तां भार्यामृचीको भार्गवस्तदा ।**
**उपयोज्यश्चरुरयं त्वया मात्राप्ययं तव ॥ ९ ॥**

---

१. 'सप्तदशीम्' सो.मु.पा. ; २. कुं. ४७ अध्यायः ।
३. कुं. ४८ अध्यायः ।

**उपयोज्यश्चरुरयम्** इत्यत्र अयं चरुस्त्वयाप्युपयोज्यः, अयमेव चरु-स्तव मात्राप्युपयोज्यः ।

**विश्वं हि ब्रह्म सुमहच्चरौ तव समाहितम् ।**
**क्षत्रवीर्यञ्च सकलं तव मात्रे समर्पितम्** ॥ १९ ॥
**विपर्ययेण ते भदद्र नैतदेवं भविष्यति**
**मातुस्ते ब्राह्मणो भूयात्तव च क्षत्रियः सुतः** ॥ २० ॥

**विपर्ययेण** त इत्यत्र विपर्ययेण ते पुत्रः स्यात् । एवं प्राक् मदुक्तप्रकारेण न भविष्यति ।

**नार्होऽसि भगवन्नद्य वक्तुमेवं विधं वचः ।**
**ब्राह्मणाप [१] सदं पुत्रं प्राप्स्यसीति हि मां प्रभो** ॥ २२ ॥

**ब्राह्मणापसदम्** इत्यत्र **ब्राह्मणादपसदं** नीचं क्षत्रियमित्यर्थः ।

**स शून्यमाश्रमारण्यमापवस्य महात्मनः ।**
**ददाह पवनेनेद्धश्चित्रभानुः सहैहयः** ॥ ४१ ॥

**आपवस्य महात्मन** इत्यत्र अप्सु जातत्वात् **आपवस्य** वसिष्ठस्य ।

**आपवस्तं ततो रोषाच्छशापार्जुनमच्युत ।**
**दग्धे श्रमे महाबाहो कार्तवीर्येण वीर्यवान्** ॥ ४२ ॥

**दग्धे श्रम** इत्यत्र **श्रमे** आश्रमे ।

* * *

---

१. BORI. पृ. २११ ; '**-शदं**' इति कुं. पाठः ।

**ततः [1] शूर्पाकरोद्देशं सागरस्तस्य निर्ममे ।**
**सन्त्रासाज्जामदग्न्यस्य सोऽपरान्तमहीतलम् ॥ ६८ ॥**

**ततः शूर्पाकरोद्देशम्** इत्यत्र **शूर्पाकरम्** इति कन्यातीर्थस्य समीपे परशुरामस्य शूर्पाकारशरपातस्थलम् । तावत्पर्यन्तो देशः [2] **शूर्पाकरोद्देशः** । अपरान्तमहीतलम् **अपरः** पश्चिमसमुद्रः, तस्य **अन्ते** प्रान्ते विद्यमानं महीतलम् ।

**व्रात्यतां समनुप्राप्ता बहवो हि द्विजातयः**
**अधरोत्तरापचारेण म्लेच्छभूताश्च सर्वशः ॥ ७७ ॥**

**अधरोत्तरापचारेण** इत्यत्र अधराणाम् अधमानां वैश्यशूद्राणामुत्तमत्वं, तेन अपचारेण ।

**बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः ।**
**गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ ८८ ॥**

**गोलाङ्गूलैर्महाभाग** इत्यत्र **गोलाङ्गूलैः** गोपुच्छवद्दीर्घबालैः कृष्णवक्त्रमर्कटैः । 'गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः' [3] इति हलः ।

**एते क्षत्रियदायादास्तत्र तत्र परिश्रुताः ।**
**व्योकारहेमकरादि [4] जातीः नित्यं समाश्रिताः ॥९०॥**

---

१. $D_7$ S; BORI पृ. २१६; **'शूर्पाकरं देशं'** इति कुं. पाठः ।
२. **'शूर्पाकारोद्देशः'** सो.मु.पा. ।
३. ह.को. २.२३२
४. $V_1$; BORI पृ. २२३; **'जातिं'** इति कुं. पाठः ।

**व्योकारहेमकरादिजातीः** इत्यत्र **व्योकारः** लोहकारः । 'व्योकारो लोहकारकः'[१] इत्यमरः ।

॥ इति एकोनपञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चाशोऽध्यायः ॥

**[२] वरदानात्पितुः कामं छन्दमृत्युरसि प्रभो ।**
**शन्तनोर्धर्मनित्यस्य न त्वेतदिह कारणम् ॥ १५ ॥**

**न त्वेतदिह कारणम्** इत्यत्र एतत् स्वच्छन्दमृत्युर्भवेति पितुः शन्तनोर्वचनम् इह गात्रवेदनादिपरिहारे कारणं न ।

**स त्वं हि भीष्म महाबाहो वसूनां वासवोपमः ।**
**नित्यं विप्रैः समाख्यातो नवमोऽनवमो गुणैः ॥ २६ ॥**

**नवमोऽनवमो गुणैः** इत्यत्र वसूनां नवमः गुणैरनवम इति योजना ।

**चातुर्वर्ण्यस्य यश्चोक्तो धर्मो न स्म विरुध्यते**
**सेव्यमानः सवैयाश्व्यो गाङ्गेय विदितस्तव ॥ ३४ ॥**

**चातुर्वर्ण्यस्य यश्चोक्त** इत्यत्र चातुर्वर्ण्यस्य सेव्यमानः यो धर्मः न विरुध्यते स च, अन्यः विरुद्धश्च धर्मः तवैव विदितः ।

॥ इति पञ्चाशोऽध्यायः ॥

* * *

---

१. अ.को. २-१०-७

२. कुं. ४९ अध्यायः ।

## ।। अथ द्विपञ्चाशोऽध्यायः ।।

**[१]ययौ रथानां पुरतो हि सा चमू-**
**स्तथैव पश्चादतिमात्रसारिणी ।**
**पुरश्च पश्चाच्च यथा महानदी**
**[२]अथर्क्षवन्तं गिरिमेति नर्मदा ।। ३२ ।।**

**अथर्क्षवन्तं गिरिमेति नर्मदा** इत्यत्र **ऋक्षवन्तं गिरिं** विन्ध्याचलम् ।

।। इति द्विपञ्चाशोऽध्यायः ।।

## ।। अथ त्रिपञ्चाशोऽध्यायः ।।

**[३]पठन्ति [४]पाणिका गाथाः तथा गायन्ति गायनाः ।।**
**शङ्खानथ मृदङ्गांश्च प्रवाद्यन्ति सहस्रशः ।। ४ ।।**

**पठन्ति पाणिका गाथा** इत्यत्र करसंस्फोटनादिना पाणिभिः स्वनं कुर्वन्तः **पाणिकाः** । 'पाणिवादास्तु [५]पाणिकाः'[६] इत्यमरः ।

**वीणापणववेणूनां स्वनश्चातिमनोरमः**
**[७]प्रहास इव विस्तीर्णः शुश्रुवे तस्य [८]वेश्मनः ।। ५ ।।**

---

१. कुं. ५१ अध्यायः ।; २. 'तमृक्षवन्तं गिरिमेत्य' इति कुं. पाठः ।
३. कुं. ५२ अध्यायः ।; ४. 'पाणिस्वनिकास्तथा' इति कुं. पाठः ।
५. 'पाणिघाः' सो.मु.पा. ।
६. अ.को. २-१०-१३
७. BORI. पृ. २३२; 'सहास' इति कुं. पाठः ।
८. BORI. पृ. २३२; 'वेश्मनि' इति कुं. पाठः ।

**प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मन** इत्यत्र तस्य वेश्मनः **प्रहासः** प्रकृष्टो हासः अट्टहास इव ।

॥ इति त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुःपञ्चशोऽध्यायः ॥

**यावद्धि[1] पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा ।**
**तावत्तस्याक्षया[2] कीर्तिः लोकाननुचरिष्यति ॥ २८ ॥**

**तावत्तस्याक्षया कीर्तिः** इत्यत्र कीर्तिः परलोके ।

॥ इति चतुःपञ्चाशोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशोऽध्यायः ॥

**आगमश्च[3] परस्त्वत्तः सर्वेषां नः परन्तप ।**
**भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते ॥ ९ ॥**

**आगमश्च परस्त्वत्त** इत्यत्र **आगमः** विद्यागमः ।

**आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनमिच्छता ।**
**देवतानां द्विजानाञ्च वर्तितव्यं यथाविधि ॥ १२ ॥**

**देवतानां द्विजानाञ्च** इत्यत्र देवतानां द्विजानाञ्च विषये यथाविधि वर्तितव्यम् ।

---

१. कुं. ५३ अध्यायः ।
२. **'तावत्तवाक्षया'** इति कुं. पाठः ।
३. कुं. ५५ अध्यायः ।

[1] उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् ॥ १४ ॥

**उत्थाने च सदा पुत्र** इत्यत्र **उत्थाने** राज्यपरिपालनादिनृपयोग्य-पुरुषप्रयत्ने ।

गुणवान् शीलवान् दान्तो मृदुदण्डो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ १९ ॥

**सुदर्शः स्थूललक्ष्यश्च** इत्यत्र **स्थूलं** पुण्यकीर्त्यादिकं लक्ष्यं यस्य स तथोक्तः ।

आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ॥ २० ॥

**पुनर्नयविचारेण** इत्यत्र पुनःपुनर्नयविचारेण **त्रयीसंवरणेन** वेदस्य सम्यगङ्गीकारेण ।

अदण्ड्याश्चैव ते पुत्र विप्राः स्युर्ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणा नाम पाण्डव ॥ २२ ॥

**भूतमेतत्परम्** इत्यत्र परं भूतं महद्भूतम् ।

अद्भ्योऽग्निर्ब्राह्मतः क्षत्रं अश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २४ ॥

**अद्भ्योऽग्निर्ब्राह्मत** इत्यत्र **अद्भ्यः** घनोदकसमुद्रजलात् **अग्निः** सङ्कर्षणमुखात्पतितोऽनलः । सहि काष्ठाभावात् जलादेवोद्भूतः सन्

---

१. BORI. पृ. २४८; 'उत्थानेन' इति कुं. पाठः ।

लोकान् दहति । अतः 'अद्भ्योऽग्निः' इत्युक्तम् । अन्यथा 'अग्नेरापः' इति श्रुतेर्विपरीतैव सृष्टिः ।

**एवं कृत्वा महाराज नमस्या एव ते द्विजाः ।**
**भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥ २६ ॥**

**भौमं ब्रह्म** इत्यत्र **भौमं** भूमौ विद्यमानं **ब्रह्म** वेदम् ।

**एवञ्चैव नरव्याघ्र लोकयात्राविघातकाः ।**
**निग्राह्या एव बाहुभ्यां ब्राह्मणास्ते नरेश्वर ॥ २७ ॥**

**एवञ्चैव नरव्याघ्र** इत्यत्र **एवञ्च** एवमपि ब्राह्मणानां पूज्यत्वेऽपीत्यर्थः ।

**उद्यम्य शस्त्रमायान्तं अपि वेदान्तगं रणे ।**
**निगृह्णीयात् स्वधर्मेण धर्मापेक्षी नराधिपः ॥ २९ ॥**

**उद्यम्य शस्त्रमायान्तम्** इत्यत्र युद्धादन्यत्र शस्त्रमुद्यम्यायान्तं **निगृह्णीयात्** निबध्नीयात् । युद्धे तु क्षात्रवृत्त्यवलम्बनात् हन्यादिति ध्वनितोऽर्थः ।

**एवञ्चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।**
**सापराधानपि हि तान्विषयान्ते समुत्सृजेत् ॥ ३१ ॥**

**रक्ष्या एव द्विजातय** इत्यत्र युद्धादन्यत्र रक्ष्या एव, न तु हन्तव्याः।

**अभिशस्तमपि ह्येषां पीडयेन्न विशाम्पते**
**ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥ ३२ ॥**

**अभिशस्तमपि ह्येषाम्** इत्यत्र अभिशस्तम् अभितः शासन-योग्यम् । भ्रूणस्य हत्या यस्मात् स तथोक्तः ।

**दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।**
**सर्वे दुर्गेषु मन्यन्ते नरदुर्गं सुदुर्गमम् ॥ ३५ ॥**

**षट्सु ये शास्त्रनिश्चिता** इत्यत्र **षट्सु** 'स्वाम्यमात्यसुहृत्कोश राष्ट्रदुर्गाख्येषु । नरदुर्गं बलानि च' इत्यत्रोक्तं सप्तमं सेनाख्यं दुर्गम् ।

**जर्झरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।**
**स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥ ५२ ॥**

**स्त्रीरक्षिभिश्च सज्जन्त** इत्यत्र **स्त्रीरक्षिभिः** शिखण्डिभिः **तुल्यवेषाः** कञ्चुकादिना क्लीबसदृशवेषाः ।

**हयं वा दन्तिनं वापि रथं नृपतिसम्मतम्**
**अधिरोहन्त्यवज्ञाय [1]हर्षले पार्थिवे मृदौ ॥ ५४ ॥**

**हर्षले पार्थिवे मृदौ** इत्यत्र **हर्षले** हर्षशीले 'हर्षशीलस्तु हर्षलः' इत्यभिधानम् ।

॥ इति षट्पञ्चाशोऽध्यायः ॥

## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥

**[2]कोशस्योपार्जनरतिर्यमवैश्रवणोपमः ।**
**वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः ॥ १८ ॥**

---

१. $V_1, D_{n2}$ ; BORI पृ. २४९; **'सहर्षाः'** इति कुं. पाठः ।
२. कुं. ५६ अध्यायः ।

**वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मन** इत्यत्र **स्थानं** राज्यं, तस्य **वृद्धिः** वर्धनं, **क्षयः** स्थानविरोधिक्षयः, **वृद्धिः** धनवृद्धिः, तस्याः **स्थानं** दृढकोशादिकरणं, **क्षयः** तद्विपरीततस्करादीनां क्षयः, **क्षयः** शत्रुक्षयः, तस्य स्थानक्षयः, तस्य वृद्धिक्षयः, शरणागते सति तस्य भयक्षयः। एवं स्थानवृद्धिक्षयात्मनः दशवर्गस्य वेत्ता।

**शूरान् भक्तानसंहार्यान् कुले जातानरोगिणः।**
**शिष्टान् शिष्टाभिसम्बन्धान् मानिनोऽनवमानिनः ॥ २३ ॥**

**सहायान् सततं कुर्याद्राजा भूतिपुरस्कृतः।**
**तैश्च तुल्यो भवेद्भागैश्छत्रमात्राज्ञयाऽधिकः ॥ २४ ॥**

**शूरान् भक्तानसंहार्यान् मानिनोऽनवमानिन** इत्यत्र **असंहार्यान्** शत्रुभिरसंहार्यान्। मानिनः पुरुषस्य **अनवमानिनः** अवमानमकुर्वतः भटान्।

**प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत्समा।**
**एवं कुर्वन्नरेन्द्रो हि न वेदमिह विन्दति ॥ २६ ॥**

**प्रत्यक्षा च परोक्षा च** इत्यत्र सभायां स्थित्वा क्रियमाण-धर्मविचारादिरूपा वृत्तिः **प्रत्यक्षा**। अन्तःपुरवृत्तिः **परोक्षा**।

**न यस्य कूटं कपटं न माया न च मत्सरः।**
**विषये भूमिपालस्य तस्य धर्मः सनातनः ॥ ३७ ॥**

**न यस्य कूटं कपटम्** इत्यत्र **कूटं** जनानां मेलनम्।

**राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।**
**[१]असत्यस्मिन् महीपाले कुतो भार्या कुतो धनम् ॥ ४१ ॥**

**राजानं प्रथमं विन्देत् असत्यस्मिन्** इत्यत्र **राजानं** [२]राष्ट्रस्य राजानं प्रथमं **विन्देत्** सम्पादयेत् । राजाभावे स्वकीयभार्यादिकमपि बलवानपहरतीति भावेनाह – **असत्यस्मिन्निति ।**

॥ इति सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशोऽध्यायः ॥

**[३]रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ।**
**राज्ञां राजीवताम्राक्ष साधनं चात्र मे शृणु ॥ ४ ॥**

**चारश्च प्रणिधिश्चैव काले दानममत्सरः ।**
**युक्त्या दानं न चादानमयोगेन युधिष्ठिर ॥ ५ ॥**

**चारश्च प्रणिधिश्चैव** इत्यत्र **प्रणिधिः** गुरुदैवतयोः प्रार्थनम् । 'प्रणिधिः प्रार्थने चरे' [४] इत्यमरः ।

**केतनानां च जीर्णानामवेक्षा चैव सीदताम् ।**
**द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः ॥ ७ ॥**

**द्विविधस्य च दण्डस्य** इत्यत्र **द्विविधो दण्डः** वाग्दण्डो धनदण्डश्च ।

---

१. 'राजन्यसतिलोकेऽस्मिन्' इति कुं. पाठः ।
२. 'राज्यस्य' सो.मु.पा. ।
३. कुं. ५७ अध्यायः ।
४. अ.को. ३-३-१००

**उपजापश्च भृत्यानां आत्मनः पुरदर्शनम् ।**
**अविश्वासः स्वयं चैव परस्याश्वासनं तथा ॥ ११ ॥**

**उपजापश्च भृत्यानाम्** इत्यत्र भृत्यानाम् **उपजापः** उपपन्नप्रिय-वचनम् ।

**उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।**
**राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे ॥ १३ ॥**

**उत्थानं हि नरेन्द्राणाम्** इत्यत्र **उत्थानं** सदोद्योगः ।

**एकाङ्गेनापि सम्भूतः शत्रुर्दुर्गमुपाश्रितः ।**
**सर्वं तापयते देशं [१]सर्वं राज्ञः समृद्धिनः ॥ १८ ॥**

**सर्वम राज्ञः समृद्धिन** इत्यत्र व्रीहिमान् व्रीही इतिवत् समृद्धिमानेव **समृद्धी,** तस्य ।

**राज्ञो रहस्यं यद्वाक्यं जयार्थे लोकसङ्ग्रहः ।**
**हृदि यच्चास्य जिह्मं स्यात् कारणार्थं च यद्भवेत् ॥ १९ ॥**

**राज्ञो रहस्यं यद्वाक्यम्** इत्यत्र राज्ञः जयार्थं यद्रहस्यं वाक्यं, यश्च लोकसङ्ग्रहः तन्निगूह्य सभायां समीचीनवाक्यैः यो लोकसङ्ग्रहः, यच्चास्य हृदि **जिह्मं** कौटिल्यं स्यात्, तत्सर्वम् **कारणार्थं** शत्रूणां जयाख्य-कार्यस्य कारणं स्वभटैर्यत्कारणं तदर्थं, न तु सर्वदा कुर्यादिति भावः ।

**राज्यं हि सुमहत्तत्र दुर्धार्यमकृतात्मभिः ।**
**न शक्यं मृदुना वोढुं आघातस्थानमुल्बणम् ॥ २१ ॥**

---

१. $K_{3,4}$, $V_1$, B; BORI पृ. २५७; **'अपि'** इति कुं. पाठः ।

**न शक्यं मृदुना वोढुम्** इत्यत्र **आघातस्थानं** शिरश्छेदस्थलं **मृदुना** मृदुवाक्येन **वोढुं** प्रापयितुं न शक्यं हि ।

**राज्यं सर्वामिषं नित्यमार्जवेनैव धार्यते ।**
**तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर ॥ २२ ॥**

**राज्यं सर्वामिषम्** इत्यत्र **सर्वामिषं** सर्वेषामामिषमिव प्रियम् । **मिश्रेण** मार्दवकाठिन्याभ्यां मिश्रेण ।

**श्व इदानीं स्वसन्देहं [१]प्रक्ष्यामि त्वां पितामह ।**
**उपैति सविता ह्यस्तं रसमापीय पार्थिवम् ॥ २८ ॥**

**श्व इदानीं स्वसन्देहम्** इत्यत्र इदानीं **स्वसन्देहं** इदानीं विद्यमानं स्वसन्देहं श्वः **प्रक्ष्यामि** विचारयामि ।

**॥ इति अष्टपञ्चाशोऽध्यायः ॥**

* * *

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

**[२]अधोभिवर्षास्तु वयं भौमास्तूर्ध्वप्रहर्षिणः[३] ।**
**क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् ॥ २६ ॥**

**भौमास्तूर्ध्वप्रहर्षिण** इत्यत्र **भौमाः** भूमिस्था मनुष्याः **ऊर्ध्व-प्रहर्षिणः** यज्ञादिना ऊर्ध्वान् देवान् प्रहर्षयन्तीति तथोक्ताः ।

---

१. BORI. पृ. २५८; **'प्रवक्ष्यामि'** इति कुं. पाठः ।
२. कुं. ५८ **अध्यायः** ।
३. $D_3$; BORI पृ. २६२; **'–प्रवर्षिणः'** इति कुं. पाठः ।

**ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।**
**यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः ॥ २९ ॥**

**ततोऽध्यायसहस्राणां शतम्** इत्यत्र अध्यायसहस्राणां शतं पञ्चरात्रस्थम् । लक्षाध्यायैः परिमितं ग्रन्थमिति यावत् । **स्वबुद्धिजं** स्वस्य बुद्धौ प्रादुर्भूतम्, चक्रे ।

[१]**मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः ।**
**स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥ ३१ ॥**

**मोक्षस्यापि त्रिवर्गोऽन्य** इत्यत्र शास्त्राभ्यासः, ध्यानं, अपरोक्षज्ञानं चेति अन्यः लक्षणं मोक्षस्य त्रिवर्ग उक्तः ।

**उपेक्षा सर्वकार्येषु कर्मणां करणेषु च ।**
**अनिष्टानां समुत्थाने त्रिवर्गो नश्यते यया ॥ ४४ ॥**

**उपेक्षा सर्वकार्येषु** इत्यत्र **उपेक्षा** स्वावसरपर्यन्तमुपेक्षा ।

**इन्द्रजालादिका माया वाजीवनकुशीलवैः ।**
**सुनिमित्तैर्दुर्निमित्तैः उत्पातैश्च समन्वितम् ॥ ४५ ॥**

**सुनिमित्तैर्दुर्निमित्तैः** इत्यत्र **सुनिमित्तैः** स्वस्य सुनिमित्तैः शकुनादिभिः । **दुर्निमित्तैः** परेषां दुर्निमित्तैः । उभे स्वस्य शुभरूपे, परस्य अशुभरूपे ।

**डम्भो लिङ्गं समाश्रित्य शत्रुवर्गे प्रयुज्यते ।**
[२]**शाठ्ये निश्चेष्टता प्रोक्ता** [३]**चित्तदोषप्रदूषिता ॥ ४६ ॥**

---

१. BORI. पृ. २६३; '**मोक्षस्यास्ति**' इति कुं. पाठः ।
२. '**शाठ्यम्**' इति कुं. पाठः ।; '**चित्तदोषप्रदूषिका**' इति कुं. पाठः ।

**शाठ्ये निश्चेष्टता प्रोक्ता** इत्यत्र शाठ्ये सति [1] **चित्तदोषः** चित्तस्थकैतवं, तेन प्रदूषिता [2] निश्चेष्टता **प्रोक्ता** स्वावसरपर्यन्तं प्रोक्ता ।

**कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।**
**व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ॥ ४८ ॥**

**व्यूहाश्च विविधाभिख्या** इत्यत्र **विविधा अभिख्या** चक्रपद्माद्यभिख्या येषां ते व्यूहाः ।

**तथा [3] यानतदात्वं च योगः सञ्चार एव च ।**
**चोरैराटविकैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥ ५१ ॥**

**तथा यानतदात्वं च** इत्यत्र **यानतदात्वं** यानस्य तत्कालः । 'तत्कालस्तु तदात्वं स्यात्' [४] इत्यमरः ।

**अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः ।**
**श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ॥ ५२ ॥**

**श्रेणिमुख्योपजापेन** इत्यत्र **उपजापः** उपपन्नवचनम्, प्रियवचनमित्यर्थः ।

**दूषणेन च नागानामातङ्कजननेन च ।**
**[5] आरोधनेन भक्तस्य पत्युश्चोपग्रहेण च ॥ ५३ ॥**

---

१. **'चित्तदोपम्'** सो.मु.पा. ।; २. **'निश्चेष्टा'** सो.मु.पा. ।
३. **'ख्यातविधानम्'** इति कुं. पाठः ।
४. अ.को. २.८.२९
५. BORI. पृ. २६५; **'आराधनेन'** इति कुं. पाठः ।

**आरोधनेन भक्तस्य** इत्यत्र **भक्तस्य** अन्नस्य अन्नसाधन-तण्डुलादेरित्यर्थः ।

**सप्ताङ्गस्य च राज्यस्य [१] ह्रासवृद्धी समञ्जसम् ।**
**दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ॥ ५४ ॥**

**ह्रासवृद्धी समञ्जसम्** इत्यत्र **ह्रासः** परसप्ताङ्गस्य ह्रासः, **वृद्धिः** स्वकीयस्य वृद्धिः ।

**क्रोधजानि तथोग्राणि कामजानि तथैव च ।**
**दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ॥ ६२ ॥**

**दशोक्तानि कुरुश्रेष्ठ** इत्यत्र कामक्रोधयोः मिलित्वा वक्ष्यमाण-मृगयाद्याश्चत्वारः, कामस्य वाक्पारुष्याद्याः षट् । अर्थस्य एवं दश-व्यसनानि उक्तानीति योजना ।

**चैत्यद्रुमाणावमदश्च रोधः कर्मान्तनाशनम् ।**
**अपस्करोऽथ वमनं तथोपास्या च वर्जिता ॥ ६६ ॥**

**रोधः कर्मान्तनाशनम्** इत्यत्र **कर्मणः** शत्र्वारब्धकर्मणः **अन्ते** मध्ये नाशनम् ।

**उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।**
**नवनीतं सरस्वत्या बुद्धिरेषा [२] प्रभाविता ॥ ७९ ॥**

---

१. $V_1$ B, $D_a$, $D_n$ ; BORI पृ. २६६; '**ह्रासवृद्धिसमीक्षणम्**' इति कुं. पाठः ।

२. BORI. पृ. २६९; '**प्रभापिता**' इति कुं. पाठः ।

**नवनीतं सरस्वत्या** इत्यत्र **सरस्वत्याः** विद्यायाः नवनीतमिव एषा बुद्धिः प्रभाविता ।

**दण्डेन नीयते चेदं दण्डं नयति [1]चाप्युत ।**
**दण्डनीतिरिति ख्याता त्रीन् लोकानवपत्स्यते ॥ ८१ ॥**

**दण्डं नयति चाप्युत** इत्यत्र दण्डं **नयति** प्रापयति ।

॥ इति एकोनषष्टितमोऽध्यायः ॥

## ॥ अथ षष्टितमोऽध्यायः ॥

**[2]अनादिनिधनो देवश्चैतन्यादिसमन्वितः ।**
**ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ ८४ ॥**

**तारकादीन्यशेषत** इत्यत्र **तारकादीनि** तारकब्रह्ममन्त्रादीनि ।

**अरुदत् सस्वनं घोरं जगतः प्रभुरव्ययः ।**
**[3]जायमानं पिता पुत्रे पुत्रः पितरि चैव हि ॥ ८६ ॥**

**जायमानं पिता पुत्र** इत्यत्र पुत्रे जायमानं वित्तादिकं कदाचित् पिता गृह्णीयात् पितरि जायमानं वित्तादिकं पुत्रः गृह्णीयात् इत्यरुदत् ।

**बुद्धिं विश्वसृजे दत्त्वा ब्रह्माण्डं येन निर्मितम् ।**
**यस्मिन् हिरण्मयो हंसः शकुनिः समपद्यत ॥ ८७ ॥**

---

१. BORI. पृ. २६९.; **'वा पुनः'** इति कुं. पाठः ।
२. अत्र कुं. पाठानुसारेण पूर्वाध्याय एव अनुसरति ।
३. **'जायमानः'** इति कुं. पाठः ।

**बुद्धिं विश्वसृज** इत्यत्र **विश्वसृजे** रुद्राय **बुद्धिं** सुबुद्धिं दत्त्वा मा रोदीरित्यवददिति योग्यक्रियाध्याहारेण योजना ।

**युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः ।**
**सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ ८९ ॥**

**सञ्चिक्षेप तत** इत्यत्र **सञ्चिक्षेप** सम्यक् इन्द्रादिदेवेषु निक्षिप्तवान् ।

**सहस्रैः पञ्चभिस्तात यदुक्तं [१] बाहुदण्डिकः ।**
**सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते ॥ ९२ ॥**

**यदुक्तं बाहुदण्डिक** इत्यत्र बाहुभ्यां राज्ञा क्रियमाणो दण्डो यत्र प्रतिपाद्यते स **बाहुदण्डिकः** ।

**कीर्तिमांस्तस्य पुत्रोऽभूत् सोऽपि [२] पञ्चातिगोऽभवत् ।**
**कर्दमस्तस्य तु सुतः सोऽप्यतप्यन्महत्तपः ॥ ९८ ॥**

**सोऽपि पञ्चातिगोऽभवत्** इत्यत्र **पञ्चः** प्रपञ्चः तमतिक्रम्य वर्तमानः **पञ्चातिगः**,विरक्त इत्यर्थः ।

**मन्त्रिणो वालखिल्याश्च सारस्वत्यो गणस्तथा ।**
**महर्षिर्भगवान् गर्गः तस्य सांवत्सरोऽभवत् ॥ १२० ॥**

**तस्य सांवत्सरोऽभवत्** इत्यत्र **सांवत्सरः** ज्योतिःशास्त्रे वक्ता 'सांवत्सरो ज्यौतिषिकः' [३] इत्यमरः ।

---

१. **'बहुदन्तकम्'** इति कुं. पाठः ।
२. BORI. पृ. २७१; **'मर्त्याधिकोऽभवत्'** इति कुं. पाठः ।
३. अ.को. २-८-१४

**आत्मनाष्टम इत्येव श्रुतिरेषां परा नृषु ।**
**उत्पन्नौ बन्दिनौ चास्य तत्पूर्वौ सूतमागधौ ॥ १२१ ॥**

**आत्मनाष्टम** इत्यत्र पुरोहितमन्त्रिज्यौतिषिकवन्दिद्वय[1]सूत-मागधाश्चेति सप्त सहायभूताः, **आत्मना** स्वेन सह राजा अष्टमः ।

**तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ।**
**यक्षराक्षसनागानमीप्सितं यस्य यस्य यत् ॥ १३२ ॥**

**सस्यानि दश सप्त च** इत्यत्र चशब्देन [2]अष्टादशधान्यस्य सङ्ग्रहः ।

**सुकृतस्य क्षयात् चैव स्वर्लोकादेत्य मेदिनीम् ।**
**पार्थिवो जायते तात दण्डनीतिविशारदः ॥ १४२ ॥**

**सुकृतस्य क्षयात्** इत्यत्र **सुकृतस्य** स्वर्गानुभवहेतुसुकृतस्य ।

॥ इति **षष्टितमोऽध्यायः** ॥

## ॥ अथ एकषष्टितमोऽध्यायः ॥

[3]**षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ।**
**लये च सप्तमो भागस्तथा शृङ्गे कला खुरे ॥ २७ ॥**

**षण्णामेकां पिबेद्धेनुम्** इत्यत्र षण्णां धेनूनां मध्ये एकां **पिबेत्**, तत्क्षीरं पिबेत् । उर्वरितपञ्चानां क्षीरघृतादिकं राज्ञे दद्यात्, विक्रीय धनं

---

१. **'सूतमागधौ चेति'** सो.मु.पा. ।
२. **'अष्टादशमधान्यस्य'** सो.मु.पा. ।
३. कुं. ५९ अध्यायः । BORI. पृ. २८१; **'कृष्णामेकाम्'** इति कुं. पाठः ।

वा दद्यात् । **शताच्च मिथुनं हरेत्** एकां गां एकं वृषभञ्च स्वकीयं कुर्यात् । **लये चेत्** द्वयोस्त्रयाणां वा लये चेत् तस्य चेतनाभावात् सप्तमो भागो राज्ञा ग्राह्यः । शृङ्गे तथा खुरे च **कला** चिह्नं दर्शनीया ।

**सस्यानि सर्वबीजानामेषां सांवत्सरी भृतिः**[1] ॥ २८ ॥

**सस्यानि सर्वबीजानाम्** इत्यत्र सर्वबीजानां सस्यानि तैरुत्पादनीयानि एषां कृषीवलानां सांवत्सरी भृतिर्देया ।

**छत्रं वेष्टनमौशीरं उपानद्व्यजनानि च ।**
**यातयामानि देयानि शूद्राय परिचारिणे** ॥ ३५ ॥

**छत्रं वेष्टनमौशीरम्** इत्यत्र **औशीरं** शयनासनम्, पर्यङ्कादिकमित्यर्थः । 'कशिपुर्भोजनाच्छादावौशीरं शयनासने'[2] इति हलः ।

**तस्माच्छूद्रः पाकयज्ञैः यजेताव्रतवान् स्वयम् ।**
**पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम्** ॥ ४१ ॥

**तस्माच्छूद्रः पाकयज्ञैः** इत्यत्र[3] पाकयज्ञाः 'संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु वृत्तयः' इति वक्ष्यमाणत्वात् ब्राह्मणकरेण पाकं कारयित्वा क्रियमाणा यज्ञाः, तैः । **अव्रतवान्** स्वस्य स्वयमेव पाकं करोमीति व्रतरहितः । **पूर्णपात्रमयीं** एकस्मिन् पात्रे पूर्णान्नमयीम् ।

**शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।**
**ऐन्द्राग्न्येन विधानेन दक्षिणामिति नः श्रुतम्**[4] ॥ ४२ ॥

---

१. $B_{0.5}$,$D_a$; BORI पृ. २८१; **'सस्यानां सर्वबीजानां'** इति कुं. पाठः ।
२. ह.को. १-१२१; ३. **'पाकयज्ञैः'** सं.मु.पा. ।
४. $B_4$,$D_{n2}$,$D_{3.6.8}$,$M_4$ ; BORI पृ. २८२; **'ऐन्द्राग्नेन'** इति कुं. पाठः ।

**ऐन्द्राग्न्येन विधानेन** इत्यत्र इन्द्राग्नी उद्दिश्य क्रियमाणं कर्म ऐन्द्राग्न्यम् ।

**स्वं दैवतं ब्राह्मणः स्वेन नित्यं परान् वर्णानयजन्नैवमासीत् ।**
**अधरो वितानस्त्वथ तत्र सृष्टः न ब्रह्मणस्त्रिषु वर्णेषु राजन् ४९**

**स्वं दैवतं ब्राह्मण** इत्यत्र ब्राह्मणः **स्वं दैवतं** नारायणं परान् वर्णान् **स्वेन** तदीयद्रव्येण, **एवं** पूर्वोक्तप्रकारेण आयजन् आसीत् । **अधरः** ब्राह्मणादधमः **वितानः** क्षत्रियादिरूपो विस्तारः **तत्र** ब्राह्मणे **सृष्टः** संसृष्टः ।

**उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः ।**
**वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥ ५२ ॥**
**यत् स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम् ।**
**बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥ ५३ ॥**

**यत् स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम्** इत्यत्र **अस्य** सूर्यस्य **स्कन्नं** रात्रावग्नौ गलितं तेजः येषां शाखिनां प्रियं तेषां पूर्वं अनुदिते जुहोतीति श्रुत्युक्तं सूर्योदयात्पूर्वकालीनं हवनम् । **अस्य** सूर्यस्य **अस्कन्नं** अग्नावगलितं अग्नेः सकाशात् पुनः स्वबिम्बं प्रत्येव परावृत्य आनीतं तेजः येषां शाखिनां प्रियं तेषाम् उत्तरं तत्, उदिते जुहोतीति श्रुत्युक्तं सूर्योदयात् उत्तरकालीनं हवनमिति योजना । 'स्कन्नं पन्नं च्युतं गलितम्'[१] इत्यमरः ।

॥ इति एकषष्टितमोऽध्यायः ॥

१. अ.को. ३-१-१०४

## ।। अथ त्रिषष्टितमोऽध्यायः ।।

**[१]यो यस्मिन् कुरुते कर्म यादृशं येन यत्र च ।**
**तादृशं तादृशेनैव सगुणं प्रतिपद्यते ॥ ८ ॥**

**सगुणं प्रतिपद्यत** इत्यत्र **सगुणं** कर्मसमानगुणं लोकं प्रतिपद्यते इति योजना ।

**वृद्ध्या कृषिवणिक्त्वेन जीवसञ्जीवनेन च ।**
**वेत्तुमर्हसि राजेन्द्र [२]स्वाध्यायगणितेन च ॥ ९ ॥**

**जीवसञ्जीवनेन च** इत्यत्र **जीवसञ्जीवनेन** गोरक्षणेन । **स्वाध्याय-गणितं** स्वाध्याये सङ्ख्यातं फलं महत् ।

।। इति त्रिषष्टितमोऽध्यायः ।।

## ।। अथ चतुष्षष्टितमोऽध्यायः ।।

**[३]राजप्रेष्यं कृषिधनं जीवनं च वणिज्यया ।**
**[४]कौलट्यं कौलटेयत्वं कुसीदं च विवर्जयेत् ॥ ३ ॥**

**कौलट्यम्** इत्यत्र **कौलट्यं** कुलटी वेश्या, तत्पतित्वम् । **कौलटे-यत्वं** भिक्षुकीपतित्वम् । 'पुंश्चली धर्षणी बन्धक्यसती [५]कुलटी त्वरी'[६]

---

१. कुं. ६१ अध्यायः ।; २. 'स्वाध्यात्मगुणितेन च' इति कुं. पाठः ।
३. कुं. ६२ अध्यायः ।
४. BORI पृ. १९१; 'कौटिल्यं कौलटेयं च ब्राह्मणस्य विगर्हितम्' कुं. पाठः
५. 'कुलटेत्वरी' सो.मु.पा. ।
६. अ.को. १-६-२६

इति, 'कौलटेरः कौलटेयो भिक्षुकी तु सती यदि'[1] इति चामरः ।

**शूद्रो राजन् भवति ब्रह्मबन्धु-**
**र्दुश्चारित्रो यश्च धर्मादपेतः ।**
**वृषलीपतिः पिशुनो नर्तनश्च**
**ग्रामप्रेष्यो यश्च भवेद्विकर्मा ॥ ४ ॥**

**शूद्र** इत्यत्र **शूद्रः** शूद्रप्रायः ।

**यश्च त्रयाणां वर्णानां इच्छेदाश्रमसेवनम् ।**
[2]**चतुराश्रमदृष्टांश्च धर्मास्तान् शृणु पाण्डव ॥११॥**

**यश्च त्रयाणां वर्णानां इच्छेदाश्रमसेवनम्** । **चतुराश्रमदृष्टांश्च** इत्यत्र **त्रयाणां** क्षत्रियवैश्यशूद्राणां मध्ये **आश्रमसेवनं** स्वविहिताश्रमसेवनम् । **चतुराश्रमदृष्टान्** चतुराश्रमैर्ब्राह्मणैर्दृष्टान् शास्त्रेषु दृष्टान् । 'कर्तुमाश्रमदृष्टांश्च'[3] इति पाठे **आश्रमदृष्टान्** तस्य तस्य आश्रमे दृष्टान् शास्त्रेषु दृष्टानित्यर्थः ।

[4]**कल्पान्तरगतस्यापि देशधर्मगतस्य वा ।**
**आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् ॥ १३ ॥**

**कल्पान्तरगतस्यापि** इत्यत्र कल्पान्तरे ब्राह्मणक्षत्रियवैश्यानां कल्पनाया अन्यकल्पने गतस्य । **निराशिषं** यत्याश्रमं वर्जयित्वा ।

---

१. अ.को. २-६-२६

२. $B_{3.-5}$,$D_{3.5.6.8}$; BORI पृ. २९२; **'कर्तुमाश्रमदृष्टांश्च'** इति कुं. पाठः ।

३. **'आश्रमसेवनं कर्तुमिति पाठे'** सो.मु.पा. ।

४. $D_{n2}$,$T_2$; BORI पृ. २९२; **'अल्पान्तर-'** इति कुं. पाठः ।

**वेदानधीत्य धर्मेण राजशास्त्राणि चानघ ।**
**सन्तानादीनि कर्माणि कृत्वा सोमं निषेव्य च ॥ १६ ॥**

**वेदानधीत्य धर्मेण** इत्यादि क्षत्रियस्य ।

**अन्तकाले च सम्प्राप्ते य इच्छेदाश्रमान्तरम् ।**
**आनुपूर्व्याश्रमान्[१] राजन् गत्वा सिद्धिमवाप्नुयात् ॥ २१ ॥**

**आनुपूर्व्याश्रमान्** इत्यत्र **आनुपूर्व्याश्रमान्** परमहंसव्यतिरिक्त-हंसाद्याश्रमान् ।

**[२]बाह्वं पत्यं क्षत्रियैः मानवानां लोकश्रेष्ठं धर्ममासेवमानैः ।**
**सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मं नीतिशास्त्रे श्रुणोमि २४**

**बाह्वं [३]पत्यं क्षत्रियैर्मानवानाम्** इत्यत्र **बाह्वं** बाहुसम्बन्धि **पत्यं** पतित्वं, रक्षकत्वमित्यर्थः । अस्तीति योग्यक्रियया सम्बन्धः ।

**यथा जीवाः प्राकृतैर्वध्यमाना धर्मश्रुतीनामुपपीडनाय ।**
**एवं [४]धर्मान् राजधर्मैर्वियुक्ताः सञ्चिन्वन्तो नाद्रियन्ते स्वधर्मम्**
**॥ ३२ ॥**

**सञ्चिन्वन्तो नाद्रियन्ते स्वधर्मम्** इत्यत्र **सञ्चिन्वन्तः** धर्मान् सञ्चिन्वन्तः पुरुषा राजधर्मैर्वियुक्ताश्चेत् स्वधर्मं नाद्रियन्ते ।

॥ इति चतुष्षष्टितमोऽध्यायः ॥

---

१. BORI. पृ. २९३; **'सोऽनुपूर्व्याश्रमान्'** इति कुं. पाठः ।
२. **'बाह्वायत्तं'** इति कुं. पाठः ।; ३. **'पात्यम्'** सो.मु.पा. ।
४. $V_1$; BORI पृ. २९५; **'धर्माः'** इति कुं. पाठः ।

## ।। अथ पञ्चषष्टितमोऽध्यायः ।।

**अप्रत्यक्षं[1] बहुद्वारं[2] धर्ममाश्रमवासिनाम् ।**
**प्रदूषयति[3] तद्भावमागमैरेव शाश्वतम् ।। ३ ।।**

**अप्रत्यक्षं बहुद्वारम्** इत्यत्र अप्रत्यक्षं **बहुद्वारं** धर्मेषु बहुप्रकार-सद्भावात् बहुद्वारम् । आश्रमवासिनां **धर्मं** धर्मः आगमैरेव यज्ञाध्य-यनदानादिबहुविधधर्मप्रतिपादकैर्वेदैरेव तद्भावं जीवभावं दूषयति । 'स्याद्धर्ममस्त्रियाम्'[4] इत्यमरः ।

**अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चये ।**
**अनिश्चयज्ञा धर्माणामदृष्टान्तेऽपरे रताः ।। ४ ।।**

**अपरे वचनैः** इत्यत्र अपरे वादिनः **पुण्यैः वचनैः** वेदैः साधूनां वचनैश्च **लोकनिश्चये** लोकैः क्रियमाणधर्मनिश्चये रताः धर्माणाम-निश्चयज्ञाः[5] । अपरे **अदृष्टान्ते** लोकदृष्टान्तरहिते स्वेच्छाचारे रताः ।

**जगाम शिरसा पादौ जज्ञे विष्णोर्महात्मनः ।। १३ ।।**
**दर्शयामास तं विष्णू रूपमास्थाय वासवम् ।**
**स पार्थिवैर्वृतः सद्भिरर्चयामास तं प्रभुम् ।। १४ ।।**

**दर्शयामास तं विष्णू** इत्यत्र विष्णुः **रूपं** स्वप्रतिमाभूतं **वासवं इन्द्रं आस्थाय** इन्द्रान्तर्यामी भूत्वा **तं** मान्धातारं दर्शयामास ।

---

१. कुं. ६३ अध्यायः ।; २. BORI. पृ. २९६; **'बहुफलं'** इति कुं. पाठः ।
३. **'प्ररूपयन्ति'** इति कुं. पाठः ।
४. अ.को. १-४-२४
५. **'अनिश्चयज्ञा न'** सो.मु.पा. ।

इन्द्र उवाच–

असैनिका [१] धर्मपराश्च धर्मे परां गतिं [२] न नयन्ते ह्यमुत्र ।
क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः ॥२०॥

**असैनिका धर्मपरा** इत्यत्र **धर्मपरा असैनिका** राजानो **धर्मे** आरण्यकधर्मेऽनुष्ठितेऽपि अमुत्र परां गतिं न नयन्ते ।

शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः [३] सुप्रस्थानाः क्षत्रधर्मा विशिष्टाः
अस्मिन् धर्मे सर्वधर्माः प्रविष्टाः क्षात्रं धर्मं श्रेष्ठतमं वदन्ति ॥२१॥

**सुप्रस्थानाः क्षत्रधर्मा विशिष्टा** इत्यत्र **सुप्रस्थानाः** सुष्ठु प्रकृष्टं स्थानं येभ्यस्ते तथोक्ताः ।

कर्मणा वै पुरा देवा ऋषयश्चामितौजसः ।
त्राताः सर्वे [४] प्रसाद्यारीन् क्षत्रधर्मेण विष्णुना ॥ २२ ॥

**त्राताः सर्वे प्रसाद्यारीन्** इत्यत्र **प्रसाद्य** प्रकर्षेण सादयित्वा विनाश्य । 'षद्लृ विशरणगत्यवसादनेषु' इति धातुः ।

यदि ह्यसौ भगवन्नाहनिष्यत्
रिपून् सर्वानसुरानप्रमेयः ।

---

१. $K_{2.5}$,$V_1$,$B_{3-5}$,$D_a$,$D_n$,$D_{2-6.6}$T,$G_{1.2.3}$; BORI पृ. २९९; **'धर्मपरांश्च'** इति कुं.पाठः ।
२. **'न नयनो ह्ययुक्तम्'** इति कुं. पाठः ।
३. BORI. पृ. २९९; **'सप्रस्थानाः'** इति कुं. पाठः ।**'सुप्रस्थानां क्षत्रधर्मा विनष्टाः'** सो.मु.पा. ।
४. **'प्रसह्यारीन्'** इति कुं. पाठः ।

**न च ब्रह्मा [1]न च लोकादिकर्ता**
**सन्तो धर्माश्चादिधर्माश्च न स्युः ॥ २३ ॥**

**न च ब्रह्मा न च लोकादिकर्ता** इत्यत्र **लोकादिकर्ता** लोकानामधिकारी इन्द्रः ।

**सर्वधर्मपरं क्षात्रं लोकश्रेष्ठं सनातनम् ।**
**शश्वदक्षरपर्यन्तं अक्षरं सर्वतोमुखम् ॥ २९ ॥**

**शश्वदक्षरपर्यन्तम्** इत्यत्र **अक्षरं** परं ब्रह्म । तत्पर्यन्तं अन्ततो यत्र ।

॥ इति पञ्चषष्टितमोऽध्यायः ॥

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

**[2]एते वर्णा सर्वधर्मैश्च हीन उत्क्रष्टव्याः [3]क्षत्रियैरेष धर्मः ।**
**तस्माच्छ्रेष्ठा राजधर्मा न चान्ये वीर्यश्रेष्ठा वीरधर्मा मता मे १२**

**उत्क्रष्टव्याः क्षत्रियैरेष धर्म** इत्यत्र **उत्क्रष्टव्याः** उत्कर्षं प्रापयितव्याः ।

॥ इति षट्षष्टितमोऽध्यायः ॥

## ॥ अथ सप्तषष्टितमोऽध्यायः ॥

**युधिष्ठिर उवाच–**

**[4]श्रुता मे कथिताः पूर्वं चत्वारो मानवाश्रमाः ।**
**व्याख्यानमेषाम् आचक्ष्व पृच्छतो मे पितामह ॥ १ ॥**

**व्याख्यानमेषाम्** इत्यत्र **व्याख्यानं** विस्तरेणाख्यानम् ।

---

१. BORI. पृ. २९९; **'नैव'** इति कुं. पाठः ।; २. **कुं. ६४ अध्यायः ।**
३. **'क्षत्रियैरेव धर्माः '** इति कुं. पाठः ।; ४. कुं. ६५ **अध्यायः ।**

**यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर ।**
**धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप ॥ ३ ॥**

**यत्तु लिङ्गान्तरगतम्** इत्यत्र **लिङ्गान्तरगतं** ब्रह्मचर्यादीनां भिन्न-भिन्नचिह्नैः गतं प्राप्तम् ।

**अकामद्वेषसंयुक्तो दण्डनीत्या युधिष्ठिर ।**
**समदर्शी च भूतेषु [१]भैक्षाश्रमपदं भवेत् ॥ ५ ॥**

**भैक्षाश्रमपदं भवेत्** इत्यत्र **भैक्षाश्रमः** ब्रह्मचर्याश्रमः ।

**वेत्ति दानं विसर्गं च निग्रहानुग्रहौ तथा ।**
**यतोक्तवृत्तो धीरश्च [२]क्षेमाश्रमपदं भवेत् ॥ ६ ॥**

**क्षेमाश्रमपदं भवेत्** इत्यत्र **क्षेमाश्रमो** गृहस्थाश्रमः ।

**लोकमुख्येषु सत्कारं [३]लिङ्गमुख्येषु चानघ ।**
**कुर्वतस्तस्य कौन्तेय वन्याश्रमपदं भवेत् ॥ ९ ॥**

**लिङ्गमुख्येषु चानघ** इत्यत्र **लिङ्गमुख्येषु** वानप्रस्थाश्रमलिङ्गै-र्मुख्येषु ।

**पालनात् सर्वभूतानां स्वराष्ट्रपरिपालनात् ।**
**दीक्षा बहुविधा [४]राज्ञः सत्याश्रमपदं भवेत् ॥ १३ ॥**

---

१. '**भैक्ष्याश्रमपदं भवेत्**' इति कुं. पाठः ।
२. '**क्षमाश्रमपदं** ' इति कुं. पाठः, '**क्षेमाश्रमे पदं**' सो.मु.पा. ।
३. $T_1$ $G_3$; BORI पृ. ३०७; '**लिङ्गिमुख्येषु चासकृत्**' इति कुं. पाठः ।
४. BORI. पृ. ३०८; '**राजन्**' इति कुं. पाठः ।

**सत्याश्रमपदं भवेत्** इत्यत्र **सत्याश्रमः** क्षत्राश्रमः ।

**आह्निकान् जपमानस्य देवान् पूजयतः सदा ।**
**धर्मेण पुरुषव्याघ्र धर्माश्रमपदं भवेत्** ॥ १५ ॥

**धर्माश्रमपदं भवेत्** इत्यत्र **धर्माश्रमः** यत्याश्रमः ।

॥ इति सप्तषष्टितमोऽध्यायः ॥

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

[१] **अथ चेदधिवर्तेत राज्यार्थी बलवत्तरः ।**
**अराजकाणि राष्ट्राणि हतवीराणि वा पुनः** ॥ ६ ॥

**प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ।**
**न हि राज्यात् पापतरमस्ति किञ्चिदराजकात्** ॥ ७ ॥

**अथ चेदधिवर्तेत** इत्यत्र अराजकानि हतवीराणि वा राष्ट्राणि राजा अधिवर्तेत चेदिति सम्बन्धः ।

**राज्ञः परैः परिभवः सर्वेषामसुखावहः ।**
**तस्माच्छत्रश्च पत्रश्च वासांस्याभरणानि च** ॥ ३६ ॥

**भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च ।**
**आसनानि च शय्याश्च सर्वोपकरणानि च** ॥ ३७ ॥

**तस्माच्छत्रश्च पत्रश्च** इत्यत्र **पत्रं** वाहनम् । 'वाहनं धारणं युग्यं यानं पत्रमिति स्मृतम्'[२] इति हलः ।

॥ इति अष्टषष्टितमोऽध्यायः ॥

---

१. कुं. ६६ अध्यायः ।; २. ह.को. २-४४९

## ।। अथ एकोनसप्ततितमोऽध्यायः ।।

**[१]दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ।**
**विधिं पप्रच्छ राज्यस्य सर्वलोकहिते रतः ।।४,५।।**

**दक्षिणानन्तरो भूत्वा** इत्यत्र दक्षिणायामन्तरमवधिः तद्रहितः, बहुदक्षिणादायीत्यर्थः ।

**न वृषाः सम्प्रवर्तेरन् न मथ्येरंश्च गर्गराः ।**
**घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् ।। २३ ।।**

**न मथ्येरंश्च गर्गरा** इत्यत्र **गर्गराः** दधिपात्राणि । 'गर्गरा मन्थनी प्रोक्ता'[२] इति हलः ।

**[३]हस्ताहस्तं परिमृशेत् भिद्येरन् सर्वसेतवः ।**
**भयार्तं विद्रवेत् सर्वं यदि राजा न पालयेत् ।। २८ ।।**

**हस्ताहस्तं परिमृशेत्** इत्यत्र **हस्ताहस्तं** युद्धं यथा भवति तथा परिमृशेत् ।

**न भवेद्धर्मसंसेवी मोहविप्रहतो जनः ।**
**हर्ता [४]स्वस्थेन्द्रियो गच्छेद् यदि राजा न पालयेत् ।। २७ ।।**

**हर्ता स्वस्थेन्द्रियो गच्छेत्** इत्यत्र **हर्ता**[५] धनापहर्ता ।

---

१. कुं. ६७ अध्यायः ।; २. 'गर्गरी' सो.मु.पा. । ह.को. २-३१७

३. 'हस्ताद्धस्तं' इति कुं. पाठः ।

४. $B_{2.4.5}$,$D_a$,$D_{2.3.5}$; BORI पृ. ३२१; 'स्वच्छेन्द्रियो' इति कुं. पाठः ।

५. 'धर्मापहर्ता' सो.मु.पा. ।

**नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा।**
**धर्म्यमाकाङ्क्षता लोके ईश्वरस्यानसूयता ॥ ४८ ॥**

**नास्यापवादे स्थातव्यम्** इत्यत्र अपवादे कीर्त्यमाने सतीति योग्यपदाध्याहारेण सम्बन्धः।

**तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत्।**
**मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥ ५१ ॥**

**तस्य सर्वाणि रक्ष्याणि** इत्यत्र **रक्ष्याणि** कोशधनादीनि।

**वध्येदभिमृशन् सद्यो मृगः कूटमिव स्पृशन्।**
**आत्मस्वमिव संरक्षेद्राजस्वमिह बुद्धिमान् ॥ ५२ ॥**

**मृगः कूटमिव स्पृशन्** इत्यत्र **कूटं** कपटयन्त्रम्।

**राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः।**
**य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ५४ ॥**

**राजा भोज** इत्यत्र भोजयति सर्वान् जनानिति **भोजः**।

॥ इति एकोनसप्ततितमोऽध्यायः ॥

## ॥ अथ सप्ततितमोऽध्यायः ॥

भीष्म उवाच–

**राजवृत्तं[१] महाराज शृणुष्वावहितोऽखिलम्।**
**यत्कार्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ॥ ३ ॥**

१. कुं. ६८ अध्यायः।

**पार्थिवप्रकृतेन वा** इत्यत्र पार्थिवस्य प्रकृतेन सप्तप्रकृतिस्थेन अमात्यादिना ।

**न्यसेत गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन ।**
**नगरोपवने चैव पुरोद्याने तथैव च ॥ ६ ॥**

**न्यसेत गुल्मान् दुर्गेषु** इत्यत्र **गुल्मान्** सेनामुखानि ।[१] 'सेनामुखं गुल्मगणौ' इत्यमरः ।

**प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन् ।**
**पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान् ॥ ८ ॥**

**प्रणिधींश्च तत** इत्यत्र **प्रणिधीन्** चारान् ।'प्रणिधिः प्रार्थने चरे'[२] इत्यमरः ।

**पुरे जनपदे चैव तथा सामन्तराजसु ।**
**यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥ १० ॥**

**तथा सामन्तराजसु** इत्यत्र **सामन्तेषु** स्वसेनानायकेषु । **राजसु** स्वराष्ट्रोपान्तस्थितनृपेषु[३] 'सामन्तः स्यादधीश्वरः' इत्यमरः ।

[४]**यात्रायां यदि विज्ञातं अनाक्रन्दमनन्तरम् ।**
**व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥ २१ ॥**

---

१. अ.को. २-८-८१; २. अ.को. ३-३-१००

३. 'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः' इति कोशम् । अ.को. २-८-२ ।

४. $K_3$,$V_1$,$B0_{,1}$; BORI पृ. ३२८; 'यात्रां यायादविज्ञातम्' इति कुं. पाठः ।

**यात्रामाज्ञापयेद्धीरः कल्यः पुष्टबलः सुखी ।**
**पूर्वं कृत्वा विधानञ्च यात्रायां नगरे तथा ॥ २२ ॥**

**यात्रायां यदि विज्ञातम्** इत्यत्र यदि यात्रायां सत्यां परैर्विज्ञातं तर्हि अनन्तरं अनाक्रन्दं, **क्रन्दः** क्रन्दनं योधानां संरावः, तदभावं कारयेत् । योधान् युद्धप्रसङ्गरहितान् कुर्यादित्यर्थः। 'क्रन्दनं योधसंरावः'[१] इत्यमरः। **विधानञ्च यात्रायाम्** इत्यत्र व्यासक्तं दुर्बलं प्रमत्तञ्च वैरिणं प्रति यात्रामाज्ञापयेत् । **विधानं** विधिं, नियममित्यर्थः ।

**न च वश्यो भवेदस्य नृपो यश्चातिवीर्यवान् ।**
**हीनश्च बलवीर्याभ्यां कर्शयंस्तत्परो वसेत् ॥ २३ ॥**

**कर्शयंस्तत्परो वसेत्** इत्यत्र क्रमेण शत्रून् **कर्शयन्** । बलवीर्याभ्यां हीनः स्वयं [२] कर्शयन् बलवन्तं रिपुं क्रमेण कर्शयन् सन् **तत्परः** तावत्पर्यन्तं तस्मिन् तात्पर्यवान् स्नेहवान् वसेत् ।

**दशाधर्मगतेभ्यो यद् वसु बह्वल्पमेव वा ।**
**तन्नाददीत सहसा पौराणां रक्षणाय वै ॥ २८ ॥**

**दशाधर्मगतेभ्यो यत्** इत्यत्र **दशा** दीपस्य वर्तिका । तद्धर्मं तत्सादृश्यं गतेभ्यः प्राप्तेभ्यो जनपदवासिभ्यः, **यद्वसु** तद्वशे स्थितं बह्वल्पं वा यद्वसु, तत् **सहसा** युगपदेव नाददीत । यथा वर्तिका स्वपात्रस्थिततैलं क्रमेण दीपाय प्रयच्छति तथा राज्ञे द्रव्यदानात् प्रजानां वर्तिकास्थानीयत्वम् ।

---

१. अ.को. २-८-१०७
२. 'कर्शन्' सो.मु.पा.

**घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।**
**प्रवेशयेच्च तान् सर्वान् शाखानगरकेष्वपि ॥ ३७ ॥**

**शाखानगरकेष्वपि** इत्यत्र स्थूलनगरसमीपस्थसूक्ष्मनगराणि शाखानगराणि[१]। 'अन्यत्तु यन्मूलनगरात्पुरम् । तच्छाखानगरम्' इत्यमरः ।

**[२]सस्यापहारं कुर्वीत स्वयमेव नराधिपः ।**
**असम्भवे प्रवेशस्य दाहयेदग्निना भृशम् ॥ ३९ ॥**
**क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।**
**विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वै ॥ ४० ॥**

**सस्यापहारं कुर्वीत** इत्यत्र **सस्यापहारं** परेषां सस्यापहारम् । शत्रोः क्षेत्रस्थेषु सस्येषु छित्त्वा पुञ्जीकृत्य क्षेत्र एव स्थापितेषु सस्येषु दाहयेत् । **नरानुपजपेत्** बुद्धिभेदाय कर्णे जपं कुर्यात् ।

**नदीमार्गेषु च तथा सङ्क्रमानवसादयेत् ।**
**जलं [३]निस्रावयेत्सर्वमनिस्राव्यञ्च दूषयेत् ॥ ४१ ॥**

**सङ्क्रमानवसादयेत्** इत्यत्र **सङ्क्रमान्** सम्यक्क्रमणहेतून् नौकादीन् । **अनिस्राव्यं** स्रवणायोग्यं जलम् ।

**तदात्वेनायतीभिश्च निवसेद् [४]भूम्यनन्तरे ।**
**प्रतिघातं परस्याजौ युद्धकालेऽप्युपस्थिते ॥ ४२ ॥**

---

१. अ.को. २.२.१; २. 'सस्याभिहारम्' इति कुं. पाठः ।
३. BORI. पृ. ३३०; 'विस्रावयेत् सर्वमविस्राव्यञ्च' इति कुं. पाठः ।
४. 'भूम्यनन्तरम्' इति कुं. पाठः ।

**तदात्वेनायतीभिः** इत्यत्र **तदात्वेन** तत्कालेन, **आयतीभिः** उत्तरकालैश्च, **भूम्यनन्तरे** भूमेरन्तरं मध्यं न भवतीत्यनन्तरं प्रान्तप्रदेशः तस्मिन् निवसेत् ।

**देवानामाश्रयाश्चैत्या यक्षराक्षसभोगिनाम् ।**
**पिशाचपन्नगानाञ्च गन्धर्वाप्सरसामपि ।**
**रौद्राणाञ्चैव भूतानां तस्मात्तान् परिवर्जयेत् ॥ ४५ ॥**
**श्रूयते हि निकुम्भेन सौदासस्य बलं हतम् ।**
**महेश्वरगणेशेन वाराणस्यां नराधिप ॥ ४६ ॥**

**सौदासस्य बलं हतम्** इत्यत्र सौदासबलं हतं, चैत्यवृक्षच्छेदने कृते सति बलं हतम् ।

**प्रखण्डीः[1] कारयेत् सम्यगाकाशजननीस्तदा ।**
**आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम् ॥ ४७ ॥**

**प्रखण्डीः कारयेत्** इत्यत्र **आकाशजननीः** अन्तःस्थितानां कदाचिद्बहिर्निःसरणाय अवकाशप्रदाः **प्रखण्डीः** ईषद्प्रखण्डनेन कृतसूक्ष्मद्वाराणि । परिखामापूरयेत्[2] ।

**सङ्कटद्वारकाणि स्युः उच्छ्वासार्थं पुरस्य च ।**
**तेषाञ्च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ॥ ४८ ॥**

**सङ्कटद्वारकाणि स्युः** इत्यत्र **सङ्कटद्वारकाणि** अन्तःसङ्कटोपेतानि दुर्गात् बहिर्विद्यमानानि क्षुद्रद्वाराणि ।

---

१. 'प्रगण्डीः' इति कुं. पाठः । ; २. **'जलेन आपूरयेत्'** सो.मु.पा. ।

[१] सम्भवे सति शैलानि चैष्टकानि च कारयेत् ।
मृण्मयानि च कुर्वीत ज्ञात्वा देशं बलाबलम् ॥ ५३ ॥

**सम्भवे सति शैलानि** इत्यत्र **सम्भवे** द्रव्यादिसम्भवे **शैलानि** शिलामयानि **ऐष्टकानि** इष्टकामयानि । 'इट्टिगे'[२] इत्यपभ्रंशभाषा ।

कर्मारारिष्टशालासु ज्वलेदग्निः सुरक्षितः ।
गृहाणि च प्रवेश्यान्तः [३] पिधेयः स्याद्धुताशनः ॥ ५४ ॥

**कर्मारारिष्टशालासु** इत्यत्र **कर्मारः** कारुः । **अरिष्टं** सूतिकागृहम् । तस्य शालासु । **पिधेयः स्याद्धुताशन** इत्यत्र **पिधेयः** भस्मादिना आच्छाद्यः ।

चत्वरेष्वथ तीर्थेषु सभास्वावसथेषु च ।
[४] यथार्हवर्णं प्रणिधिं कुर्यात् सर्वत्र पार्थिवः ॥ ५७ ॥

**यथार्हवर्णं प्रणिधिं कुर्यात्** इत्यत्र यत्र यादृशेन भवितव्यं तत्र तादृशो वर्णः ब्राह्मणादिजातिविशेषो यस्य तम् । ब्राह्मणेषु ब्राह्मण-वत्तिष्ठन्, क्षत्रियादिषु तद्वत्तिष्ठन्नित्यर्थः । अत एव यथार्हवर्णनामकं मायाविशारदं **प्रणिधिं** चारं कुर्यादिति योजना ।'यथार्हवर्णः प्रणिधिः उपधिः[५] स्यात् प्रचारकः'[६] इत्यमरः ।

विशालान् राजमार्गांश्च कारयेत नराधिपः ।
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ॥ ५८ ॥

---

१. **'यथासम्भवशैलानि'** इति कुं. पाठः ।; २. कन्नडभाषायाम् ।
३. **'विधेयः'** इति कुं. पाठः ।; ४. BORI. पृ. ३३३; **'यथार्थवर्णम्'** कुं. पाठः
५. **'अपसर्पश्चरः स्पशः'** सो.मु.पा. ।; ६. अ.को. २-८-१३.

**प्रपाश्च विपणीश्चैव** इत्यत्र **प्रपाः** पानीयशालाः । **विपणीः** आपण-वीथिकाः ।'प्रपा पानीयशालिका'[१], 'विपणिः पण्यवीथिका'[२] इति चामरः ।

**परिखाश्चैव कौरव्य [३]प्रतोलीर्निष्कुटानि च ।**
**न जातु कश्चित्पश्येत गुह्यमेतद्युधिष्ठिर ॥ ६० ॥**

**प्रतोलीर्निष्कुटानि च** इत्यत्र **प्रतोलीः** रथवीथीः । **निष्कुटानि** शर-प्रयोगाद्यर्थं छिद्राणि ।'निष्कुटः कोटरं वा ना'[४], 'रथ्या प्रतोली विशिखा'[५] इति चामरः ।

**अङ्गारकुशमुञ्जानां [६]पलाशशरपर्णिनाम् ।**
**यवसेन्धनदिग्धानां कारयेत च सञ्चयान् ॥ ६२ ॥**

**पलाशशरपर्णिनाम्** इत्यत्र **पर्णिनां** ताम्बूलपर्णभोजनपर्णादिमतां लतौषधीनाम् ।

**औषधानि च सर्वाणि मूलानि च फलानि च ।**
**[७]चतुर्विधांश्चैव वैद्यान् सङ्गृह्णीयाद्विशेषतः ॥ ६४ ॥**

**चतुर्विधांश्चैव वैद्यान्** इत्यत्र अश्ववैद्यगजवैद्यनरवैद्यशास्त्रवैद्यभेदेन चतुर्विधान् ।

---

१. अ.को. २-२-७.; २. अ.को. २-२-२.

३. $K_5, V_1, D_n, D_{2,3,5,6}, B_{(exceptB2)}$; BORI पृ. ३३३; '**प्रतोलीसङ्कटानि च**' इति कुं.पाठः ।

४. अ.को. २-४-१३, '**निष्कुह**' इति मुद्रितकोशेषु ।; ५. अ.को. २-२-३.

६. BORI. पृ.३३३; '**पलाशशरवर्णिनाम्**' इति कुं. पाठः ।

७. '**चतुर्विधांश्च वैद्यान् वै**' इति कुं. पाठः ।

निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
गतानृण्यो भवेद् राजा यथा शास्त्रे निदर्शितम् ॥ ६८ ॥

गतानृण्यो भवेद् इत्यत्र गतं प्राप्तं आनृण्यं येन सः ।

षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर ।
[१]सन्धानासनमित्येव यात्रासन्धानमेव च ॥ ७२ ॥
विगृह्यासनमित्येव [२]यात्रा सम्परिगृह्य च ।
द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ॥ ७३ ॥

**सन्धानासनमित्येव** इत्यत्र **सन्धानासनं** सन्धानार्थं स्वपुर एव वासः, महाशक्तिमतोऽयं गुणः । **यात्रासन्धानं** परराष्ट्रं प्रति यात्रया सन्धानम् । **विगृह्यासनं** शत्रून् प्रति कलहं कृत्वा तद्दुर्गसमीपे जयपर्यन्तमासनम् । **सम्परिगृह्य** शत्रुं सम्यक् गृहीत्वा **यात्रा** स्वपुरं प्रति यात्रा । शरणागते सति परस्य **संश्रयः** आश्रयदानम् ।

सर्वेषाश्च क्षये राजन् यस्त्रिवर्गः सनातनः । ॥ ७६ ॥
सत्त्वं रजस्तमश्चैव त्रिवर्गःकरणं स्मृतम् ।
तेनात्यन्तविमुक्तश्च मुक्तः पुरुष [३]इष्यते ॥ ७७ ॥
[४]कार्यश्च सर्वथा नाशो मोक्ष इत्यभिधीयते ।
तेन मोक्षपरश्चैव देवदेवः पितामहः ।
तुष्ट्यर्थस्य त्रिवर्गस्य रक्षामाह पितामहः ॥ ७८ ॥

---

१. $K_{4.5}$,$B_{(except B1)}$,$D_{n}$,$D_{2.3.5.6.}$; BORI पृ. ३३५; **'सन्धायासनमित्येव'** इति कुं. पाठः ।

२. **'यात्राम्'** इति कुं. पाठः ।; ३. **'उच्यते'** इति कुं. पाठः ।

४. $G_{1,M2.}$; BORI पृ. ३३५; **'कार्यस्य'** इति कुं. पाठः ।

**मुक्तः पुरुष इष्यत** इत्यत्र **इष्यते** कर्ततीष्यते । अस्य गुणत्रयस्य सर्वथा नाशाख्यो मोक्षः कार्य इत्युच्यते ।

**अस्मिन्नर्थे हि द्वौ श्लोकौ गीतावङ्गिरसा स्वयम् ।**
**यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ॥ ८४ ॥**

**यादवीपुत्र भद्रं त** इत्यत्र **यादवीपुत्र** कुन्तीपुत्र ।

**श्लोकाश्चोशनसा गीतास्तान्निबोध युधिष्ठिर ।**
**दण्डनीतेश्च [1] ते मूलं त्रिवर्गस्य च भूपते ॥ ८५ ॥**

**दण्डनीतेश्च ते मूलम्** इत्यत्र **ते** श्लोकाः ।

**भार्गवाङ्गिरसं कर्म षोडशाङ्गं च यद्बलम् ।**
**[2] विषह्यता च दैवश्च पौरुषश्चात्मसिद्धये ॥ ८६ ॥**
**प्रागुदक्प्रवणं दुर्गं समासाद्य महीपतिः ।**
**त्रिवर्गत्रयसम्पूर्णमुपादाय तमुद्वहेत् ॥ ८७ ॥**

**भार्गवाङ्गिरसं कर्म** इत्यत्र **भार्गवाङ्गिरसं** शुक्रबृहस्पत्योर्नीति-सम्बन्धि । **षोडशाङ्गं** चतुर्विधा सेना, चतुरुपायाः, षड्गुणाः, समया-समयविचारः साध्यासाध्यविचारश्चेति षोडश अङ्गानि यस्य तत्तथोक्तम् । **विषह्यता** विशेषेण परकृतोपद्रवसहनयोग्यता ।

**षट् पञ्च च विनिर्जित्य दश चाष्टौ च भूपतिः ।**
**त्रिवर्गैर्दशभिर्युक्तः सुरैरपि न जीर्यते ॥ ८८ ॥**

---

१. **'यन्मूलं'** इति कुं. पाठः ।
२. **'विषं माया च'** इति कुं. पाठः ।

**षट् पञ्च च विनिर्जित्य** इत्यत्र **षट्** कामक्रोधादीन् । **पञ्च** पञ्चमहाभूतानि, तदात्मकं देहमिति यावत् । **दश** दशेन्द्रियाणि । **अष्टौ** मदान् विनिर्जित्य । **त्रिवर्गैः** धर्मादिकैः । **दशभिः** अमात्यादिषट्कैः यज्ञाध्ययनदानप्रजापालनाख्यैर्दशभिः ।

॥ इति सप्ततितमोऽध्यायः ॥

## ॥ अथ एकसप्ततितमोऽध्यायः ॥

**[१]दण्डनीतिः स्वधर्मेषु चातुर्वर्ण्यं नियच्छति ।**
**प्रयुक्ता स्वामिनासम्यग् अधर्मेभ्यो नियच्छति** ॥ ३ ॥

**[२]प्रयुक्ता स्वामिनासम्यग्** इत्यत्र असम्यगिति पदच्छेदः ।

॥ इति एकसप्ततितमोऽध्यायः ॥

## ॥ अथ द्विसप्ततितमोऽध्यायः ॥

**भीष्म उवाच–**

**[३]इयं गुणानां षट्त्रिंशी षट्त्रिंशद्गुणैर्युतः ।**
**यान् गुणांस्तु गुणोपेतः कुर्वन् गुणमवाप्नुयात्** ॥ २ ॥

**इयं गुणानां षट्त्रिंशी** इत्यत्र **इयं** वक्ष्यमाणा गुणानां षट्त्रिंशी शास्त्रेषु विहिता । तैः [४]षट्त्रिंशता गुणैर्युत इति सम्बन्धः ।

॥ इति द्विसप्ततितमोऽध्यायः ॥

---

१. कुं ६९ अध्यायः । ; २. 'प्रयुक्ताः' सो.मु.पा. ; ३. कुं ७० अध्यायः ।
४. 'षट्त्रिंशात्रिगुणैः' सो.मु.पा.

## ।। अथ त्रिसप्ततितमोऽध्यायः ।।

**[१] बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।**
**[२] शस्त्रभीतेन लिप्सेथा वेतनेन धनागमम् ।। १० ।।**

**शस्त्रभीतेन लिप्सेथा** इत्यत्र **शस्त्रभीतेन** भटेन । तृतीया पञ्चम्यर्थे । शस्त्रभीताद्भटादिति यावत् । वेतनेन गृहीतेन, तद्वेतनं गृहीत्वेति यावत् ।

**[३] स्विष्टः स्वधीतः सुतपा लोकान् जयति यावतः ।**
**क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ।। ३० ।।**

**स्विष्टः स्वधीतः सुतपा** इत्यत्र सुष्ठु इष्टं [४] यागो यस्य स्विष्टः । सुष्ठु अधीतं अध्ययनं यस्य **स्वधीतः** ।

।। इति त्रिसप्ततितमोऽध्यायः ।।

## ।। अथ चतुःसप्ततितमोऽध्यायः ।।

**[५] छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति ।**
**अग्नौ वाससि सूर्ये च सुखं शीतेऽधिगच्छति ।। २६ ।।**

**छायायामप्सु वायौ च** इत्यत्र छायायां अप्सु वायौ च उष्णे **अधिगच्छति** सति नश्यति सतीत्यर्थः, सुखं भवति । एवमुत्तरत्रापि ।

।। इति चतुःसप्ततितमोऽध्यायः ।।

---

१. कुं ७१ अध्यायः ।; २. '**शास्त्रानीतेन**' इति कुं. पाठः ।
३. $D_7 T_1$; BORI पृ. ३४७; '**स्विष्टिः स्वधीतिः**' इति कुं. पाठः ।
४. '**योगो**' सो.मु.पा. ; ५. कुं ७२ अध्यायः ।

## ।। अथ पञ्चसप्ततितमोऽध्यायः ।।

**युधिष्ठिर उवाच–**

**राज्ञा[1] पुरोहितः कार्यः कीदृशो वर्णतो भवेत् ।**
**पुरोधा यादृशः कार्यः कथयस्व पितामह ।। १ ।।**

**भीष्म उवाच–**

**गौरो वा लोहितो वापि श्यामो वा नीरुजः सुखी ।**
**अक्रोधनो ह्यचपलः सर्वतश्च जितेन्द्रियः ।। २ ।।**

**श्यामो वा नीरुजः सुखी** इत्यत्र **श्यामः** ईषन्नीलः । अतिकृष्णस्तु वर्ज्य इति भावः ।

**भूयो[2] गृह्याणि सततं महोत्पातान्यघानि च ।**
**इष्टामङ्गलयुक्तानि[3] तथान्तःपुरिकाणि च ।। ८ ।।**
**गीतनृत्ताधिकारेषु [4]सामन्तेषु महीपतेः ।**
**कर्तव्यं करणीयं वै वैश्वदेवबलिस्तथा ।। ९ ।।**

**भूयो गृह्याणि सततम्** इत्यत्र **गृह्याणि** गृहसम्बन्धीनि भोजन-समये दीपनाशाद्यमङ्गलानीत्यर्थः । **उत्पाता** उल्कापाताद्याः वाह्याश्च भवन्ति । **इष्टामङ्गलयुक्तानि** इष्टानां सुहृदां यान्यमङ्गलानि तैर्युक्तानि । **अन्तःपुरिकाणि** पुरान्तर्वर्तीन्यमङ्गलानि । गीतनृत्ताधिकारेषु महीपतेः सामन्तेषु च कदाचिदमङ्गलानि भवन्ति तदा कर्तव्यं प्रायश्चित्तकर्म पुरोहितेन करणीयं वै ।

---

१. कुं ७३ अध्यायः । ; २. **'ब्रूयाद्गृह्याणि'** इति कुं. पाठः ।
३. **'इष्टमङ्गलयुक्तानि'** इति कुं. पाठः ।; ४. **'सम्मतेषु'** इति कुं. पाठः ।

**राज्ञः पापमलाः सप्त [1]यान्नुत्स्यति पुरोहितः ॥ ११ ॥**

**यान्नुत्स्यति पुरोहित** इत्यत्र **नुत्स्यति** नाशयिष्यतीत्यर्थः ।

**अमात्याश्च कुकर्माणो मन्त्रिणश्चाप्युपेक्षकाः । ॥११॥**
**चौर्यमव्यवहारश्च [2]व्यवहारोपसेवनम् ।**
**अदण्ड्यदण्डनं चैव दण्ड्यानां चाप्यदण्डनम् ॥ १२ ॥**
**हिंसा चान्यत्र सङ्ग्रामाद्राज्ञश्च मल उच्यते ।**
**कुभृत्यैस्तु प्रजानाशः सप्तमस्तु महामलः ॥ १३ ॥**

**अमात्याश्च कुकर्माण** इत्यत्र कर्मसमये कुकर्माणः अमात्याः, मन्त्रसमये उपेक्षका मन्त्रिणश्चेति मिलित्वा एकं मलम् । **व्यवहारोपसेवनं** वैश्यवत् क्रयविक्रयादिव्यवहारोपसेवनम् ।

**ऋग्वेदे सामवेदे च यजुर्वेदे च वाजिनाम् ।**
**न निर्दिष्टानि कर्माणि त्रिपु स्थानेषु भूभृताम् ।**
**शान्तिकं पौष्टिकश्चैव अनिष्टानाञ्च शातनम् ॥ १८ ॥**

**ऋग्वेदे सामवेदे च** इत्यत्र **वाजिनां** वाजसनेयकानां शाखासु निर्दिष्टानि यानि भूभृतां कर्माणि शान्तिपौष्टिकादीनि तानि ऋग्वेदे यजुर्वेदे सामवेदे चेति त्रिषु स्थानेषु न निर्दिष्टानि । अतो वाजसनेयक एव राजपुरोहितः कर्तव्य इति भावः ।

**[3]शब्दिता याज्ञवल्क्येन यज्ञा आहवमीहता ।**
**प्रशिष्टानां वरिष्ठेन ब्रह्मणः सम्मते विभोः ॥ १९ ॥**

---

१. 'यानृच्छति' इति कुं. पाठः ।; २. $T_{2.M}$; 'व्यवहारोपसेविनाम्' कुं. पाठः ।
३. 'शप्तास्ते याज्ञवल्क्येन यज्ञानां हितमीहता । ब्रह्मिष्ठानां' इति कुं. पाठः ।

**शब्दिता याज्ञवल्क्येन** इत्यत्र **याज्ञवल्क्येन** माध्यन्दिनशाखाप्रवर्तकेन । आहवमीहता राज्ञा यज्ञाः कर्तव्याः । शान्तिकपौष्टिकादियज्ञाः प्रशिष्टानां वरिष्ठेन याज्ञवल्क्येन माध्यन्दिनशाखाप्रवर्तकेन ऋषिणा विभोर्ब्रह्मणः सम्मते शब्दिता इति योजना ।

**बह्वृचो राष्ट्रनाशाय राजनाशाय सामगः ।**
**अध्वर्युर्बलनाशाय [1] प्रोक्ता वाजसनेयकाः ॥ २० ॥**

**अध्वर्युर्बलनाशाय प्रोक्ता** इत्यत्र **अध्वर्युः** अध्वरशीलो यजुर्वेदी । **वाजसनेयकाः** माध्यन्दिनशाखास्थाः पौरोहित्यकर्मणि प्रोक्ताः ।

**पौरोहित्ये प्रमाणं तु ब्राह्मणश्च महीपतेः ।**
**जात्या न क्षत्रियः प्रोक्तः [2] क्रूरः प्राणं करोति यः ॥ २३ ॥**
**चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः ।**
**भार्गवाङ्गिरसैर्मन्त्रैस्तेषां कर्म विधीयते ॥ २४ ॥**
**वैतानं कर्म यच्चैव [3] गार्ह्यं कर्म च यत् स्मृतम् ॥ २५ ॥**

**क्रूरः प्राणं करोति य** इत्यत्र **क्रूरः** दुष्टानां क्रूरः सन् **प्राणं** सतां प्राणं यः करोति चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृत इत्यर्थः । तेषां कर्मणा क्षत्रियाणां वर्णबाह्यानां भार्गवाङ्गिरसैर्मन्त्रैः कर्म विधीयते । **वैतानं** यज्ञविस्तारसम्बन्धि । **गार्ह्यं** गृहस्थसम्बन्धि ।

**[4] राजशब्दप्रवृत्तानां हितार्थं त्रीणि कारयेत् ।**
**शान्तिकं पौष्टिकञ्चैव तथाऽभिचरणञ्च यत् ॥ २६ ॥**

---

१. $T_2 G_1$ BORI पृ. ६२८; **'प्रोक्ता वाजसनेयकः'** इति कुं. पाठः ।
२. **'क्षतत्राणम्'** इति कुं. पाठः ।; ३. **'गृह्यकर्म'** इति कुं. पाठः ।
४. M. BORI पृ. ६२८; **'राजधर्मप्रवृत्तानाम्'** इति कुं. पाठः ।

**राजशब्दप्रवृत्तानाम्** इत्यत्र दुर्जनशिक्षणादिकर्मणा राजशब्दप्रवृत्तानां त्रिवर्णेतरेषाम् ।

**ब्रह्मक्षत्रविशः सर्वे पौरोहित्ये विवर्जिताः ।**
**[1]तदभावेऽपि पारक्यं निर्दिष्टं राजकर्मसु ॥ २९ ॥**

**निर्दिष्टं राजकर्मसु** इत्यत्र **तदभावेऽपि** राजपौरोहित्याभावेऽपि । **राजकर्मसु** राजन्तीति राजानि कर्माणि येषां तेषु पूर्वोक्तेषु राजकर्मसु । **पारक्यं** परलोकसम्बन्धि फलं निर्दिष्टम् ।

**[2]भार्गवाङ्गिरसे वेदे कृतविद्यः षडङ्गवित् ॥ ३० ॥**
**यज्ञकर्मविधिज्ञस्तु विधिज्ञः पौष्टिकेषु च ।**
**अष्टादशविकल्पानां विधिज्ञः शान्तिकर्मणाम् ॥ ३१ ॥**
**सर्वरोगविहीनश्च संयतः संयतेन्द्रियः ॥ ३२ ॥**

'भार्गवाङ्गिरसे वेदे' इत्यारभ्य 'संयतेन्द्रियः' इत्यन्तं पुनः सुब्राह्मणस्यैव गुणकथनम् ।

**युद्धे पराजितश्चैव सर्वांस्तान् वर्जयेन्नृपः ।**
**नक्षत्रस्यानुकूल्येन [3]यस्मिन् जातो जनेश्वरः ॥ ३५ ॥**
**राजशास्त्रविनीतश्च श्रेयान् राज्ञः पुरोहितः ।**

**नक्षत्रस्यानुकूल्येन** इत्यत्र यस्मिन् पुरोहिते सति **नक्षत्रस्य** शोभननक्षत्रस्य आनुकूल्येन जनेश्वरः जातः ।

---

१. **'तदभावे च'** इति कुं. पाठः ।

२. M; BORI पृ. ६२८; **'भार्गवाङ्गिरसां'** इति कुं. पाठः ।

३. M; BORI पृ. ६२८; **'यः सञ्जातो'** इति कुं. पाठः ।

वाजिनं तदभावे च चारकाध्वर्यकानथ ॥ ३७ ॥
बह्वृचं सामगश्चैव नीतिशास्त्रकृतश्रमान् ।
कृतिनोऽथर्वणो वेदे स्थापयेत्तु पुरोहितान् ॥ ३८ ॥

**वाजिनं** [1]**तदभावे च** इत्यत्र **वाजिनं** वाजसनेयकमेव पुरोहितं कुर्यात् । **तदभावे** वाजसनेयकाभावे । चारयन्ति यज्ञादिकमिति **चारका** । **अध्वर्यकाः** यजुर्वेदिनः ।

[2]हिंसाङ्गा ये च निर्दिष्टा मन्त्रा वैतानिकैर्द्विजैः ।
न तानुच्चारयेत् प्राज्ञः क्षात्रधर्मविरोधिनः ॥ ३९ ॥

**हिंसाङ्गा** इत्यत्र मारणादिना ये च हिंसाङ्गा निर्दिष्टाः ।

ऐल उवाच–

यदा हि ब्रह्म प्रजहाति क्षत्रं
क्षत्रं यदा वा प्रजहाति ब्रह्म ।
अन्वग्बलं कतमेऽस्मिन् भजन्ते
[3]तदाबलं [4]कतमेऽस्मिन् ध्रियन्ति ॥ ४५ ॥

**अन्वग्बलं कतम** इत्यत्र **अन्वक्** अनन्तरं **कतमे** के **अस्मिन्** क्षत्रब्रह्मणोर्विरोधे सति तदा अबलं **कतमे** के **ध्रियन्ति** धारयन्ति ।

[5]नैषामुक्षा वर्धते नोत पुत्रा न गर्गरी मथ्यते नो जयन्ते ।
नैषां पुत्रा वेदमधीयते च यदा ब्रह्म क्षत्रियाः सन्त्यजन्ति ॥४७॥

---

१. 'तदभावेन' सो.मु.पा.; २. 'हिंसालिङ्गा हि' इति कुं. पाठः ।
३. 'तथा बलं' इति कुं. पाठः ।; ४. 'कतमैके' इति कुं. पाठः ।
५. BORI. पृ.३५२.'नैषां ब्रह्म' इति कुं. पाठः ।

**नैषां पुत्रा** इत्यत्र एषां ब्राह्मणानाम् । **उक्षा** वृषभः । 'उक्षानड्वान् बलीवर्दः'[1] इति हलः । जात्येकवचनम् । **गर्गरी** दधिमन्थनदण्डः । 'मन्थनी गर्गरी समे'[2] इत्यमरः ।

**नैषमर्थो वर्धते जातु गेहे**
**नाधीयते तत्प्रजा नो यजन्ते ।**
**अपध्वस्ता दस्युभूता भवन्ति**
**ये ब्राह्मणान् क्षत्रियाः सन्त्यजन्ति ॥ ४८ ॥**

**अपध्वस्ता** इत्यत्र **अपध्वस्ताः** धर्ममार्गादपध्वस्ताः ।

**ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति ।**
**अरक्ष्यमाणः सततमश्रु पापञ्च वर्षति ॥ ५२ ॥**

**मधु हेम च वर्षति** इत्यत्र **मधु** मधुस्थानीयं सुखम् ।

**अब्रह्मचारी [3]चरणादपेतं**
**यदा ब्रह्म ब्रह्मणि त्राणमिच्छेत् ।**
**आश्चर्यतो वर्षति तत्र देव-**
**स्तत्राभीक्ष्णं दुष्प्रभाश्चाविशन्ति ॥ ५३ ॥**

**अब्रह्मचारी चरणाद्** इत्यत्र यदा ब्रह्म अब्रह्मणि क्षत्रिये त्राणं नेच्छेत् तदा अब्रह्मचारी **चरणाद्** आचारात् अपेतं क्षत्रियो भवति ।

---

१. ह.को.२.२६३.
२. अ.को.२.९.७४.
३. '–दपेतः' इति कुं. पाठः ।

**स्त्रियं हत्वा ब्राह्मणं [1] चापि पापः सभायां यत्र लभतेऽनुवादम् ।**
**राज्ञः सकाशे न बिभेति चापि ततो भयं जायते क्षत्रियस्य ॥५४॥**

**ब्राह्मणं चापि पाप** इत्यत्र **पापः** पापिष्ठः खलः । **अनुवादं** अनुकूलवादम् ।

**पापैः पापे क्रियमाणेऽतिवेलं ततो रुद्रो जायते देव एषः ।**

**ततो रुद्रो जायते देव एष** इत्यत्र पापिष्ठैः कृतरुजो द्रावणात् **रुद्रो** नारायणः ।

**पापैः पापाः सञ्जनयन्ति रुद्रं**
**ततः सर्वान् साध्वसाधून् हिनस्ति ॥ ५५ ॥**

**पापैः पापाः सञ्जनयन्ति रुद्रम्** इत्यत्र पापैः पापे क्रियमाणे सति तेषु कोपेन रुद्रस्य जायमानत्वात् पापैः सञ्जनयन्ति रुद्रमित्युक्तम् । **साधु** सम्यक् ।

**कश्यप उवाच–**
**आत्मा रुद्रो हृदये मानवानां [2] स्वकं देहं परदेहञ्च हन्ति ।**
**वातोत्पातैः सदृशं रूपमाहुः [3] दावैर्जीमूतैः सदृशं रूपमस्य ॥५७**

**आत्मा रुद्र** इत्यत्र **स्वकं देहं** स्वाश्रयभूतजीवदेहं **परदेहं** परत्वादपि स्वाश्रयभूतजीवदेहं हन्ति । वातस्य **उत्पातैः** इतस्तत उत्कृष्टपातैः सदृशं अस्य रूपं, वातवत् सर्वत्र व्याप्य तिष्ठतीति भावः । लोकोप-

१. $B_{0\text{-}4}, D_n, D_{2.4.6}, M_4$; BORI पृ. ३५३; 'वापि' इति कुं. पाठः ।
२. $D_7$ S; BORI पृ. ३५४; 'स्वं स्वं' इति कुं. पाठः ।
३. BORI पृ. ३५४; 'देवं जीमूतैः' इति कुं. पाठः ।

द्रवकारिदैत्यादिदेहेषु दावैः सदृशं वनवह्निवद्दैत्यानामत्युग्रतां दीपयं-स्तिष्ठतीति भावः । तच्छमनभूतेन्द्रादिदेवदेहेषु जीमूतैः सदृशं रूपं जीमूतवत् शराख्यवर्षधारया दैत्यशमनशक्तिप्रदमित्यर्थः ।

गुरूक्तवाक्यस्य हृदयमजानानः पृच्छति –

**ऐल उवाच–**

**न वै वातः परिवृणोति कश्चित् न जीमूतो वर्षति तत्र देवः ।**
**तथाऽयुक्तो दृश्यते मनवेषु कामद्वेषाद्बध्यते [१] मुच्यते च ॥५८॥**

**न वै वात** त्वदुक्तं वातजीमूतादिकं कुत्रापि न दृश्यते । अतः तथा त्वदुक्तप्रकारेण वर्तमानः परमात्मा **अयुक्तः** मानवेष्वयुक्तः दृश्यते । किन्तु मानवः स्वयमेव कामद्वेषात्कारणात् कदाचिद्बध्यते, कदाचित् कामद्वेषादवधेः मुच्यते च ।

**कश्यप उवाच–**

**[२] यथैव देहे जातवेदाः प्रदीप्तः**
**कृत्स्नं ग्रामं दहते च त्वरावान् ।**
**विमोहनं कुरुते देव एष**
**ततः सर्वं स्पृश्यते पुण्यपापैः ॥ ५९ ॥**

**यथैव देह** इति वदता कश्यपेन निदर्शनमात्राय मया प्राग्वात-जीमूतादिकमुक्तम्, न तु रुद्र एवादिः । अतस्त्वच्छङ्का अज्ञानमूलेति सूचिता । **ततः** परमात्मन एव ।

---

१. BORI पृ. ३५४; 'मुह्यते' इति कुं. पाठः ।
२. 'यथैकगेहाज्जातवेदाः' इति कुं. पाठः ।

ऐल उवाच–

यदि दण्डः[1] स्पृश्यते पुण्यपापैः
पापैः पापे क्रियमाणे विशेषात् ।
कस्य हेतोः सुकृतं नाम कुर्यात्
दुष्कृतं वा कस्य हेतोर्न कुर्यात् ॥ ६० ॥

**यदि दण्डः स्पृश्यते पुण्यपापै** इत्यत्र **पुण्यपापैः** सुकृतदुष्कृतैः कृतैरपि पापाद्दण्डो यदि स्पृश्यते, पापैः सह कृतपुण्येन पापफलभूत-दण्डपरिहारो न भवति चेदित्यर्थः । **पापैः** केवलपापिष्ठैः पुरुषैः पापे क्रियमाणे विशेषाद्दण्डो यदि स्पृश्यते तर्हि **कस्य हेतोः** कस्य कारणस्य सकाशात् **सुकृतं** केवलसुकृतमेव कुर्यात्, **कस्य हेतोः** कस्य कारणस्य हेतोः दुष्कृतश्च न कुर्यात्, तत्कारणं ब्रूहीति योग्यपदाध्याहारेण योजना । पापमिश्रपुण्यस्याप्रयोजकत्वात् पापामिश्रं केवलपुण्यमेव केन कारणेन भवतीति प्रश्नवाक्यार्थः ।

कश्यप उवाच–

असन्त्यागात् पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा-
न्न मिश्रः स्यात्पापकृद्भिः कथञ्चित् ॥ ६१ ॥

**असन्त्यागात्** इत्यत्र असतां समागमे सति स्वभावतः अपापानामपि तद्दर्शनस्पर्शनादिना क्षणे क्षणे पापं स्यादेव । तेन पुण्यमपि व्यर्थी-

१. $K_{3.5}$, $T_1$,$G_{3.4}$,$D_{7.8}$; BORI पृ. ३५५; **'स्पृशतेऽपुण्यपापं'** इति कुं. पाठः ।

भवेत् । तस्मात्केवलपुण्यप्रेप्सुना दुर्जनसङ्ग एव त्याज्य इति भावेनाह **असन्त्यागादिति** । अत्र 'शुष्केणार्द्रं दह्यते मिश्रभावात्' इति दुर्जन-संसर्गात् सज्जनानामप्यनिष्टं स्यादित्यत्र दृष्टान्तकथनम् ।

तर्हि पापिष्ठसङ्गात् पुण्यात्मनां हानिश्चेत् भूम्यादिः साध्वसाधून् कुतो धारयतीति पृच्छति–

**ऐल उवाच–**

**साध्वसाधून् धारयतीह भूमिः**
**साध्वसाधूंस्तापयतीह सूर्यः ।**
**साध्वसाधूंश्चापि वातीह वायु-**
**रापस्तथा साध्वसाधून्वहन्ति ॥ ६२ ॥**

इत्यस्मिन् पद्ये [1] प्रश्नत्वात् कस्मादिति योग्यपदाध्याहारेण योजना ।

एवं तर्हि साधोरसाधोश्च [2] स्वगतिः कदा स्यादित्यत आह–

**कश्यप उवाच–**

**एवमस्मिन् वर्तते लोक एष नामुत्रैवं वर्तते राजपुत्र ।**
**प्रेत्यैतयोरन्तरावान् विशेषो यो वै पुण्यं चरते यश्च पापम् ॥६३॥**

इति ।

मुक्तीतरस्थले सर्वत्र दैत्यादीनां सञ्चारसद्भावेन सदसतोः संसर्गापरिहारात् तयोरसंसर्गस्थलं मुक्तिः अन्धं तमश्च, नान्यदिति भावेनाह–

---

१. **'कस्मात्प्रश्नत्वात्'** पाठः सर्वत्र उपलभ्यते ।; २. **अस्य गतिः** सो.मु.पा.

**पुण्यस्य लोको मधुमान् घृतार्चि-**
**हिरण्यज्योतिरमृतस्य नाभिः ।**
**तत्र प्रेत्य मोदते ब्रह्मचारी**
**न तत्र मृत्युर्न जरा नोत दुःखम्** ॥ ६४ ॥

**पापस्य लोको निरयोऽप्रकाशो**
**नित्यदुःखं[1] शोकभूयिष्ठमेव ।**
**तत्रात्मानं शोचति पापकर्मा**
**बह्वीः समाः प्रतपन्नप्रतिष्ठः** ॥ ६५ ॥

इति ।

'न तत्र मृत्युर्न जरा नोत दुःखमि'ति वचनादाद्यं पद्यं मुक्तिपरमेव । 'अप्रकाशो', 'नित्यदुःखं', 'शोकभूयिष्ठमेव' इति वचनात् द्वितीयं पद्यं तमोविषयमेव । पुण्यस्य लोकः, पापस्य लोकः इति च पुण्यात्मन पुनरावृत्तिशून्यसल्लोककथनात् पापात्मनां पुनरावृत्तिशून्यासल्लोक-कथनाच्च असतां कदाचिदपि न मुक्तिः, सतां कदाचिदपि नान्धन्तमः इति च लब्धम् ।

**[2]तञ्चैवान्वभिषिञ्चेत तथा धर्मो विधीयते ।**
**अग्र्यं हि ब्राह्मणः प्रोक्तं सर्वस्यैवेह धर्मतः** ॥ ६७ ॥

**तञ्चैवान्वभिषिञ्चेत** इत्यत्र तं ब्रह्माणं **अनु** पौरोहित्यानुकूल्येन अभिषिञ्चेत ।

---

१. **'नित्यं दुःखं'** इति कुं. पाठः ।
२. **'तं चैव लब्ध्वाभिषिञ्चेत्'** इति कुं. पाठः ।

**तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ।**
**सर्वं श्रेष्ठं वरिष्ठं च निवेद्यं तस्य धीमतः ॥ ६९ ॥**

**प्रसृताग्रभुक्** इत्यत्र **प्रसृतं** प्रकर्षेण सृतं मधुघृतादि । तत्र अग्रभुक् ।

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

**[1]यत्राद्दष्टं भयं ब्रह्म प्रजानां शमयत्युत ।**
**दृष्टं च राजा बाहुभ्यां तद्राज्यं सुखमेधते ॥ ४ ॥**

**यत्राद्दष्टं भयम्** इत्यत्र **अद्दष्टं भयं** भूतप्रेतग्रहादिनिमित्तं भयम् ।

**ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् ।**
**नाहं राज्यमनिर्दिष्टं कस्मैचिद्धि ददाम्युत ॥ १८ ॥**

**नाहं राज्यमनिर्दिष्टम्** इत्यत्र [2]यस्य यावत् निर्दिष्टं तस्य तावदेव ददामि । ततोऽधिकमनिर्दिष्टं न ददामीत्यर्थः ।

॥ इति षट्सप्ततितमोऽध्यायः ॥

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

**[3]सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत् ।**
**उत्थानेन प्रदानेन पूजयेच्चैव धार्मिकान् ॥ ३ ॥**

**उत्थानेन प्रदानेन** इत्यत्र **उत्थानेन** प्रत्युत्थानेन ।

---

१. कुं. ७४ अध्यायः ।
२. अत्र ''अनिर्दिष्टं'' इति पदं अधिकं सर्वत्र उपलभ्यते ।
३. कुं. ७५ अध्यायः ।

**यद्राष्ट्रेऽकुशलं किञ्चिद्राज्ञोऽरक्षयतः प्रजाः।**
**चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ६ ॥**

**यद्राष्ट्रेऽकुशलम्** इत्यत्र अकुशलम् अरक्षयतः इति च पदच्छेदः।

**सदैव त्वां मृदुप्रज्ञं [१] अन्याय्यमतिधार्मिकम्।**
**क्लीबं धर्मघृणायुक्तं न लोको बहुमन्यते ॥ १९ ॥**

**अन्याय्यमतिधार्मिकम्** इत्यत्र **अन्याय्यं** क्षात्रन्यायरहितम्। 'अत्यर्थम्' इति पाठे स्पष्टोऽर्थः।

**समन्ततो विनीतो यो वहत्यस्खलितो हि यः।**
**निर्दोषकर्मवचनात् सिद्धिः कर्मण एव सा ॥ २८ ॥**

**सिद्धिः कर्मण एव सा** इत्यत्र राज्ञः शत्रुशिक्षणादिकं कर्म निर्दोषमिति वचनात् **कर्मणः** तस्य कार्यस्य करणादेव सा सिद्धिर्भवतीति योजना।

**[२] नैकान्तविनिपातेन विहरेदिह कश्चन।**
**धर्मी गृही वा राजा वा ब्रह्मचार्यथवा द्विजः ॥ २९ ॥**

**नैकान्तविनिपातेन** इत्यत्र एकस्मिन्नेव कर्मणि **आन्तं** मरणपर्यन्तं **विनिपातेन** तत्रैव छलेन।

**ये हि वैद्याः कुले जाता अवृत्तिभयपीडिताः।**
**प्राप्यतृप्ताः प्रतिष्ठन्ति धर्मः कोऽभ्यधिकस्ततः ॥ ३३ ॥**

---

१. **'अत्यार्यमति धार्मिकम्'** इति कुं. पाठः।
२. **'नैकान्ते विनिपातेऽपि'** इति कुं. पाठः।

**ये हि वैद्या** इत्यत्र **वैद्याः** विद्यावन्तः। वृत्तिः जीवनोपायः, तदभावः अवृत्तिः। **प्राप्यतृप्ताः** प्राप्यं यदृच्छया प्राप्तुं योग्यं, तेन तृप्ताः।

**किं त्वतः परमं स्वर्ग्यं का ततः प्रीतिरुत्तमा।**
**किं ततः परमैश्वर्यं ब्रूहि मे यदि पश्यसि ॥ ३४ ॥**

**किं तत** इत्यत्र **ततः** वैराग्यात्।

**त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम।**
**भव राजा जय स्वर्गं सतो रक्षाऽसतो जहि ॥ ३६ ॥**

**सतो रक्षाऽसतो जहि** इत्यत्र **सतः** साधून् रक्ष।

॥ इति सप्तसप्ततितमोऽध्यायः ॥

## ॥ अथ अष्टसप्ततितमोऽध्यायः ॥

[१]**व्याख्याता क्षत्रधर्मेण वृत्तिः** इत्यत्र ब्राह्मणस्य आपत्सु क्षत्रधर्मेण वृत्तिर्व्याख्याता शास्त्रे व्याख्याता।

[२]**जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः।**
**एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ७ ॥**

**ब्राह्मणानां भवन्त्युत** इत्यत्र ब्राह्मणानां मध्ये। **कदर्याः** कृपणाः।

**आह्वायका देवलका नक्षत्रा ग्रामयाजकाः।**
**एते ब्राह्मणचण्डाला महापथिकपञ्चमाः ॥ ९ ॥**

---

१. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते।
२. कुं. ७६ अध्यायः।

**आह्वायका देवलका** इत्यत्र **आह्वायकाः** जनानां आह्वाने नियुक्ताः ।

**विकर्मस्थास्तु नोपेक्ष्या विप्रा राज्ञा कथञ्चन ।**
**पथिकः[१] संविभज्यश्च धर्मानुग्रहकारणात्** ॥ २३ ॥

**पथिकः संविभज्यश्च** इत्यत्र **पथिकः** वणिजां पथि शुल्कग्रहणाय नियुक्तः । धर्मानुग्रहकारणात् वित्तात् **संविभज्यः** विभागग्रहणयोग्यः ।

**यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।**
**राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः** ॥ २४ ॥

**यस्य स्म विषय** इत्यत्र स्तेनो द्विजस्य यस्य विषये भवति राज्ञ एवापराधं तं मन्यन्त इति योजना ।

**स [२]चेन्नोपरि वर्तेत कृतवृत्तिः परन्तप ।**
**ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः** ॥ २६ ॥

**स चेन्नोपरि वर्तेत** इत्यत्र कृतवृत्तिः सः उपरि न वर्तेत चेत् धर्मे न वर्तेत वेदिति योग्यपदाध्याहारेण योजना ।

॥ इति अष्टसप्ततितमोऽध्यायः ॥

## ॥ अथ एकोनाशीतितमोऽध्यायः ॥

**[३]केकयानामधिपतिं रक्षो जग्राह दारुणम् ।**
**स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम्** ॥ ७ ॥

**रक्षो जग्राह दारुणम्** इत्यत्र **जग्राह** मनोऽन्तराविशत् ।

१. '**नियम्या संविभज्याश्च धर्मानुग्रहकाम्यया**' इति कुं. पाठः ।
२. '**चेन्नपि निवर्तेत**' इति कुं. पाठः ।; ३. कुं. ७७ **अध्यायः** ।

**न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।**
**नानाहिताग्निर्नायज्वा मा ममान्तरमाविशः ॥ ८ ॥**

**मा ममान्तरमाविश** इत्यादौ ममान्तरं मा विशः ।

॥ इति एकोनाशीतितमोऽध्यायः ॥

## ॥ अथ अशीतितमोऽध्यायः ॥

**[१]सुरा लवणमित्येव तिलान् केसरिणः पशून् ।**
**वृषभान्मधु मांसञ्च कृतान्नं च युधिष्ठिर ॥ ४ ॥**

**सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।**
**एतेषां विक्रयात्तात ब्राह्मणो नरके पतेत् ॥ ५ ॥**

**तिलान् केसरिणः पशून्** इत्यत्र **केसरिणः** रोमविशेषयुक्तान् अविविडवराहादीन् ।

**अजोऽग्निः वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।**
**धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथञ्चन ॥ ६ ॥**

**अजोऽग्नि** इत्यत्र अजमेषादिषु अग्न्यादेः सन्निधानम् ।

**पक्वेनामस्य निमयं न प्रशंसन्ति साधवः ।**
**निमयेत्पक्वमामेन भोजनार्थाय भारत ॥ ७ ॥**

**पक्वेनामस्य निमयं** इत्यत्र **निमयं** विनिमयम्, पक्वं दत्त्वा आमस्वीकारमित्यर्थः ।

---

१. कुं. ७८ अध्यायः ।

[१] **अद्भ्योऽग्निर्ब्रह्मणः क्षत्रं अश्मनो लोहमुत्थितम् ।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २२ ॥**

**अद्भ्योऽग्निर्ब्रह्मणः क्षत्रम्** इत्यत्र अद्भ्यः ब्रह्माण्डोदरे गर्भोदकरूपाद्भ्यः अग्निरुत्थितः । 'तस्मिन् वाय्वम्बुसङ्घर्षदीप्ततेजा महाबलः । प्रादुर्बभूवोर्ध्वशिखः कृत्वा वितिमिरं नभः' इति मोक्षधर्मे नवमाध्याये उक्तवायुना इतस्ततः सङ्कृष्यमाणगर्भोदकात् अग्निसृष्टेर्वक्ष्यमाणत्वात् अद्भ्योऽग्निरित्युक्तम् । अण्डाद्बहिश्चतुर्विंशतितत्त्वसृष्टौ तु 'अग्नेरापः' इति श्रुत्युक्तक्रमेण सृष्टिरिति विवेकः ।

**यथाश्वमेधावभृथे स्नाताः पूता भवन्त्युत ।**
**दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ॥ ३१ ॥**

**दुष्कृतः सुकृतश्चैव** इत्यत्र दुष्टं कुर्वन्तीति **दुष्कृतः** । सुष्ठु कुर्वन्तीति **सुकृतः** ।

**मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।**
**धर्म्याः पापानि [२] कुर्वन्तो गच्छन्ति परमां गतिम् ॥ ३३ ॥**

**मैत्राः क्रूराणि** इत्यत्र **मैत्राः** प्राक् सर्वजनमित्राः पुरुषाः देवब्राह्मणार्थे क्रूराणि भर्त्सनताडनादीनि कुर्वन्तः । **धर्म्याः** धर्मे वर्तमाना देवब्राह्मणार्थे **पापानि** तद्धननादीनि कुर्वन्तः । एवञ्च ब्राह्मणोपद्रवकाले अधर्म एव धर्मोऽभूत्, ब्राह्मणोपद्रवकारिणि मैत्री चेद्धर्मो वाऽधर्मोऽभूदिति भावः ।

---

१. **'अद्भ्योऽग्निर्ब्रह्मतः'** इति कुं. पाठः ।
२. BORI पृ. ३७६; **'कुर्वाणा'** इति कुं. पाठः ।

कार्यं कुर्यान्न वा कुर्यात्स वार्यो वा भवेन्न वा।

**भीष्म उवाच –**

**तस्माच्छस्त्रं ग्रहीतव्यं अन्यत्र क्षत्रबन्धुतः ॥ ३७ ॥**

**तस्माच्छस्त्रं ग्रहीतव्यम्** इत्यत्र क्षत्रबन्धुतः अन्यत्र **तस्मात्** वैश्यशूद्रादेः शस्त्रं ग्रहीतव्यं अपहर्तव्यं न वेति पूर्ववदयमपि प्रश्नः। क्षत्रियस्य तु बलवतो राज्यं योग्यम्, अतः क्षत्रबन्धुतः अन्यत्रेत्युक्तम्।

॥ इति अशीतितमोऽध्यायः ॥

## ॥ अथ एकाशीतितमोऽध्यायः ॥

[१] **धीमान् सत्यधृतिर्दान्तो भूतानामविहिंसकः।**
**अकामद्वेषसंयुक्तः त्रिभिः शुक्लैः समन्वितः ॥ ५ ॥**

**त्रिभिः शुक्लैः समन्वित** इत्यत्र **शुक्लैः** शुद्धैः **त्रिभिर्वेदैः**। यद्वा नित्यनैमित्तिकप्रायश्चित्तरूपै**स्त्रिभिः** कर्मभिः।

[२] **नेदं प्रतिधनं शास्त्रं आपद्धर्मो न शास्त्रतः।**
**आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ॥ ८ ॥**

**नेदं प्रतिधनं शास्त्रं** इत्यत्र **इदं** दक्षिणाविधायकं शास्त्रं **प्रतिधनं** तस्मिन्यजमाने यावद्धनं तिष्ठति तत्प्रति न तदनुकूलतया विधायकं न। शास्त्रतः आपद्धर्माश्च न, न कथ्यन्ते।

**श्रद्धामालम्ब्य यष्टव्यमित्येषा वैदिकी श्रुतिः।**
**मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ ९ ॥**

---

१. कुं. ७९ अध्यायः।; २. BORI पृ. ३७९; 'देयं' इति कुं. पाठः।

**मिथ्योपेतस्य यज्ञस्य** इत्यत्र यथोक्तदानं दास्यामीत्यारभ्य पुनस्तस्य अदानरूपो यो मिथ्यावादः तेनोपेतस्य यज्ञस्य ।

**न वेदानां परिभवात् न शाठ्येन न मायया ।**
**कश्चिन्महदवाप्नोति मा ते भूद्बुद्धिरीदृशी** ॥ १० ॥

**न वेदानां परिभवात्** इत्यत्र **परिभवात्** निन्दनात् ।

**शक्तिस्तु पूर्णपात्रेण सम्मिता नावमा भवेत् ।**
**अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाबलम्** ॥ १२ ॥

**शक्तिस्तु पूर्णपात्रेण** इत्यत्र पूर्णपात्रपदेन ''अष्टमुष्टि भवेत् कश्चित् किञ्चिच्चत्वारि पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते'' इति वचनात् मुष्टीनां अष्टाविंशत्यधिकं शतं [१] उच्यते । 'वृषभं दद्यात्', अथवा 'पूर्णपात्रं दद्यात्' इति आग्नेयस्थालीपाके विहितत्वात् वृषभाख्यदक्षिणाप्रदाने अशक्तस्य पूर्णपात्राख्यसूक्ष्मदक्षिणाया अप्युक्त्या पूर्णपात्रेण **सम्मिता** परिमिता शक्तिः दक्षिणादाने शक्तिस्तु अवमादीनां न भवेत् । अनेनैव न्यायेन उत्तममध्यमाधमदक्षिणानां तेषु तेषु कर्मसु विहितत्वात् श्रुतिः पुरुषशक्तिमनुसृत्यैव प्रवृत्ता । अतः श्रुत्यवमानो न कर्तव्य इति भावः ।

**सोमो राजा ब्राह्मणानां इत्येषा वैदिकी श्रुतिः ।**
**तञ्च विक्रेतुमिच्छन्ति न [२] वृथावृत्तिरिष्यते** ॥ १३ ॥

**सोमो राजा ब्राह्मणानाम्** इत्यत्र **सोमः** रसः । तं सोमं **विक्रेतुं**

---

१. **'पूर्णपात्रमिति'** इति सर्वेष्वपि पुस्तकेषु अधिकमत्रोपलभ्यते ।
२. BORI पृ. ३७९; **'तथावृत्तिः'** इति कुं. पाठः ।

यथोक्तद्रव्यदानेन आदातुमिच्छन्ति । **वृथावृत्तिः** द्रव्यमदत्वा त्त्विष्ट-गृहीतेनानीतसोमलतया वृत्तिः यज्ञादिवर्तनं यस्य सः ।

**तेन क्रीतेन धर्मेण ततो यज्ञः प्रतायते ।**
**इत्येवं धर्ममख्यातमृषिभिर्धर्मकोविदैः ॥ १४ ॥**

**तेन क्रीतेन धर्मेण** इत्यत्र धर्मेण क्रीतेन तेनेति सम्बन्धः ।

**शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः ।**
**तानि सम्यक्प्रणीतानि ब्राह्मणानां महात्मनाम् ॥१६॥**

**शरीरं यज्ञपात्राणि** इत्यत्र ''वेदी च पृष्ठा रोमाणि दर्भा जिह्वा च स्रुक्स्रुवौ'' इति श्रुतेः यज्ञपात्राणि शरीरम् । **तानि सम्यक्प्रणीतानि** इत्यत्र **तानि** शरीराख्ययज्ञपात्राणि **सम्यक्प्रणीतानि** सदाचारसम्पत्त्या सम्यक्प्रणीतानि कर्तव्यानि ।

**[2]वित्तं स्रुक्चित्तमाज्यञ्च पवित्रं ज्ञानमुत्तमम् ।**
**[3]नस्पृष्टत्वं नजिह्मत्वं कालं देशञ्च ते तथा ॥ २० ॥**

**कालं देशञ्च ते तथा** इत्यत्र वित्तादिकालान्ता दश पदार्थाः ते यज्ञाङ्गविधयः । वित्तं तथा स्रुगिति प्रत्येकं सम्बन्धः । **स्पृष्टत्वं** स्पृष्टिः शूद्रादिस्पृष्टिः, तद्राहित्यं **नस्पृष्टत्वम्** । जिह्मत्वं कुटिलत्वं, तद्राहित्यं **नजिह्मत्वम्** ।

॥ इति एकाशीतितमोऽध्यायः ॥

---

१. **त्विष्टिगृहीतेन** सो.मु.पा ।
२. $B_{1-5}, D_{6,8}$; BORI पृ. ३८०; **'चित्तिः'** इति कुं. पाठः ।
३. **'न शाठ्यं नच जिह्मत्वं कालो देशश्च ते दश'** इति कुं. पाठः ।

## ।। अथ द्व्यशीतितमोऽध्यायः ।।

**[1]चतुर्विधानि मित्राणि राज्ञां राजन् भवन्त्युत ।**
**सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ।। ३ ।।**

**धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।। ४ ।।**

**सहार्थो भजमानश्च** इत्यत्र सह **अर्थः** प्रयोजनं यस्य स एकः । उभयोरप्येकग्रामगमने या मैत्री [2]सेत्यर्थः । **भजमानः** स्वप्रयोजनार्थं सेवमानः । **सहजः** स्वशरीरसम्बन्धी । **कृत्रिमः** द्रव्यदानेन सम्पादितः । **धर्मात्मा** धर्मशीलः,स तु केवलमेकस्यापि न, द्वयोरपि न, किन्तु सर्वजनमित्र इति भावः ।

तत्राप्यपवादमाह– **यतो धर्मस्ततो वा स्यात्** इति ।

**यतो धर्मस्ततो वा स्यात् [3]धर्मस्थो वा ततो भवेत् ।। ४ ।।**

**यतो** यस्मिन् पुरुषे धर्मस्तिष्ठति ततस्तत्र वा मित्रभूतः स्यात्, **ततः** धर्मात्मसंसर्गात् अन्योऽपि धर्मस्थो वा भवेत् ।

**धर्माधर्मेण राजानः चरन्ति विजिगीषवः ।**

**धर्माधर्मेण राजान** इत्यत्र धर्माधर्मेण कारणेन । धर्मरक्षणार्थं अधर्म शिक्षणार्थश्चेत्यर्थः ।

---

१. कुं. ८० अध्यायः ।

२. **श्चेत्यर्थः** इति बहुषु पुस्तकेषूपलभ्यते ।

३. $K_{2.5}$,$V_1$,B,$D_a$,$D_n$,$G_{2.4}$,$M_1$; BORI पृ. ३८१; **'मध्यस्थो'** इति कुं. पाठः ।

**चतुर्णां मध्यमौ श्रेष्ठौ नित्यं [1] शङ्क्यौ तथापरौ ।**
**सर्वैर्नित्यं शङ्कितव्यं प्रत्यक्षं कार्यमात्मनः ॥ ७ ॥**

**चतुर्णां मध्यमौ** इत्यत्र **चतुर्णां** पूर्वोक्तमित्राणां मध्ये **मध्यमौ** भजमानसहजौ श्रेष्ठौ । तथा **अपरौ** सहार्थकृत्रिमौ शङ्क्यौ । **आत्मनः** स्वस्य **प्रत्यक्षं** साक्षिमात्रसिद्धं कार्यं सर्वैः शङ्कितव्यम् । कं प्रत्यपि न वदेदिति भावः ।

**अनित्यचित्तः पुरुषः तस्मिन् को जातु विश्वसेत् ।**
**तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ॥ १० ॥**
**एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ।**
**अविश्वासश्च सर्वत्र मृत्युर्नापि विशिष्यते ॥ ११ ॥**

**अनित्यचित्तः पुरुष** इत्यत्र लोके पुरुषः सर्वोऽपि जनः अनित्यचित्तः । तस्मिन् को विश्वसेदिति योजना । तस्मात् **प्रधानं कार्यं** स्थूलं दण्डयात्रादि कार्यम् । **एकान्तेन** नियमेन ।

**अकालमृत्युर्विश्वासोऽविश्वसन् हि विपद्यते ।**
**यस्मिन् करोति विश्वासम् [2] इच्छातस्तस्य जीवति ॥ १२ ॥**

**इच्छातस्तस्य जीवति** इत्यत्र **तस्य** विश्वासिनः **इच्छातः** इच्छायाः सकाशात् जीवति ।

**यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।**
**न तत्रानिच्छतस्तस्य भिद्येरन् सर्वसेतवः ॥ १५ ॥**

---

१. **'शक्यौ'** इत्येव पाठः सर्वत्र उपलभ्यते ।

२. $K_1, B_{2.4}, D_{a1}, D_4$ ; BORI पृ. ३८१; **'इच्छतः'** इति कुं. पाठः ।

**तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति ।**
**यमेवं लक्षणं विद्यात्तममित्रं विदुर्बुधाः ॥ १६ ॥**

**यमेवं लक्षणं विद्यात्तममित्रम्** इत्यत्र **एवं लक्षणं** परोपकाराय प्रागुदकममुञ्चन्तं बहूदकेन स्वक्षेत्रनाशे सति परक्षेत्रनाशो यथा भवति तथा सकृदेव सर्वं जलं मुञ्चन्तं कृषीवलमिव स्थितं पुरुषं विद्यात् तममित्रं विदुर्बुधा इति योजना ।

**क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम् ।**
**ये यस्य क्षयमिच्छन्ति ते तस्य रिपवः स्मृताः ॥ २० ॥**

**क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम्** इत्यत्र **क्षतात्** स्वसुहृदः क्षतात् ।

**नैव द्वौ न त्रयः कार्या न मृष्येरन् परस्परम् ।**
**[१]एकार्थादिह भूतानां भेदो भवति सर्वदा ॥ २६ ॥**

**एकार्थादिह भूतानाम्** इत्यत्र **एकार्थात्** बहूनामपेक्षितादेकर्थात् ।

**ज्ञातिभ्यो [२]बिभियाच्चैव मृत्योरिव यतः तदा ।**
**उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥ ३३ ॥**

**ज्ञातिभ्यो बिभियाच्चैव** इत्यत्र **ज्ञातिभ्यो** दुष्टज्ञातिभ्यो बिभियादिति योजना । अन्यथा पूर्वोत्तरविरोधः स्यात्

॥ इति द्व्यशीतितमोऽध्यायः ॥

---

१. $T_2, G_1, M_{1,3,4}$; BORI पृ. ३८३; **'एकार्थे हेतुभूतानां'** इति कुं. पाठः ।
२. $D_7, S$; BORI पृ. ३८४; **'बिभियाश्चैव'** इति कुं. पाठः ।

॥ अथ त्र्यशीतितमोऽध्यायः ॥

**[१] एवमग्राह्यके तस्मिन् ज्ञातिसम्बन्धिमण्डले ।**
**मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ १ ॥**

**एवमग्राह्यके तस्मिन्** इत्यत्र **अग्राह्यके** अतिविश्वासेनाग्राह्ये ।

**यस्य न स्युर्न वै स स्यात् यस्य स्युः कृत्स्नमेव तत् ॥ ९ ॥**

**यस्य न स्युर्न वै स स्यात्** इत्यत्र यस्य पुरुषस्य ज्ञातयो न **स्युः** अनुकूला न स्युः **स न स्यात्** सुखी न स्यात् । **यस्य स्युः** ज्ञातयः अनुकूलाः स्युः **तत्**तस्मात् कृत्स्नं प्रयोजनं स्यात् ।

**द्वयोरेव [२] प्रचलतोः वृणोम्येकतरं न च ॥ ९ ॥**

**द्वयोरेव प्रचलतोः** इत्यत्र **प्रचलतोः** कोपेन प्रचलतोः सतोरित्यर्थः ।

**सोऽहं कितवमातेव द्वयोरपि महामुने ।**
**नैकस्य [३] जयमाशासे द्वितीयस्य पराजयम् ॥ ११ ॥**

**द्वितीयस्य पराजयम्** इत्यत्र पराजयं नाशासे इति योजना ।

**सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा ।**
**अक्रूरभोजप्रभवाः [४] सर्वेऽप्येते तदन्वयाः ॥ १४ ॥**

**सर्वेऽप्येते तदन्वया** इत्यत्र **तदन्वयाः** [५] कर्मानुगाः ।

---

१. कुं. ८१ अध्यायः ।; २. '**प्रचरतोः**' इति कुं. पाठः ।
३. $S_1, K_{1,2}$; BORI पृ. ३८७; '**जयमाशंसे**' इति कुं. पाठः ।
४. $M_2$; BORI पृ. ३८७; '**सर्वे ह्येते**' इति कुं. पाठः ।
५. **कार्यानुगाः** सो.मु.पा ।

[१]कृतमूलमिदानीन्तु राजशब्दसहायवान् ।
न शक्यं पुनरादातुं वान्तमन्नमिव स्वयम् ॥ १६ ॥

**कृतमूलमिदानीन्तु** इत्यत्र त्वयैव कृतं मूलं यस्य तदैश्वर्यं **कृतमूलम्** ।

तच्च सिद्ध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
[२]महत् क्षयं व्ययं वा स्यात् विनाशो वा पुनर्भवेत् ॥ १८ ॥

**महत् क्षयं व्ययं वा स्यात्** इत्यत्र दत्तराज्यस्य पुनरादाने **महत्क्षयं** जनक्षयः, **व्ययं** वित्तव्ययः, **विनाशः** देहनाशो वा स्यात् ।

सर्व एव गुरुं भारमनड्वान् वहते समे ।
दुर्गे प्रतीतः सुगवो भारं वहति दुर्वहम् ॥ २४ ॥

**सुगवो भारं वहति** इत्यत्र सुगोः शोभनायाः पुष्टाङ्ग्याः गोः पुत्रः **सुगवः** ।

॥ इति त्र्यशीतितमोऽध्यायः ॥

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

[३]ह्रियमाणममात्येन [४]भृतो वा यदि वाऽभृतः ।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥ २ ॥
श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।

---

१. $G_{1,m2}$; BORI पृ. ३८७; '**कृतमूलमिदानीन्तत्**' इति कुं. पाठः ।
२. $V_1 G_2 M$; BORI पृ. ३८७; '**महाक्षयं व्ययो**' इति कुं. पाठः ।
३. कुं. ८२ अध्यायः ।
४. BORI पृ. ३८९; 'भृत्यो वा यदि वा भृतः' इति कुं. पाठः ।

**भृतो वा यदि वाऽभृत** इत्यत्र **भृतः** धनेन भृतो भृत्यः । **अभृतः** तूष्णीं पट्टणवासी ।

[१]**अमात्याश्चापहर्तारो भूयिष्ठं घ्नन्ति भारत ॥ ३ ॥**

**राजकोशस्य [२]गोप्तारो राजकोशविलोपकाः ।**
**समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥ ४ ॥**

**अमात्याश्चापहर्तार** इत्यत्र **अपहर्तारः** स्वयमपहर्तारः । **गोप्तारः** रक्षकाः । **विलोपकाः** उपेक्षादिना नाशकाः ।

**स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनम् ।**
**सर्वं पर्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः ॥ ७ ॥**

**प्रवृत्त्यर्थी पुनः पुनः** इत्यत्र **प्रवृत्त्यर्थी** लोकप्रवृत्तिं ज्ञातुकामः ।

**इति राष्ट्रे परिपतन् बहुभिः पुरुषैः सह ।**
**सर्वेषां राजयुक्तानां दुष्कृतं परिदृष्टवान् ॥ ९ ॥**

**सर्वेषां राजयुक्तानाम्** इत्यत्र राज्ञा एकैकस्मिन्नधिकारे नियुक्तानां राजपुरुषाणाम् ।

**मित्रार्थमभिसन्तप्तो भक्त्या [३]सर्वात्मना गतः ।**
[४]**अयं तवार्थो ह्रियते यो ब्रूयादक्षमान्वितः ॥ १८ ॥**

---

१. 'अमात्या ह्यपहर्तारः' इति कुं. पाठः ।
२. $D_5$; BORI पृ. ३८९; 'गोप्तारं' इति कुं. पाठः ।
३. BORI पृ. ३९१; 'सर्वात्मनाऽऽगतः' इति कुं. पाठः ।
४. BORI पृ. ३९१; 'ह्रियन्ते हि महार्थोश्च पुरुषे विक्रमत्यपि' इति कुं.पाठः

**भक्त्या सर्वात्मना गत** इत्यत्र **भक्त्या** स्नेहेन । तव **अर्थः** प्रयोजन-साधकः अयं ब्राह्मणो **ह्रियते** मन्त्रिभिर्ह्रियते ।

**प्रागेवोक्तं तु दोषोऽयमाचार्यैर्नृपसेवनम् ।**
**[१]अगता कुगतिर्ह्येषा या राज्ञा सहजीविका ॥ २४ ॥**

**अगता कुगतिर्ह्येषा** इत्यत्र **अगता** कैरप्यनवगता ।

**आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।**
**यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ २९ ॥**

**नाहमस्मीति मानव** इत्यत्र अहं नास्मीति मत्वा उपचरेत् । राजगृहं गच्छता प्राणसन्देहेनैव गन्तव्यमिति भावः ।

**यो वा भवद्विनाशेन राज्यमिच्छत्यनन्तरम् ।**
**आन्तरैरभिसन्धाय राजन् सिद्ध्यति नान्यथा ॥ ३६ ॥**

**आन्तरैरभिसन्धाय** इत्यत्र **आन्तरैः** अन्तःस्थितपुरुषैः ।

**बहुनक्रझषग्राहां तिमिङ्गिलगणैर्युताम् ।**
**काकेन बालिशेनेमां अतार्षमहमापगाम् ॥३९॥**

**काकेन बालिशेनेमाम्** इत्यत्र **इमां** संसाराख्याम् ।

**गहनं भवतो राज्यं अन्धकारं [२]तमोवृतम् ।**
**नेह विश्वसितुं शक्यं भवताऽपि कुतो मया ॥ ४२ ॥**

---

१. **'अगते'** इति कुं. पाठः ।
२. **'तमोन्वितम्'** इति कुं. पाठः ।

**अन्धकारं तमोवृतम्** इत्यत्र अन्धं करोतीति **अन्धकारमिति** राज्यस्य विशेषणम् ।

**अतो नायं शुभो वासस्तुल्ये सदसती इह ।**
**वधो ह्येवात्र [1]सुकृतो दुष्कृतो न च संशयः ॥ ४३ ॥**

**वधो ह्येवात्र सुकृत** इत्यत्र शोभनं कर्म यस्य सः **सुकृत्**, तस्य ।

**न हि तेषामहं द्रोग्धा तत्तेषां द्रोहवद्गतम् ।**
**अरेर्हि दुर्हृदाद्भेयं भग्नपृष्ठादिवोरगात् ॥ ५६ ॥**

**तत्तेषां द्रोहवद्गतम्** इत्यत्र गत अवगतम् ।

**ततः कारणमाज्ञाय पुरुषं पुरुषं जहि ।**
**एकदोषा हि बहवो मृद्गीयुरपि कण्टकान् ॥ ६० ॥**

**एकदोषा हि बहवो मृद्गीयुरपि कण्टकान्** इत्यत्र बहवो मिलिताश्चेदित्यर्थः ।

**एकेनैकस्य दोषेण तद्विरुद्धं प्रचोदय ।**
**स तस्य दोषानुद्भाव्य तस्यार्थं ग्राहयिष्यति ॥ ६२ ॥**

**एकेनैकस्य दोषेण तद्विरुद्धं प्रचोदय** इत्यत्र **एकेन** स्वात्मानं प्रत्युक्तेन दोषेण । **प्रचोदय** दण्डं देहीति प्रचोदय ।

* * *

---

१. $D_5$; BORI पृ. ३९४; 'सुकृते दुष्कृते' इति कुं. पाठः ।

भीष्म उवाच–

ततो राजकुले [१] नन्दी सञ्जज्ञे भूयसा पुनः ।
पुरोहितकुले चैव सम्प्राप्ते ब्राह्मणर्षभे ॥ ७१ ॥

ततो राजकुले नन्दी इत्यत्र नन्दी [२] आनन्दः । नदीशब्दवदीकारान्तोऽयं नन्दीशब्दः ।

॥ इति चतुरशीतितमोऽध्यायः ॥

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

युधिष्ठिर उवाच–

[३] सभासदः सहायाश्च सुहृदश्च विशाम्पते ।
परिच्छदास्तथाऽमात्याः कीदृशाः स्युः पितामह ॥ १ ॥

परिच्छदास्तथामात्या इत्यत्र परिच्छदाः परिवाराः ।

प्रसन्नमप्रसन्नं वा पीडितं हतमेव वा ।
आवर्तयति भूयिष्ठं [४] स एको ह्यनुपालितः ॥ ५ ॥

स एको ह्यनुपालित इत्यत्र सः एकः पूर्वोक्तेष्वेकः सुहृदित्यर्थः ।

अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः ।
न त्वां नित्यार्थिनो जह्युः अक्षुद्राः सत्यवादिनः ॥ १० ॥

---

१. $K_{3.4}$, $V_1$, B, S, $D_{a1}$, $D_{4.5.7.8}$; BORI पृ. ३९८; 'नान्दी' इति कुं. पाठः ।

२. आनन्दी सो.मु.पा ।; ३. कुं. ८३ अध्यायः ।

४. 'तदेव ह्यनुपालितम्' इति कुं. पाठः ।

**न त्वां नित्यार्थिनो जह्युः** इत्यत्र नित्यं मोक्षमर्थयन्त इति **नित्यार्थिनः** ।

**नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।**
**यस्त्वेको बहुभिः श्रेयान् कामं तेन गणं त्यजेत्** ॥ १२ ॥

**स्याच्चेदन्यतरग्रह** इत्यत्र एकस्य पुरुषस्य गणस्य च मध्ये अन्यतरग्रहः स्याच्चेत् गणं हित्वा एकं नेच्छेदिति योजना ।

**केवलात् [1]पुरुषाद्राज्ञः कर्मणां नोपपद्यते ।**
**परामर्शो विशेषाणामश्रुतस्येह दुर्मतेः** ॥ २९ ॥

**केवलात्पुरुषाद्राज्ञ** इत्यत्र **अश्रुतस्य** शास्त्रश्रवणरहितस्य दुर्मतेः राज्ञः **केवलात्पुरुषात्** मन्त्रिपुरुषात् कर्मणां विशेषाणामिति व्यधिकरणषष्ठ्यौ । कर्मविशेषाणामित्यर्थः । परामर्शो नोपपद्यते । राजा अतिमूर्खश्चेत् मन्त्रिवचनं शृणोतीति भावः ।

**[2]आगन्तुः [3]सानुरक्तोऽपि काममस्तु बहुश्रुतः ।**
**सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति** ॥ ३८ ॥

**आगन्तुः सानुरक्तोऽपि** इत्यत्र **आगन्तुः** आगन्तुकः, नूतनतया आगतत्वादज्ञातकुलशील इत्यर्थः ।

**[4]यस्त्वल्पेन तु कार्येण सकृदाकारितो भवेत् ।**
**पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति** ॥ ४० ॥

---

१. 'पुनरादानात् कर्मणो' इति कुं. पाठः; २. आगन्तुसानुरक्तोऽपि सो.मु.पा.
३. 'चानुरक्तोऽपि' इति कुं. पाठः ।
४. 'यः स्वल्पेनापि कार्येण सुहृदाक्षारितो भवेत्' इति कुं. पाठः ।

**सकृदाकारितो भवेत्** इत्यत्र सकृत् **आकारित एव** आहूत एव यः अल्पेन कार्येण निमित्तेन **भवेत्** याचको भवेत् ।

**[1]मन्त्रगूढा हि राष्ट्रस्य मन्त्रिणो ये मनीषिणः ।**
**मन्त्रसंहननो राजा मन्त्राङ्गानीतरे जनः ॥ ५० ॥**

**मन्त्रगूढा हि राष्ट्रस्य** इत्यत्र मन्त्रो गूढो यैस्ते **मन्त्रगूढाः** ।

**संविनीय मदक्रोधौ मानमीर्ष्याश्च निर्वृताः ।**
**नित्यं पञ्चोपधातीतैः मन्त्रयेत्सह मन्त्रिभिः ॥ ५२ ॥**

**नित्यं पञ्चोपधातीतैः** इत्यत्र पञ्च च ते उपधातीताश्च, तैः । पञ्चमन्त्रिभिरित्यर्थः । **उपधा** उपधिः ।

**तेषां त्रयाणां त्रिविधं विमर्शं विबुध्य चित्तं विनिवेश्य तत्र ।**
**स्वनिश्चयं तं परनिश्चयञ्च निदर्शयेदुत्तरमन्त्रकाले ॥ ५३ ॥**

**तेषां त्रयाणां त्रिविधं विमर्शम्** इत्यत्र तेषां पञ्चानां मन्त्रिणां मध्ये ।

**॥ इति पञ्चाशीतितमोऽध्यायः ॥**

## ॥ अथ षडशीतितमोऽध्यायः ॥

**शक्र उवाच–**

**[2]किं स्विदेकपदं ब्रह्मन् पुरुषः सम्यगाचरन् ।**
**प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ २ ॥**

---

१. $D_{3.8}$; BORI पृ. ४०४; **'मन्त्रग्राहा हि राज्यस्य'** इति कुं. पाठः ।
२. कुं. ८४ अध्यायः ।

**किं स्विदेकपदं ब्रह्मन्** इत्यत्र [१] एकं पदं मुख्यं नीतिस्थानं यस्य तत् **सान्त्वम्** इत्यर्थः ।

॥ इति षडशीतितमोऽध्यायः ॥

## ॥ अथ सप्ताशीतितमोऽध्यायः ॥

[२] **अष्टाभिश्च गुणैर्युक्तः सूतः पौराणिको भवेत् ।**
**पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम्** ॥ ९ ॥

**अष्टाभिश्च गुणैर्युक्तः सूतः पौराणिक** इत्यत्र पौराणिको वृद्धः **सूतः** सारथिः ।

**श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शनम् ।**
[३] **कल्पयेद्वदमानानां शक्तं अर्थेष्वलोलुपम्** ॥ १० ॥

**कल्पयेद्वदमानानां शक्तम्** इत्यत्र वदमानानां मध्ये **शक्तं** समर्थम् ।

**ततः साक्षिबलं साधु** [४] **द्वैधवादे कृतं भवेत् ।**
**असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ॥**

**द्वैधवादे कृतं भवेत्** इत्यत्र द्वेधा प्रवर्तमानो वादः **द्वैधवादः**, तस्मिन् । **अनाथं** नाथरहितस्थलीयं तत् द्वैधवचनम् ।

**राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् ।**
**आदीपकस्य स्तेनस्य वर्णसङ्करिकस्य च** ॥ १९ ॥

---

१. एकपदं सो.मु.पा.

२. कुं. ८५ अध्यायः । 'अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा' इति कुं.पाठः

३. 'कार्ये विवदमानानां' कुं. पाठः ।; ४. 'द्वैधवादकृतं भवेत्' कुं. पाठः ।

**आदीपकस्य स्तेनस्य** इत्यत्र **आदीपकस्य** गृहदाहकारिणः ।

**न परस्य प्रवादेन परेषां दण्डमर्पयेत् ।**
**आगमानुगमं कृत्वा बध्नीयान्मोक्षयेत वा ॥ २५ ॥**

**आगमानुगमं कृत्वा** इत्यत्र **आगमो** विज्ञानेश्वरादिविधिः, तदनुकूलं कृत्वा ।

॥ इति सप्ताशीतितमोऽध्यायः ॥

## ॥ अथ अष्टाशीतितमोऽध्यायः ॥

**[१]भाण्डागारायुधागारान् प्रयत्नेनाभिवर्धयेत् ।**
**निचयान् वर्धयेत् सर्वांस्तथा यन्त्रकटकङ्कटान् ॥ १२ ॥**

**भाण्डागारायुधागारान्** इत्यत्र **भाण्डम्** अश्वाभरणम्, तस्यागारम् । 'स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने'[२] इत्यमरः ।

**शणं सर्जरसं धान्यमायुधानि शरांस्तथा ।**
**चर्म स्नायुं तथा वेत्रं [३]मुञ्जबल्वजधन्वनान् ॥ १४ ॥**

**मुञ्जबल्वजधन्वनान्** इत्यत्र **बल्वजं** तृणम् । [४]'उलपा बल्वजा प्रोक्ता इषीका काश उच्यते' इति हलः । **धन्वनान्** धनुर्योग्यवृक्षविशेषान् ।

**सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।**
**महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ॥ १६ ॥**

---

१. कुं. ८६ अध्यायः । ; २. अ.को. ३-३-४४
३. BORI पृ. ४१३; '**मुञ्जबल्वजदन्ध्वनान्**' इति कुं. पाठः ।
४. ह.को. २-१९१

**महेष्वासाः स्थपतय** इत्यत्र **स्थपतयः** कारुविशेषाः । **सांवत्सराः** ज्यौतिषिकाः । 'स्थपतिः कारुभेदे च'[१] 'सांवत्सरो ज्यौतिषिकः'[२] इति चामरः ।

॥ इति अष्टाशीतितमोऽध्यायः ॥

## ॥ अथ एकोननवतितमोऽध्यायः ॥

**[३]उत्पत्तिं दानवृत्तिं च शिल्पं सम्प्रेक्ष्य च असकृत् ।**
**शिल्पं प्रति करानेवं शिल्पिनः प्रति कारयेत्** ॥ १४ ॥

**उत्पत्तिं दानवृत्तिं च शिल्पं सम्प्रेक्ष्य च** इत्यत्र **उत्पत्तिं** धनोत्पत्तिम् । **शिल्पं** कार्यकौशलम् । **शिल्पं प्रति करान्** शिल्पं प्रति विद्यमानान् करान्, शिल्पानुकूलकरानित्यर्थः । **शिल्पिनः** [४]कारुचित्रकारादेः ।

**फलं कर्म च सम्प्रेक्ष्य ततः सर्वं प्रकल्पयेत् ।**
**फलं कर्म च [५]निर्हेतुं न कश्चित्सम्प्रवर्तते** ॥ १६ ॥

**फलं कर्म च निर्हेतुम्** इत्यत्र **फलं** व्रीह्यादिरूपफलम् । **कर्म** कृष्यादिरूपं कर्म च । **निर्हेतुं** तदुचितद्रव्यदानाख्यहेतुरहितम् ।

**नोच्छिन्द्यादात्मनो मूलं परेषां चापि तृष्णया ।**
**ईहाद्वाराणि संरुध्य राजा [६]सम्प्रीतिदर्शनः** ॥ १८ ॥

---

१. अ.को. ३-३-६१; २. अ.को. २-८-१४
३. कुं. ८७ अध्यायः ।; ४. **कारुचित्रकादेः** सो.मु.पा.
५. $K_5$; BORI पृ. ४१७; **'निर्हेतु'** इति कुं. पाठः ।
६. BORI पृ. ४१८; **'संवृतदर्शनः'** इति कुं. पाठः ।

**राजा सम्प्रीतिदर्शन** इत्यत्र सम्प्रीतौ सत्यां दर्शनं यस्य सः ।

**न कर्म कुरुते वत्सो [१]भृशदुग्धो युधिष्ठिर ।**
**राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत्** ॥ २१ ॥

**भृशदुग्धो युधिष्ठिर** इत्यत्र **भृशं** अत्यन्तं **दुग्धं** क्षीरं यस्य सः वत्सः, **कर्म** परदिने मातुः स्तनपानाख्यं कर्म, अजीर्त्या मृतो वा भारोद्वहनादिकर्म न कुरुते । येन राज्ञा राष्ट्रमतिदुग्धं स राजा **कर्म** परदिने द्रव्यादानाख्यं कर्म, प्रजाद्रोहान्मृतो वा राज्यपालनाख्यं कर्म न कुरुते इति योजना ।

**आपदर्थश्च [२]निर्यातं राजानो हि विचिन्वते ।**
**राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा** ॥ २३ ॥

**आपदर्थश्च निर्यातम्** इत्यत्र **निर्यातं** धर्मेण राष्ट्रात्प्राप्तम् ।

**[३]बाह्यं जनं भोजयित्वा भोक्तव्यं मध्यमं सुखम् ।**
**एवं नास्य प्रकुप्यन्ति जनाः सुखितदुःखिताः** ॥ २५ ॥

**बाह्यं जनं भोजयित्वा भोक्तव्यं मध्यमं सुखम्** इत्यत्र **मध्यमं सुखं** न्यायप्राप्तधनेन लब्धं सुखम् । **सुखितदुःखिताः** षष्ठांशद्रव्यनाशेन दुःखिताः स्वयोग्यद्रव्यलाभात्सुखिताः । सुखबाहुल्यात् सुखस्य प्रागुक्तिः ।

---

१. $D_{2.4}$; BORI पृ. ४१८; '**भृशं दुग्धो युधिष्ठिर**' इति कुं. पाठः ।
२. $V_1, B_{(missing, G2.3)}$; BORI पृ. ४१८; '**निचयान्**' इति कुं. पाठः ।
३. $V_1, D_7, T_1, G_{2.3}$; BORI पृ. ४१८; '**बाह्यं जनं भेदयित्वा भोक्तव्यः मध्यमः सुखम्**' इति कुं. पाठः ।

**आपत्स्वेव निवोढव्यं भवद्भिः [१] पुङ्गवैरिव ।**
**न वः प्रियतरं कार्यं धनं कस्याञ्चिदापदि ॥ ३३ ॥**

**भवद्भिः पुङ्गवैरिव** इत्यत्र पुमांश्चासौ गौश्च इति व्युत्पत्त्या **पुङ्गवा** वृषभाः ।

**इति वाचा मधुरया श्लक्ष्णया सोपचारया ।**
**स्वरश्मीनभ्यवसृजेत् योगमाधाय कालवित् ॥ ३४ ॥**

**स्वरश्मीनभ्यवसृजेत्** इत्यत्र **स्वरश्मीन्** स्वविनयपाशान् ।

**प्रचारं भृत्यभरणं व्ययं सङ्ग्रामतो भयम् ।**
**योगक्षेमञ्च सम्प्रेक्ष्य गोमिनः कारयेत्करम् ॥ ३५ ॥**

**योगक्षेमञ्च सम्प्रेक्ष्य गोमिन** इत्यत्र **गोमिनः** गोपालान् ।

॥ इति एकोननवतितमोऽध्यायः ॥

* * * *

## ॥ अथ नवतितमोऽध्यायः ॥

**[२] मधुदोहं दुहेत् राष्ट्रं भ्रमरान्न प्रपातयेत् ।**
**वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥ ४ ॥**

**मधुदोहं दुहेत्** इत्यत्र **भ्रमरः** पादपान्मधु यथा तथा **दोहं** स्वकोशपूरणयोग्यं वसु राष्ट्रं दुहेत् ।

---

१. $K_{2.4.5}$, $V_1$, B, $D_a$, $D_n$, $D_{2.3.5.6.8}$; BORI पृ. ४१८; **'सङ्गतैरिह'** इति कुं. पाठः ।

२. कुं. ८८ अध्यायः ।

**न रक्षेत् कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः।**[१]
**संशयं लभते किञ्चित्तेन राजा विगर्ह्यते ॥ २८ ॥**

**वाणिज्यं चाप्यनुष्ठित** इत्यत्र **अनुष्ठितः** तदनुकूलतया स्थितो यः न रक्षेच्चेत् सः राजा **संशयं** अस्ति न वेति संशयं लभते।

**अङ्गमेतन्महद्राज्ये धनिनो नाम भारत।**
**ककुदः सर्वभूतानां धनस्थो नात्र संशयः ॥ ३० ॥**[२]

**ककुदः सर्वभूतानाम्** इत्यत्र **ककुदः** श्रेष्ठः।

॥ इति नवतितमोऽध्यायः ॥

## ॥ अथ एकनवतितमोऽध्यायः ॥

**धर्मज्ञानां धृतिमतां सङ्ग्रामेष्वपलायिनाम्।**[३]
**राष्ट्रे तु येऽनुजीवन्ति ये तु राज्ञोऽनुजीविनः ॥ १७ ॥**

**धर्मज्ञानां धृतिमताम्** इत्यत्र धृतिमतां मध्ये इति योग्यपदाध्याहारः।

**सर्वान् सुपरिणीतांस्तान् कारयेथा युधिष्ठिर।**
**एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ॥ १९ ॥**

**एकान्तेन हि सर्वेषाम्** इत्यत्र **एकान्तेन** नियमेन।

**कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ति करार्दिताः।**
**क्रीणन्तो बहुनाल्पेन कान्तारकृतनिश्चयाः ॥ २३ ॥**[४]

---

१. $D_6$; BORI पृ. ४२४; **'नरश्चेत्'** इति कुं. पाठः।
२. $M_{1,3}$; BORI पृ. ४२४; **'ककुदं'** इति कुं. पाठः।
३. कुं. ८९ **अध्यायः। ज्ञानं धृतिमतामित्यत्रेति** सर्वत्र पाठः उपलभ्यते।
४. $K_3, D_4, T_2$; BORI पृ. ४२७; **'कान्तारकृतविश्रमाः'** इति कुं. पाठः।

**कान्तारकृतनिश्चया** इत्यत्र कान्तारेऽपि कृतः **निश्चयः** भयं नास्तीति निश्चयो येषां ते तथोक्ताः ।

॥ इति एकनवतितमोऽध्यायः ॥

* * *

## ॥ अथ द्विनवतितमोऽध्यायः ॥

**[१]उभौ लोकावभिप्रेक्ष्य राजानमसृजंस्तथा ।**
**मुनयोऽथ महद्भूतमयं धर्मो भविष्यति** ॥ १४ ॥

**मुनयोऽथ महद्भूतमयं धर्मो भविष्यति** इत्यत्र **धर्मः** धारकः ।

**धनानि स्रौति [२]धर्मस्तु धारणाद्वेति निश्चयः ।**
**मानवानां मनुष्येन्द्र स सीमान्तकरः स्मृतः** ॥ १८ ॥

**धनानि स्रौति धर्मस्तु** इत्यत्र **स्रौति** दोग्धि ।

**ब्राह्मणानां सदासूयन् बाल्याद्वैरोचनिर्बलिः ।**
**अथास्माच्छ्रीरपाक्रामत् याऽस्मिन्नासीत्प्रतापिनी** ॥ २४ ॥

**याऽस्मिन्नासीत्प्रतापिनी** इत्यत्र **प्रतापिनी** शत्रुप्रतापिनी ।

**स यथा दर्पसहितं अधर्मं नानुसेवते ।**
**तथा वर्तस्व मान्धातश्चिरं चेत्स्थातुमिच्छसि** ॥ २९ ॥

**स यथा दर्पसहितम्** इत्यत्र **स** भवान् इत्यर्थः ।

---

१. कुं. ९० अध्यायः ।

२. $D_7$,S (Except T2; BORI पृ. ४३०; **'धर्मो हि'** इति कुं. पाठः ।

**मत्तात्प्रमत्तात्पौगण्डात् उन्मत्ताच्च विशेषतः ।**
**कदभ्याशादुदावर्तात्[1] दुर्हृदां चापि सेवनात् ॥ ३० ॥**
**एतेभ्योऽनित्ययुक्तः स्यान्नक्तश्चर्याश्च वर्जयेत् ।**
**आत्याशां चाभिमानं च दम्भं क्रोधं च वर्जयेत् ॥ ३२ ॥**

**मत्तात् प्रमत्तात् पौगण्डात्** इत्यत्र **पौगण्डात्** विकलाङ्गात् । 'विकलाङ्गस्तु पौगण्डः खर्वो ह्रस्वश्च वामनः'[2] इत्यमरः । **कदभ्याशात्** कुत्सितानां सकाशात् । **उदावर्तात्** उदकानामावर्तात् । 'स्यादावर्तोऽम्भसां भ्रमः'[3] इत्यमरः ।

**नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथा गते ।**
**उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥ ३८ ॥**

**नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथा गते** इत्यत्र **गते** गमने **घोराः** क्रूराः ।

**द्वावाददाते[4] ह्येकस्वं द्वयोश्च बहवोऽपरे ।**
**कुमार्यः सम्प्रलुप्यन्ते तदाहुर्नृपदूषणम् ॥ ४० ॥**

**द्वावाददाते ह्येकस्वम्** इत्यत्र एकस्य **स्वं** वित्तं द्वावाददाते, द्वयोश्च वित्तं बहव आददते इति योजना ।

॥ इति द्विनवतितमोऽध्यायः ॥

---

१. **'निन्दिताच्चासदाचारात्'** इति कुं. पाठः ।
२. अ.को. २-६-४६; **विकलाङ्गस्त्वपोगण्डः** इति प्रचलितोऽमरपाठः ।
३. अ.को. १-१०-६
४. त्वेकस्वम् । **'ह्येकस्य द्वयोः सुबहवोऽपरे'** इति कुं. पाठः ।

## ।। अथ त्रिनवतितमोऽध्यायः ।।

उचथ्य उवाच–

**[1] कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः ।**
**सम्पद्यदैषा भवति सा बिभर्ति सुखं प्रजाः ।। १ ।।**

**सम्पद्यदैषा** इत्यत्र यदा एषा सम्पत् इत्यर्थः ।

**यो न जानाति निर्हर्न्तुं वस्त्राणां रजको मलम् ।**
**रत्नानि वा शोधयितुं यथा नास्ति तथैव सः ।। २ ।।**

**यथा नास्ति तथैव स** इत्यत्र यथा नास्ति तथैव सः इत्यस्य अविद्यमानप्राय इत्यर्थः ।

**दुर्बलस्य च यच्चक्षुर्मुनेराशीविषस्य च ।**
**अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ।। १४ ।।**

**मा स्म दुर्बलमासद** इत्यत्र **आसद** आसादयः । अन्तर्णीतो णिच् ।

**विमानितो हतः क्लिष्टस्त्रातारं चेन्न विन्दते ।**
**अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ।। १८ ।।**

**अमानुषकृतस्तत्र दण्डो हन्ति** इत्यत्र **अमानुषकृतः** दैवकृतः ।

**मा स्म तात [2] बलस्थान्वै युञ्जीथा दुर्बलं जनम् ।**
**मा त्वा दुर्बलचक्षूंषि दहन्त्वग्निरिवाशयम् ।। १९ ।।**

---

१. कुं. ९१ अध्यायः ।
२. 'बलस्थस्त्वं भुञ्जीथाः' इति कुं. पाठः ।

**बलस्थान्वै युञ्जीथा दुर्बलं जनम्** इत्यत्र दुर्बलं जनं मा युञ्जीथा इति योजना।

**यदा राष्ट्रे धर्ममग्र्यं चरन्ति संस्कारं वा राजगुणं ब्रुवाणाः।**
**तैश्चाधर्मश्चरितो धर्ममोहात् तूर्णं [1] दह्यात्सुकृतं दुष्कृतश्च ॥२७॥**

**तूर्णं दह्यात्सुकृतं दुष्कृतश्च** इत्यत्र अन्ते कृतं दुष्कृतं प्राकृतं सुकृतं दह्यादिति योजना।

**त्रायते हि यदा सर्वं वाचा कायेन कर्मणा।**
**पुत्रस्यापि न मृष्येत् च स राज्ञो धर्म उच्यते ॥ ३२ ॥**

**पुत्रस्यापि न मृष्येत्** इत्यत्र दुश्चरितं न मृष्येदिति योग्यपदाध्याहारः।

**तत्कुरुष्व महाराज वृत्तं राजर्षिसेवितम्।**
**आतिष्ठ दिव्यं पन्थानं अह्नाय [2] भरतर्षभ ॥ ५७ ॥**

**अह्नाय भरतर्षभ** इत्यत्र **अह्नाय** निश्चयेन।

॥ इति त्रिनवतितमोऽध्यायः ॥

## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

**[3] अधर्मदर्शी यो राजा बलादेव प्रवर्तते।**
**क्षिप्रमेवापयातोऽस्माद् उभौ प्रथममध्यमौ ॥ ८ ॥**

---

१. 'जह्यात्सुकृतं' इति कुं. पाठः।;
२. BORI पृ. ४४०; 'पुरुपर्षभ' इति कुं. पाठः।; ३. कुं. ९२ अध्यायः।

**उभौ प्रथममध्यमौ** इत्यत्र **प्रथमो** धर्मः, **मध्यमः** अर्थसहितः कामः ।

॥ इति पञ्चनवतितमोऽध्यायः ॥

## ॥ अथ षण्णवतितमोऽध्यायः ॥

**[१] अग्राम्यचरितां वृत्तिं योन सेवेत नित्यदा ।**
**जितानामजितानाञ्च क्षत्रधर्मादपैति सः ॥ ३२ ॥**

**जितानामजितानाञ्च** इत्यत्र **जितानां** युद्धे मृतानां, **अजितानां** जयिनाञ्च नृपाणां वृत्तिमिति पूर्वेणान्वयः ।

**[२] त्यक्तोपान्तं [३] मद्यहतं द्यूतस्त्रीमृगयापरम् ।**
**कार्ये महति युञ्जानो हीयते नृपतिः श्रिया ॥ १९ ॥**

**त्यक्तोपान्तं मद्यहतम्** इत्यत्र **त्यक्तोपान्तं** त्यक्तस्वसमीपम् ।

**न जातु बलवान् भूत्वा दुर्बले विश्वसेत् क्वचित् ।**
**भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ३९ ॥**

**भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यत** इत्यत्र **भारुण्डः** भेरुण्डः पक्षिविशेषो वा ।

॥ इति षण्णवतितमोऽध्यायः ॥

* * *

---

१. कुं. ९३ अध्यायः ।
२. $T_2$,$M_{1.3.4}$; BORI पृ. ४४५; **'त्यक्तोपात्तं'** इति कुं. पाठः ।
३. $D_a$,$D_4$; BORI पृ. ४४५; **'मद्यरतं'** इति कुं. पाठः ।

## ।। अथ सप्तनवतितमोऽध्यायः ।।

**यस्य[१] योधाः सुसन्तुष्टाः [२]सान्त्विताः सूपवासिताः ।**
**अल्पेनापि स दण्डेन महीं जयति पार्थिवः ।। ४ ।।**

**सान्त्विताः सूपवासिता** इत्यत्र **सूपवासिताः** सुष्ठु उप समीपे **वासिताः** वासवन्तः ।

**इदं वृत्तं मनुष्येषु वर्तते यो महीपतिः ।**
**उभौ लोकौ विनिर्जित्य विजये सम्प्रतिष्ठते ।। २५ ।।**

**इदं वृत्तं मनुष्येषु वर्तत** इत्यत्र **वर्तते** वर्तयते ।

**।। इति सप्तनवतितमोऽध्यायः ।।**

## ।। अथ अष्टनवतितमोऽध्यायः ।।

**[३]अशक्तं[४] क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः ।**
**त्राणायाप्यसमर्थं तं मन्यमानमतीव च ।। ५ ।।**

**अशक्तं क्षत्रियं मत्वा** इत्यत्र **त्राणाय** स्वराज्यरक्षणायापि असमर्थं तं मन्यमानं तं क्षत्रियं अतीवाशक्तं मत्वा अपरः क्षत्रियः शस्त्रं गृह्णातीति योजना ।

---

१. कुं. ९४ अध्यायः ।
२. **'स्वनुरक्ताः सुपूजिताः'** इति कुं. पाठः ।
३. कुं. ९५ अध्यायः ।
४. BORI पृ. ४५०; **अशक्तः** इति पाठः बहुषु पुस्तकेषु दृश्यते । **'अशस्त्रं'** इति कुं. पाठः ।

**[१] नेषुलिप्तो न कर्णी स्यात् असतामेतदायुधम् ।**
**यथार्थमेव योद्धव्यं न क्रुद्ध्येत जिघांसतः ॥ ११ ॥**

**नेषुलिप्तो न कर्णी स्यात्** इत्यत्र [२] **इषुलिप्तः** विषादिना लिप्तो न स्यात् । **कर्णः** कपटोपायः, तद्वान् कर्णी न स्यादिति योजना ।

**[३] महाद्दतिरिवाध्माता स्वकृतेनैव वर्धते ।**
**ततः समूलो ह्रियते नदीकूलादिव द्रुमः ॥ २५ ॥**

**महाद्दतिरिवाध्माता** इत्यत्र **महाद्दतिः** महती दृतिः वायोर्द्रवणहेतुभूता भस्त्रा आध्माता **स्वकृतेन** स्वेन कृतप्रयत्नेनैव वर्धते किञ्चित्कालं वर्धते ।

**अथैनमभिनन्दन्ति[४] भिन्नं कुम्भमिवाश्मनि ।**
**तस्माद्धर्मेण विजयं कोशं लिप्सेत भूमिपः ॥ २६ ॥**

**अथैनमभिनन्दन्ति** इत्यत्र अश्मनि भिन्नं कुम्भमिव स्थितमेनं **अथ** नाशानन्तरं [५] अभिनन्दन्ति ।

**॥ इति अष्टनवतितमोऽध्यायः ॥**

---

१. **नेषुर्लिप्तो** इति कुं. पाठः ।

२. **इषुर्लिप्तः** श्री.सो.मु.पा ।

३. क्वचित् दृतिस्थाने सर्वत्र द्रुतिरिति पाठः । **'महाद्दतिरिवाध्मातः'** इति कुं. पाठः ।

४. $K_{1-3}, V_1, B_{0.3}, T_1, G_{3.4}, D_n, D_{2.3,5-8}$; BORI पृ. ४५३; **'-मभिनिन्दन्ति'** इति कुं. पाठः ।

५. **अभिनन्दति** सो.मु.पा ।

## ।। अथ एकोनशततमोऽध्यायः ।।

**[१] बलेन विजितो यश्च न तं युध्येत भूमिपः ।**
**संवत्सरं विप्रणयेत् [२] तस्माज्ज्ञातः पुनर्भवेत्** ।। ४ ।।

**संवत्सरं विप्रणयेत्** इत्यत्र दुर्बले वैरं कुर्वति सति तेन सह संवत्सरपर्यन्तं **विप्रणयेत्** विविधप्रकारैः स्नेहं कुर्यात् । पुनः तस्मात् **ज्ञातः** दृष्टो भवेत् । उपायेन तं पादाक्रान्तं कुर्यादित्यर्थः ।

**न तु वध्ये धनं तिष्ठेत् पिबेयुर्ब्राह्मणाः पयः ।**
**युञ्जीरन्वाप्यनडुहः क्षन्तव्यं वा पुनर्भवेत्** ।। ६ ।।

**न तु वध्ये धनं तिष्ठेत्** इत्यत्र **वध्ये** वधयोग्येऽपि वैश्ये, [३] अपराधिन्यपीत्यर्थः । धनं **न तिष्ठेत्** न स्थापयेत् । तद्धनापहारं कुर्यात्, न तु तमेव हन्यादित्यर्थः । ब्राह्मणाः पयः पिबेयुरित्यनेन गावः सन्ति चेत् ब्राह्मणानां देया इति सूचितम् । अनडुहः अल्पापराधे सति त एव युञ्जीरन् । वेत्यनेन स्थूलापराधे सति राजानः स्वयमेव सेनासन्नाहोद्वहनादौ युञ्जीरन्निति श्रुतम् । पुनः क्षन्तव्यं वेत्यनेन स्थूलापराधे सति देशान्निर्यापणं कार्यमिति सूचितम् ।

**मर्यादां शाश्वतीं भिन्द्याद् ब्राह्मणं योऽभिलङ्घयेत्** ।। ९ ।।

**मर्यादां शाश्वतीं भिन्द्याद्** इत्यत्र **भिन्द्यात्** सन्ध्यावन्दनादिमर्यादां विपरीताचरणेन नाशयेत् । पूर्वां सन्ध्यां पश्चिमाभिमुखः कुर्यात् इत्यादि ।

---

१. कुं. ९६ अध्यायः ।; २. 'तस्माज्ज्ञातः' इति कुं. पाठः ।
३. अपराधिनापीत्यर्थः सो.मु.पा ।

**अथ चेल्लङ्घयेदेव मर्यादां क्षत्रियब्रुवः ।**
**असङ्ख्येयस्तदूर्ध्वं स्याद् अनादेयश्च संसदि ॥ ९ ॥**

**असङ्ख्येयस्तदूर्ध्वं स्याद्** इत्यत्र मर्यादां **लङ्घयेत्** उल्लङ्घयेत् सन्ध्या-वन्दनादिकं न कुर्यादेवेत्यर्थः । **असङ्ख्येयः** राज्ञां गणनायामगणय्यः स्यादित्यर्थः ।

**सहसा न्यायभूतानि क्षिप्रमेव प्रसादयेत् ।**
**सान्त्वेन भोगदानेन स राज्ञां परमो नयः ॥ १२ ॥**

**सहसा न्यायभूतानि** इत्यत्र **न्यायभूतानि** न्यायोपेतप्रजाः ।

**भुज्यमाना ह्यभोगेन स्वराष्ट्रादभितापिताः ।**
**अमित्रान्पर्युपासीरन् व्यसनौघप्रतीक्षिणः ॥ १३ ॥**

**भुज्यमाना ह्यभोगेन** इत्यत्र **भुज्यमानाः** प्राक् भोगान् भुञ्जानाः राजोपद्रवे सति पुनरभोगेन अभितापिताः स्वराष्ट्रात् गत्वा अमित्रान् पर्युपासीरन्निति योजना ।

**अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि ।**
**सन्तुष्टाः सर्वतो राजन् राजव्यसनकाङ्क्षिणः ॥ १४ ॥**

**अमित्रोपग्रहं चास्य** इत्यत्र ते जना **अस्य** पूर्वभूपतेः आपदि सत्यां **अमित्रोपग्रहं** अमित्रैः उपग्रहं समीपस्थराज्यग्रहणं **कुर्युः** कारयेयुः ।

**नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथञ्चन ।**
**जीवितं ह्यप्यतिच्छिन्नः सन्त्यजेदेकदा नरः ॥ १५ ॥**

**नामित्रो विनिकर्तव्य** इत्यत्र **विनिकर्तव्यः** अपकर्तव्यः ।

**अल्पेनापि [1] स संयुक्तः तुष्यते नापराधितः ।**
**शुद्धं जीवितमेवापि तादृशो बहुमन्यते ॥ १६ ॥**

**अल्पेनापि स संयुक्त** इत्यत्र अल्पेन उपकारेण **संयुक्तः** संयोजितः ।

॥ इति एकोनशततमोऽध्यायः ॥

## ॥ अथ शततमोऽध्यायः ॥

**[2] यथैव क्षेत्रनिर्याता निर्यातं क्षेत्रमेव च ।**
**हिनस्ति [3] धान्यं कक्षं वा न च धान्यं विनश्यति ॥ ६ ॥**

**हिनस्ति धान्यं कक्षं वा** इत्यत्र **धान्यं** धानायोग्यं क्षेत्रं विनिर्दहेत् तदा **कक्षं** क्षेत्रमावृत्य स्थितं कक्षं हिनस्ति, **धान्यं** पुनस्तत्रोप्तबीजाज्जायमानं धान्यं न विनश्यति ।

**यदि शूरं तथा क्षेमे प्रतीक्षेरन्यथा [4] भयम् ।**
**[5] प्रति शूरं जनाः कुर्युर्न च तद्वर्तते तथा ॥ १६ ॥**

**यदि शूरं तथा क्षेम** इत्यत्र **जनाः** प्रागुक्ताः अशक्तपुरुषाः यथा भयमागतं तथा क्षेमे **शूरं** कश्चन शूरं यदि प्रतीक्षेरन् तदा कश्चित्प्रति शूरं कुर्युरेव । तत् सकृदागतं भयं **तथा** तथैव न वर्तते च इति योजना ।

**[6] मा स्म तादृशांस्तात जनिष्ठाः पुरुषाधमान् ॥ २० ॥**

---

१. '**च**' इति कुं. पाठः । ; २. कुं. ९७ **अध्यायः** ।
३. '**धान्यकक्षं च**' इति कुं. पाठः ।; ४. '**भये**' इति कुं. पाठः ।
५. '**प्रतिरूपं**' इति कुं. पाठः ।
६. '**मा स्म तांस्तादृशांस्तात जनिष्ठाऽधर्मपूरुषान्**' इति कुं. पाठः ।

**ये सहायान्रणे हित्वा स्वस्तिमन्तो गृहान् ययुः ॥ २१ ॥**

**मा स्म तादृशांस्तात जनिष्ठा** इत्यत्र तादृशान् पुरुषाधमान् उपमीकृत्य **मा जनिष्ठाः** तव कुले मा जनयिष्ठा इति योजना ।

**न गृहे मरणं तात क्षत्रियाणां प्रशस्यते ।**
**शौण्डीराणामशौण्डीर्यं अधर्मं कृपणञ्च तत् ॥ २८ ॥**

**शौण्डीराणामशौण्डीर्यम्** इत्यत्र **शौण्डीराणां** युद्धकुशलानाम् ।

॥ इति शततमोऽध्यायः ॥

## ॥ अथ एकाधिकशततमोऽध्यायः ॥

[१] **अम्बरीपो हि नाभागः स्वर्गं गत्वा सुदुर्लभम् ।**
**ददर्श सुरलोकस्थं शक्रेण [२] सचिवं सह ॥ ३ ॥**

**ददर्श सुरलोकस्थं शक्रेण सचिवं सह** इत्यत्र **सचिवं** स्वसचिवम् ।

**देवराज सुदेवोऽयं मम सेनापतिः पुरा ।**
[३] **आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम् ॥१०॥**

**सोऽयं कस्मादतीव माम्** इत्यत्र **अति** अतिक्रम्य वर्तमान इव तिष्ठतीति योजना ।

**तथा तस्मिन् शुभे काले [४] यज्ञे यज्ञं वितन्वतः ।**
**अश्वमेधं महायागं देवानां हितकाम्यया ॥ १८ ॥**

---

१. कुं. ९८ अध्यायः ।; २. BORI पृ. ४६१; '**सचिवैः**' इति कुं. पाठः ।
३. BORI पृ. ४६२; 'आसाद्योधः' इति कुं. पाठः ।; ४. '**तव**' इति कुं. पाठः

**तस्य ते खलु विघ्नार्थमागता राक्षसास्त्रयः ॥ १६ ॥**

**यज्ञे यज्ञं वितन्वत** इत्यत्र यज्ञे इत्यस्य विघ्नार्थमित्यनेन सम्बन्धः ।

**विह्वलाश्च प्रजाः सर्वाः सर्वे च तव सैनिकाः ।**
**निराकृतस्तया[1] चासीत्सुदेवः सैन्यनायकः ॥ १७ ॥**

**निराकृतस्तया** इत्यत्र तया राक्षसचम्वा

**तत्रामात्यवचः श्रुत्वा निरस्तः सर्वकर्मसु ।**
**श्रुत्वा तेषां वचो भूयः सोपधं वसुधाधिपः ॥ १८ ॥**
**सर्वसैन्यसमायुक्तः सुदेवः [2]प्रहितस्त्वया ।**
**राक्षसानां वधार्थाय दुर्जयानां नराधिप ॥ १९ ॥**

**तत्रामात्यवचः श्रुत्वा** इत्यत्र **तत्र** सुदेवस्य पराभवकाले अमात्यवचः श्रुत्वा सर्वकर्मसु सकृ**न्निरस्तः** धिकृतः सुदेवः भूयस्तेषाममात्यानामेव **सोपधं** सर्वसैन्याख्योपाधिना सहितं वचः भूयः श्रुत्वा त्वया सर्वसैन्यसमायुक्तः सुदेवः प्रहित इति योजना ।

**नाजित्वा राक्षसीं सेनां पुनरागमनं तव ।**
**[3]बन्दान्मोक्षमकृत्वा वा न चागमनमिष्यते ॥ २० ॥**

**बन्दान्मोक्षमकृत्वा वा** इत्यत्र **बन्दात्** बन्दीकरणात् ।

**नाम्बरीपः कलामेकामेषां क्षपयितुं क्षमः ।**
**दिव्यास्त्रबलभूयिष्ठः [4]किमङ्गः पुनरीदृशः ॥ २३ ॥**

---

१. **'निराकृतस्तु यच्चासीत्'** इति कुं. पाठः ।; २. **'प्रेरितस्त्वया'** इति कुं. पाठः।
३. **'बन्दीमोक्षमकृत्वा च'** इति कुं. पाठः ।; ४. **'किमहं'** इति कुं. पाठः ।

**किमङ्गः पुनरीदृश** इत्यत्र **अङ्गः** अङ्गभूतः ईदृशोऽहं किं पुनः? अङ्गिना अम्बरीषेण कर्तुमशक्यं कार्यं अङ्गेन मया कथं कर्तुं शक्यमिति भावः ।

**[१] यच्च त्वं विजितः सर्वैर्मन्त्रिभिः सोपधैः [२] सह ॥ २४ ॥**
**ततो रुद्रं महादेवं प्रपन्नो जगतः पतिम् ।**
**श्मशाननिलयं देवं तुष्टाव वृषभध्वजम् ॥ २५ ॥**

**यच्च त्वं विजित** इत्यत्र **यत्** यस्मात्कारणात् **सोपधैः** सेनाख्योपधिसहितैः सर्वैर्मन्त्रिभिः । सह त्वं जितः ततः कारणादित्युत्तरेणान्वयः ।

**मायया मोहितो भूमौ न पदं कर्तुमर्हसि ।**
**रथस्थस्त्रिदशान् सर्वान् जेष्यसि त्वं सदानवान् ॥ ३५ ॥**

**रथस्थस्त्रिदशान् सर्वान्** इत्यत्र **त्रिदशान्** यज्ञे आहुतिग्रहणाय आगतान् देवान्, सर्वान् जनांश्च । जनैः सह केचिद्देवा अपि बन्दीकृता इति भावः ।

**घातयित्वा च तान् सर्वान् बाहुयुद्धे त्वयं हतः ।**
**विषमं प्राप्य भूपाल वियमश्च निपातितः ॥ ३७ ॥**

**विषमं प्राप्य** इत्यत्र **विषमं** विषमाख्यं [३] दैत्यं भूमौ प्राप्य ।

**द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः ।**
**हस्तिहस्तहरः खड्गः स्फ्यो भवेत्तस्य संयुगे ॥ ४५ ॥**

---

१. 'यत्र त्वं सचिवैः' इति कुं. पाठः ।; २. 'नृप' इति कुं. पाठः ।
३. दैव्यं सा.मु.पा.

**नागदन्तकृतत्सरुः** इत्यत्र **त्सरुः** खड्गमुष्टिः । 'त्सरुः खड्गादि-मुष्टौ स्यान्मेखला तन्निबन्धने'[१] इत्यमरः । **स्फ्यः** यज्ञरक्षणाय कृतः खादिरआयुधविशेषः ।

**छिन्धि भिन्धीति यः शब्दः श्रूयते वाहिनीमुखे ।**
**सामानि सामगास्तस्य गायन्ति यमसादने** ॥ ४८ ॥

**गायन्ति यमसादन** इत्यत्र **यमसादने** युद्धे ।

**उत्तिष्ठते कबन्धोऽत्र सहस्रे पतिते तु यः ।**
**स यूपस्तस्य शूरस्य खादिरोऽष्टास्रिरुच्यते**[२] ॥ ५१ ॥

**खादिरोऽष्टास्रिरुच्यत** इत्यत्र **अष्टास्रिः** अष्टधारः ।

[३]**इडोपहूतं क्रोशन्ति कुञ्जरास्त्वङ्कुशेरिताः** ॥ ५२ ॥

**इहोपहूतम्** इत्यत्र **उपहूतं** देवानामुपाह्वानम् ।

**पताकाध्वजवानीरा हतवाहनवारणा ।**
**शोणितोदकसम्पूर्णा दुस्तरा पारगैर्नरैः** ॥ ५९ ॥

**पताकाध्वजवानीरा** इत्यत्र **वानीरः** वेत्रम् । 'वानीरो वञ्जुलः शीतो निचुलो वेतसः स्मृतः'[४] इति हलः ।

* * *

---

१. अ.को. २-८-९०

२. $K_5$,$D_{6.8}$ ; BORI पृ.४६४; '**खादिरोऽष्टाश्रिरुच्यते**' इति कुं. पाठः ।

३. '**इडोपहूताः क्रोशन्ति कुञ्जरास्त्वङ्कुशेरिताः**' इति कुं. पाठः ।

४. ह.को. २-२०१

**[१] सदस्योत्तरयोधाग्निः आग्नीध्रश्चोत्तरां दिशम् ।**
**शत्रुसेनाकलत्रस्य सर्वलोकानदरूतः ॥ ६४ ॥**

**सदस्योत्तरयोधाग्निः** इत्यत्र सदस्योत्तरो योऽयं योधाग्निः स आग्नीध्रस्य च **उत्तरां दिशम्** उत्तरस्यां दिशि वर्तमानः ।

**यस्य तूभयतो व्यूहे भवत्याकाशमग्रतः ।**
**सास्य [२] वेदी तदा यज्ञे तस्य वेदास्त्रयोऽग्नयः ॥ ६५ ॥**

**तस्य वेदास्त्रयोऽग्नय** इत्यत्र **वेदाः** धनुर्वेदाः ।

**अहं वृत्रं बलं पाकं महाकायं विरोचनम् ।**
**दुरावारं च नमुचिं शतमायं च शम्बरम् ॥ ७५ ॥**

**अहं वृत्रं बलं पाकम्** इत्यत्र बिडौजाः पाकशासनः इति वचनात् **पाकं** पाकनामकदैत्यम् ।

॥ इति द्व्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्र्यधिकशततमोऽध्यायः ॥

**[३] तान् दृष्ट्वाऽरीन् विजयत भूत्वा सन्त्यागबुद्धयः ।**
**नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ॥ ६ ॥**

**भूत्वा सन्त्यागबुद्धय** इत्यत्र **सन्त्यागे** सम्यक् प्राणत्यागे बुद्धिर्येषां ते तथोक्ताः ।

---

१. **'सदस्या दक्षिणा योधा'** इति कुं. पाठः ।
२. **'वेदिस्तदा यज्ञैः नित्यं व्यूहास्त्रयोऽग्नयः'** इति कुं. पाठः ।
३. कुं. ९९ अध्यायः ।

हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य परस्परम् ।
तेषां च भूमिं रक्षेयुः भग्नान्नात्यनुसारयेत् ॥ १२ ॥

भग्नान्नात्यनुसारयेत् इत्यत्र भग्नान् पलायितान् भटान् नात्यनुसारयेत् अत्यन्तं नानुगच्छेत् ।

॥ इति त्र्यधिकशततमोऽध्यायः ॥

* * *

## ॥ अथ चतुरधिकशततमोऽध्यायः ॥

भीष्म उवाच–

[१] सन्त्येव हि स्थिता धर्म उपपत्त्या तथापरे ।
साध्वाचारतया [२] केचित्तथैवौपायिका अपि ॥ २ ॥

उपपत्त्या तथापर इत्यत्र उपपत्त्या तत्कालोचितयुक्त्या[३] । औपायिकाः उपायेन प्रतिवर्तमानाः ।

निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ॥ ३ ॥

तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ॥ ४ ॥

प्रवक्ष्याम्यथ नैगमम् इत्यत्र नैगमं निगमोक्तम् ।

अग्रतः पुरुषानीकं शक्तं चापि कुलोद्भवम् ।
आवासस्तोयवान् मार्गः पर्याकाशः प्रशस्यते ॥ १५ ॥

---

१. कुं. १०० अध्यायः ।
२. BORI पृ. ४६९ ; 'केचित्ततथैवोपायिकादपि' इति कुं. पाठः ।
३. तत्कालोचितवृत्त्या श्री.सां.मु.पा ।

**पर्याकाशः प्रशस्यत** इत्यत्र परितः आकाशः तरुगुल्मच्छेदादिना अवकाशो यस्य स तथोक्तः ।

**[१]उपन्यासावतरणं पदातीनाञ्च गूहनम् ।**
**हतशत्रुप्रतीघातं आपदर्थं परायणम् ॥ १८ ॥**

**उपन्यासावतरणम्** इत्यत्र **उप** समीपे चतुर्दिक्षु रक्षकभटानां **न्यासो** विन्यासो यस्य **तदवतरणं** सेनावतरणम् । यद्वा **उप** समीपे कण्टकमयावृतेन्यासो विन्यासो यस्य तत् । **आपदर्थं** आपद्दानार्थं **परायणं** परान् प्रति गमनम् ।

**अकर्दमामनुदकां अमर्यादामलोष्टकाम् ।**
**अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ॥ २१ ॥**

**अमर्यादामलोष्टकाम्** इत्यत्र **अमर्यादाम्** एतावदेव गन्तव्यमिति मर्यादारहिताम् ।

**पदातिबहुला सेना दृढा भवति भारत ।**
**रथाश्वबहुला सेना सुदिनेषु [२]च शस्यते ॥ २१ ॥**

**रथाश्वबहुला सेना सुदिनेषु च शस्यत** इत्यत्र **सुदिनेषु** हेमन्तशिशिरवसन्तदिनेषु ।

**प्रसुप्तांस्तृषितान् श्रान्तान् प्रकीर्णान्नाभिघातयेत् ।**

---

१. 'उपन्यासोऽपसर्पाणां' इति कुं. पाठः ।

२. $K_5$, $V_1$, B. $D_a$, $D_n$, $D_{2.3.5.6.8}$; BORI पृ. ४७२ ; **'प्रशस्यते'** इति कुं. पाठः ।

**मोक्षे प्रयाणे चलने पानभोजनकालयोः ।**
**सन्धिक्षिप्तानतिक्षिप्तान् विहतान्[१] प्रतनूकृतान् ॥ २७ ॥**
**[२]अवश्रद्धान् कृतारम्भान् [३]उपन्यासप्रतापितान् ।**
**बहिश्चरानुपन्यासान् कृतवेश्मानुसारिणः ॥ २८ ॥**

**मोक्षे प्रयाणे चलन** इत्यत्र **मोक्षे** क्वचित् स्थले सेनामोक्षणसमये । **प्रयाणे** यात्राकाले । **चलने** पलायने । **सन्धिक्षिप्तान्** सम्यक् **धिक्षिप्तान्** धिक्कृतान् कष्टं प्राप्तान्वा । **अतिक्षिप्तान्** अतिशयेन विक्षेपाख्यनिग्रह-स्थानं प्राप्तान्, अद्य मे महत्प्रयोजनम् तस्मिन्नवसिते सति वक्ष्यामीति वदत इत्यर्थः । **प्रतनूकृतान्** प्रकर्षेण सेनापहरणादिना अल्पीकृतान् । **अवश्रद्धान्** युद्धश्रद्धारहितान् । **कृतारम्भान्** कृतकार्यान्तरारम्भान् । **उपन्यासप्रतापितान्** उप समीपे न्यासेन शस्त्रपातेन प्रतापितान् प्रकर्षेण तापितान् मूर्च्छितानित्यर्थः । भीरूनिति यावत् । **बहिश्चरान्**[४] सन्ध्या-वन्दनादिकार्याय सेनाया बहिश्चरान् । **उपन्यासान्** उपपन्नायुधस्य न्यासो येषां ते तथोक्ताः, तान् । **कृतवेश्मानुसारिणः** कृतं यद्वेश्म तदनुसरन्ति प्रविशन्तीति तथोक्ताः । एतान् सर्वान्नाभिघातयेदिति पूर्वेणान्वयः ।

**अनीकं ये [५]प्रभिन्दन्ति भिन्नं संस्थापयन्ति च ।**
**समानाशनपानास्ते कार्या द्विगुणवेतनाः ॥ ३० ॥**

---

१. **'अतिक्षिप्तान् व्यतिक्षितान् निहतान्'** इति कुं. पाठः ।
२. **'अविश्रब्धान्'** इति कुं. पाठः ।
३. **'उपन्यासात् प्रतापितान्'** इति कुं. पाठः ।
४. **सन्ध्यावन्दनकार्याय** इति सो.मु.पा; ५. **'संस्थापयन्ति'** इति कुं पाठः ।

**अनीकं ये प्रभिन्दन्ति** इत्यत्र **अनीकं** परानीकं प्रभिन्दन्ति । भिन्नं स्वानीकम् ।

**यथा [१] मुख्याः संनिपत्य वक्तव्याः संशयामहे ।**
**यथा जयार्थं सङ्ग्रामे न जह्याम परस्परम् ॥ ३३ ॥**

**यथा मुख्याः संनिपत्य वक्तव्याः संशयामह** इत्यत्र **मुख्याः** वयं सर्वे यथा न संशयामहे तथा वक्तव्या इति नञोऽनुवृत्त्या योजना ॥

**इहैव ते निवर्तन्तां ये च केचन भीरवः ।**
**न घातयेयुः प्रदरं कुर्वाणाः तुमुले सति ॥ ३४ ॥**
**न सन्निपाते प्रदरं वधं वा कुर्युरीदृशाः ।**

**न घातयेयुः प्रदरं कुर्वाणा** इत्यत्र **प्रदरं** प्रकृष्टं दरं छद्म कुर्वाणाः ये तुमुले युद्धे सति न **घातयेयुः** अस्त्रशस्त्रादिना परान् न घातयेयुः, ये ईदृशाः सन्निपाते सति **प्रदरं** प्रकर्षेण परदलविदारणं वधं वा न कुर्युः ।

**हित्वा पलायमानस्य सहायान् प्राणसंशये ।**
**[२] अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तदा ॥ ३७ ॥**

**अमित्रैरनुबद्धस्य** इत्यत्र अमित्रै[३]रनुबद्धस्येत्यतः परं यादृशेति योग्यपदाध्याहारेण योजना ।

**अग्रतः पुरुषाऽनीकमसिचर्मवतां भवेत् ।**
**पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा ॥ ४४ ॥**

---

१. **'मुख्यान् सन्निपात्य'** इति कुं. पाठः ।
२. BORI पृ ४७४; **'अमित्रैरवरुद्धस्य'** सो.मु.पा; ३.**अनुबन्धस्य** सो.मु.पा.

**कलत्रं मध्यतस्तथा** इत्यत्र कलं विकलं सैन्यं इतस्ततो धावनोद्युक्तं सैन्यं त्रायते इति व्युत्पत्त्या **कलत्रं** सेनानायकानां वृन्दं मध्यतो भवेत्।

**परेषां प्रतिघातार्थं पदातीनाञ्च गूहनम्।**
**अपि [१] यस्मिन् परे गृध्राः भवेयुर्ये पुरोगमाः ॥ ४५ ॥**

**अपि यस्मिन् परे गृध्रा** इत्यत्र यस्मिन् यस्मिन् भटे **परे** वैरिणः **गृध्राः** आकाङ्क्षावन्तः।

**अपि चोद्धर्षणं कार्यं भीष्मरूमपि यत्नतः।**
**[२] स्कन्धदर्शनमात्रं तु तिष्ठेयुः वा समीपतः ॥ ४७ ॥**

**स्कन्धदर्शनमात्रं तु तिष्ठेयुः** इत्यत्र **स्कन्धदर्शनमात्रं** परसेना-स्कन्धदर्शनपर्यन्तम्।

**संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्।**
**सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥ ४८ ॥**

**संहतान् योधयेदल्पान्** इत्यत्र **संहतान्** पुञ्जीभूतान्।

**[३] सन्निकृष्टे निकृष्टे वा सत्यं वा यदि वाऽनृतम्।**
**प्रगृह्य बाहून् क्रोशेत हन्त भग्नाः परे इति ॥ ४९ ॥**

**सन्निकृष्टे निकृष्टे वा** इत्यत्र **सन्निकृष्टे** समीपे। **निकृष्टे** दूरे।

॥ इति चतुरधिकशततमोऽध्यायः ॥

---

१. $B_3$,$D_5$; BORI पृ. ४७५; **'तस्मिन् पुरे वृद्धाः'** इति कुं. पाठः।
२. **'स्कन्धदर्शनमात्रात्तु'** इति कुं. पाठः।; ३. **'सम्प्रयुक्ते'** इति कुं. पाठः।

## ।। अथ पञ्चाधिकशततमोऽध्यायः ।।

[१] माङ्गल्यशब्दा शकुना वदन्ति
हंसाः क्रौञ्चाः शतपत्राश्च [२] भासाः ।
हृष्टा योधाः सत्त्ववन्तो भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ।। ११ ।।

**शतपत्राश्च भासा** इत्यत्र **शतपत्राः** दार्वाघाटाः । 'अथ स्याच्छतपत्रकः । दार्वाघाटः' इत्यमरः ।

।। इति पञ्चाधिकशततमोऽध्यायः ।।

## ।। अथ षडधिकशततमोऽध्यायः ।।

[३] शब्दो [४] वामे प्रविष्टस्य दक्षिणं प्रविविक्षतः ।
[५] पश्चात्सम्बोधयत्यर्थं पुरस्तात् प्रतिषेधति ।। १५ ।।

**शब्दो वामे प्रविष्टस्य** इत्यत्र **प्रविष्टस्य** सेनां प्रविष्टस्य । **प्रविविक्षतः** सेनां प्रवेष्टुमिच्छतः । **पश्चात्** पृष्ठतः । **सम्बोधयति** समीचीनं बोधयति ।

भग्ना इत्येव भज्यन्ते विद्वांसोऽपि न कारणम् ।
उदारसारा महती रुरुसंवोपमा चमूः ।। १९ ।।

---

१. कुं. १०१ अध्यायः ।
२. $K_5,B_{0.3},D_{2.3.5.6.8}$; BORI पृ. ४८०; **'चाषाः'** इति कुं. पाठः ।
३. कुं. १०२ अध्यायः ।; ४. **'वामःप्रस्थितस्य दक्षिणः'** इति कुं. पाठः ।
५. $B_{0.5},D_{5.8}$; BORI पृ. ४८१; **'पश्चात् संसाधत्यर्थं पुरस्ताच्च निषेधति'** इति कुं. पाठः ।

**भग्रा इत्ये** इत्यत्र केचिद्भग्रा इति कृत्वा सर्वे भज्यन्ते । **विद्वांसो** युद्धकुशला अपि **कारणं** भग्रसेनायाः स्थापने कारणं न ।

[१]**विजयाव्द्यथते राजन् सर्वः सस्थाणुजङ्गमः ।**
**अस्त्रप्रतापतप्तानां मज्जाः सीदन्ति देहिनाम्** ॥ २८ ॥

**विजयाव्द्यथते राजन्** इत्यत्र **विजयात्** विरुद्धजयात्, पराजयादित्यर्थः ।

**मन्यन्ते कर्षयित्वा तु क्षमा साध्वीति शम्बरः ।**
**असन्तप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः** ॥ ३१ ॥

**असन्तप्तं तु यद्दारु** इत्यत्र सम्यक् तप्तं न भवतीति **असन्तप्तं**, ईषत्तप्तमित्यर्थः । **यद्दारु** वंशादि ।

॥ इति षडधिकशततमोऽध्यायः ॥

## ॥ अथ सप्ताधिकशततमोऽध्यायः ॥

[२]**यथा वैतंसिको युक्तो द्विजानां सदृशास्वरः ।**
**तान् द्विजान् कुरुते वश्यांस्तथा युक्तो महीपतिः** ॥ ११ ॥

**यथा वैतंसिको युक्तो** इत्यत्र **वैतंसिकः** छद्मी । 'वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम्'[३] इत्यमरः ।

**अशक्यमिति कृत्वा वा ततोऽन्यैः संविदं चरेत् ।**
**ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम्** ॥ २७ ॥

---

१. **'विषयो व्यथते'** इति कुं. पाठः ।; २. कुं. १०३ अध्यायः ।
३. अ.को. २-१०-१४

**ब्रह्मदण्डमदृष्टेषु** इत्यत्र कृत्याप्रयोगादिना ब्राह्मणैः क्रियमाणो दण्डः **ब्रह्मदण्डः** ।

**न साम दण्डोपनिषत्प्रशस्यते**
**न मार्दवं शत्रुषु यात्रिकं सदा ।**
**न सस्यघातो न च सङ्करक्रिया**
**न [1] चास्य भूयं प्रकृतेर्विचारणा** ॥ ४० ॥

**न चास्य भूयं प्रकृतेर्विचारणा** इत्यत्र **प्रकृतेः** अमात्यादि-सप्तप्रकृतेः । सदेति पदं सर्वत्र सम्बद्ध्यते ।

**मायाविभेदानुपसर्जनानि वाचं तथैव प्रथमं प्रयोगात् ।**
**आप्तैर्मनुष्यैरुपचारयेत पुरेषु राष्ट्रेषु च सम्प्रयुक्तान्** ॥ ४१ ॥

**मायाविभेदानुपसर्जनानि** इत्यत्र **अनुपसर्जनं** वित्तस्य अदानम् ।

॥ इति सप्ताधिकशततमोऽध्यायः ॥

* * *

## ॥ अथ अष्टाधिकशततमोऽध्यायः ॥

**[2] यच्च पूर्वं समाहारे यच्च पूर्वतरे परे ।**
**सर्वं नास्तीति ते चैव तज्ज्ञात्वा कोनु सञ्ज्वरेत्** ॥ १५ ॥

**यच्च पूर्वं समाहारे** इत्यत्र **समाहारे** जनसमुदाये पूर्वं यद्वसु ।

---

१. **'चादि भूयः'** इति कुं. पाठः ।

२. $K_{2.5}, B_{1.3}, D_n, D_{2.3.5.8}$; BORI पृ. ४०.३; 'ये च पूर्वसमागम्भ ये च' इति कुं. पाठः । कुं. १०४ अध्यायः ।

**भूत्वा च न भवत्येतदभूत्वा च भविष्यति ।**
**[१] शोकं न ह्यस्ति सामर्थ्यं शोचेत स कथं नरः ॥ १६ ॥**

**शोकं न ह्यस्ति सामर्थ्यम्** इत्यत्र सम्यक् अर्थः[२] प्रयोजनं यस्य सः समर्थः । समर्थस्य भावः **सामर्थ्यं** सार्थक्यमित्यर्थः ।

**पुरस्ताद्भूतपूर्वत्वात् [३] वीतभाग्योऽपि दुर्मतिः ।**
**धातारं गर्हते नित्यं लब्धार्थश्च न मृष्यते ॥ ३० ॥**

**पुरस्ताद्भूतपूर्वत्वात् वीतभाग्योऽपि दुर्मतिः** इत्यत्र पुरस्तात् उपरिभाविफलस्य **भूतपूर्वत्वात्** पूर्वं भूतसुकृतनिमित्तत्वात् । ल्यब्लोपनिमित्ता पञ्चमी । भूतपूर्वत्वमविज्ञायेत्यर्थः । **न मृष्यते** बहु नाभूदिति मत्वा न सहते ।

**पश्य बुद्ध्या मनुष्याणां तुल्यमापदमात्मनः ।**
**नियच्छ यच्छ संयच्छ इन्द्रियाणि मनस्तथा ॥ ५० ॥**
**[४] प्रतिषिद्धानि चाप्येषु दुर्लभेष्वहितेषु च ॥ ५१ ॥**

**प्रतिषिद्धानि चाप्येषु** इत्यत्र दुर्लभेषु अहितेषु येषु इन्द्रियमनोवचनेषु प्रतिषिद्धानि यानि कार्याणि अगम्यागमनादीनि तानि च नियच्छेति पूर्वेणान्वयः ।

**न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।**
**नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम् ॥ ५४ ॥**

---

१. $K_1$; BORI पृ. ४९३; **'शोके न ह्यस्ति सामर्थ्यं'** इति कुं. पाठः ।
२. अर्थं सो.मु.पा ।; ३. **'हीनभोग्यो हि'** इति कुं. पाठः ।
४. **'प्रतिषेद्धा न'** इति कुं. पाठः ।

**न त्वेव जाल्मीं कापालीम्** इत्यत्र **जाल्मीं** हीनसम्बन्धिनीम् । 'निहीनोऽपसदो जाल्मः'[१] इत्यमरः । **कापालीं** कपालसम्बन्धिनीम् ।

**एतदेव गतस्याहं सुखं पश्यामि केवलम् ।**
**दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ॥ ५८ ॥**

**एतदेव गतस्याहम्** इत्यत्र **गतस्य** वित्तस्य ।

**सञ्चये च विनाशान्ते मरणान्ते च जीविते ।**
**संयोगे च वियोगान्ते को नु विप्रणयेन्मनः ॥ ४७ ॥**

**सञ्चये च विनाशान्त** इत्यत्र विनाश एव अन्ते अवसाने यस्य तस्मिन् **सञ्चये** वित्तसङ्ग्रहे । एवं सर्वत्र ।

॥ इति अष्टाधिकशततमोऽध्यायः ॥

## ॥ अथ नवाधिकशततमोऽध्यायः ॥

**[२]वसस्व पुरमामित्रं विषये मित्रसम्मतः ।**
**भजस्व श्वेतकाकीयैर्मित्रधर्ममनर्थकैः ॥ १३ ॥**

**भजस्व श्वेतकाकीयैर्मित्रधर्ममनर्थके** इत्यत्र **अनर्थकैः** अर्थाशारहितैः । **श्वेतकाकीयैः** अनुकूलार्थवाचकैरुपायैः । "स एव श्वेतकाकीयो ह्यनुकूलार्थवाचकः" इति निघण्टुः ।

**आरम्भांश्चास्य महतो दुष्करान् सम्प्रयोजय ।**
**[३]नदीवच्च विरोधेऽस्य बलवद्भिर्विरुद्ध्यताम् ॥ १४ ॥**

---

१. अ.को. २-१०-१६; २. कुं. १०५ अध्यायः ।

३. $K_{3-5}, D_n, D_{7,8}$ ; BORI पृ. ५००; **'नदीबन्धविभेदांश्च'** इति कुं. पाठः ।

**नदीवच्च विरोधेऽस्य बलवद्भिर्विरुद्ध्यताम्** इत्यत्र **अस्य** त्वया सेव्यमानशत्रोः **विरोधे** केनचिद्विरोधे सति बलवद्भिः सहितैस्तैः सह त्वया नदीवत् विरुद्ध्यताम् । यथा नदी अतिविरोधे सति पार्श्वतो गच्छति तथा त्वयापि कर्तव्यम् ।

**[१]तदात्मा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।**
**असङ्गृहीतस्त्वेवैष त्वया धर्मपुरोगमः ॥ १३ ॥**
**संसेव्यमानः पुत्रस्ते[२] गृह्णीयान्महतो [३]गुणान् ॥ १४ ॥**

**संसेव्यमानः पुत्रस्ते** इत्यत्र अनेन कौसलेनामात्येन संसेव्यमानस्ते पुत्रः वदतोऽस्माद्गुणान् गृह्णीयात् इति योजना ।

**[४]ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम् ।**
**[५]विनिवृत्तानुसङ्घाताः सुखमेधन्ति सर्वशः ॥ १६ ॥**

**विनिवृत्तानुसङ्घाता** इत्यत्र विशेषेण **निवृत्तः** नितरां वर्तितः **अभिसङ्घातः** समुदायो येषां । 'विनिवृत्तानुसन्धानाः' इति पाठे अन्योन्य**मनुसन्धानं** सन्धिर्येषां ते तथोक्ताः ।

॥ इति नवाधिकशततमोऽध्यायः ॥

* * *

---

१. कुं १०६ अध्यायः ।
२. $D_4$; BORI पृ. ५०३; **'शत्रूंस्ते'** इति कुं. पाठः ।
३. $K_5M_2$; BORI पृ. ५०३; **'गणान्'** इति कुं. पाठः ।
४. कुं १०७ अध्यायः ।
५. 'विनिवृत्ताभिसन्धानाः' इति कुं. पाठः ।

## ।। अथ द्वादशाधिकशततमोऽध्यायः ।।

[१] **यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ।**
**नैतानतिशयीथास्त्वं [२] नाश्नीयान्न च दूपयेत्** ।। १० ।।

**नाश्नीयान्न च दूपयेत्** इत्यत्र **नाश्नीयात्** एतेभ्यः पूर्वं नाश्नीयात् ।'नात्यश्नीयात्' [३] इति पाठे न अतिक्रम्य अश्नीयात् ।।

[४] **एभ्य एवास्मि यत्सर्वं कृत्वा यद् विसृजाम्यहम् ।**
**तदासीन्मे शतगुणं सहस्रगुणमेव च** ।। १९ ।।

**एभ्य एवास्मि यत्सर्वम्** इत्यत्र एभ्यो मातापितृगुरुभ्यः **अस्मि** अभिवृद्धोऽस्मि । **एभ्यः** एतेषामुपदेशात् यत्सर्वं पुण्यं कृत्वा **यत्** पापं विसृजामि, एतेषामर्थे यत्सर्वं हितम् ऊर्ध्वरेतस्त्वादिव्रतं कृत्वा यद्राज्यं विसृजामि तच्छतगुणं सहस्रगुणं चासीत् इति योजना ।

**न स दुष्यति तत्कृत्वा न च ते दूपयन्ति तम् ।**
**धर्माय यतमानानां [५] पितृदेवाः सहर्षिभिः** ।। २१ ।।

**न स दुष्यति तत्कृत्वा** इत्यत्र [६] तत् तेषां हितम्, तदुपदिष्टं कार्यं वा । **धर्माय यतमानानां पितृदेवाः सहर्षिभिः** इत्यत्र धर्माय यतमानानां सहाया इति योग्यपदाध्याहारः ।

---

१. कुं १०८ अध्यायः
२. **'नात्यश्नीथा न दुपयेः'** इति कुं. पाठः ।
३. **नाश्नीयादिति पाठे न अनतिक्रम्याश्नीयात्-** सो.मु.पा ।
४. **'तेभ्य एव हि यत्सर्वं कृत्यं यद् निसृजाम्यहम्'** इति कुं. पाठः ।
५. **'विदुर्देवाः'** इति कुं. पाठः ।; ६. **यत्** सो.मु.पा ।

**प्रतिश्रुत्य[१] तु दातव्यं स्वकार्यश्चेद्बलात्कृतः ॥ २५ ॥**

**प्रतिश्रुत्य तु दातव्यं स्वकार्यश्चेद्बलात्कृत** इत्यत्र **बलात्** [२]स्वकार्यः कृतश्चेत्, स्वस्य कार्यं यस्मात्सः स्वकार्यः, तस्मै इदं दास्यामीति प्रतिश्रुत्य प्रदातव्यम् । विष्टिगृहीतायापि यावद्दीयत इत्युक्तं तावद्दातव्यमित्यर्थः ।

**न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ।**
**तथाविधं च यो हन्यान्न स पापेन लिप्यते ॥ ३१ ॥**

**न कश्चिदस्ति पापानाम्** इत्यत्र **पापानां** पापिष्ठानां कश्चिद्धर्मोऽपि नास्तीत्येव निश्चयः ।

**स्वकर्मणा हतं हन्ति हत एव स हन्यते ।**
**तेषु यः समयं कश्चित् कुर्वीत हतबुद्धिषु ॥ ३२ ॥**
**यथा काकस्तथैव श्वा तथैवोपधिजीविनः ।**
**ऊर्ध्वं [३]देहविमोक्षान्ते भवन्त्येतासु योनिषु ॥**

**समयं कश्चित्** इत्यत्र **समयं** सर्वे वयमेकीभूय अधर्मिणः शिक्षां कर्तुं न मुञ्चाम इति **सङ्केतम्** । **उपधिजीविनः** चोरा ॥

॥ इति त्रयोदशाधिकशततमोऽध्यायः ॥

* * *

---

१. 'प्रतिश्रुत्य न दातव्यं श्वः कार्यस्तु बलात्कृतः' इति कुं. पाठः ।
२. स्वकार्य सो.मु.पा.
३. 'देहविमोक्षान्ते' इति कुं. पाठः ।

## ॥ अथ चतुर्दशाधिकशततमोऽध्यायः ॥

[१] स्वेषु दारेषु वर्तन्ते [२] न्यायवृत्तिष्वृतावृतौ ।
अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते ॥ ९ ॥

न्यायवृत्तिष्वृतावृतौ इत्यत्र ऋतावृतौ ऋतुकाले इत्यर्थः ।

यात्रार्थं भोजनं येषां सन्तानार्थं च मैथुनम् ।
वाक् सत्यवचनार्थं च दुर्गाण्यतितरन्ति ते ॥ २३ ॥

यात्रार्थं भोजनं येषाम् इत्यत्र यात्रार्थं देहयात्रार्थम् ।

ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते ॥ २४ ॥

भक्ता नारायणं देवम् इत्यत्र भक्ताः भजन्तः ।

लोकरक्षार्थमुत्पन्न [३] आदित्यः कश्यपात्मजः ।
देवमिन्द्रं [४] न पश्यन्ति दुर्गाण्यतितरन्ति ते ॥ ३० ॥

ब्रह्माणं लोककर्तारं ये [५] न पश्यन्ति तत्पतिम् ।
यष्टव्यं क्रतुभिर्देवं दुर्गाण्यतितरन्ति ते ॥ ३१ ॥

देवमिन्द्रं न पश्यन्ति इत्यत्र लोकरक्षार्थमुत्पन्नो यः कृष्णः तत्पतिं

---

१. कुं. ११० अध्यायः ।
२. $B_{0.4.5}$; BORI पृ. ५१९; 'न्यायलब्धेष्वृतावृतौ' इति कुं. पाठः ।
३. 'आदित्यः कश्यपात्मजम्' इति कुं. पाठः ।
४. 'नमस्यन्ति' इति कुं. पाठः ।
५. 'नमस्यन्ति सत्पतिम्' इति कुं पाठः ।

तस्य कृष्णस्य पतिं इन्द्रं देवं ये न पश्यन्ति इति वक्ष्यमाणतत्पति-पदस्याकर्षणेन योजना । इन्द्रावरजत्वप्राप्तनैच्यपरिहारायेदमुक्तम् । लोककर्तारं ब्रह्माणञ्च तत्पतिं कृष्णस्य स्वामिनं ये न पश्यन्ति ।

**[१]ये विष्णुमिन्द्रं शम्भुञ्च ब्रह्माणं लोकपूजितम् ।**
**स्तुवन्ति [२]वैदिकैः स्तोत्रैर्देवदेवं महेश्वरम् ।**
**[३]तमर्चयन्ति यज्ञेषु दुर्गाण्यतितरन्ति ते ॥ ३२ ॥**

**स्तुवन्ति वैदिकैः स्तोत्रैर्देवदेवं महेश्वरम्** इत्यत्र देवदेवं **महेश्वरं** महतामीश्वरं विष्णुं वैदिकैः स्तोत्रैः इन्द्रमिति शम्भुमिति च लोकपूजितं ब्रह्माणमिति च ये स्तुवन्ति, एतैः शब्दैः यज्ञेषु तमेव अर्चयन्ति ते दुर्गाण्यतितरन्तीति योजना । 'यो देवानां नामधा एक एव' इति श्रुतेः । 'यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया' इति स्मृतेश्च उक्त एवार्थः ।

**॥ इति चतुर्दशाधिकशततमोऽध्यायः ॥**

## ॥ अथ पञ्चदशाधिकशततमोऽध्यायः ॥

**[४]अप्रत्ययकृतां गर्ह्यां अर्थापनयदूषिताम् ।**
**इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये ॥ १७ ॥**

**अर्थापनयदूषिताम्** इत्यत्र **अर्थस्य** द्रव्यस्य **अपनयः** अन्यायः नाशो वा, तेन दूषिताम् ।

---

१. **'यं विष्णुरिन्द्रः शम्भुश्च ब्रह्मा लोकपितामहः ।'** इति कुं. पाठः ।
२. **'विविधैः'** इति कुं. पाठः ।
३. **'समर्चयन्ति ये शश्वत्'** इति कुं. पाठः ।
४. कुं. **१११ अध्यायः ।**

**दीर्घदर्शी महोत्साहः स्थूललक्षो महाबलः ।**
**कृती[1] चामोघकर्ताऽसि भाग्यैश्च समलङ्कृतः ॥ २९ ॥**

**स्थूललक्षो महाबल** इत्यत्र **स्थूललक्षः** बहुप्रदः । 'स्युर्वदान्य-स्थूललक्षदानशौण्डा बहुप्रदा'[2] इत्यमरः ।

**अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः ।**
**उपघातैर्यथा भृत्या दूषिता निधनं गताः ॥ ३४ ॥**

**अपराधैर्न तावन्तो** इत्यत्र दूषिता भृत्याः उपघातैर्यथा निधनं गताः तावन्तः अपराधैः कृतैरपि नराधिपैः **न शिष्टाः** नावशेषिताः । राजानः शिक्षामेव कुर्वन्ति, न तु दयामिति भावः ।

**यदि [3]त्वेतन्मया कार्यं मृगेन्द्र यदि मन्यसे ।**
**समयं कृतमिच्छामि वर्तितव्यं यथाविधि ॥ ३५ ॥**

**यदि त्वेतन्मया कार्यम्** इत्यत्र हे मृगेन्द्र त्वं यदि मन्यसे, मया यदि एतत् तव साचिव्यमिति **यदि**शब्दद्वयस्य योजना ।

**न मन्त्रणीयमन्यैस्ते सचिवैः सह कर्हिचित् ।**
**नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ॥ ३७ ॥**

**नीतिमन्तः परीप्सन्तो** इत्यत्र अन्तः मम नीतिं **परीप्सन्तो** विचारयन्तः ।

---

१. BORI पृ. ५२६; '**कृते**' इति कुं. पाठः ।
२. अ.को. ३-१-६
३. BORI पृ. ५२६; '**वा तन्मया**' इति कुं. पाठः ।

भीष्म उवाच–

एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः ।
प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रयोनितः[१] ॥ ४० ॥

गोमायुर्व्याघ्रयोनितः इत्यत्र व्याघ्रयोनितः व्याघ्रकुमारेण सह ।

[२]अन्यथाभ्युचिताः पूर्वं परद्रव्यापहारिणः ।
अशक्ताः किञ्चिदाहर्तुं द्रव्यं गोमायुयन्त्रिताः ॥ ४३ ॥

अन्यथाभ्युचिताः पूर्वम् इत्यत्र पूर्वं अन्यथा न्यायमार्गाद्विपरीतमार्गेण कर्तुमुचिताः ।

यदर्थं चाप्यपहृतं येन तच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ॥ ४७ ॥

तस्य तद्विदितं सर्वम् इत्यत्र तस्य गोमायोः ।

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ॥ ६६ ॥

तलवद्दृश्यते व्योम इत्यत्र तलवत् भूतलवत् ।

स्थापितोऽयं त्वया पुत्र सामन्तेष्वपि विश्रुतः ।
दुःखेनासाद्यते [३]चात्र धार्यतामेष ते सुहृत् ॥ ६९ ॥

दुःखेनासाद्यते चात्र इत्यत्र अत्र तव सचिवेन गोमायुना दुःखेन आसाद्यते आगम्यते । दुःखितः सन्नायातीत्यर्थः ।

---

१. BORI पृ. ५२७; 'गोमायुर्व्याघ्रचोदितः' इति कुं. पाठः ।
२. 'अन्यथा ह्युपिताः' इति कुं. पाठः । ; ३. 'पात्रं' इति कुं. पाठः ।

**परिक्षीणाश्च लुब्धाश्च क्रुद्धा भीताः प्रतारिताः ।**
**हृतस्वा मानिनो ये च त्यक्तोपात्ता महेच्छवः ॥ ७८ ॥**
**संलालिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।**
**अन्तर्हिताः [1]स्वोपहृताः सर्वे ते परसाधनाः ॥ ७९ ॥**

**परिक्षीणाश्च लुब्धाश्च** इत्यत्र लुब्धाः विषयलुब्धाः । **महः** उत्सवः तदिच्छवः महेच्छवः । स्वं द्रव्यम् उपहृतं येषां ते तथोक्ताः स्वोपहृताः । **परसाधनाः** एते सर्वे परेषां कार्यसाधकाः, न तु स्वस्य ।

**[2]शङ्कितस्त्वदहं भीरुः परे छिद्रानुसारिणः ।**
**अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥ ८४ ॥**

**शङ्कितस्त्वदहं भीरुः** इत्यत्र **त्वत्** त्वत्तः ।

**दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।**
**भिन्नश्लिष्टे तु या प्रीतिर्न सा स्नेहेन वर्धते ॥ ८५ ॥**

**दुःखेन श्लिष्यते भिन्नम्** इत्यत्र **भिन्नं** सकृद्विरोधं प्रापितं वस्तु पुनः दुःखेन **संश्लिष्यते** सम्बद्ध्यते ।

पश्चात् स्नेहो दुष्कर इत्यर्थः । **श्लिष्टं** स्नेहयुक्तं वस्तु न भिद्यते ।

**कश्चित्तव हिते भर्तुः दृश्यते न परात्मनः ।**
**कार्यापेक्षा हि वर्तन्ते भावस्निग्धाः सुदुर्लभाः ॥८६॥**

**दृश्यते न परात्मन** इत्यत्र परस्मिन् **आत्मा** चित्तं यस्य तस्य न ।

॥ इति पञ्चदशाधिकशततमोऽध्यायः ॥

---

१. 'सोपहृतास्ते सर्वेऽपरसाधनाः' इति कुं. पाठः ।
२. 'शङ्कितस्त्वमहं भीतः परे' इति कुं. पाठः ।

## ।। अथ षोडशाधिकशततमोऽध्यायः ।।

उष्ट्र उवाच–

[१]भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम् ।
योजनानां शतं साग्रं [२]या गच्छेच्चरितुं प्रभो ।। ६ ।।

**दीर्घा ग्रीवा भवेदियम् । योजनानां शतं साग्रं या गच्छेच्चरितुं प्रभो** इत्यत्र यदा अपेक्षा तदा दीर्घा भवेदित्यर्थः । या ग्रीवा **चरितुं** भक्षितुम् । 'चर गतिभक्षणयोः' इति धातुः ।

**स चकार तदालस्यं वरदानात्सुदुर्मतिः ।
न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः ।। ८ ।।**

**स चकार तदालस्यम्** इत्यत्र आलस्यं यदा अपेक्षा तदा दीर्घग्रीवां[३] कृत्वा भक्षयामीत्याशया भक्षणादावालस्यं चकार । तदेवाह- **न चैच्छदिति**[४] । **चरितुं** भक्षितुं **गन्तुं** वने सञ्चरितुं च नैच्छत् ।

**स कदाचित्प्रसार्यैव तां ग्रीवां शतयोजनाम् ।
चचार श्रान्तहृदयो वातश्चागात्ततो महान् ।। ९ ।।**

**चचार श्रान्तहृदयो** इत्यत्र बहुकालं भक्षणे आलस्यकरणात् **श्रान्तहृदयः** ।

---

१. कुं. ११२ अध्यायः ।
२. $K_2$, $B_0$, $D_a$, $D_{6-8}$, $S_{(G3missing)}$; BORI पृ. ५३४; **'इच्छेयं चरितुं विभो'** इति कुं.पाठः ।
३. **दीर्घग्रीवं** सो.मु.पा ।
४. **न चैवैच्छदिति** सो.मु.पा.

**यावदूर्ध्वमधश्चैव ग्रीवां सङ्क्षिपते पशुः ।**
**तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ १४ ॥**

**यावदूर्ध्वमधश्चैव ग्रीवां सङ्क्षिपते शिशुः** इत्यत्र ऊर्ध्वस्थितगुहायाः अधः ग्रीवार्धे यावत् सङ्क्षिपते तावदित्युत्तरेणान्वयः । अनेन श्रान्ते जने आलस्यकरणात् ग्रीवायाः शीघ्रमाकर्षणेऽपि शक्तिर्नाभूदिति सूचितम् ।

**एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा ।**
**[1]आलस्यकरणात् पश्य महान्तं दोषमागतम् ॥ १६ ॥**

**आलस्यकरणात् पश्य** इत्यत्र **आलस्यकरणात्,** सम्यग्भक्षणपर्यन्तं ग्रीवाकर्षणे आलस्यकरणात् प्राग्भोजने आलस्यकरणाच्च आगतं दोषं पश्येति योजना ।

**बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।**
**तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ १८ ॥**

**तानि जङ्घाजघन्यानि** इत्यत्र तानि कर्माणि **जङ्घाजघन्यानि** जङ्घया साधितानि सेवकवृत्त्या इतस्ततो गमनेन साधितानीत्यर्थः, जघन्यानि । **भारप्रत्यवराणि** भारमूढ्वा कृतानि चेत् **प्रत्यवराणि** अतिनीचानि ।

॥ इति षोडशाधिकशततमोऽध्यायः ॥

* * *

---

१. **'आलस्यस्य क्रमात्'** इति कुं. पाठः ।

## ।। अथ सप्तदशाधिकशततमोऽध्यायः ।।

युधिष्ठिर उवाच–

राजा[1] राज्यमनुप्राप्य दुर्बलो भरतर्षभ ।
अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ।। १ ।।

**अमित्रस्यातिवृद्धस्य** इत्यत्र अतिवृद्धस्य सत इति योग्य-पदाध्याहारः ।

सागर उवाच–

समूलशाखान् पश्यामि निहतान् [2]क्काथिनो द्रुमान् ।
युष्माभिरिह पूर्णाभिरन्यांस्तत्र न वेतसान् ।। ४ ।।

**निहतान् क्काथिनो द्रुमान्** इत्यत्र क्काथिनः [3]क्षीरास्रवणसहितान् ।

तत्र प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत् ।
हेतुमद्ग्राहकं चैव सागरं सरितां पतिम् ।। ७ ।।

**हेतुमद्ग्राहकं चैव** इत्यत्र श्रोतृषु विनयादिगुणान् ग्राहयतीति ग्राहकम् ।

गङ्गोवाच–

तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः ।
ततस्त्यजन्ति तत्स्थानं प्रातिलोम्यान्न वेतसः ।। ८ ।।

---

१. कुं. ११३ अध्यायः ।
२. 'क्कापि नो' इति कुं. पाठः ।
३. क्षीरास्रवणसहितान् [illegible]

**वेतसो वेगमायान्तं दृष्ट्वा नमति नापरे ।**
**स च वेगे ह्यतिक्रान्ते स्थानमापद्यते पुनः ॥ ९ ॥**

**तिष्ठन्त्येते यथास्थानम्** इत्यत्र **एकनिकेतनाः** एकस्मिन् कूले निकेतनं येषां ते तथोक्ताः । **नगाः** स्थूलवृक्षाः यथास्थानं तिष्ठन्ति, न तु नमन्ति । **प्रातिलोम्यात्** तेभ्यो वैपरीत्येन वर्तनात् वेगे सति नम्रीभावादित्यर्थः । तदेव स्पष्टयति वेतस इति ।

**कालज्ञः समयज्ञश्च सदा वश्यश्च नो द्रुमः**
**अनुलोमवृत्तिस्स्तब्धः तेन [१] नात्येति वेतसः ॥ १० ॥**

**कालज्ञः समयज्ञश्च** इत्यत्र **कालज्ञः** नम्रीभावकालज्ञः । **समयज्ञः** ऊर्ध्वं स्थितिसमयज्ञः । **नात्येति** अत्ययं नाप्नोति ।

**मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च ।**
**ओषध्यः पादपाः गुल्मा न ते यान्ति पराभवम् ॥ ११ ॥**

**ओषध्यः पादपाः गुल्मा** इत्यत्र **पादपाः** नमनशीलास्त्वक्सार-पूगाद्याः ।

**भीष्म उवाच–**

**यो हि शत्रोर्विवृद्धस्य प्रभोर्बन्धविनाशने ।**
**पूर्वं न सहते वेगं क्षिप्रमेव विनश्यति ॥ १२ ॥**

**पूर्वं न सहते वेगम्** इत्यत्र **न सहते** नम्रो भूत्वा न सहते ।

॥ इति सप्तदशाधिकशततमोऽध्यायः ॥

---

१. **'त्वां नैति वेतसः'** इति कुं. पाठः ।

## ।। अथ अष्टदशाधिकशततमोऽध्यायः ।।

**युधिष्ठिर उवाच–**

**[१]विद्वान् मूढप्रगल्भेन मृदुस्तीक्ष्णेन भारत ।**
**आक्रुश्यमानः सदसि कथं कुर्यादरिन्दम ।। १ ।।**

**विद्वान् मूढप्रगल्भेन** इत्यत्र मूढत्वे सति प्रगल्भेन वाचालेन ।

**आक्रुश्य दुष्यमाणश्च सुकृतं तस्य विन्दति ।**
**दुष्कृतं चात्मनोऽमर्षी [२]रुष्यत्येवापमर्ष्टि वै ।। ३ ।।**

**दुष्कृतं चात्मनोऽमर्षी** इत्यत्र यः **अमर्षी** भवति स आत्मनः सहमानस्य दुष्कृतमपमार्ष्टीति योजना ।।

**इति संश्लाघते नित्यं तेन पापेन कर्मणा ।**
**इदमुक्तो मया कश्चित् [३]सम्मतो जनसंसदि ।। ५ ।।**

**इति संश्लाघते नित्यम्** इत्यत्र जनसंसदि सम्मतः कश्चित् पुरुषो मया इत्युक्तः खलु इति तेन पापेन कर्मणा आत्मानं नित्यं संश्लाघते ।

**यदि वाग्भिः प्रयोगः स्यात् [४]प्रयोगे पापकर्मणः ।**
**वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ।। ९ ।।**

**यदि वाग्भिः प्रयोगः स्यात्** इत्यत्र पापकर्मणः पुरुषस्य **प्रयोगे** संयोगे सति यदि वाग्भिः प्रयोगः स्यात्तर्हीति योजना ।

---

१. कुं. ११४ अध्यायः ।
२. BORI पृ. ५३९; **'तस्मिन्नेव प्रमार्जति'** इति कुं. पाठः ।
३. BORI पृ. ५३९; **'सर्वतो'** इति कुं. पाठः ।
४. BORI पृ. ५४०; **'प्रयोज्यः पापकर्मणा'** इति कुं. पाठः ।

**निषेकं [1]विपरीतं स आचष्टे वृत्तचेष्टया ।**
**मयूर इव [2]कोपेन नृत्तं सन्दर्शयन्निव ॥ १० ॥**

**निषेकं विपरीतं स** इत्यत्र नृत्तं सन्दर्शयन् मयूर इव **वृत्तचेष्टया** स्वस्मिन् सद्वृत्तमस्तीति चेष्टया **निषेकं** नितरां सेकं साधुना क्रियमाणं प्रियवचनसिञ्चनं कोपेन विपरीतमिव **स** दुर्जनो व्याचष्टे इति योजना ॥

॥ इति अष्टादशाधिकशततमोऽध्यायः ॥

## ॥ अथ विंशत्यधिकशततमोऽध्यायः ॥

**[3]ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः ।**
**द्वीपिनं लेलिहद्वक्त्रं व्याघ्रो रुधिरलालसः ॥ २० ॥**

**व्याघ्रो रुधिरलालस** इत्यत्र **व्याघ्रः** स्थूलशार्दूलः ।

॥ इति विंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकविंशत्यधिकशततमोऽध्यायः ॥

**भीष्म उवाच–**

**[4]व्याघ्रश्चोटजमूलस्थः तृप्तः सुप्तो हतैर्मृगैः ।**
**नागश्चागात्तमुद्देशं मत्तो मेघ इवोत्थितः ॥ १ ॥**

**व्याघ्रश्चोटजमूलस्थ** इत्यत्र **उटजमूलस्थः**, पर्णशालासमीपस्थः । 'पर्णशालोटजोऽस्त्रियाम्' [5] इत्यमरः ।

---

१. BORI पृ. ५४०; **'वै परस्यासौ'** इति कुं. पाठः ।
२. **'कौपीनं नृत्यं'** इति कुं. पाठः ।; ३. कुं. ११६ अध्यायः ।
४. कुं. ११७ अध्यायः ।; ५. अ.को. २-२-६

**प्रभिन्नकरटः प्रांशुः पद्मी [1] विततमस्तकः ।**
**सुविषाणो महाकायो मेघगम्भीरनिःस्वनः ॥ २ ॥**

**पद्मी विततमस्तक** इत्यत्र **पद्मी** गजः । 'इभः स्तम्भेरमः पद्मी' [2] इत्यमरः ।

**ततः कमलषण्डानि [3] शल्य(ल्ल)कीगहनानि च ।**
**व्यचरत्स मुदा युक्तः पद्मरेणुविभूषितः ॥ ५ ॥**

**शल्य(ल्ल)कीगहनानि च** इत्यत्र **शल्य(ल्ल)क्यः** शल्य(ल्ल)कजातयः पक्षिणः, तासां गहनानि ।

**[4] अष्टपादोऽर्धनयनः शरभो वनगोचरः ।**
**तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशने ॥ १३ ॥**

**अष्टपादोऽर्धनयन** इत्यत्र **अर्धनयनः** चतुर्नयनः ।

**किमङ्ग त्वं [5] मयानेन शरभत्वमनामयम् ।**
**क्रूरः स सर्वभूतेषु हीनश्चाशुचिरेव च ॥ ३० ॥**

**किमङ्ग त्वं मयानेन शरभत्वमनामयम्** इत्यत्र अनेन मया शरभत्वमापन्न इति वक्ष्यमाणापन्नपदस्यानुकर्षणेन योजना ।

॥ इति एकविंशत्यधिकशततमोऽध्यायः ॥

---

१. BORI पृ. ५४८; **'विततकुम्भकः'** इति कुं. पाठः ।
२. अ.को. २-८-३५
३. BORI पृ. ५४८; **'सल्लकीगहनानि'** इति कुं. पाठः ।
४. **'अष्टपादर्ध्वनयनः'** इति कुं. पाठः ।; **'मया नीतः'** इति कुं. पाठः ।

## ।। अथ द्वाविंशत्यधिकशततमोऽध्यायः ।।

**कुलजः[१] प्राकृतो राजन् तत्कुलीनतया सदा ।**
**न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ।। ५ ।।**

**तत्कुलीनतया सदा** इत्यत्र राज्ञा **प्राकृतः** सप्तप्रकृतिषु नियामकतया कृतः ।

**असितं सितकर्माणं यथा दान्तं तपस्विनम् ।**
**वृत्तस्थमपि चण्डालं तं देवा ब्राह्मणं विदुः ।। ११ ।।**

**असितं सितकर्माणम्** इत्यत्र 'षिञ् बन्धने' इति धातोः **असितं** मनसि बन्धनरहितं **सितकर्माणं** बहिः **सितं** बन्धनसहितं **कर्म** स्रक्चन्दनधारणादिकर्म यस्य तम् । तथा (यथा) प्राकृतो जनो यथा तथा जातम् ।

**दुष्कुलीनः कुलीनो वा यः कश्चिच्छीलवान्नरः ।**
**प्रकृतिं तस्य विज्ञाय स्थिरां वा यदि वाऽस्थिराम् ।। १६ ।।**
**शीलवानुत्तमं[२] कर्म कुर्याद्राज्ञा समाहितः ।। १७ ।।**

**प्रकृतिं तस्य विज्ञाय** इत्यत्र **तस्य** मनुष्यस्य **प्रकृतिं** स्वभावं विज्ञाय राज्ञा **समाहितः** सम्यक् सेवाकर्मणि आहितः शीलवान् नरः उत्तमं कर्म कुर्यात् ।

**नाहंवादी न निर्द्वन्द्वो नयत्किञ्चनकारकः ।**
**कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ।। ३१ ।।**

१. कुं. ११८ अध्यायः ।; २. 'शीलं वाऽनुत्तमं कर्म कुर्याद्राजा' इति कुं. पाठः

**कृते कर्मण्यमोघानां कर्ता** इत्यत्र **अमोघानां** वेतनानां कर्ता ।

[१] **दाता भृत्यजनाजीवि न क्रोधी सुमहामनाः ॥ ३२ ॥**

**दाता भृत्यजनाजीवि** इत्यत्र भृत्यजनान् आ समन्तात् जीवयतीति **भृत्यजनाजीवि** ।

॥ इति द्वाविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

[२] **तदेव विस्तरेणोक्तं पूर्ववृत्तं सतां मतम् ।**
**प्रणेयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ २ ॥**

**प्रणेयं राजधर्माणाम्** इत्यत्र **प्रणेयं** प्रकर्षेण ज्ञातुं योग्यम् ।

**नित्यं रक्षितमन्त्रः स्यात्** [३] **यथारूपं शिरः शिखी ।**
**श्लक्ष्णाक्षरगतः श्रीमान्भवेच्छास्त्रविशारदः ॥ ७ ॥**

**यथारूपं शिरः शिखी** इत्यत्र **यथारूपं** यथा अपेक्षितं तथा रूपं यस्य तादृशं शिरः यस्य । कदाचित् ग्रीवां दीर्घीकृत्य प्रकटीकरोति, कदाचित् ह्रस्वं कृत्वा गूहयति ।

[४] **शैलं वर्षोदकानीव द्विजान् सिद्धान् समाश्रयेत् ।**
[५] **अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोत्तमम् ॥ ८ ॥**

---

१. **'त्राता भृत्यजनापेक्षी'** इति कुं. पाठः ।; २. कुं. १२० अध्यायः ।
३. **'यथा मूकः शरच्छिखी'** इति कुं. पाठः ।; ४. **'शैलात्'** इति कुं. पाठः ।
५. BORI पृ. ५६०; **'आत्मार्थं हि सदा'** इति कुं. पाठः ।

**शैलं वर्षोदकानीव** इत्यत्र वर्षोदकानि शैलमिव । **अर्थकामः शिखां राजा** इत्यत्र **शिखां** शौर्याख्याग्नेर्ज्वालाम् । 'अर्चिर्हेतिः शिखा स्त्रियाम्'[1] इत्यमरः ।

**नित्यमुद्धतदण्डः स्यादाचारे चाप्रमादवान् ।**
**लोके चायव्ययौ दृष्ट्वा[2] बृहद्वृक्ष इव स्रवन् ॥ ९ ॥**
**आज्ञावान् स्यात् स्वयूथ्येषु भौमानि चरणैः[3] क्षिपन् ।**
**जातपक्षः परिस्पन्देत्[4] रक्षेद्वैकल्यमात्मनः ॥ १० ॥**

**बृहद्वृक्ष इव स्रवन्** इत्यत्र **स्रवन्** निर्यासादिरूपेण स्वान्तः-स्थितरसस्रवणं कुर्वन् **बृहद्वृक्षः** वटादिवृक्ष इव बहुरससंग्रहे बहुरसस्रवणं कुर्यात्, नो चेदल्पम् । तथा राजापि आयव्ययौ दृष्ट्वा स्वयूथ्येषु आज्ञावान् स्यात् । **भौमानि** भूसम्बन्धीनि स्थलानि **चरणैः** स्वपादैः **क्षिपन्** आक्रामन् वृक्ष इव प्रदेशान् क्रमेण आक्रामति तथा राजापि **चरणैः** परितः सञ्चरणैः भूमिं क्रमेण आर्जयेत् । **जातपक्षः परिस्पन्देत्** इत्यत्र **जातपक्षः** पक्षीव जातपक्षो जातसहायो राजा **परिस्पन्देत्** परितश्चलनं कुर्यात् । 'पक्षः पार्श्वगरुत्साध्यसहाय-बलभित्तिषु' इत्यमरः । सहायसिद्धिपर्यन्तं आत्मनः वैकल्यं **रक्षेत्** निगूहयेत् ।

**दोषान् विवृणुयाच्छत्रोः परपक्षांश्च सूदयेत् ।**
**काननेष्विव पुष्पाणि[5] बहूनर्थान् समाचरेत् ॥ ११ ॥**

---

१. अ.को. १-१-५७ ; २. 'वृक्षाद्वृक्षमिवाव्रजेत्' इति कुं. पाठः ।
३. 'किरन्' कुं. पाठः । ४. BORI पृ. ५६०; 'प्रेक्षेद्वैकल्यमात्मनः' कुं. पाठः ।
५. 'बहिरर्थान्' इति कुं. पाठः ।

**बहूनर्थान् समाचरेत्** इत्यत्र बहूनर्थानुद्दिश्य सम्यक् आ समन्तात् चरेत् सञ्चरेत्।

**उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान्।**
**[1]श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् ॥ १२ ॥**

**श्रयेच्छायामविज्ञाताम्** इत्यत्र **अविज्ञातां** अन्यैरविज्ञातां छायामाश्रयेत्।

**प्रावृषीवासितग्रीवो [2]मज्जेत निशि निर्जने।**

**प्रावृषीवासितग्रीवो** इत्यत्र प्रावृषि **असितग्रीवो** नीलकण्ठो मयूर इव निशि निर्जने स्थले **मज्जेत** मज्जनं कुर्यात्। यथा प्रावृषि निर्जने स्थले मयूरः वर्षधारया स्नातो भवति एवं राजापि निशि निर्जने स्थले मज्जेत अभ्यङ्गं कुर्यात्।

**मायूरेण गुणेनैव [3]स्त्रीभिश्चालक्षितश्चरेत्**
**न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ॥ १४ ॥**

**मायूरेण गुणेनैव** इत्यत्र **अलक्षितः** अन्यैरलक्षितः स्त्रीभिः सह सञ्चरेत्। यथा मयूरः स्वतनुत्राणं देहरक्षकं बर्हं न जह्यात् एवं राजापि तनुत्राणं कवचं न जह्यात्।

**[4]चारभूमिष्वभिमतान् पाशांश्च परिवर्जयेत् ॥ १४ ॥**

---

१. BORI पृ. ५६०; **'श्रयेच्छायामिव ज्ञातिं'** इति कुं. पाठः।
२. BORI पृ. ५६०; **'मायेत'** इति कुं. पाठः।
३. BORI पृ. ५६१; **'स्त्रीभिरारक्षितश्चरेत्'** इति कुं. पाठः।
४. **'चारभूमिष्विव'** इति कुं. पाठः।

[1]प्रस्थापयेद्वा तां भूमिं प्रविशेद्गहनं पुनः ॥ १५ ॥

**चारभूमिष्वभिमतान् पाशांश्च परिवर्जयेत्** इत्यत्र **चारभूमिषु** स्वसञ्चरणभूमिषु अभिमतान् **पाशान्** जालरूपपाशान् परिवर्जयेत् । राजापि पाशवत् शत्रुभिः परितो बन्धे कृते सति तं बन्धं परिवर्जयेत् । यत्र क्षेमः तां भूमिं **प्रस्थापयेत्** प्रस्थानं कुर्यात् । स्वार्थिको णिच् । तत्रापि क्षेमाभावे गहनं वनं प्रविशेत् ।

हन्यात् क्रुद्धान् [2]विषधरान् ये जिह्मगतयोऽहिताः ॥ १५ ॥
[3]नाशयेत् परबर्हाणि सन्निवासान् निवासयेत् ॥ १६ ॥

**ये जिह्मगतयोऽहिता** इत्यत्र ये **जिह्मगतयः** कुटिलगतयः अहिताः तान् **विषधरान्** द्वेषाख्यविषधरान् शत्रून् हन्यात् । ''नीलकण्ठो भुजङ्गभुक्''[4] इति वचनात् मयूरोऽपि जिह्मगान् विषधरान् हन्ति । **परबर्हाणि** वैरिणां बर्हस्थानीयानि अङ्गरक्षकबलानि नाशयेत् । सह निवासयोग्यान् **निवासयेत्** वासं कारयेत् ।

परं विश्वासयेत् साम्ना स्वशक्तिं चोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ॥ १९ ॥

**आत्मनः परिमर्शेन** इत्यत्र **परिमर्शः** परामर्शः ।

सान्त्वयोगमतिः प्राज्ञः कार्याकार्यप्रयोजकः ।
[5]निगूढबुद्धिर्धीरः स्यात् वक्तव्यो वक्ष्यते तथा ॥ २० ॥

---

१. 'प्रणयेद्वाऽपि तां भूमिं प्रणश्येद्गहणे पुनः ॥' इति कुं पाठः ।
२. 'अतित्रिपांस्तां' इति कुं पाठः ।; ३. 'नासूयेच्चावगर्ह्याणि' इति कुं पाठः ।
४. अ.को. २-५-३०
५. $D_{1,7}, G_1$; BORI पृ. ५६२; 'निगूढबुद्धेर्धीरस्य वक्तव्ये' इति कुं पाठः ।

**वक्तव्यो वक्ष्यते तथा** इत्यत्र **वक्तव्यः** मन्त्रिभिः स्वयं वक्तव्यः तान् प्रति स्वयं कदाचिद् **वक्ष्यते** वक्ष्यति च ।

**[१]अथ दृष्टानि युक्तानि स्वानुरूपेषु कर्मसु ।**
**सर्वास्ताननुवर्तेत स्वरांस्तन्त्रीरिवायताः ॥ २४ ॥**

**अथ दृष्टानि युक्तानि** इत्यत्र **दृष्टानि** शास्त्रदृष्टानि, **युक्तानि** युक्तियुक्तानि यानि कर्माणि स्वानुरूपेषु तेषु कर्मसु विनियुक्तान् सर्वास्तानधिकारिणः **अनु** अनुसृत्य वर्तेत ।

**धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।**
**ममायमिति राजा यः सपर्वत इवाचलः ॥ २५ ॥**

**स पर्वत इवाचल** इत्यत्र **अचलः** चलनरहितः ।

**[२]क्षये[३] शत्रोः सञ्चयं पालनं [४]चे-**
**त्युभौ बुद्ध्या सहितौ सर्वकामौ ।**
**तयोश्चान्यमतिमान् सन्दधीत**
**तस्माद्राजा बुद्धिमन्तं श्रयेत ॥ ४१ ॥**

**क्षये शत्रोः सञ्चयं पालनं च** इत्यत्र शत्रोः क्षये सति **सञ्चयं** तत्कोशस्थितद्रव्यसञ्चयं **पालनं** तत्कुमारस्यैव तद्देशे पालनं चेत्युभौ बुद्ध्या सहितौ **सर्वकामौ** सर्वकामप्रदौ । शत्रुकुमारस्य दुर्जनत्वे

१. '**अप्यदृष्टानि**' इति कुं पाठः ।
२. '**क्षयं**' इति कुं पाठः ।
३. जये सां.मु.पा ।
४. '**वा उभावर्थौ सहितौ धर्मकामौ । ततश्च**' इति कुं पाठः ।

सम्बन्धः सज्जनत्वे पालनमिति विवेकाय बुद्धिरपेक्षिता। अतो 'बुद्ध्या सहितौ' इत्युक्तम्। तयोर्मध्ये **अन्यत्** अन्यतरम्।

**बुद्धिर्दीप्ता बलवन्तं हिनस्ति**
**बलं बुद्ध्या पाल्यते वर्धमानम्।**
**शत्रुर्बुद्ध्या सीदते पीड्यमानो**
**बुद्धिपूर्वं कर्म यत्तत् प्रशस्तम् ॥ ४२ ॥**

**बुद्धिर्दीप्ता** इत्यत्र दीप्ता क्रूरा बुद्ध्या सुबुद्ध्या।

**तस्माद्राजा प्रगृहीतः प्रजासु**
**मूलं लक्ष्म्याः सर्वशो ह्याददीत।**
**दीर्घं कालं ह्यपि सम्पीड्यमानो**
[१]**विद्युत्सम्पातमपि नो निर्जितः स्यात् ॥ ४४ ॥**

**विद्युत्सम्पातमपि नो निर्जितः स्यात्** इत्यत्र **विद्युत्सम्पातं** विद्युतः सम्पातसदृशम् ऐश्वर्यं प्राप्यापि नो निर्जितः स्यादिति योग्यपदाध्याहारेण योजना।

**विद्या तपो वा विपुलं धनं वा**
**सर्वं ह्येतद्व्यवसायेन शक्यम्।**
**ब्रह्मायत्तं निवसति देहवत्सु**
**तस्माद्विद्याद्व्यवसायं प्रभूतम् ॥ ४५ ॥**

**तस्माद्विद्याद्व्यवसायं प्रभूतम्** इत्यत्र **प्रभूतं** प्रकर्षेण भूतं श्रेष्ठम्।

---

१. 'व्युप्यात् संपद्व्यवसायेन शक्त्या' इति कुं पाठः।

[१]सन्दर्शने सत्पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान् द्विषतां प्राज्ञः सर्वार्थांश्च प्रसूदयेत् ॥ ४९ ॥

सन्दर्शने सत्पुरुषं जघन्यमपि चोदयेत् इत्यत्र जघन्यमपि सत्पुरुषं सन्दर्शने चोदयेत् द्वाःस्थान् प्रति प्रेरयेत् ।

विधिप्रयुक्तान् नरदेवधर्मान्
उक्तान् समासेन निबोध बुद्ध्या
इमान् [२]विदध्याद्व्यतिसृत्य योऽसौ
राजा महीं पालयितुं स शक्तः ॥ ५१ ॥

विदध्याव्द्यतिसृत्य योऽसौ इत्यत्र व्यतिसृत्य अनुसृत्य ।

प्रीतिप्रवृत्तिं विनिवर्तनं च
सुहृत्सु विज्ञाय [३]निवर्त्य चोभयम् ।
यदेव मित्रं गुरुभारमावहेत्
तदेव सुस्निग्धमुदाहरेद् बुधः ॥ ५५ ॥

सुहृत्सु विज्ञाय निवर्त्य चोभयम् इत्यत्र निवर्त्य निर्वर्त्य वर्तयित्वा ।

॥ इति चतुर्विंशत्यधिकशततमोऽध्यायः ॥

* * *

१. BORI पृ. ५६६; 'सन्दर्शनेन पुरुषं' इति कुं पाठः ।
२. 'विदध्यात् अनुसृत्य यो वै' इति कुं पाठः ।
३. 'विचार्य चोभयोः' इति कुं पाठः ।

## ।। अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।।

**[1]धर्मस्यार्थे [2]महीपाल व्यवहार इतीष्यते ।**
**तस्य लोपः कथं न [3]स्याल्लोकेष्ववहितात्मनः ।। ९ ।।**
**इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ।। १० ।।**

**धर्मस्यार्थे महीपाल** इत्यत्र धर्मस्यार्थे **अवहितात्मन** एकाग्रचित्तस्य पुरुषस्य लोकेषु तस्य धर्मस्य लोपः कथं न स्यादिति विचारः स व्यवहार इतीष्यते ।

**[4]यथोक्ता ब्रह्मकल्पेति लक्ष्मीर्नीतिः सरस्वती ।। २४ ।।**

**यथोक्ता ब्रह्मकल्पेति** इत्यत्र **ब्रह्मणो** वेदस्य **कल्पा** कल्पना ब्रह्मकल्पा ।

**अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले ।**
**दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ ।। २५ ।।**
**कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः ।**
**अप्रमादः प्रमादश्च हर्षशोकौ शमो दमः ।। २६ ।।**

**अर्थानर्थौ सुखं दुःखम्** इत्यादौ अर्थसुखधर्मादीनां अहङ्कार-हेतुत्वाद्दण्डत्वम्, ऋतुमासरात्र्यादीनां [5]विषयाभिलाषजनकत्वा-द्दण्डत्वम् ।

---

१. कुं. १२१ **अध्यायः** ।
२. $D_7$; $S_{(G3missing)}$; BORI पृ. ५६९; **'महाराज'** इति कुं पाठः ।
३. BORI पृ. ५६९; **'स्याल्लोकेष्विह महात्मनः'** इति कुं पाठः ।
४. $D_{2,3}$; BORI पृ. ५७१; **'तथोक्ता ब्रह्मकन्येति'** इति कुं पाठः ।
५. **'विषयाभिलाषाजनकत्वात्'** श्री.सो.मु.पा ।

**तीक्ष्णता मुदतात्युग्रमागमानागमौ तथा ।**
**विरोधश्चाविरोधश्च कार्याकार्ये बलाबले ॥ ३१ ॥**

**कार्याकार्ये बलाबल** इत्यत्र **बलाबले** बुद्धेर्बलाबले । प्रागुक्ते देहस्य बलाबले ।

[1]**अथवाङ्गस्य योक्ता स्यात् हस्तिनो हस्तियायिनः ।**
**अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ॥ ४५ ॥**
**भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः ।**
**कोशो मित्राणि धान्यं च सर्वोपकरणानि च ॥ ४६ ॥**
**सप्तप्रकृति चाष्टाङ्गं शरीरमिह तं विदुः ।**
**राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च ॥ ४७ ॥**

**अथवाङ्गस्य योक्ता स्यात्** इत्यत्र स्वाङ्गसदृशशरीरत्वेन वर्ण्यमानसेनायाः **योक्ता** नियामकः सेनानायकः स्यात् । स च रथः[2] सारथी तदन्ताः षट् एवं सप्त प्रकृतिः सर्वाङ्गानां मूलीभूतमध्यदेहो यस्य तत्सप्तप्रकृति। भिक्षुकमारभ्य सर्वोपकरणपर्यन्तान्यष्टाङ्गानि यस्य **तदष्टाङ्गम्** । **भिक्षुका** बहुवेषधारिणश्चाराः। **प्राड्विवाकाः** [3]न्यायान्यायक्रयविक्रयादिव्यवहारद्रष्टारः स्थूलवैश्यादयः । 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ'[4] इत्यमरः । **मौहूर्ताः** सङ्ग्राममुहूर्तकथनकुशलाः जातकादिलेखनकुशला वा । **दैवचिन्तकाः** सिद्धान्तोक्तगणना-

---

१. **'अथ चाङ्गस्य युक्तस्य रथिनः'** इति कुं पाठः ।; २. **रथदः** सो.मु.पा.
३. **न्यायान्यायादि** सो.मु.पा. ।
४. अ.को. २-८-५

समर्थाः । 'स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि । संवत्सरो ज्यौतिषिको दैवज्ञगणकावपि' इति चामरः ।

॥ इति पञ्चविंशत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षड्विंशत्यधिकशततमोऽध्यायः ॥

हिमवत्पर्वतेऽपि एकं मेरोः शृङ्गमानीतमस्तीति भावेनाह–

**यत्र[1] शृङ्गे हिमवतो [2]मेरोः कनकपर्वते ।**
**यत्र मुञ्जवटे रामो जटाहरणमादिशत् ॥ ३ ॥**

**ततः स भगवान् ध्यात्वा तदा शूलवरायुधः ।**
**देवदेवो महादेवः कारणं जगतः परम् ॥ २५ ॥**

**ततः स भगवान् ध्यात्वा तदा शूलवरायुध** इत्यत्र दुष्टानां शिरःशूलाकारित्वाच्छूलं दण्डः, स एव वरायुधं यस्य स तथोक्तः । अथवा शूलाद्वरं श्रेष्ठं चक्रमायुधं यस्येति वा । शूलवरायुधः शिवान्तर्यामी विष्णुरेवेति ज्ञेयम् । अन्यथा 'ततः पितामहो विष्णुं भगवन्तं सनातनम् । सम्पूज्य वरदं देवं महादेवमथाब्रवीत् ।'[3] 'स्वयं विष्णुः सदा क्लृप्तो धर्मस्य परिरक्षणे'[4] इति च प्रक्रमविरोधः ॥

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।**
**पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ ३१ ॥**

---

१. कुं. १२२ अध्यायः । 'तत्र' इति कुं पाठः ।
२. $K_4$,$B_{1-2}$,$D_{4.8}$; BORI पृ. ५७६; 'वसतिं समुपागमत्' इति कुं पाठः ।
३. शान्ति १२२.२२; ४. शान्ति १२२.२३

**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।**
**अर्थशास्त्रं चतुर्थन्तु विद्या ह्यष्टादशैव तु ॥ ३२ ॥**
**दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ।**
**एतासामेव विद्यानां व्यासमाह महेश्वरः ॥ ३३ ॥**

**व्यासमाह महेश्वर** इत्यत्र **व्यासं** विस्तारम् ।

'रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः । महात्मानं महादेवं विशालाक्षं सनातनम्'[१] इति वचनात् शिवस्य शिवस्रष्टृत्वायोगेन उक्तव्युत्पत्त्या शूलवरायुधः शिवान्तर्यामी विष्णुरेवेति ज्ञेयम् ।

**तमेनं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ ।**
**प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥ ६३ ॥**
**दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥ ६४ ॥**

**तमेनं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ** इत्यत्र क्षुपमुद्दिश्य ददौ ।

कस्य करे ददावित्यत उक्तम् –

**[२]दुष्टानां निग्रहो दण्डो हिरण्यं बाह्यतः क्रिया ॥ ६८ ॥**

**दुष्टानां निग्रहो दण्ड** इत्यत्र **निग्रहः** बलाद्ग्रहणम् । **बाह्यतः** अङ्गाद्बाह्यतः **क्रिया** दण्डक्रिया । **हिरण्यं** तदीयद्रव्यादानम् ।

**पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ।**
**जागर्ति निर्ऋतिर्देवी ज्योतींषि [३]निवृतेरपि ॥ ७४ ॥**

---

१. शान्ति १२२-५५; २. $K_5$; BORI पृ. ५८१; '**दुर्वाचा**' इति कुं पाठः ।
३. $D_1$; BORI पृ. ५८२; '**निर्ऋतीमनु**' इति कुं पाठः ।

**ज्योतींषि निवृतेरपि** इत्यत्र **निवृतेः** निर्ऋतेः ।

**जागर्ति कालः पूर्वश्च मध्ये चान्ते च भारते**
**ईशः सर्वस्य कालो हि महादेवः प्रजापतिः ॥ ८० ॥**

**मध्ये चान्ते च भारत** इत्यत्र **भारते** भारतवर्षे ।

**॥ इति षड्विंशत्यधिकशततमोऽध्यायः ॥**

## ॥ अथ सप्तविंशत्यधिशततमोऽध्यायः ॥

**भीष्म उवाच–**
**[१] य एते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।**
**[२] कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥ ३ ॥**

**कालप्रभवसंस्थासु** इत्यत्र कालात् **प्रभवः** उत्पत्तिः **संस्था** मरणश्च यासु तासु प्रजासु सज्जन्त इति योजना ।

**[३] धर्ममूलस्तु देहोऽर्थः कामोऽर्थफलमुच्यते ॥ ४ ॥**

**धर्ममूलस्तु देहोऽर्थ** इत्यत्र **देहः** देहाख्योऽर्थः । सर्वार्थाधारत्वा-देहस्तु मुख्योऽर्थः । सः **धर्ममूलः** धर्मं प्राक्तनपुण्यमेव मूलं यस्य । तदुपरितनपुण्यस्य मूलमिति वा धर्ममूलः । तस्य देहस्य अर्थ्यत इति व्युत्पत्त्या अर्थशब्दवाच्यं फलं कामः ।

**सङ्कल्पमूलास्ते सर्वे सङ्कल्पो विषयात्मकः ॥ ४ ॥**

**सङ्कल्पो विषयात्मकः** इत्यत्र **विषयात्मकः** विषयव्याप्तः ।

---

१. कुं. १२३ अध्यायः ।; २. BORI पृ. ५८४; '**काम-**' इति कुं पाठः ।
३. BORI पृ. ५८४; '**धर्ममूलोऽर्थ इत्युक्तः**' इति कुं पाठः ।

**विषयाश्चैव कात्स्न्येंन सर्व अहारसिद्धये ।**
**मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ५ ॥**

**मूलमेतत्त्रिवर्गस्य** इत्यत्र एतत् विषयास्वादनम् ।

**धर्मः शरीरसङ्गुप्तिर्धर्मार्थश्चार्थ इष्यते ।**
**कामो रतिफलश्चात्र [१]सर्व एते रजस्वलाः ॥ ६ ॥**

**सर्व एते रजस्वलाः** इत्यत्र **रजस्वलाः** रजोगुणविकाराः ।

**सन्निकृष्टांश्चरेदेतान्न चैतान्मनसा त्यजेत् ।**
**[२]वियुक्तस्तपसा सर्वान् धर्मादीन् कामनैष्ठिकान् ॥ ७ ॥**
**श्रेष्ठबुद्धिस्त्रिवर्गस्य [३]यदयं प्राप्नुयान्नरः ॥ ८ ॥**

**वियुक्तस्तपसा सर्वान्** इत्यत्र अयं नरः त्रिवर्गस्य यत्फलं प्राप्नुयात् ततः श्रेष्ठबुद्धिः तपसा वियुक्तः स्यात् ।

**अनर्थार्थमवाप्यार्थमन्यत्राद्योपकारकम् ।**
**[४]बुद्ध्या बुद्धिरिहार्थेषु तदज्ञाननिकृष्टया ॥ ९ ॥**

**बुद्ध्या बुद्धिरिहार्थेषु तदज्ञाननिकृष्टया** इत्यत्र तेषु अर्थेषु **यदज्ञानम्** अविवेकः तेन **निकृष्टया** आकृष्टया बुद्ध्या अर्थेषु बुद्धिर्भवति ।

---

१. **'सर्वे रतिफलाः स्मृताः'** इति कुं पाठः ।

२. **'विमुक्तः'** इति कुं पाठः ।

३. $K_5, V_1, B, D_a, Dn, D_{2.3.5.6.8}$; BORI पृ. ५८४; **'उदयं प्राप्नुयात् क्षणात्'** इति कुं पाठः ।

४. **'बुद्ध्या बुद्ध इहार्थेन तदह्ना तु निकृष्टया'** इति कुं पाठः ।

[१]अवध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
सम्प्रमोहमलः कामो [२]भूयः स्वगुणवर्जितः ॥१०॥

**भूयः स्वगुणवर्जितः** इत्यत्र **अवध्यानम्** अवज्ञानं अनादर इत्यर्थः । तदेव मलं यस्य स तथोक्तः । स सर्वोऽपि धर्मादिः समलत्वात् स्वगुणवर्जितः ।

**दुराचारान् यदा राजा प्रदुष्टान्न नियच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ १७ ॥**

**तस्मादुद्विजते लोकः** इत्यत्र **तस्मात्** उदासीनाद्राज्ञः **उद्विजते** परस्परकलहादिना दुःखं प्राप्नोति ।

**तं प्रजा नानुरज्यन्ते न विप्रा न च साधवः ।
ततः सङ्क्षयमाप्नोति [३]तथापध्वस्त एव च ॥१८॥**

**तथापध्वस्त एव च** इत्यत्र **अपध्वस्तः** सज्जनैर्धिकृतः ।

अपध्वस्तशब्दार्थमाह–

**अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।
जीवते यदपध्वस्तः शुद्धं मरणमेव तत् ॥१९॥**

इति ।

---

१. T,$G_{1.4}$,$M_{1.3.4}$; BORI पृ. ५८५; **'अपध्यानमलो'** इति कुं पाठः ।
२. $B_{0.3-5}$,$D_n$,$D_{2.3.5.6}$; BORI पृ. ५८५; **'भूयस्तद्गुणवर्धितः'** इति कुं पाठः ।
३. **'तथा वध्यत्वमेव च'** इति कुं पाठः ।

**अत्रैतदाहुराचार्याः पापस्य [1] परिबर्हणम् ।**
**सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च** ॥२०॥

**पापस्य परिबर्हणम्** इत्यत्र अत्र एतत् वक्ष्यमाणं पापस्य **परिबर्हणं** निबर्हणं नाशनमाहुः ।

॥ इति सप्तविंशत्यधिकशततमोध्यायः ॥

## ॥ अथ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

**[2] दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।**
**अश्वांस्तित्तिरिकल्माषान् रत्नानि विविधानि च** ॥१२॥

**अश्वांस्तित्तिरिकल्माषान्** इत्यत्र **तित्तिरिः** चकोरपक्षी । 'तित्तिरिः कुक्कुहो लावो जीवञ्जीवश्चकोरकः' [3] इत्यमरः । तद्वत् **कल्माषान्** कृष्णपाण्डरवर्णान् । 'कल्माषः कृष्णपाण्डुरः' [4] इति निघण्टुः ।

**सोऽहं [5] वाचा प्रहृष्टानां रसानामवलेहिता**
**स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः** ॥३७॥

**सोऽहं वाचा प्रहृष्टानां** इत्यत्र **प्रहृष्टानां** क्रयदानेन प्रहृष्टानाम् ।

॥ इति अष्टाविंशत्यधिकशततमोऽध्यायः ॥

---

१. 'परिवर्तनम्' इति कुं पाठः ।
२. कुं. १२४ अध्यायः ।
३. अ.को. २-५-३५
४. ह.को. ७३६
५. 'वागग्रविद्यानां' इति कुं पाठः ।

## ।। अथ एकत्रिंशायधिकशततमोऽध्यायः ।।

**[१]शरीरमपि राजेन्द्र तनु कानिष्ठिकासमम्**
**ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ।। ८ ।।**

**तनु कानिष्ठिकासमम्** इत्यत्र **कानिष्ठिका** कनिष्ठाङ्गुलिः । **तनु** कृशम् ।

।। इति एकत्रिंशत्यधिकशततमोऽध्यायः ।।

## ।। अथ द्वात्रिंशत्याधिशततमोऽध्यायः ।।

**राजोवाच–**

**[२]आशायाः किं [३]कृशत्वं हि किं चेह भुवि दुर्लभम् ।**
**ब्रवीतु भगवानेतत्त्वं हि धर्मार्थदर्शिवान् ।। ७ ।।**

**आशायाः किं कृशत्वं हि** इत्यत्र आशाया एव कृशत्वं **किं** केनोपायेन भवतीति ।

**ऋषिरुवाच–**

**कृशत्वेन समं राजन्नाशाया विद्यते [४]न च ।**
**तस्य वै दुर्लभत्वाच्च प्रार्थितः पार्थिवो मया ।। ९ ।।**

**कृशत्वेन समं राजन्नाशाया विद्यते न च** इत्यत्र आशायाः **कृशत्वेन** कृशत्वकरणेन समं सुखं न विद्यते । **तस्य** आशाकृशत्वकरणस्य ।

---

१. कुं. १२७ अध्यायः ।; २. कुं. १२८ अध्यायः ।
३. $K_3$,$D_4$; BORI पृ. ६०४; **'च वृत्तं वै'** इति कुं पाठः ।
४. BORI पृ. ६०४; **'नृप'** इति कुं पाठः ।

राजोवाच–

**कृशाकृशे मया ब्रह्मन् गृहीते वचनात्तव ।**
**दुर्लभत्वञ्च तस्यैव वेदवाक्यमिव द्विज ॥ १० ॥**

**कृशाकृशे मया ब्रह्मन्** इत्यत्र फलाप्राप्तिं निश्चित्य खण्डिता या आशा सा कृशा । फलप्राप्तिर्भविष्यतीति मत्वा अखण्डिता या आशा सा अकृशेति **कृशाकृशे** ।

**त्वत्तः कृशतरं किं नु ब्रवीतु भगवानिदम् ।**
**यदि गुह्यं न ते विप्र लोकेऽकिं चेह दुर्लभम् ॥१२॥**

**त्वत्तः कृशतरं किं नु** इत्यत्र **त्वत्तः** त्वत्सकाशात् तव बुद्ध्येत्यर्थः । किं नु कृशतरं जातमिति प्रश्नः ।

**सत्कृत्य [१] नोपकुरुते परं शक्त्या यथार्थतः ।**
**या सक्ता सर्वभूतेषु साशा कृशतरी मया ॥ १४ ॥**

**सत्कृत्य नोपकुरुत** इत्यत्र यदा भवान् मां सत्कृत्य नोपकुरुते तदा सर्वभूतेषु सक्ता या सा आशा मया कृशतरी कृता । इतः परं कमपि राजानं न याचे इति आशैव कृशतरी कृता, खण्डितेत्यर्थः ।

**कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च ।**
**अपकारिषु चासक्ता साऽऽशा कृशतरी मया ॥ १५ ॥**

**कृतघ्नेषु च या सक्ता** इत्यत्र एतेषु चतुर्ष्वपि कृता आशा फलालाभात् कृशतरीति मया निश्चिता । एवमुत्तरत्रापि ।

---

१. $K_5, V_1, B, D_a, D_n, D_{2.3.5.6.8}$; BORI पृ. ६०५; **'नोपक्रियते'** इति कुं पाठः ।

**प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता ।**
**तथा नरेन्द्र धनिनां साऽऽशा कृशतरी मता ॥ १७ ॥**

**प्रसवे चैव नारीणां** इत्यत्र वृद्धानां नारीणां प्रसवे सति **पुत्रकारिता** पुत्रो भवतीति या आशाकारिता सा कृशतरीति निश्चितेति योजना ।

**प्रदानकाङ्क्षिणीनां च कन्यानां वयसि स्थिते**
**श्रुत्वा कथास्तथायुक्ताः साऽऽशा कृशतरी मता ॥१८॥**

**प्रदानकाङ्क्षिणीनां च** इत्यत्र प्रदानकाले **अयुक्ताः** कथाः कन्याया एव मरणादिरूपाः कथाः श्रुत्वा ।

**[१] सत्यमेतदसन्देहं यदेतद् व्याहृतं त्वया ॥ २१ ॥**

**सत्यमेतदसन्देहम्** इत्यत्र **एतत्** आशाकृशीकरणायोक्तं वचनम् ।

**एतद्दृष्टं मया राजंस्त्वत्तश्च वचनं श्रुतम् ।**
**आशामपनयत्वाशु ततः कृशतरीमिमाम् ॥ २५ ॥**

**ततः कृशतरीमिमाम्** इत्यत्र **कृशतरीं** मृगाप्राप्त्या अतिशयेन कृशीकरणयोग्याम् । अध्यायतात्पर्यन्तु आशाखण्डनमेव दुष्करत्वाद् दुर्लभम् । विवेकिनां खण्डनोपायस्तु आशास्यमानफलाप्राप्तिरेवेति ज्ञेयम् ।

॥ इति द्वात्रिंशत्यधिकुशततमोऽध्यायः ॥

---

१. $K_5$,$V_1$,B,$D_a$,$D_{2.3.5.6.8}$; BORI पृ. ६०६; **'सत्यमेतत् त्वया विप्र यथोक्तं नान्यथा मृषा'** इति कुं पाठः ।

## ॥ अथ चतुस्त्रिंशत्यधिकशततमोऽध्यायः ॥

**[१]परचक्राभियातस्य परराष्ट्राणि मृद्नतः ।**
**विग्रहे वर्तमानस्य दुर्बलस्य बलीयसा ॥ ३ ॥**

**परचक्राभियातस्य** इत्यत्र परचक्रेणाभियातः परचक्राभियातः, तस्य ।

**अप्राप्यश्च भवेत् सान्त्वं भेदो वाऽप्यतिपीडनात् ।**
**जीवितं त्वर्थहेतोर्वा तत्र किं सुकृतं भवेत् ॥ ४ ॥**

**अप्राप्यश्च भवेत् सान्त्वं** इत्यत्र अप्राप्यं प्राप्तुमयोग्यम् । **अर्थहेतोः** अर्थदानाख्यहेतोः ।

**धर्मो ह्यणीयान् वचनाद् बुद्धेश्च भरतर्षभ ।**
**श्रुत्वौपम्यं सदाचारैः साधुर्भवति स क्वचित् ॥ ६ ॥**

**धर्मो ह्यणीयान् वचनाद् बुद्धेश्च** इत्यत्र धर्मवचनात् धर्मबुद्धेश्च **धर्मः** धर्माचरणमेव अणीयान् । धर्मो वाचा वक्तुं शक्यते, मनसा स्मर्तुश्च शक्यते, कर्तुं तु न शक्य इति भावः ।

**कर्मणा बुद्धिपूर्वेण [२]भवत्याद्यो न वा पुनः ।**
**तादृशोऽयमनुप्रश्नस्तद्भ्यायस्व स्वया धिया ॥ ७ ॥**

**भवत्याद्यो न वा पुनः** इत्यत्र **आद्यः** आदिकालीनो धर्मः ।

---

१. कुं. १३० अध्यायः ।
२. '**भवत्याढ्यो**' इति कुं पाठः ।

**दुःखादान इह ह्येष स्यात्तु पश्चात्क्षमो मम ।**
**[1]अनुगम्य मतीनां हि सर्वासामेव [2]निश्चयः ॥ ९ ॥**

**अनुगम्य मतीनां** इत्यत्र सर्वासां मतीनाम् **अनुगम्य** अनुगमनं कृत्वा । कर्मणि षष्ठी । **निश्चयः** एकत्र निश्चयः स्यादिति योजना ।

**कोशं सञ्जनयेद्राजा [3]निर्जलेभ्यो यथा जलम् ।**
**कालं प्राप्यानुगृह्णीयादेष धर्मोऽत्र साप्रतम् ॥ १३ ॥**

**निर्जलेभ्यो यथा जलम्** इत्यत्र **निर्जलेभ्यः** दुर्गादिभ्यः अर्थे ।

**प्रकार्यं प्रोच्यते धर्मो वृत्तिर्धर्मे गरीयसी ।**
**धर्मं प्राप्य यथान्यायं न [4]बलीयान्न विन्दति ॥ १५ ॥**

**वृत्तिर्धर्माद् गरीयसी** इत्यत्र **वृत्तिः** शरीरधारणभ् । 'शरीरमाद्यं खलु धर्मसाधनम्' इति वचनात् । बलीयान् नेति न, स्वर्गं न विन्दतीति च नेति योजना ।

**सर्वात्मनैव धर्मस्य न परस्य न चात्मनः ।**
**सर्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः ॥ १९ ॥**

**सर्वात्मनैव धर्मस्य** इत्यत्र धर्मस्यैव हेतोः आपदः आत्मानमुज्जिहीर्षेत्, **आत्मन** उदरभरणाय च न, **परस्योदरभरणाय** च न ।

१. BORI पृ. ६१०; **'अभिगम्य'** इति कुं पाठः ।

२. $K_5, V_1, B_{(except\ B1)}; D_a, D_n, D_{2.4.6.8,M}$; BORI पृ. ६१०; **'निश्चयम्'** इति कुं पाठः ।

३. BORI पृ. ६१०; **'नित्यमेभ्यो यथा बलम्'** इति कुं. पाठः ।

४. BORI पृ. ६१०; **'बलीयान्निषीदति'** इति कुं पाठः ।

**तत्र धर्मविदस्तात निश्चयो धर्म[१] नैपुणम् ।**
**[२]उद्यमो नैपुणं क्षात्रे बाहुवीर्यादिति श्रुतिः ॥ २० ॥**

**निश्चयो धर्मनैपुणम्** इत्यत्र क्षात्रे धर्मे **निश्चयः** इदं करोमीति निश्चयः **धर्मनैपुणम्** आद्यं धर्मनैपुणम् । बाहुवीर्यात् उद्यमो **नैपुणं** द्वितीयं धर्मनैपुणम् ।

**क्षत्रियो वृत्तिसंरोधे [३]कस्मान्नादातुमर्हति ।**
**अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत ॥ २१ ॥**

**कस्मान्नादातुमर्हति** इत्यत्र कस्मात्पुरुषात् आदातुं नार्हति ।

**स्वधर्मानन्तरा वृत्तिः [४]याऽन्याननुपजीविनः ।**
**[५]अर्हतः प्रथमं [६]कल्पः अनुकल्पेन जीवनम् ॥ २५ ॥**
**आपद्गतेन धर्माणामन्यायेनोपजीवनम् ।**
**अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ॥ २६ ॥**

**स्वधर्मानन्तरा वृत्तिः** इत्यत्र **अनुपजीविनः** सर्वथा उपजीवन-रहितस्य क्षत्रियस्य **स्वधर्मानन्तरा** क्षत्रवृत्तेरनन्तरा या वैश्यवृत्तिः सा स्यात् । **अर्हतः** योग्यस्य । प्रथमं **कल्पः** पक्षः । स्वस्वधर्मेषु वर्तनमिति

---

१. $K_{3.5}$,$B_{0.3}$,$D_{n1}$,$D_{2.3.5.6.8}$; BORI पृ. ६११; **'नैपुणैः'** इति कुं पाठः
२. $K_5$,$D_n$,$D_{2.3.5.6.8}$; BORI पृ. ६११; **'उद्यमं जीवनं'** इति कुं पाठः ।
३. $T_1$,$G_{1.2.4}$; BORI पृ. ६११; **'कस्य'** इति कुं पाठः ।
४. **'याऽन्यामनुपजीवतः'** इति कुं पाठः ।
५. D7(by corr)S($G_{3.missing}$); BORI पृ. ६१२; **जहतः** इति कुं पाठः ।
६. **'कल्पं'** इति कुं पाठः ।

यावत् । धर्माणाम् **आपद्गतेन** धर्मसङ्कटं गतेन पुंसा **अनुकल्पेन** अनन्तरपक्षेण जीवितुं शक्यते । **तज्जीवनम्** अन्यायेनोपजीवनम् ।

**दातारं[1] रक्षितारं च प्रजानां क्षत्रियं विदुः ।**
**तस्मात्संरक्षता कार्यमादानं क्षत्रबन्धुना ॥ २८ ॥**

**दातारं रक्षितारम्** इत्यत्र **दातारम्** आदातारम् ।

**अन्यत्र [2]राजन् हिंसाया वृत्तिर्नेहास्ति कस्यचित् ।**
**अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः ॥ २९ ॥**

**अन्यत्र राजन् हिंसाया** इत्यत्र **हिंसायाः** धान्यादिहिंसाया आरण्यकमृगहिंसायाश्चान्यत्रेत्यर्थः ।

**न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम् ।**
**विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता ॥ ३० ॥**

**न शङ्खलिखितां वृत्तिम्** इत्यत्र शङ्खपदेन शङ्खवच्छुभ्रं ललाटास्थि गृह्यते । मम शिरसि यथा लिखितं तथा भवतीति स्थितिः शङ्खलिखिता वृत्तिः ।

**कोशं दण्डं बलं मित्रं यदन्यदपि सञ्चितम् ।**
**न कुर्वीतान्तरं राष्ट्रे राजा [3]परिगते क्षुधा ॥ ३३ ॥**

**बीजं भक्तेन सम्पाद्यम् इति धर्मविदो विदुः**

---

१. **'आर्तानां'** इति कुं पाठः ।

२. BORI पृ. ६१२; **'अपि विहिंसाया'** इति कुं पाठः ।

३. **'परिगतः'** इति कुं पाठः ।

**न कुर्वीतान्तरं राजा बीजं भक्तेन सम्पाद्यम्** इत्यत्र **अन्तरं** कालव्यवधानम् । **बीजं** धर्मबीजम् । **भक्तेन** अन्नेन । 'अन्धः कूरं भक्तम्'[१] इति हलः ।

**अत्रैतच्छम्बरस्याहुः महामायस्य दर्शनम् ॥ ३४ ॥**
**[२]वित्तस्य जीवितं राज्ञो राष्ट्रं यस्यावसीदति ।**
**अवृत्त्यान्यमनुष्योऽपि यो वेदेशिक इत्यापि ॥ ३५ ॥**

**अत्रैतच्छम्बरस्याहुः** इत्यत्र यस्य राज्ञो राष्ट्रमवसीदति तथापि यस्य राज्ञो **वित्तस्य** वित्तस्यार्थे जीवितं वित्तमेवाशास्ते न त्व(व)सीदत्-प्रजापालनं करोतीत्यत्र अस्मिन्नर्थे **महामायस्य** शम्बरस्य एतत् एतादृशं चरित्रं दर्शनं निदर्शनम् ।

**अकार्यमपि कार्यार्थं क्रियते यज्ञकर्मसु ।**
**एतस्मिन् कारणे राजा न दोषं प्राप्तुमर्हति ॥ ३८ ॥**

**अकार्यमपि कार्यार्थम्** इत्यत्र **अकार्यं** पशुहिंसादिकम् । **कार्यार्थं** स्वर्गार्थम् ।

**अर्थार्थमन्यद्भवति विपरीतमथापरम् ।**
**[३]अर्थार्थमन्यथाप्यन्यत् तत्सर्वं ह्यर्थकारणम् ॥ ३९ ॥**

**विपरीतमथापरम्** इत्यत्र विपरीतम् अथ (अ)परम् अनुकूलश्च । **अन्यत्** राष्ट्रमित्रादिकम् । **अर्थार्थं** द्रव्यसिद्ध्यर्थम् । अन्यथा **अन्यत्**

---

१. ह.को. ३१९ ; २. '**-धिक्तस्य**' इति कुं पाठः ।
३. $S_1$,$K_{2.4}$,$D_{1.8}$; BORI पृ. ६१४; '**अनर्थार्थम्**' इति कुं पाठः ।

राष्ट्रादिकम् । **अन्यत्** प्रयोजनरहितम् । **तत्** तस्मात्कारणात् सर्वं अर्थकारणं हि इति योजना ।

**यज्ञार्थमन्यद्भवति [१] यज्ञाद्यर्थस्तथा परः ।**
**[२] यज्ञोऽप्यर्थार्थमेवैतत् सर्वं यज्ञस्य साधनम् ॥ ४० ॥**

**यज्ञार्थमन्यद्भवति** इत्यत्र **अन्यत्** सञ्चितधनधान्यादिकं यज्ञार्थं भवति । तथा यज्ञाद्यर्थः **परः** परलोकः । 'यज्ञाद्भवति पर्जन्यः पर्जन्यादन्न (पर्जन्यादर्थ) सम्भवः' [३] इति वचनात् यज्ञोऽपि अन्ततः अर्थार्थमेव । **एतत्** एतस्मात्कारणात् सर्वं यज्ञस्य साधनम् ।

**उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीम् ॥ ४१ ॥**

**उपमामत्र वक्ष्यामि** इत्यत्र **अत्र** अन्यानपीडयित्वा कोशः पीडयितुं न शक्य [४] इत्यत्र उपमां वक्ष्यामि ।

**यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ।**
**द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि ॥ ४२ ॥**

**द्रुमाः केचन सामन्ता** इत्यत्र **सामन्ताः** समन्ताद्भिद्यमानाः ।

**सर्वोपायैराददीत धनं यज्ञ प्रयोजनम् ।**
**न तुल्यदोषः स्यादेवं कार्याकार्येषु भारत ॥ ४५ ॥**

---

१. **'यज्ञोऽन्यार्थः'** इति कुं पाठः ।
२. **'यज्ञस्यार्थार्थमेवान्यत् सर्वं यज्ञसाधकम्'** इति कुं पाठः ।
३. गी. ३-१४
४. प्रकरणार्थ एवायम् ।

**न तुल्यदोषः स्यादेवं** इत्यत्र एवं यूपार्थं बहुवृक्षपातवत् **कार्याकार्येषु** बहुतरकार्योपयुक्ताकार्येषु कृतेषु सत्सु **तुल्यदोषः** केवलाकार्यकारि-सदृशो दोषः न स्यात् ।

**नोभौ सम्भवतो राजन् कथञ्चिदपि भारत ।**
**न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥ ४६ ॥**

**नोभौ सम्भवतो** इत्यत्र **उभौ** एकस्मिन् शुभकर्मणि दोषादोषौ न सम्भवतः । समुद्रोदके ईषद्धिङ्गुमेलने तत्परिमलो यथा नास्ति एवं बहुतरपुण्यानुकूलेषत्पापे पुण्यमेव, ईषदपि दोषो नास्तीति भावः ।

**न च राज्ञः समो धर्मः कश्चिदस्ति कथञ्चन ।**
**धर्मः संशब्दितो राज्ञाम् आपदर्थमतोऽन्यथा ॥ ४८ ॥**

**धर्मः संशब्दितो राज्ञाम्** इत्यत्र राज्ञां धर्म एव सं समीचीन इति शब्दितः । आपदर्थम् **अतः** धर्मादन्यथा अधर्मोऽपि संशब्दितः ।

**॥ इति चतुस्त्रिंशदधिकशततमोऽध्यायः ॥**

## ॥ अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

**[१]बाह्यार्थे विजिगीषुः स्यात् धर्मार्थकुशलः शुचिः ।**
**जवेन सन्धिं कुर्वीत पूर्वं पूर्वं विमोक्षयेत् ॥ ४ ॥**

**बाह्यार्थे विजिगीषुः स्यात् पूर्वं पूर्वं विमोक्षयेत्** इत्यत्र **बाह्यार्थो** धनकनकादिः । **धर्मार्थः** धर्मरूपोऽर्थ आन्तरः । **पूर्वं पूर्वं** जितं जितं विमोक्षयेत् ।

१. कुं. १३१ अध्यायः । 'बाह्यश्चेत्' इति कुं पाठः ।

**[१]अथास्याराजधानीश्च तरेदन्येन वाऽऽपदम् ।**
**तद्भावभावो द्रव्याणि जीवन्पुनरुपार्जयेत् ॥ ६ ॥**

**अथास्याराजधानीश्च** इत्यत्र **अस्य** प्रबलस्य शत्रोः **अराजधानीं** राजधानीव्यतिरिक्तस्थलं **तरेत्** वितरेत् । **अन्येन** धनादिदानेन वा आपदं तरेत् ।

**अपराधाज्जुगुप्सेत [२]कः सम्पन्नधनो धनम्**
**न त्वेवात्मा प्रदातव्यः शक्ये सति कथञ्चन ॥ ८ ॥**

**अपराधाज्जुगुप्सेत कः सम्पन्नधनो धनम्** इत्यत्र **अपराधात्** प्रबलेन सह अपराधं प्राप्य सम्पन्नधनः कः **जुगुप्सेत** गोप्तुमिच्छेत् । 'गुपू रक्षणे' इति धातुः ।

**सर्वलोकागसं कृत्वा मृदुत्वं गन्तुमेव च ।**
**विश्वासाद्विनयं कुर्यात् [३]सजलाद्वाप्युपानहम् ॥ १३ ॥**

**सजलाद्वाप्युपानहम्** इत्यत्र **सजलात्** जलसहिततैलादेः **उपानहं** वा उपानहमिव । जलतैलादेर्यथा उपानहं मृदुत्वं प्रापयन्ति तथा मृदुत्वं गन्तुं विनयं कुर्यात् ।

**[४]अपविक्रमिषुः क्षिप्रं यथाकामन्तु सान्त्वयन् ।**
**विलङ्घयित्वा सत्रेण ततः स्वयमुपक्रमेत् ॥ १४ ॥**

---

१. **'अपास्य राजधानीं वा'** इति कुं पाठः ।
२. **'का सपत्नधने दया'** इति कुं पाठः ।
३. **'सअह्याद्वाप्युपानहौ'** इति कुं पाठः ।
४. **'अपचिक्रमिषुः क्षिप्रं सेनां स्वां परिसान्त्वयन्'** इति कुं पाठः ।

**अपविक्रमिषुः क्षिप्रम्** इत्यत्र **अपविक्रमिषुः, अपक्रमं** पलायनं कर्तुमिच्छुः ।

**॥ इति पञ्चत्रिंशदधिकशततमोऽध्यायः ॥**

* * *

## ॥ अथ षट्त्रिंशदधिकशततमोऽध्यायः ॥

**[१]विज्ञानबलमास्थाय जीवितव्यं तथा गते ।**
**सर्वं साध्वर्थमेवेदं असाध्वर्थं न किञ्चन ॥ ३ ॥**

**सर्वं साध्वर्थमेवेदं** इत्यत्र **इदं सर्वं** जगत् **साध्वर्थं** साधूनामर्थे निर्मितम् ।

**असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ।**
**आत्मानं सङ्क्रमं कृत्वा कृच्छ्रधर्मकृदेव सः ॥ ४ ॥**

**आत्मानं सङ्क्रमं कृत्वा** इत्यत्र **आत्मानं** परमात्मानं **सङ्क्रमं** सम्यक्क्रमणमाक्रमणं यस्य तं कृत्वा । सर्वेषां पोषणं सर्वव्यापिहरिपूजनमेवेति मत्वेत्यर्थः । अत एव विज्ञानबलमास्थायेत्युक्तम् ।

**[२]आरोपेणात्मना राजन् राष्ट्रे स्थितिमकोपयन् ।**
**अदत्तमप्याददीत भ्रातुर्वित्तं ममेति वा ॥ ५ ॥**

**आरोपेणात्मना राजन्** इत्यत्र आरोप्यते समर्प्यते सर्वं कर्म यत्र स आरोपः तेन आत्मना परमात्मना ज्ञातेन । मम भ्रातृवित्तमिति मत्वा अदत्तमप्याददीत ।

---

१. कुं. १३२ अध्यायः ।; २. 'अरोषेणात्मनो' इति कुं पाठः ।

**विज्ञानबलपूतो यो वर्तते निन्दितेष्वपि ।**
**वृत्तविज्ञानवान् धीरः कस्तं किं वक्तुमर्हति ॥ ६ ॥**

**वृत्तविज्ञानवान्** इत्यत्र वृत्तं सदाचारः । **वक्तुं** निन्दितुम् ।

**येषां बहुकृता बुद्धिः तेषामन्या न रोचते ।**
**[१]तेजसाभिप्रवर्धन्ते बलवन्तो युधिष्ठिर ॥ ७ ॥**

**येषां बहुकृता बुद्धिः** इत्यत्र **बहौ** महति हरौ कृता बुद्धिः । **बलवन्तः** ज्ञातबलवन्तः ।

**[२]यदेव प्रकृतं शास्त्र अविशेषेण वर्तते ।**
**[३]तदेव मध्याः सेवन्ते मेधावी [४]चाऽप्यथोत्तरम् ॥ ८ ॥**

**यदेव प्रकृतं शास्त्र मेधावी चाऽप्यथोत्तरम्** इत्यत्र **प्रकृतम्** आपाततः प्रक्रान्तं स्वर्गादि । **शास्त्रे** 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिशास्त्रे । **मेधावी** रोचनार्थं फलश्रुतिरित्यादिशास्त्ररहस्यवेदी । **उत्तरम्** उत्तमं मोक्षं **सेवते** फलतया सेवते ।

**एतत्प्रमाणं लोकस्य चक्षुरेतत्सनातनम् ।**
**तत् [५]प्रमाणेन गाहेत तेन तत्साध्वसाधु वा ॥ १० ॥**

**तत् प्रमाणेन** इत्यत्र **तत्** तस्मात्कारणात् । **तेन** प्रमाणेन ।

---

१. **'तेजसा ते प्रवर्तन्ते'** इति कुं पाठः ।

२. **'यदैव प्रकृतं शास्त्रं जनस्तदनुवर्तते । तदैवमध्यासेवन्ते मेधावी त्राऽप्यथोत्तरम्'** इति कुं पाठः ।

३. BORI पृ. ६९०; **'तदैव'** इति कुं. पाठः ।

४. BORI पृ. ६९०; **'वापि'** इति कुं. पाठः ।

५. $T_2$,$G_1$; BORI पृ. ६९१; **'प्रमाणोऽवगाहेत'** इति कुं पाठः ।

**करिष्यद्योऽपि पैशुनम् ॥ १३ ॥**

**करिष्यद्योऽपि पैशुनम्** इत्यत्र यः पैशुनं **करिष्यत्** अकरिष्यत् एतत् ।

**यथा सुमधुरौ [१] रम्यौ सुधां वा साधुवाहिनीम् ।**
**धुरमुद्यम्य वहतस्तथा वर्तेत वै नृपः ॥ १४ ॥**

**सुधां वा साधुवाहिनीम्** इत्यत्र **सुधां वा** सुधामिव विद्यमानां साधुवाहिनीं **धुरम्** उदकव्यापारम् उद्यम्य यान्ति ।

**यथायथाऽस्य बहवः सहायाः स्युस्तथा चरेत् ।**
**आचारमेव मन्यन्ते गरीयो धर्मलक्षणम् ॥ १५ ॥**
**अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः ।**
**अर्थे क्षीणेऽथवा लुब्धाः ते ब्रूयुर्वाक्यमीदृशम् ॥ १६ ॥**

**ते ब्रूयुर्वाक्यमीदृशम्** इत्यत्र ईदृशं शिरसि यथा लिखितं तथा भवतीत्याद्याकारम् ।

**[२] अर्थमप्यत्र पश्यन्ति विकर्मस्थस्य पातनम् ।**
**न चार्षात्सदृशं किञ्चित्प्रमाणं दृश्यते क्वचित् ॥ १७ ॥**

**अर्थमप्यत्र** इत्यत्र अत्र शिरसि लिखिते । **आर्षात्** ऋषिदृष्टवेदात् ।

**सर्वतः सत्कृतः सद्भिर्भूतिप्रवरकारणैः ।**
**हृदयेनाभ्यनुज्ञातो यो धर्म [३] स्तस्य वस्यते ॥ १९ ॥**

---

१. **'दम्यौ सुदान्तौ साधुवाहिनौ'** इति कुं पाठः ।
२. **'आर्षमप्यत्र'** इति कुं पाठः ।; ३. **'तं व्यवस्यति'** इति कुं पाठः ।

**यो धर्मस्तस्य वस्यत** इत्यत्र **तस्य** धर्मस्य अर्थे **वस्यते** व्यवस्यते सर्वैः ।

**यश्चतुर्गुण[1] सम्पन्नो धर्मवेदस्य धर्मवित् ।**
**[2]हरेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥ २० ॥**

**यश्चतुर्गुणसम्पन्नो** इत्यत्र यजनयाजनाध्ययनाध्यापनानीति चतुर्गुणाः । **धर्मवेदस्य** धर्मशास्त्रस्य । हरेः सकाशादिव धर्मस्य सकाशात् ।

॥ इति षट्त्रिंशदधिकशततमोऽध्यायः ॥

॥ अथ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

**[3]स कोशः शुद्धभावेन न नृशंसेन जायते ।**
**मध्यमं पदमास्थाय कोशसङ्ग्रहणं चरेत् ॥ ३ ॥**

**मध्यमं पदमास्थाय** इत्यत्र क्वचिदानृशंस्यं क्वचिन्नृशंसता चेति मध्यमं पदम् ।

**उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा ।**
**तस्मात् कोशं बलं मित्रामथ राजा विवर्धयेत् ॥ ५ ॥**

**यथैव मरणं तथा** इत्यत्र यथा मरणं गच्छेत् तथेत्यर्थः ।

**यथा सद्भिः परादानं अहिंसादस्युभिस्तथा ।**
**अनुरज्यन्ति भूतानि समर्यादेषु दस्युषु ॥ १५ ॥**

---

१. 'सम्पन्नं धर्मं वेद स' इति कुं पाठः ।; २. 'अहेरिव' इति कुं पाठः ।
३. कुं. १३३ अध्यायः ।

**अहिंसादस्युभिस्तथा** इत्यत्र **अहिंसादस्युभिः** अहिंसाकारिदस्युभिः ।

**[१]अयुद्धमनसां बन्धो दारामर्शः कृतघ्नता ।**
**ब्रह्मवित्तस्य चादानं निःशेषकरणं तथा ॥ १६ ॥**
**स्त्रियां [२]मोहः पथि स्थानं साधुष्वेव विगर्हितम् ॥ १७ ॥**

**अयुद्धमनसां बन्धो, स्त्रियां मोहः पथि स्थानम्** इत्यत्र **बन्धः** निर्बन्धः । ५।८ स्त्रीणां पथि **स्थानं** तन्निरोधाय अवस्थानम् ।

**सशोषकारिण[३]स्तात शेषं पश्यन्ति सर्वशः ।**
**निःशेषकारिणो नित्यं निःशेषकरणाद्भयम् ॥ २० ॥**

**सशेषकारिणस्तात** इत्यत्र **सशेषकारिणः** चोरस्य ।

॥ इति सप्तत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टत्रिंशदधिकशततमोऽध्यायः ॥

**[४]अत्र कामन्दवचनं कीर्तयन्ति पुराविदः ।**
**प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः ॥ १ ॥**

**अत्र कामन्दवचनम्** इत्यत्र **कामन्दः** कामन्दाख्य ऋषिः ।

**तौ तु न व्यवधातव्यौ परोक्षा धर्मयातना ।**
**अधर्मो धर्म इत्येतद् यथा वृक्षफलं तथा ॥ २ ॥**
**धर्माधर्मफले जातु न ददर्शेह कश्चन ॥ ३ ॥**

---

१. **'अयुध्यमानस्यादानं'** इति कुं पाठः ।; २. **'मोषः'** इति कुं पाठः ।
३. BORI पृ. ६९५; **'तत्र'** इति कुं पाठः ।; ४. कुं. १३४ **अध्यायः** ।

**अधर्मो धर्म इत्येतद् यथा वृक्षफलं तथा** इत्यत्र अधर्मो धर्म इति यौ एतत् अनयोः फलं वृक्षफलं यथा तथा कालान्तरे दृश्यते, न तु तदैवेत्यर्थः।

**बुभूषेद्बलमेवेह सर्वं बलवतो वशे ॥ ३ ॥**

**श्रियं बलममात्यांश्च बलवानिह विन्दति**
**यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम् ॥ ४ ॥**

**बुभूषेद्बलमेवेह** इत्यत्र **बलम्** अर्थबलं स्वबाहुबलञ्च यथा भवति तथा बुभूषेत्। **बलं** सैन्यम्। **बलवान्** उक्तबलत्रयवान्।

**अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते।**
**बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः ॥ ६ ॥**

**अति धर्माद्बलं मन्ये** इत्यत्र **अति** अतिशयितम्।

**यदेनमाहुः पापेन चारित्रेण विवक्षितम्।**
**सुभृशं तप्यतेऽतेन वाक्शल्येन परिक्षतः ॥ ११ ॥**

**यदेनमाहुः पापेन चारित्रेण विवक्षितम्** इत्यत्र **विवक्षितं** तेन वाक्शल्येन वक्तुमभीप्सितम्।

**इत्यस्तीति वदेदेव परेषां कीर्तयेद् गुणान्।**
**जपेदुदकशीलः स्तात्पेशलो नातिजल्पकः ॥ १४ ॥**

**इत्यस्तीति वदेदेव** इत्यत्र अस्ति परलोकः इत्येव वदेदिति योग्यपदाध्याहारेणान्वयः।

ब्रह्म क्षत्रं सम्प्रविशेत् बहु कृत्वा [१] सुदुष्कृतम् ।
उच्यमानो हि लोकेन बहु तत्तदचिन्तयन् ॥ १५ ॥

**ब्रह्म क्षत्रं सम्प्रविशेत्** इत्यत्र क्षत्रं बहु दुष्कृतं कृत्वा तत्परिहाराय **ब्रह्म** ब्राह्मणकुलं सम्प्रविशेत् ।

उपप्राप्यैवमाचारं क्षिप्रं बहुमतो भवेत् ।
सुखं वित्तञ्च भुञ्जीत [२] वृत्तेनैतेन गोपयन् ॥ १६ ॥

**वृत्तेनैतेन गोपयन्** इत्यत्र **गोपयन्** रक्षन् ।

॥ इति अष्टत्रिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

येऽस्मान्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
[३] तेषामासाद्य गेहेषु काल्प एव स गच्छति ॥ ९ ॥

**तेषामासाद्य गेहेषु** इत्यत्र **आसाद्य** मांसादिकं प्रापयित्वा गच्छति ।

तं बहूनि सहस्राणि [४] ग्रामणित्वेन वव्रिरे ।
[५] निर्मर्यादातिदस्यूनां निरनुक्रोशवर्तिनाम् ॥ १० ॥

---

१. $D_7, T_1, G_{2.5}, M_4$; BORI पृ. ६९७; '**सुदुष्करम्**' इति कुं पाठः ।
२. $B_2, D_9, T_1, G_{2.5}, M_4$; BORI पृ. ६९८; '**वृत्तेनैकेन गोपयेत्**' इति कुं. पाठः ।
३. $K_5, D_{n3}, D_{2.3.7.8.g}$; BORI पृ. ७००; '**तेषामासज्य**' इति कुं पाठः ।
४. $B_{2(marg)}, D_{n3}, D_{2.3.5.8}$; BORI पृ. ७००; '**ग्रामणीत्वेऽभिवव्रिरे**' इति कुं पाठः ।
५. '**निर्मर्यादानि दस्यूनां**' इति कुं पाठः ।

**तं बहूनि सहस्राणि ग्रामणित्वेन वव्रिरे** इत्यत्र निरनुक्रोशवर्तिनां निर्मर्यादातिदस्यूनां बहूनि सहस्राणि एनं नैषादिं **ग्रामणित्वेन** स्वस्वामित्वेन इह वव्रिरे इति योजना ॥

**यस्य त्वेते सम्प्रदुष्टा तस्य विद्यात् पराभवम् ।**
**न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ॥ १७ ॥**

**यस्य त्वेते सम्प्रदुष्टा** इत्यत्र **यस्य** राज्ञः सम्यक् प्रकर्षेण दुष्टाः दुःखं प्रापिता एते ब्राह्मणाः ।

**ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।**
**[1]अप्यदस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ॥ २२ ॥**

**अप्यदस्यवो भूत्वा** इत्यत्र **अदस्यवः** जन्मान्तरे सज्जनाः ।

**इदं कापच्यचरितं यो [2]नित्यमनुकीर्तयेत् ।**
**नारण्येभ्योऽपि भूतेभ्यो भयमृच्छेत् कथश्चन ॥ २५ ॥**

**यो नित्य अनुकीर्तयेत्** इत्यत्र **नित्ये** नित्यकर्मणि ।

**[3]असतो नासतो राजन् स ह्यरण्येषु [4]गोपिता ॥ २६ ॥**

**असतो नासतो रजन्** इत्यत्र **असतः** दस्युव्यूहस्य । **नासतः** ऋषि-व्यूहस्य च । **गोपिता** रक्षिता ।

॥ इति एकोनचत्वारिंशदधिकशततोऽध्यायः ॥

---

१. **'अपिते दस्यवो'** इति कुं पाठः ।
२. BORI पृ. ७०२; **'नित्यमनुचिन्तयेत्'** इति कुं पाठः ।
३. **'न सतो'** इति कुं पाठः ।
४. $M_{1-3}$; BORI पृ. ७०२; **'गोपतिः'** इति कुं पाठः ।

## ।। अथ चत्वारिंशदधिकशततमोऽध्यायः ।।

[१] **तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।**
**अभोज्या [२] ह्यौषधीश्छित्त्वा भोज्या एव पचन्त्युत** ।। ४ ।।

**अभोज्या ह्यौषधीश्छित्त्वा** इत्यत्र छेदाभावे अभोज्याः ।

**असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति**
**आत्मानं सङ्क्रमं कृत्वा [३] मध्ये धर्मविदेव सः** ।। ७ ।।

**आत्मानं सङ्क्रमं कृत्वा** इत्यत्र **मध्ये** भोक्तॄणां मध्ये **आत्मानं** परमात्मानं **सङ्क्रमं** व्याप्तं कृत्वा ।

**तथा तथा जयेल्लोकान् शक्त्या चैव यथा यथा ।**
[४] **अद्भिस्तु जन्तवो यद्वत् श्रुत्वा वाचो यथा तथा** ।। ८ ।।
[५] **अनिच्छतः सम्भवन्ति तथा यज्ञः प्रजायते ।**
**यथैव दंशमशकं यथा कीटपिपीलिकम्** ।। ९ ।।

**अद्भिस्तु जन्तवो यद्वत्** इत्यत्र अद्भिः वर्षकाले यथा यदृच्छया जन्तवः सम्भवन्ति यथा वाचः श्रुत्वा अनिच्छतो(ऽपि) बालस्य तथा तद्वदेव वाचः यदृच्छया सम्भवन्ति तथा यज्ञोऽपि यदृच्छया प्रजायते ।

।। इति चत्वारिंशदधिकशततमोऽध्यायः ।।

---

१. कुं. १३६ अध्यायः ।
२. $K_{3.5.}$,$D_{n1}$,$N_3$,$D_{2.4.8}$,M; BORI पृ. ७०३; **'चौ–'** इति कुं पाठः ।
३. $M_2$; BORI पृ. ७०४; **'मन्ये'** इति कुं पाठः ।
४. **'औद्भिदा'** इति कुं पाठः ।
५. **'अनिमित्तात्'** इति कुं पाठः ।

## ।। अथ एकचत्वारिंशदधिकशततमोऽध्यायः ।।

**उक्षणं[१] क्रियमाणं [२]च मत्स्यानां वीक्ष्य रश्मिभिः।**
**प्रविश्यान्तरमन्येषामग्रसत्प्रतिपत्तिमान्** ।। १४ ।।

**उक्षणं क्रियमाणञ्च मत्स्यानां वीक्ष्य रश्मिभिः** इत्यत्र **उक्षणं** स्वाङ्गेषु प्रोक्षणं निक्षेपणमिति यावत् । **अग्रसत्** स्ववदनान्तःप्रविष्टमकरोत् । तद्दानमगृहीत्वा सुप्त एव सुप्त इवाभूत् ।

**ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले ।**
**त्यक्त्वा रज्जुं प्रमुक्तोऽसौ शीघ्रं सम्प्रतिपत्तिमान्** ।। १६ ।।

**सम्प्रतिपत्तिमान्** इत्यत्र **सम्प्रतिपत्तिमान्** तत्कालदर्शी मत्स्यः ।

**आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान्**
**स [३]तु संशयमाप्नोति यथा सम्प्रतिपत्तिमान्** ।। १९ ।।

**स तु संशयमाप्नोति** इत्यत्र **संशयं** प्राणसंशयम् ।

**पृथिवी देश इत्युक्तः स च कालो[४]ऽनुभिद्यते ।**
**अभिप्रेतार्थसिद्ध्यर्थं [५]न्यायतोऽन्यायतस्तथा** ।। २२ ।।

**स च कालोऽनुभिद्यते** इत्यत्र अभिप्रेतार्थसिद्ध्यर्थं न्यायतः अन्यायतश्चेति च द्वेधा स कालो भिद्यते । ग्रहादिभिरनुकूलः सुमुहूर्तो **न्यायः**, विपरीतो दुर्मुहूर्तस्त्व**न्यायः** ।

---

१. कुं. १३७ अध्यायः । 'उद्दानं' इति कुं. पाठः ।
२. BORI पृ. ७०६; 'तु' इति कुं पाठः । ; ३. 'हि' इति कुं पाठः ।
४. 'न दृश्यते' इति कुं पाठः ।; ५. 'दूरतो न्यायतस्तथा' इति कुं. पाठः ।

**एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः ।**
**प्रधानाविति निर्दिष्टौ कामे चाभिमतौ नृणाम्** ॥ २३ ॥

**एतौ धर्मार्थशास्त्रेषु** इत्यत्र एतौ देशकालौ ।

॥ इति एकचत्वारिंशदधिकशततमोऽध्यायः ॥

* * *

## ॥ अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

[१] **सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ ।**
**अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी** ॥ १ ॥

**तथोत्पन्ना** इत्यत्र **उत्पन्ना** तत्कालोत्पन्ना ।

[२] **अजातरक्षणो राजन् अमित्रे मित्रतां गते ।**
**कथं नु पुरुषः कुर्यात् कृत्वा किं वा सुखी भवेत्** ॥ ८ ॥

**अजातरक्षणो राजन्** इत्यत्र मित्रतां गते पुरुषे अमित्रे जाते सतीति योजना ।

**तत्र त्वागत्य चण्डालो** [३]**वैतन्त्यकृतकेतनः**
**युयोज यन्त्रमुन्माथं उन्माथं नित्यमस्तंगते रवौ** ॥ २३ ॥

**वैतन्त्यकृतकेतन** इत्यत्र वैतन्त्ये स्थले कृतः केतनः निकेतनो यस्य सः । वैतन्त्यकृतकेतन इतिनामको वा । उन्माथम् (उन्मार्थम्) औषधकुमन्त्रादिना उन्मथनयोग्यं यन्त्रं जालम् ।

---

१. कुं. १३८ अध्यायः । ; २. '**-लक्षणे**' इति कुं पाठः ।
३. '**ह्यरण्यः**' इति कुं पाठः ।

**स तमुन्माथमारुह्य तदामिषमभक्षयत् ।**
**तस्योपरि सपत्नस्य बद्धस्य मनसा हसन्** ॥ २८ ॥

**सपत्नस्य बद्धस्य** इत्यत्र बद्धस्येत्यादि कर्मणि षष्ठी ।

**गतस्य विषयं तस्य नकुलोलूकयोस्तया ।**
**अथास्यासीदियं चिन्ता तत्प्राप्तस्य महद्भयम्** ॥ ३३ ॥

**गतस्य विषयं तस्य** इत्यत्र **विषयं** चक्षुर्विषयम् ॥

**[1]आपन्नाशाय भूयिष्ठं शङ्कनीयं हि जीवितम्**
**समन्तात् संशयः सोऽयं तस्मादापदुपस्थिता** ॥ ३६ ॥

**आपन्नाशाय भूयिष्ठं** इत्यत्र **आपन्ना** प्राप्ता **आशा** मांसाशा यस्य तस्मै मह्यम् ।

**जीवितार्थी [2]कृतस्त्वद्य शत्रुभिः प्रार्थितस्त्रिभिः ।**
**[3]तस्मादिममहं मन्त्रं प्राणहेतोः करोमि वै** ॥ ४१ ॥

**जीवितार्थी कृतस्त्वद्य** इत्यत्र **जीवितार्थी** जीवितमर्थयमानः प्राणहेतोरिमं मन्त्रं करोमि इति योजना ।

**ततोऽस्मै सम्प्रवक्ष्यामि हेतुमात्माभिरक्षणे ।**
**अपीदानीमयं शत्रुः सङ्गत्या पण्डितो भवेत्** ॥ ४७ ॥

**सङ्गत्या पण्डितो भवेत्** इत्यत्र **सङ्गत्या** कार्यसङ्गत्या ।

---

१. **'आपद्विनाशभूयिष्ठं'** इति कुं पाठः ।; २. **'कथं त्वद्य'** इति कुं पाठः ।
३. **'प्राणहेतोरिमं मित्रं मार्जारं संश्रयामि वै'** इति कुं पाठः ।

**[1]क्षत्त्रविद्यां समाश्रित्य हितमस्योपवर्णये ।**
**येनेमं शत्रुसङ्घातम् [2]अरिपूर्वेण वञ्चये ॥ ४२ ॥**

**क्षत्त्रविद्यां समाश्रित्य** इत्यत्र क्षता त्त्रायतीति हि **क्षत्रः** । तस्य विद्या । स्वेन मूषिकेण मार्जारस्यापि क्षतत्राणकरणात् क्षत्त्रविद्या-मित्युक्तम् । **अरिपूर्वेण** पूर्वारिणा मार्जारेण ।

**[3]मूढो हि पण्डितः शत्रुर्नहि मित्रमपण्डितः ।**
**अमित्रे खलु मार्जारे जीवितं सम्प्रतिष्ठितम् ॥ ४६ ॥**

**मूढो हि पण्डितः शत्रुः** इत्यत्र मूढः शत्रुः पण्डितश्चेत् मित्रम्, अपण्डितो मित्रं न हि ।

**इदं हि नकुलोलूकं पापबुद्ध्या हि संस्थितम् ।**
**न धर्षयति मार्जार तेन ते स्वस्ति साम्प्रतम् ॥ ५४ ॥**

**इदं हि नकुलोलूकम्** इत्यत्र नकुलश्च उलूकश्च नकुलोलूकम् । द्वन्द्वैकवद्भावः ।

**अर्थयुक्तिमिमां तत्र यथाभूतां निशामय ।**
**तव जीवितमिच्छन्वै[4] त्वं ममेच्छसि जीवितम् ॥ ६१ ॥**

**तव जीवितमिच्छन्वै त्वं ममेच्छसि जीवितम्** इत्यत्र यदीति योग्यपदाध्याहारः ।

---

१. BORI पृ. ७१४; '**नीतिशास्त्रं**' इति कुं पाठः ।
२. '**मति–**' इति कुं पाठः । ; ३. '**श्रेष्ठौ**' इति कुं पाठः ।
४. '**–मिच्छामि**' इति कुं पाठः ।

**अहं हि [1] दृढमापन्नः त्वमापन्नतरो मया।**
**द्वयोरापन्नयोः सन्धिः क्रियतां मा चिराय च ॥ ६९ ॥**

**अहं हि दृढमापन्न** इत्यत्र **आपन्नः** आपदं प्राप्तः। 'आपन्न आपत्प्राप्तः स्यात्' [2] इत्यमरः।

**अहं [3] चानु प्रवेक्ष्यामि नकुलान्मे महद्भयम्**
**त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव रक्षणे ॥ ७४ ॥**

**अहं चानु प्रवेक्ष्यामि** इत्यत्र **अनु** त्वामनुसृत्य **प्रवेक्ष्यामि** बिलं प्रवेक्ष्यामि।

**यद्यदेवङ्कतेनाद्य [4] वाक्यं कर्तुं मया तव।**
**तदाज्ञापय कर्ताऽस्मि सिद्धिरेवास्तु नौ सखे ॥ ७९ ॥**

**वाक्यं कर्तुं मया तव** इत्यत्र शक्यमिति योग्यपदाध्याहारः।

**तूष्णीं भव न ते सौम्य त्वरा कार्या न सम्भ्रमः**
**वयमेवात्र कालज्ञा न कालः परिहास्यते ॥ ९४ ॥**

**न कालः परिहास्यत** इत्यत्र कालः **न हास्यते** न गमिष्यति। 'ओ हाक् त्यागे' इति धातोः लृडात्मनेपदम्।

**अकाले [5] मित्र मुक्तौ मे [6] तत एव भयं भवेत्।**
**तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ ९६ ॥**

---

१. BORI पृ. ७१७; **'भृशमापन्नः'** इति कुं पाठः।; **२. अ.को. ३-१-४२**
३. **'त्वाऽनुप्रवेक्ष्यामि'** इति कुं पाठः। ; ४. **'शक्यं'** इति कुं पाठः।
५. **'विप्रमुक्तान्'** इति कुं पाठः।; ६. **'त्वत्त'** इति कुं पाठः।

**अकाले मित्र मुक्तौ मे** इत्यत्र हे मित्र मे अकाले मुक्तौ सत्यां **तत एव** उलूकादेव ।

**यन्मित्रं [१]भूतवत्सार्यं यन्मित्रं भयशङ्कितम् ।**
**[२]अलक्षितं ततः कार्यं [३]पाणेः सर्पमुखादिव ॥ १०९ ॥**

**यन्मित्रं भूतवत्सार्यं** इत्यत्र **सार्यम्** अनुसरणीयम् । **ततः** तस्माच्छङ्कितमित्रात् कार्यम् **अलक्षितं** भवति न वेति **लक्षितं** ज्ञातं न । **पाणेः** दिव्यं कुर्वतः पुरुषस्य पाणेः । **सर्पमुखादिव** घटपिहित-सर्पमुखादिव ।

**शङ्कुकर्णो महावक्त्रः खनित्री घोरदर्शनः ।**
**[४]पर्यान् स ह चण्डालः शस्त्रपाणिरदृश्यत ॥ ११७ ॥**

**पर्यान् स ह चण्डालः** इत्यत्र परितः **यान्** गच्छन् ।

**बलिनौ मतिमन्तौ च सङ्घातं चाप्युपागतौ ।**
**अशक्तौ सुनयात्तस्मात् सम्प्रधर्षयितुं बलात् ॥ १२० ॥**

**अशक्तौ सुनयात्तस्मात्** इत्यत्र **तस्मात्** मूषिककृतात् सुनयात् चण्डालागमनपर्यन्तं कालक्षेपाख्यनीतेः ।

**सत्कृतोऽहं त्वया मित्र सामर्थ्यादात्मनः सखे ।**
**स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥ १२९ ॥**

---

१. **'भीतवत्साध्यं यस्मिन्मित्रे भयं हितम्'** इति कुं पाठः ।
२. **'आरक्षितं'** इति कुं पाठः ।; ३. **'पाणिः'** इति कुं पाठः ।
४. **'परिघो नाम'** इति कुं. पाठः ।

**स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि** इत्यत्र **उप** समीपे **भोक्तुं** भोज्यान् भोक्तुं त्वमर्हसि ।

**यो यस्मिन् जीवति [1]स्वार्थं पश्येत् पीडां न जीवति ।**
**स तस्य मित्रं तावत् स्याद् [2]व्यापन्नः स्याद्विपर्यये ॥ १४१ ॥**

**यो यस्मिन् जीवति स्वार्थम्** इत्यत्र यस्मिन् जीवति सति स्वार्थं पश्येत्, न जीवति सति पीडां पश्येत् स तस्य तावन्मित्रं स्यात् । **विपर्यये** मैत्रीकरणाभावे **व्यापन्नः** स्वयं नष्टः स्यात् ।

**यो विश्वसति मित्रेषु न [3]चाश्वसति शत्रुषु**
**अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् ॥ १४४ ॥**

**यो विश्वसति मित्रेषु न चाश्वसति शत्रुषु** इत्यत्र यो मित्रेषु न चाश्वसति, अर्थयुक्तिमविज्ञाय शत्रुषु आश्वसति च तस्य जीवितं चलितमिति योजना ।

**अस्मिन्निलय एव त्वं न्यग्रोधादवतारितः**
**पूर्वं निविष्ट [4]उत्थानं चपलत्वान्न बुद्धवान् ॥ १४९ ॥**

**पूर्वं निविष्ट उत्थानम्** इत्यत्र निलय(नियम) एव स्थितस्त्वं **तस्मात्** मांसाशानिमित्तात् **चपलत्वात्** चाञ्चल्यात् पूर्वं **निविष्टः** जाले निविष्टः पश्चात् **उत्थानम्** उद्गमनप्रकारं न बुद्धवान् इति योजना ।

---

१. BORI पृ. ७२६; '**स्वार्थे**' इति कुं पाठः ।
२. '**यावन्नः स्याद्विपर्ययः**' इति कुं पाठः ।
३. BORI पृ. ७२६; '**विश्वसिति**' इति कुं पाठः ।
४. '**निविष्टमुन्माथं**' इति कुं पाठः ।

**आत्मनश्चपले नास्ति कुतोऽन्येषां भविष्यति ।**
**तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम्** ॥ १५० ॥

**आत्मनश्चपले नास्ति** इत्यत्र चपले पुरुषे **आत्मनः** स्वस्य हितं नास्ति, अन्येषां कुतः ।

**न कालो हि समर्थस्य स्नेहहेतुरयं तव ।**
[१]**तस्मान्नाचञ्चले स्वार्थान् सुकृतः सन्धिविग्रहे** ॥ १५९ ॥

**तस्मान्नाचञ्चले स्वार्थान् सुकृतः सन्धिविग्रह** इत्यत्र सन्धौ विग्रहे च **सुकृतः** सुष्ठुत्वेन कृतः कुशल इत्यर्थः ।

**भक्षार्थी ह्येव सुव्यक्तो विमुक्तः प्रसृतः क्षुधा ।**
**शास्त्रजां मतिमास्थाय प्रातराशमिहेच्छसि** ॥ १६८ ॥

**प्रातराशमिहेच्छसि** इत्यत्र **प्रातराशं** प्रातःकालीनाशनम् ।

**न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।**
**अस्मिन्नर्थे** [२]**समाधेये निबोधोशनसा कृते** ॥ १९२ ॥

**अस्मिन्नर्थे समाधेये निबोधोशनसा कृते** इत्यत्र **समाधेये** समाधानयोग्ये पद्ये ।

**शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा**
**समाहितश्चरेद् बुद्ध्या कृतार्थश्च न विश्वसेत्** ॥ १९३ ॥

**शत्रुसाधारणे कृत्ये** इत्यत्र शत्रोरात्मनश्च साधारणे ।

---

१. **'तस्मान्नाहं चले स्वार्थात् सुस्थितः'** इति कुं पाठः ।
२. **'च गाथे द्वे'** इति कुं पाठः ।

**विश्वस्तास्तेषु वध्यन्ते बलवन्तोऽपि शत्रुभिः ।**
**वध्यन्ते न [१]ह्यविश्वासाः शत्रुभिर्दुर्बला अपि ॥ १९७ ॥**

**वध्यन्ते न ह्यविश्वासाः** इत्यत्र **अविश्वासाः** विश्वासरहिताः ।

**अन्योन्यं [२]कृतवन्तौ तौ चक्रतुः प्रीतिमुत्तमाम्**
**अन्योन्यं अभिसन्धातुं संबभूव तयोर्मतिः ॥ २०४ ॥**

**अन्योन्यं कृतवन्तौ तौ** इत्यत्र **कृतवन्तौ** कार्यवन्तौ ।

**न भयं जायते राजन् भीतस्यानागतं[३] भयम् ।**
**अभीतस्य च विस्रम्भात्सुमहज्जायते भयम् ॥ २१० ॥**

**भीतस्यानागतं भयम्** इत्यत्र **भीतस्य** अप्रमत्तस्य अनागतं भयञ्च न जायते इति पूर्वेणान्वयः ।

**न भीरुरिति चात्यन्तं मन्त्रो देयः कथञ्चन ।**
**अविज्ञानाद्धि [४]विज्ञाते गच्छेदास्पददर्शनम् ॥ २११ ॥**

**अविज्ञानाद्धि विज्ञात** इत्यत्र **अविज्ञानात्** अविवेकात् मन्त्रे विज्ञाते सति स मन्त्रः क्लेशस्य निदर्शनम् ।

॥ इति द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

* * *

---

१. $D_{2,3}$; BORI पृ. ७३३; **'ह्यविश्वस्ता'** इति कुं पाठः ।
२. $T_2, G_1, M_2$; BORI पृ. ७३४; **'कृतवैरौ तु'** इति कुं पाठः ।
३. **'नागते भये'** इति कुं पाठः ।
४. BORI पृ. ७३५; **'विज्ञाने'** इति कुं पाठः ।

## ।। अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः ।।

**[१]विश्वासाद्धि परं राजन् राज्ञामुत्पद्यते भयम् ।**
**कथं हि नाश्वसन् राजा शत्रूञ्जयति पार्थिवः ।। २ ।।**

**विश्वासाद्धि परं राजन्** इति पाठे विगतः श्वास आश्वासो विश्वासः तस्मात् ।

**पूजनी नाम शकुनिः दीर्घकालं सहोषिता**
**रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः ।। ६ ।।**

**यथा वै जीवजीवकः** इत्यत्र **जीवजीवको** जीवञ्जीवश्चकोरः । 'जीवञ्जीवश्चकोरकः'[२] इत्यमरः ।

**सहसञ्जातवृद्धस्य तथैव सहभोजिनः ।**
**शरण्यस्य वधश्चेति[३] त्रिविधं[४] ह्यस्य किल्बिषम् ।। १९ ।।**

**सहसञ्जातवृद्धस्य** इत्यत्र सहैव **वृद्धस्य** अभिवृद्धस्य सहभोजिनः **शरण्यस्य** शरणयोग्यस्य अस्य वध इति कृत्वा **अस्य** राजपुत्रस्य किल्बिषं त्रिविधम् ।

**इच्छयेह कृतं पापं [५]इच्छयोपसर्पति ।**
**[६]कृतप्रतिकृतं तेषां न नश्यति शुभाशुभम् ।। २१ ।।**

---

१. कुं. १३९ अध्यायः ।; २. अ.को. ३-५-३५
३. $M_{1-3}$; BORI पृ. ७३९; **'-चैव'** इति कुं पाठः ।
४. BORI पृ. ७३९; **'तस्य'** इति कुं पाठः ।
५. **'सद्य एवोपसर्पति'** इति कुं पाठः ।
६. $V_1$,$D_7$; BORI पृ. ७३९; **'कृतं प्रतिकृतं येषां'** इति कुं पाठः ।

**इच्छयेह कृतं पाप** इत्यत्र **इच्छया** अपराधकृतः इच्छया कृतं पापम् **इच्छया** अपराध्यस्य जनस्येच्छया उपसर्पति । यत्पापं यं प्रत्ययं करोति तदेव पापं सोऽपि करोतीत्यर्थः । कृतस्य शुभस्य अकृतस्याशुभस्य च प्रतिकृतं शुभाशुभम् । **तेषां** शुभाशुभकर्तृणां **न नश्यति** मनसा न नश्यति । सदा तमुपकारमपकारं वा स्मरन्त्येवेत्यर्थः ।

**[१]पापकर्मकृतं किञ्चिद् यदि तस्मिन्न [२]विद्यते ।**
**निपात्यतेऽस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥ २२ ॥**

**पापकर्मकृतं किञ्चिद्** इत्यत्र पापकर्मणः **कृतं** प्रतिकृतं किञ्चित्कार्यं यदि तस्मिन्न **विद्यते** न लभ्यते । 'विदॢ लाभे' इति धातुः । प्रबलत्वात् कर्तुं न शक्यत इत्यर्थः ।

**अन्योन्यकृतवैराणां पुत्रपौत्रं नियच्छति ।**
**[३]पुत्रे पौत्रे विनिर्माय परलोकं नियच्छति ॥ २७ ॥**

**पुत्रे पौत्रे विनिर्माय** इत्यत्र कृतस्य प्रतिकृतं विनिर्माय ।

**पूजितस्यार्थमानाभ्यां [४]अन्ते पूर्वापकारिणः**
**हृदयं [५]तव विश्वस्तं कर्म त्रासयते बलात् ॥ ३२ ॥**

**हृदयं तव विश्वस्तं** इत्यत्र **अर्थमानाभ्याम्** अर्थो मया आनीतफलादिदानम्, **मानः** तव पुत्रे बहुमानः, ताभ्यां पूजितस्य

---

१. $V_1, B_{1,3,5}$; BORI पृ. ७३९; '**पापं कर्म कृतं** ' इति कुं पाठः ।
२. BORI पृ. ७३९; '**दृश्यते**' इति कुं पाठः ।
३. '**पुत्रपौत्रविनाशे च**' इति कुं पाठः ।; ४. '**सान्त्वं**' इति कुं पाठः ।
५. '**भवत्यविश्वस्तं**' इति कुं पाठः ।

**अन्ते** अवसाने **पूर्वापकारिणः** प्रथमं मम पुत्रवधकारिणस्तव हृदयं यद्यपि विश्वस्तं तथापि **कर्म** तव पुत्रनयनोत्पाटनाख्यं कर्म बलात् मां त्रासयते इति योजना ।

**न कृतस्य [१]न कर्तुश्च सख्यं सन्धीयते पुनः ।**
**हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ॥ ३६ ॥**

**न कृतस्य न कर्तुश्च सख्यं सन्धीयते पुन** इत्यत्र **कृतस्य** अपराधकरणविषयभूतस्य च पुनः सख्यं न सन्धीयते कर्तुश्च सख्यं न सन्धीयत इति योजना ।

**नास्ति [२]चैवमतिक्रान्तं [३]नास्तिकोऽस्मीति नाश्वसेत्**
**विश्वासाद्बध्यते लोकस्तस्मापच्छ्रेयोऽप्यदर्शनम् ॥ ३८ ॥**

**नास्ति चैवमतिक्रान्तम्** इत्यत्र आगः एवं प्रियवाक्यकथनेऽपि **अतिक्रान्तं** परिहृतं नास्ति । अस्त्यपराधो यस्मिन् स आस्तिकः, स न भवतीति **नास्तिको** निरपराधोऽस्मीति नाश्वसेत् इति योजना ।

**अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ।**
**[४]नावतिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ ४१ ॥**

**नावतिष्ठति तद्वैरं पुष्करस्थमिवोदकम्** इत्यत्र पुष्करस्थम् उदकमिव **अव** अधस्तात् गतं सत् **तिष्ठतीति** न, न गच्छत्येवेत्यर्थः । व्यतिरेक-दृष्टान्तोऽयमिति ज्ञेयम् ।

---

१. BORI पृ. ७४१; '**तु**' इति कुं पाठः ।; २. '**वैरमतिक्रान्तं**' इति कुं पाठः ।
३. '**सान्त्वितोऽस्मीति**' इति कुं पाठः ।
४. '**नैव तिष्ठति**' इति कुं. पाठः ।

**वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः।**
**[१]स्वीकृतं वास्तुजं वाग्जं स्वसपत्नापराधजम् ॥ ४२ ॥**

**वैरं पञ्चसमुत्थानम्** इत्यत्र **स्वकृतं** (अकृतं) गोव्याघ्रयोरिव स्वभावकृतं, स्वसपत्नजं, अपराधजञ्चेति **पञ्चसमुत्थानं** पञ्चकारण-जन्यं वैरमस्ति।

**[२]कृतपापस्य विश्वासः कार्यस्त्विह सुहृद्यपि।**
**प्रच्छन्नं तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ४४ ॥**

**कृतपापस्य विश्वासः** इत्यत्र **श्वास** आश्वासो न भवतीति **विश्वासः**, अविश्वास इत्यर्थः।

**नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान्।**
**[३]विश्वासादुषितौ पूर्वं नेदानीं विश्वसाम्यहम् ॥ ४८ ॥**

**नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान्** इत्यत्र अहं त्वयि, तथा भवान् मयि एतावन्तं कालम् अपराधे सति नैवोषितौ, इदानीमपचरितौ। ततो न विश्वसामीति योजना।

**[४]भिन्नक्रमा न सज्जन्ते शस्त्रैः सुनिशितैरपि।**
**साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥ ६७ ॥**

**भिन्नक्रमा न सज्जन्त** इत्यत्र **भिन्नक्रमा** भिन्नमर्यादा गजाः।

---

१. '**स्त्रीकृतं**' इति कुं पाठः।; २. '**कृतवैरे न**' इति कुं पाठः।
३. '**उषितावाऽपि चकितं**' इति कुं पाठः।
४. '**भिन्ना श्लिष्टा न सज्यन्ते**' इति कुं पाठः।

**ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा ।**
**वध्यन्ते श्रद्दधाना हि मधु शुष्कतृणैः [१] यथा ॥ ७२ ॥**

**मधु शुष्कतृणैर्यथा** इत्यत्र शत्रुणा दर्शितं पुरः स्थितं मधु श्रद्दधानाः शुष्कतृणैश्छन्ने प्रपाते यथा पतन्ति तद्वदेतदित्यर्थः ।

**नाविश्वासाच्चिनोत्यर्थमीहते चापि किञ्चन ।**
**[२] प्रयात्वेकतरं मित्रे कृतकृत्या भवत्विह ॥ ७६ ॥**

**प्रयात्वेकतरं मित्रे** इत्यत्र मित्रे मयि **एकतरं** अर्थसञ्चयं वा तूष्णीमवस्थानं वा भवती प्रयातु । एवं **इह** मम गृह एव कृतकृत्या भवतु ।

**[३] अस्येव व्रणिनौ पादौ पद्भ्यां च परिधावतः ।**
**क्षिण्येते तस्य तौ पादौ सुगुप्तमपि धावतः ॥ ७७ ॥**

**यस्यैव व्रणिनौ पादौ पद्भ्याम्** इत्यादेः योगक्षेमं विचार्य सर्वं कार्यं कर्तव्यमिति भावः ।

**दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।**
**[४] उदात्तानां कर्म तन्त्रं दैवात् किं वा उपासते ॥ ८३ ॥**

**दैवात् किं वा उपासते** इत्यत्र **दैवात्** पुरुषप्रयत्नरहितदैवात् ।

**निवेशनञ्च कुप्यञ्च क्षेत्रं भार्या सुहृज्जनम् ।**
**एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ॥ ८७ ॥**

---

१. BORI पृ. ७४६ ; 'इव' इति कुं पाठः ।
२. **'भयात्त्वेकतरं मित्रं'** इति कुं पाठः ।; ३. **'यस्येह'** इति कुं पाठः ।
४. **'उदात्तं कर्म वै तत्र दैवं क्लीबा'** इति कुं पाठः ।

**निवेशनश्च कुप्यश्च** इत्यत्र 'कुप्यमन्यद्धनं भवेत्' इति वचनात् रूप्यहेमव्यतिरिक्तगोधान्यादिधनं **कुप्यम्** ।

**गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।**
**कुस्त्री खादति मांसानि [१] माघमा सेगवामिव ॥ ९० ॥**

माघमा सेगवामिव इत्यत्र 'माघमा कर्कटी प्रोक्ता सेगवा तस्य सन्ततिः' इति वचनात् **सेगवां** सेगवा **माघमा** माघमामिवेति विभक्तिव्यत्यासो वा **माघमा** कर्कटीसन्ततिः **सेगवां** कर्कटीमिवेति वस्तुव्यत्यासो वा । कार्यकारणशब्दाश्चान्योन्यं सङ्कीर्यन्ते इति हि प्राचां समयः ।

**दत्वाऽभयं यः स्वयमेव राजा न तत्प्रमाणं कुरुतेऽर्थलोभात् ।**
**स [२] सर्वलोकानुपलभ्य पापमधर्मबुद्धिर्निरयं प्रयाति ॥ १०२ ॥**

**स सर्वलोकानुपलभ्य** इत्यत्र **उपलभ्य** प्रलोभ्य वञ्चयित्वेत्यर्थः ।

॥ इति त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

**[३] राजा शत्रुन्तपो नाम सौवीरेषु महारथः ।**
**[४] कलिङ्गमुपसङ्गम्य पप्रच्छार्थविनिश्चयम् ॥ ४ ॥**

**कलिङ्गमुपसङ्गम्य** इत्यत्र कलिङ्गं विषयम् ।

---

१. BORI पृ. ७४९; '**माघमां सेगवा इव**' इति कुं पाठः ।
२. $K_1$; BORI पृ. ७५०; '**सर्वलोकादुपलभ्य**' इति कुं पाठः ।
३. कुं. १४० अध्यायः ।; ४. '**भारद्वाजमुपागम्य**' इति कुं पाठः ।

**एवमेव प्रशंसन्ति बुधा ये तत्त्वदर्शिनः ।**
**तस्माच्चतुष्टये तस्मिन् प्रधानो दण्ड उच्यते ॥ ९ ॥**

**तस्माच्चतुष्टये तस्मिन्** इत्यत्र **तस्मिन् चतुष्टये** सामाद्युपायचतुष्टये ।

[१] **शत्रुमित्रे च पूर्वेण सान्त्वेनैवानुसान्त्वयेत् ।**
**नित्यशश्चोद्विजेत्तस्मात् सर्पाद्वेश्मगतादिव ॥ १५ ॥**

**शत्रुमित्रे च पूर्वेण** इत्यत्र **पूर्वेण** उपायचतुष्टयेषु प्रथममुक्तेन । शत्रौ मित्रे चेत्यर्थः ।

[२] **यस्य बुद्धिः परिभवेत् तमतीतेन सान्त्वयेत् ।**
**अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥ १६ ॥**

**यस्य बुद्धिः परिभवेत्** इत्यत्र यस्य बुद्धिः **परिभवेत्** नम्रीभूता भवेत् तम् अतीतेनोपकारेण सान्त्वयेत् । **दुष्प्रज्ञं** दुर्विनीतम् **अनागतेन** उपरि करिष्यमाणोपकारेण सान्त्वयेत् । **पण्डितं** विवेकिनं **प्रत्युत्पन्नेन** तात्कालिकोपकारेण यदा आगतस्तदैव तदुचितवित्तादिदानेनेत्यर्थः, सान्त्वयेत् ।

**वहेदमित्रं स्कन्धेन यावदर्थस्य [३] बन्धनम् ।**
**अथैनमागते काले भिन्द्याद्धटमिवाश्मनि ॥ १८ ॥**

**यावदर्थस्य बन्धनम्** इत्यत्र **बन्धनं** सम्बन्धः ।

---

१. **'शत्रुं च मित्रं'** इति कुं. पाठः ।
२. $K_3, V_1, B_{03.4}, D_9$; BORI पृ. ७५४; **'यस्य बुद्धिं'** इति कुं पाठः ।
३. **'लम्भनम्'** इति कुं पाठः ।

**मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् ।**
**[1]मानुषाग्निरिवानर्चिर्धूमायेत नरश्चिरम् ॥ १९ ॥**

**मानुषाग्निः** इत्यत्र मानुषैः काष्ठादिभिरुपचीयमानोऽग्निर्मानुषाग्निः ।

**अर्थी तु शक्यते [2]योक्तुं कृतकार्योऽभिमन्यति[3] ।**
**तस्मात् सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ २० ॥**

**कार्यार्थी शक्यते योक्तुम्** इत्यत्र **योक्तुम्** इदं कुर्विति नियोक्तुम् । **अभिमन्यति** अभिमानं करोति ।

**कोकिलस्य वराहस्य[4] मेषयोः शून्यवेश्मनः ।**
**व्यालस्य[5] भित्तिचित्रस्य यच्छ्रेयस्तत्समाचरेत् ॥ २१ ॥**

**कोकिलस्य वराहस्य मेषयोः शून्यवेश्मनः । व्यालस्य भित्तिचित्रस्य यच्छ्रेयस्तत्समाचरेत्** इत्यत्र कोकिलस्य **यच्छ्रेयः** श्रेयस्करस्वभावः उपायात् परमुखेन स्वकार्यकरणं तत्समाचरेत् । वराहस्य परकीयभूमिं बलात् प्रविश्य तत्रत्यधनधान्याद्यपहारः, मेषयोरन्योन्ययुद्धेन स्ववैरिणः शिरस्ताडनम्, **शून्यवेश्मन** एकाधिपतिरहितस्य वेश्मनः धर्मशालाया इत्यर्थः । सर्वोपसेव्यत्वम्, **व्यालस्य** सर्पस्य बलात् परकृतवेश्मन्यवस्थानम्, भित्तिचित्रस्य दृष्टेः प्रियत्वम् कार्येण कस्याप्यसाध्यत्वम् एतानि श्रेयांसि राजापि समाचरेत् इत्यर्थः ।

---

१. **'मा तुपाग्निः'** इति कुं पाठः ।; २. **'भोक्तुं '** इति कुं पाठः ।
३. **'-ऽवमन्यते'** इति कुं पाठः ।
४. **'मेरोः शून्यस्य वेश्मनः'** इति कुं पाठः ।
५. **'भक्तचित्तस्य'** इति कुं पाठः ।

**पानमक्षास्तथा नार्यो मृगया गीतवादितम् ।**
**एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ २६ ॥**

**प्रसङ्गो ह्यत्र दोषवान्** इत्यत्र वादितं.....[१] । **प्रसङ्गः** प्रकृष्टः सङ्गः अत्यासक्तिरित्यर्थः ।

**कालाकालौ सम्प्रधार्य बलाबलमथात्मनः ।**
**परस्य च बलं ज्ञात्वा [२] तथात्वं विनियोजयेत् ॥ २९ ॥**

**तथात्वं विनियोजयेत्** इत्यत्र यथा यथा देशकालादिकं तथा तथा विद्यमानत्वं **तथात्वम्** ।

**न [३] संशयमपारुह्य नरो भद्राणि पश्यति ।**
**संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ३४ ॥**

**न संशयमपारुह्य** इत्यत्र यशो वा मृत्युरेव वेति संशयं **अपारुह्य** अनारुह्य । संशयं पुनरारुह्य मृतश्चेत् स्वर्गं गच्छति, यदि जीवति तर्हि भद्राणि पश्यतीति योजना ।

**अनागतं विजानीयात् [४] यद्भयं समुपस्थितम् ।**
**पुनर्बुद्धिक्षयात् किञ्चित् [५] तन्निवृत्तिं निशामय ॥ ३५ ॥**

**अनागतं विजानीयात्** इत्यत्र यद्भयमुपस्थितं तत् **अनागतम्** अनागतमेव यथा भवति तथा विजानीयात् । बुद्धिक्षयात् किञ्चिदागतं चेत् पुनस्तन्निवृत्तिं निशामयेति योजना ।

---

१. अत्र किञ्चित् त्रुटितं वर्तते ।; २. **'तथाऽऽत्मानं नियोजयेत्'** इति कुं पाठः ।
३. **'साहसमानारुह्य'** इति कुं पाठः ।; ४. **'त्यजेद्भयमुस्थितम्'** इति कुं पाठः ।
५. **'अनिवृत्तिं निशामयेत्'** इति कुं पाठः ।

**योऽरिणा सह सन्धाय विश्वस्तः स्वपते सुखम् ।**
**स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुद्ध्यते ॥ ३७ ॥**

**स वृक्षाग्रे प्रसुप्तो वा** इत्यत्र **प्रसुप्तो** वा प्रसुप्त इव । 'वा विकल्पोपमानयोः' इति निघण्टुः ।

**त्रिवर्गे त्रिविधा पीडानुबन्धस्तथैव च ।**
**अनुबन्धं तथा ज्ञात्वा पीडां च परिवर्जयेत् ॥ ५७ ॥**

**त्रिवर्गे त्रिविधा पीडा** इत्यत्र अनार्जनम्, आर्जितस्य अरक्षणं, रक्षितस्य चान्ते विनाशनमिति **त्रिविधा पीडा** । आर्जनम्, आर्जितस्य रक्षणं, रक्षितस्य आमरणान्तं परिपालनमिति त्रिविधो**ऽनुबन्धः** ।

**कटको[१] ह्यपि दुश्छिन्नो विकारं कुरुते चिरम् ॥ ६० ॥**

**कटको ह्यपि दुश्छिन्न** इत्यत्र यथा अङ्गेषु दुःखं भवति तथा छिन्नो **दुश्छिन्नः** कटकः ।

**गृध्रदृष्टिर्बकालीनः [२]सचेष्टः सिंहविक्रमः ।**
**अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥ ६२ ॥**

**गृध्रदृष्टिर्बकालीन** इत्यत्र बकवत् आ समन्तात् लीनः गूढचेष्टः । सचेष्टश्चेत् सिंहविक्रमः । **भुजङ्गचरितम्** अकस्मात् परकृते दुर्गादौ प्रवेशनम् ।

**मृदुनैव मृदुं हन्ति मृदुना हन्ति दारुणम् ।**
**[३]असाध्यं मृदुना हन्ति तस्मात्तीक्ष्णतरो मृदुः ॥ ६६ ॥**

---

१. **'कण्टको'** इति कुं पाठः । ; २. **'श्वचेष्टः'** इति कुं पाठः ।
३. **'नासाध्यं मृदुना किञ्चित्'** इति कुं पाठः ।

**मृदुनैव मृदुं हन्ति मृदुना हन्ति दारुणम्** इत्यत्र **मृदुना** अम्लरसेन **मृदुं** क्षीरं हन्ति । मृदुना खड्गधाराश्रिततोयेन दारुणं गजमस्तकं हन्ति । मृदुना प्रियवचनेन असाध्यं वैरिणं हन्ति ।

**पण्डितेन विरुद्धस्तु दूरस्थोऽस्मीति नाश्वसेत् ।**
**दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ६८ ॥**

**दीर्घौ बुद्धिमतो बाहू** इत्यत्र **बाहू** नीतिप्रयत्नाख्यौ ।

॥ इति चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

**[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥ १२ ॥**

**चण्डालस्य च पक्कण** इत्यत्र **पक्कणे** शबरालये । 'पक्कणः शबरालयः'[2] इत्यमरः ।

**नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः ।**
**नद्यः सङ्क्षिप्रतोयौघाः किञ्चिदन्तर्गताऽभवन् ॥ १६ ॥**

**नावश्यायोऽपि रात्र्यन्त** इत्यत्र **अवश्यायः** नीहारः । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्'[3] इत्यमरः ।

**सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।**
**हतत्विषो न लक्ष्यन्ते [4]विसर्गात् पूर्वकारितात् ॥ १७ ॥**

---

१. कुं. १४१ अध्यायः ।; २.अ.को. २-३-२०; ३. अ.को. १-३-१८
४. 'निसर्गात्' इति कुं पाठः ।

**विसर्गात् पूर्वकारितात्** इत्यत्र **विसर्गात्** विपरीतसृष्टेः ।

**उत्पन्नकृषिगोरक्ष्या[१] निवृत्तविपणापणा ।**
**निवृत्तपूर्वसमया संप्रनष्टमहोत्सवा ॥ १९ ॥**

**उत्पन्नकृषिगोरक्ष्या** इत्यत्र **उत्** उत्कृष्टतया **पन्ने** नष्टे कृषिगोरक्ष्ये यस्याः सा ।

**अस्थिकङ्कालसङ्कीर्णा हाहाभूतनराकुला ।**
**शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ २० ॥**

**अस्थिकङ्कालसङ्कीर्णा** इत्यत्र **अस्थि** हस्तपादाद्यस्थि । **कङ्कालः** शरीरास्थि । 'शरीरास्थि तु कङ्कालः पृष्ठास्थि तु कशेरुका'[२] इत्यमरः ।

**तस्मिन् प्रतिभये काले क्षीणधर्मे युधिष्ठिर ।**
**बभूवुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥ २४ ॥**

**तस्मिन् प्रतिभये काल** इत्यत्र **प्रतिभये** भयङ्करे । 'भयङ्करं प्रतिभयं रौद्रम्'[३] इत्यमरः ।

**मृतचेलपरिस्तीर्णं [४]निर्मलं कृत्तिभूषितम् ।**
**सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमुखम् ॥ ३० ॥**

**निर्मलं कृत्तिभूषितम्** इत्यत्र नितरां मलं यस्मिन् तत् **निर्मलम्** ।

---

१. 'उत्सन्नकृपिगोरक्षा' इति कुं पाठः ।; २. अ.को. २-६-६९
३. अ.को. १-७-२० ; ४. 'निर्माल्यकृतभूषणम् इति कुं पाठः ।

**स ददर्श श्वमांसस्य [१] कुतन्त्रिकततिं मुनिः ।**
**चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य वै ॥ ३७ ॥**

**कुतन्त्रिकततिं मुनिः** इत्यत्र मांसोद्वहनाय दार्वादिकृतकुतन्त्रमेव **कुतन्त्रिकम्**, तस्य ततिं समूहम् ।

**आपत्सु विहितं स्तेयं [२] विशिष्टस्य निहीनतः ।**
**परस्परं भवेत्पूर्वमास्थेयमिति निश्चयः ॥ ३९ ॥**

**विशिष्टस्य निहीनत** इत्यत्र **निहीनतः** अपसदात् । 'निहीनोऽपसदो जाल्मः' [३] इत्यमरः ।

**[४] सोऽहमन्तेत्यवस्थायां हराम्येनां प्रतिग्रहात् ।**
**न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम् ॥ ४१ ॥**

**सोऽहमन्तेत्यवस्थायाम्** इत्यत्र **अन्तस्य** मरणस्य **इतिः** प्राप्तिः, तस्या अवस्थायामित्यर्थः ।

**चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः ।**
**शयनादुपसम्भ्रान्त [५] इयेष पतितुं ततः ॥ ४८ ॥**

**इयेष पतितुं तत** इत्यत्र **पतितुं** पादयोः पतितुम् ।

१. **'कुतन्त्रीं पतितां'** इति कुं पाठः ।
२. **'विशिष्टसमहीनतः'** इति कुं पाठः ।
३. अ.को. २-१०-१६
४. **'सोऽहमन्तावसायीनां'** इति कुं पाठः ।
५. $K_3$; BORI पृ. ७६९; **'उद्ययौ प्रति त'** इति कुं पाठः ।

**विश्वामित्रस्तु [१] मातङ्गपुत्रं च परिसान्त्वयन् ।**
**क्षुधितोऽन्तर्गतप्राणो हरिष्यामि श्वजाघनीम् ॥ ५० ॥**

**विश्वामित्रस्तु मातङ्गपुत्रम्** इत्यत्र **मातङ्ग**श्चण्डालः । 'चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' [२] इत्यमरः । **हरिष्यामि श्वजाघनीम्** इत्यत्र **श्वजाघनीं** शुनो **जाघनीं** जघनसम्बन्धिमांसम् । 'जाघनी'ति जघनमांसस्य योगरूढं नाम ।

**मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।**
**तस्याप्यधम उद्देशः शरीरस्य तु जाघनी ॥ ५७ ॥**

**तस्याप्यधम उद्देश** इत्यत्र **तस्य** शुनोऽपि शरीरस्य **उद्देशः** ऊर्ध्वदेशः शिरःकपालः, **अधमः जाघनी** जघनप्रदेशः अधमः ।

**येन केन विशेषेण कर्मणा येनकेनचित् ।**
**[३] उज्जिहीर्षेत् सीदमानः समर्थो धर्ममाचरेत् ॥ ६३ ॥**

**उज्जिहीर्षेत् सीदमान** इत्यत्र **उज्जिहीर्षेत्** उद्धर्तुमिच्छेत् ।

**ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।**
**ब्रह्मवन्हिर्मम बलं भोक्ष्यामि शमयन्क्षुधाम् ॥ ६८ ॥**

**ऐन्द्रो धर्मः क्षत्रियाणाम्** इत्यत्र **ऐन्द्रः** इन्द्रवज्जगत्पालनरूपः । **आग्निकः** अग्निवत् सर्वभक्षणरूपः ।

---

१. **'मातङ्गमुवाच'** इति कुं पाठः ।
२. अ.को. २-१०-२०
३. $D_7$;$S_{(G3.4\ absent)}$; BORI पृ. ७६९; **'उज्जिहीर्षे'** इति कुं पाठः ।

**नैतत्खादन् प्राप्स्यसे प्राणमद्य**
**नायुर्दीर्घं नामृतस्येव तृप्तिम् ।**
**भिक्षामन्यां भिक्ष मा ते मनोऽस्तु**
**श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम्** ॥ ६४ ॥

**भिक्षामन्यां भिक्ष** इत्यत्र अन्यां भिक्षां **भिक्ष** याचय ।

**न दुर्भिक्षे सुलभं [1] मांसमद्यं**
**श्वपाकमन्ये न च मेऽस्ति वित्तम् ।**
**क्षुधार्तश्चाहमगतिर्निराशः**
**श्वजाघनीं षड्रसात् साधु मन्ये** ॥ ६९ ॥

**न दुर्भिक्षे सुलभं मांसमद्यम्** इत्यत्र **अद्यं** भक्षणयोग्यं मांसं **दुर्भिक्षे** दुभिक्षकाले सुलभं न मन्ये । **अगतिः** गमनशक्तिरहितः ।

**भिक्षामन्यामाहरेति न च कर्तुमिहार्हसि ।**
**न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम्** ॥ ७२ ॥

**भिक्षामन्यामाहरेति** इत्यत्र आहरेत्युक्तोऽपीति योग्यपदाध्याहारः ।

[2] **न पातकं न चावृत्तं मृषा कर्तुं तदर्हसि ।**
**समौ च श्वमृगौ मन्ये तस्माद्भोक्ष्ये श्वजाघनीम्** ॥ ७५ ॥

**न पातकं न चावृत्तम्** इत्यत्र **न पातकं** पातकं न । **अवृत्तं** पूर्वमप्रवृत्तश्च न । तत् **मृषा कर्तुं** व्यर्थं कर्तुं नार्हसि ।

---

१. **'मांसमन्ये'** इति कुं पाठः ।
२. **'न पातकं नावमतमृषिः सन्कर्तुमर्हति'** इति कुं पाठः ।

**यद्ब्राह्मणार्थे कृतमर्थितेन तेनर्षिणा तदभक्ष्यं न [1]कस्मात्।**
**स वै धर्मो यत्र न पापमस्ति सर्वैरुपायैर्गुरवो हि रक्ष्याः ॥ ७६ ॥**

**यद्ब्राह्मणार्थे कृतमर्थितेन** इत्यत्र अर्थितेन मया ब्राह्मणार्थे यत्कृतं तत्तेनर्षिणा **कस्मात्** कस्मादपि कारणात् अभक्ष्यं न, किन्तु भक्ष्यमेवेत्यर्थः।

**मित्रश्च मे [2]ब्राह्मणश्चायमात्मा**
**प्रियश्च मे पूज्यतमश्च लोके।**
**तद्भोक्तुकामोऽहमिमां जिहीर्षे**
**नृशंसानां [3]मादृशानां न बिभ्ये ॥ ७७ ॥**

**मित्रश्च मे ब्राह्मणश्चायमात्मा** इत्यत्र ब्राह्मणः ब्राह्मणत्वजात्या आक्रान्तः **अयमात्मा** मम देहः। मादृशानां नृशंसानां अहं यथा श्वमांसभक्षणाख्यक्रूरकर्मकरणात् नृशंसः एवं हे विश्वामित्र, त्वया मर्तव्यमेव, न त्वापद्यपि श्वमांसं भक्षणीयमिति ये निषेधन्ति तेऽपि ब्राह्मणमरणादभीतत्वात् मादृशा नृशंसाः, तेषां न बिभ्य इति योजना।

**स्थाने [4]भवेत्संशयः प्रेत्यभावे**
**निःसंशयः [5]कर्मणो वै विनाशः।**

---

१. **'कामात्'** इति कुं पाठः।
२. BORI पृ. ७७१; **'ब्राह्मणस्यायमात्मा'** इति कुं पाठः।
३. **'ईदृशानां'** इति कुं पाठः।
४. **'भवेत्स यशः'** इति कुं पाठः।
५. **'कर्मणां'** इति कुं पाठः।

**अहं [१] पुनर्वर्त इत्याशयात्मा**
**[२] शुष्कं रक्ष्यं भक्षयिष्याम्यभक्ष्यम्** ॥ ७९ ॥

**स्थाने भवेत्संशयः प्रेत्यभाव** इत्यत्र **प्रेत्यभावे** मरणे सति **स्थाने** प्राप्यस्वर्गस्थाने **संशयः** भवति नवेति संशयः भवेत्, पुण्याभावे स्वर्गनिर्णयायोगात् । **कर्मणः** पुण्यकर्मणः **विनाशः** इदानीं देहपाते सति विनाशः । अहं पुनः **वर्ते** सद्वर्तनवान् भवामि । **शुष्कं** क्षुधया शुष्कं शरीरं रक्ष्यम् ।

पूर्वं स्वर्गसाधनकर्मसम्पादनार्थं देह इत्युक्तम्, इदानीं मोक्षसाधन-सम्पादनार्थम् आवश्यको देह इत्याह–

**बुद्ध्यात्मके व्यक्तमस्मीति सृष्टो मोक्षात्मके त्वं यथा शिष्टचक्षुः।**
**यद्यप्येतत् संशयाच्च त्रपामि नाहं भविष्यामि यथा न माया** ८०

**बुद्ध्यात्मक** इत्यत्र बुद्ध्यात्मके मोक्षसाधने **व्यक्तं** स्पष्टं इति अनेन प्रकारेण ऋषिरूपेणेत्यर्थः, अहं सृष्टोस्मि मोक्षात्मके फले त्वं यथा शिष्टचक्षुः तथेति पूर्वेणान्वयः । एतत् त्वयोक्तं यद्यपि (इह) भवति तथापि **संशयात्** ज्ञानस्य साधनाभावे मोक्षाख्यफलसंशयात् **त्रपामि** लज्जां करोमि । यथा **माया** अज्ञानं न तथा देहाभावे अहं न भविष्यामीति योजना ।

**गोपनीयमिदं दुःखं इति मे निश्चिता मतिः ।**
**दुष्कृतं ब्राह्मणं सन्तं [३] ततस्त्वाहमुपालभे** ॥ ८१ ॥

१. BORI पृ. ७७२; **'पुनर्व्रतनित्यः शमात्मा'** इति कुं पाठः ।
२. **'मूलं'** इति कुं पाठः ।
३. **'यस्त्वामहं'** इति कुं पाठः ।

**गोपनीयमिदं दुःखम्** इत्यत्र **दुःखं** दुःखकरम् इदं दुष्कृतं **गोपनीयम्** आच्छादनीयमिति मे निश्चिता मतिः । **ततस्तस्मात्** कारणात् ब्राह्मणं सन्तं त्वा**मुपालभे** भीषयामि शिक्षयामि निरसनं करोमि ।

**सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर ।**
**जानेऽहं धर्मतोऽऽत्मानं उत्सृजेमां श्वजाघनीम्** ॥ ८४ ॥

**उत्सृजेमां श्वजाघनीम्** इत्यत्र **उत्सृज** मुञ्च ।

**उपधानैः साधते नापि दोषः कार्ये सिद्धे मित्र नात्रापवादः ।**
**अमित्रहिंसा नानृते वाक्यलेशो भक्ष्यक्रिया यत्र न तद्गरीयः** ८८

**उपधानैः साधते नापि दोष** इत्यत्र उपधानैः जीवनाद्युपाधिभिः **साधते** यत्किञ्चिदपि साधयते पुरुषाय दोषोऽपि न । **अस्मिन्** महापापकर्तरि **अहिंसा** अहिंसाख्यधर्मोऽपि न । **नानृते** अनृतं न भवतीति नानृतं सत्यं तस्मिन् वाक्यलेशोऽपि न । ईदृशः घोरकर्मा सर्वहिंसामपि कुर्यात्, सत्यं कदापि न वदेदिति भावः । **यत्र** यस्मिन् पुरुषे भक्ष्यक्रिया गरीयसी **तत्** तत्र गरीयः उत्तमं कर्म **न** नास्ति ।

**यद्येष हेतुस्तव [१]तत्स्वादने स्यात्**
**न ते [२]वादः कारणं [३]नापि धर्मः ।**
**[४]तस्मादभक्ष्ये भक्ष्ये च द्विजेन्द्र**

---

१. **'ख्यादने'** इति कुं पाठः ।; २. $M_{3,4}$; BORI पृ. ७७५; **'वेदः'** कुं पाठः ।
३. $B_1$;$D_{n3}$; BORI पृ. ७७५; **'नार्यधर्मः'** इति कुं पाठः ।
४. **'तस्माद्भक्ष्ये भक्षणे वा द्विजेन्द्र'** इति कुं. पाठः ।

[१]लोपं न पश्यामि यदर्थमाह ॥ ८९ ॥

**यद्येष हेतुस्तव तत्स्वादने स्यात्** इत्यत्र यदि **एष** जीवनोपायः **तत्स्वादने** श्वानमांसास्वादने **हेतुः** कारणं तर्हि ते अत्र भक्षणे **वादः** वेदवादोऽपि कारणं न, धर्मोऽपि कारणं न। तस्माद् **भक्ष्ये** भक्षणयोग्ये **अभक्ष्ये** भक्षणायोग्ये च तव **लोपं** परित्यागं न पश्यामि। (यदर्थ) **यत्** यस्मात्कारणात् **अर्थं** श्वमांसभक्षणमपि पुरुषार्थमाह तस्मादिति पूर्वेणान्वयः।

**न पातकं भक्षमाणस्य दृष्टं**
**सुरां तु पीत्वा पततीति शब्दः।**
**अन्योन्यकार्याणि यथा तथैव**
**न लेपमात्रेण कृतं हिनस्ति** ॥ ९० ॥

**न पातकं भक्षमाणस्य दृष्टम्** इत्यत्र **न दृष्टं** प्रत्यक्षतो न दृष्टम्। **अन्योन्यकार्याणि** अभक्ष्यभक्षणात् अपेयपानाच्च यदा अस्य जीवनाख्यकार्यं तदा जनेनापि तयोर्भक्षणपाने कार्ये इति अन्योन्यकार्याणि यथा सन्ति तथैव तदपि भवति। स्वस्य महाविपत्परिहाराख्यफले सति अभक्ष्यमपि भक्ष्यं, अपेयमपि पेयमिति भावः। कृतं कर्म लेपमात्रेण न हिनस्ति, पुनः प्रायश्चित्तेन तत्परिहारसम्भवादिति भावः।

**अस्थानतो हीनतः कुत्सिताद्वा**
**तद्विद्वांसं बाधते साधु वृत्तम्।**

---

१. **'दोषं न पश्यामि यथेदमत्र'** इति कुं पाठः।

[1]स्थानं पुनर्यो लभतेऽतिभङ्गात्
तेनापि दण्डः [2]प्रहितः स एव ॥ ९३ ॥

**स्थानं पुनर्यो लभतेऽतिभङ्गात्** इत्यत्र यो विप्रं बाधते यश्च **अतिभङ्गात्** ब्राह्मणस्य अतिभङ्गकारणात् **स्थानं** नरकादिस्थानं लभते तेन ब्राह्मणेन तस्य दूषकस्य स एव **दण्डः** नरकप्राप्तिरूपो दण्डः प्रहितः । अतस्त्वं यत्किञ्चिद्वा कुरु, तव बाधो मया न क्रियत इति भावः ।

॥ इति चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

[3]यदिदं घोरमुद्दिष्टं अश्रद्धेयमिवानृतम् ।
अस्ति [4]स्विदस्य मर्यादा यामयं परिवर्जयेत् ॥ १ ॥

**यदिदं घोरमुद्दिष्टम्** इत्यत्र **घोरं** ब्राह्मणस्य श्वमांसभक्षणरूपं यदिदं कर्म तदनृतमिव अश्रद्धेयम् । **अस्य** निषिद्धकर्मणो मर्यादा अस्ति स्वित् ।

[5]नैतद्बुद्ध्वाऽऽगमादेव तव धर्मानुशासनम् ।
प्रज्ञासमभिहारोऽयं कविभिः सम्भृतं मधु ॥ ३ ॥

**नैतद्बुद्ध्वा** इत्यत्र **एतत्** त्वया क्रियमाणं धर्मदूषणं **न** उचितं

१. BORI पृ. ७७७; 'श्वानं पुनर्यो लभतेऽभिपङ्गात्' इति कुं पाठः ।
२. 'सहितव्यः' इति कुं पाठः । ; ३. कुं. १४२ अध्यायः ।
४. 'स्विद्दस्यु' इति कुं पाठः ।; ५. 'नैतच्छ्रुत्वा' इति कुं पाठः ।

न । **प्रज्ञासमभिहारः** प्रज्ञायाः तत्कालोचितबुद्धेः समभिहारः सम्यगानयनम् ।

**बाह्याः प्रतिविधातव्याः [१]प्रजा राज्ञा ततस्ततः ।**
**बहुशाखेन धर्मेण यत्रैषा सम्प्रवर्तते ॥ ४ ॥**

**बाह्याः प्रतिविधातव्या** इत्यत्र **बाह्याः** प्राकृताः प्रजाः **प्रतिविधातव्याः** इदं कुरु इदं न कुर्विति शिक्षितव्याः, न त्वपरोक्षज्ञानिनः । **बहुशाखेन** बालानामेकप्रकारेण, तरुणानामेकप्रकारेण वृद्धानामपरप्रकारेण ज्ञानिनामज्ञानिनाञ्च भिन्नभिन्नप्रकारेणेत्यादिना बहुशाखेन धर्मेण ।

**नैकशाखेन धर्मेण [२]राज्ञां धर्मो विधीयते**
**दुर्बलस्य कृता प्रज्ञा पुरस्तादनुदाहृता ॥ ७ ॥**

**दुर्बलस्य कृता प्रज्ञा** इत्यत्र **दुर्बलस्य** ज्ञानदुर्बलस्य ।

**अद्वैधज्ञः प्रतिद्वैधे संशयं प्राप्तुमर्हति ।**
**बुद्धिद्वैधं विधातव्यं पुरस्तादेव भारत ॥ ८ ॥**

**अद्वैधज्ञः प्रतिद्वैध** इत्यत्र **अद्वैधज्ञः** धर्मद्वैविध्यमजानानः । द्वैविध्यमित्युपलक्षणम् । बाहुयुद्धमपि द्रष्टव्यम् । **प्रतिद्वैधे** ज्ञानिनः अज्ञानिनश्च प्रति द्वैधं द्वैविध्यं यस्य तस्मिन् धर्मे ।

[३]**नरास्तप्त्वापि** इत्यत्र **नराः** अविवेकिनो नराः । **तप्त्वापि** आलोच्यापि । 'तप आलोचने' इति धातुः ।

---

१. **'प्रज्ञा'** इति कुं पाठः ।; २. **'राज्ञो'** इति कुं पाठः ।
३. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः ।**
**[1]वैषम्यमपि विद्यानां निरर्थाः ख्यापयन्ति ते ॥ ११ ॥**

**वैषम्यमपि विद्यानाम्** इत्यत्र **वैषम्यं** कस्यचिद्भागस्य तत्त्वावेदकत्वम्, अपरस्यातत्त्वावेदकत्वमित्यादिवैषम्यम् ॥

**आजिजीविषवो विद्यां यशः कामौ समन्ततः ।**
**ते सर्वे नृप पापिष्ठाः धर्मस्य परिपन्थिनः ॥ १२ ॥**

**आजिजीविषव** इत्यत्र **आजिजीविषवो** जीवितुमिच्छवः पुरुषा विद्यां सर्वत्र परिनिष्ठिता एव वदन्ति ।

**परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः ।**
**विज्ञानमथ विद्यानां न सम्यगिति मे मतिः ॥ १४ ॥**

**विज्ञानमथ विद्यानाम्** इत्यत्र **विज्ञानं** विपरीतज्ञानम् ।

**निन्दया परविद्यानां स्वविद्यां रष्यापयन्ति च ।**
**वागास्तिक्यानुनीताश्च दुग्धविद्याफला इव ॥ १५ ॥**
**तान् विद्यावाणिजो विद्धि राक्षसानिव भारत ।**
**व्याजेन कृत्स्नो विहितो धर्मस्ते परिहास्यते ॥ १६ ॥**
**न धर्मवचनं वाचा [2]किन्तु बुद्ध्येति नः श्रुतम् ॥ १७ ॥**

**वागास्तिक्यानुनीताश्च दुग्धविद्याफला इव** इत्यत्र अस्ति स्वर्गाख्यपरलोक इति मन्वाना आस्तिकाः तेषां भाव आस्तिक्यम् ।

---

१. $T_2$,$G_{1,2}$; BORI पृ. ७७८; **'वैषम्यमर्थ-'** इति कुं पाठः ।
२. **'नैव'** इति कुं पाठः ।

वाचः 'स्वर्गकामो यजेत' इत्यादिवाक्यस्य यदास्तिक्यं तेनानुनीताः । ते स्वर्गप्राप्त्यैव **दुग्धविद्याफला** इव दुग्धं दोहनं प्रापितं विद्याख्यफलं यैस्ते त इव भवन्ति । ज्ञानाख्यमहाफलं न जानन्तीति यावत् । **व्याजेन कृत्स्नो विहितो धर्मस्ते परिगास्यत न धर्मवचनम्** इत्यत्र **व्याजेन** स्वर्गाख्यफलव्याजेन । **धर्मवचनं वाचा न,** वाचा प्रतीयमानस्वर्गाख्यफलमात्रेण न, किन्तु **बुद्ध्या** ज्ञानाख्यफलेनेति नः श्रुतम् ।

**न त्वेव वचनं किञ्चिदनिमित्तादिहोच्यते ।**
**स्वविनीतेन शास्त्रेण ह्यविद्यः स्यादथापरः ॥ १८ ॥**

**स्वविनीतेन शास्त्रेण** इत्यत्र **स्वविनीतेन** गुरुमुखं विना स्वेनैव अभ्यस्तेन । यथा **परः** पामरजनः ।

**लोकयात्रमिहैके तु धर्मं प्राहुर्मनीषिणः ।**
**समुद्दिष्टं सतां धर्मं स्वयं [१] मुच्येदपण्डितः ।**
**अमर्षाच्छास्त्रसंमोहात् अनिमित्तादिहोच्यते ॥ २०॥**

**अमर्षाच्छास्त्रसंमोहात्** इत्यत्र यः अमर्षादिना स्वकं धर्मं मुच्येत् स अपण्डित इहोच्यत इति योजना ।

**शास्त्रं [२] प्रज्ञास्य वदतः समूहे [३] यत्प्रदर्शनम् ।**
**[४] आजगाम तयोर्बुद्ध्या वचनेन प्रशस्यते ।**

---

१. 'ऊहेत' इति कुं पाठः; २. $B_2.D_5$; BORI पृ. ७७९; 'प्राज्ञस्य' कुं पाठः
३. 'यात्यदर्शनम्' इति कुं पाठः ।
४. 'आगमागतया बुद्ध्या' इति कुं पाठः ।

**अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ॥ २१ ॥**

**समूहे यत्प्रदर्शनम्** इत्यत्र **यत्** यस्माच्छास्त्रात् **समूहे** धर्मसमूहे **प्रदर्शनं** प्रकृष्टधर्मदर्शनं **आजगाम** आगतं तच्छास्त्रं **प्रज्ञा** प्रज्ञामूलम् । **तयोर्बुद्धिवचनयोर्मध्ये** बुद्ध्या वचनेन च मिलित्वा कृतं कर्म प्रशस्यते ।

**अनुपागतमेवेदं शास्त्रमेवमपार्थकम् ।**
**दैतेयानुशना प्राह संशयच्छेदनं पुरा ॥ २२ ॥**

**शास्त्रमेवमपार्थकम्** इत्यत्र **अपार्थकम्** अपगतम् अर्थकं कुत्सितार्थो यस्मात् ।

**ज्ञानमप्यपदश्वं हि यथा नास्ति तथैव तत् ॥ २३ ॥**

**यथा नास्ति तथैव तत्** इत्यत्र उपदेशाभावे **तत्** ज्ञानं यथा नास्ति तथैव, अविद्यमानप्रायमिति यावत् ।

**तेन सञ्छिन्नमूलेन कस्तोषयितुमिच्छति ॥ २३ ॥**
**पुनर्व्यवसितुं यो वा नेदं वाक्यमुपाश्रयेत्[1] ॥ २४ ॥**

**तेन सञ्छिन्नमूलेन** इत्यत्र सञ्छिन्नं मूलं गुरूपदेशाख्यं मूलं यस्य तेन ज्ञानेन । **व्यवसितुं** गुरुमुखान्निश्चेतुं **न उपाश्रयेत्** गुरुं नोपाश्रयेत् ।

**उग्रायैव हि सृष्टोऽसि [2]तदेव त्वमपीक्षसे ॥ २४ ॥**

**तदेव त्वमपीक्षस** इत्यत्र **तदेव** उग्रमेव कर्म त्वमपीक्षसे ।

---

१. '**-पाश्नुते**' इति कुं पाठः ।
२. **कर्मणे तत्त्वमीक्षसे**' इति कुं पाठः ।

**अजोऽश्वः क्षत्रमित्येतत्सदृशं ब्रह्मणा कृतम् ।**
**तस्मान्न तैक्ष्ण्याद् भूतानां यात्रा काचित्प्रसिद्ध्यति ॥ २६ ॥**

**तस्मान्न तैक्ष्ण्याद्** इत्यत्र **तैक्ष्ण्यात्** तैक्ष्ण्यमपहाय । ल्यब्लोनिमित्ता पञ्चमी ।

**यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः ।**
**एषा ह्येव तु मर्यादा यामयं परिवर्जयेत् ॥ २७ ॥**

**यामयं परिवर्जयेत्** इत्यत्र **अयं** अज्ञानिजनः ।

॥ इति पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

* * *

## ॥ अथ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

**[१]तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम् ।**
**[२]इयं यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥ ८ ॥**

**इयं कपोतेन** इत्यत्र यत्र कपोतेन सिद्धिः प्राप्ता सेयं कथा ।

**काकोल इव कृष्णाङ्गो रूक्षः पापसमाहित ।**
**यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ॥ ११ ॥**

**काकोल इव कृष्णाङ्गो** इत्यत्र **काकोलः** कालग्रीवः कृष्णकाकः । 'द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः'[३] इत्यमरः ॥

---

१. कुं. १४३ अध्यायः ।
२. BORI पृ. ७८३; 'इमां' इति कुं पाठः ।
३. अ.को. २-५-२१

**मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितम् ।**
**सञ्छन्नस्तु मुहूर्तेन [१] नौसार्थेनेव सागरः ॥ १९ ॥**

**नौसार्थेनेव सागर** इत्यत्र **नौसार्थेन** नौकासमूहेन ।

॥ इति षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

**[२] तस्य [३] कालं गता भार्या चरितुं नाभ्यवर्तत ।**
**प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥ २ ॥**

**तस्य कालं गता भार्या** इत्यत्र **कालं** बहुकालम् ।

**अस्माकं विहिता वृत्तिः कापोती जातिधर्मतः ।**
**सा [४] चर्यात्मवता नित्यं त्वद्विधेनानुवर्तितुम् ॥ २६ ॥**

**सा चर्यात्मवता** इत्यत्र **चर्या** चरणमाचारः । अनुवर्तितुं योग्येति शेषः ।

॥ इति सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

**[५] स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् ।**
**ततः शुष्केषु पर्णेषु पावकं [६] सोऽप्यदीपयत् ॥ ११ ॥**

---

१. $B_{0-3}$,$D_a$,$G_{3.4\ absent}$; BORI पृ. ७८४; **'नौसार्थैरिव'** इति कुं पाठः ।
२. कुं. १४४ अध्यायः ।
३. $K_1$; BORI पृ. ७८७; **'कल्यगता'** इति कुं पाठः ।
४. **'-ऽऽत्मवता'** इति कुं पाठः । ; ५. कुं. १४५ अध्यायः ।
६. **'सोऽभ्यदीदिपत्'** इति कुं पाठः ।

**स गत्वाङ्गारकर्मान्तम्** इत्यत्र अङ्गारं करोतीत्यङ्गारकर्मा कारुः, तस्यान्तं समीपम् ।

**[1]नृशंसस्य [2]महान्यायप्रत्यादेशो न संशयः ।**
**दत्तः स्वमांसं वहता कपोतेन महात्मना ॥ ४ ॥**

**नृशंसस्य महान्यायप्रत्यादेशो** इत्यत्र नृशंसस्य मम पक्षिणं प्रति आहारं दिशेति योऽयमादेशः स महान्यायप्रत्यादेश इति योजना ॥

॥ इति अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

॥ अथ एकपञ्चाशदधिकशथतमोऽध्यायः ॥

**[3]अत्र वर्तयिष्यामि पुराणमृषिसंस्तुतम् ।**
**[4]दण्डेन शौनको विप्रो यदाह जनमेजयम् ॥ २ ॥**

**दण्डेन शौनको विप्र** इत्यत्र **दण्डेन** दण्डनेन ज्ञापितेन ।

**आसीद्राजा महावीर्यः [5]परीक्षिज्जनमेजयः ।**
**अबुद्धिजा ब्रह्महत्या तमगच्छेन्महीपतिमः ॥ ३ ॥**

**परीक्षिज्जनमेजय** इत्यत्र परितः ईक्षते इति **परीक्षित्** विचारकः ॥

॥ इति एकपञ्चाशदधिकशततमोऽध्यायः ॥

---

१. कुं. १४६ अध्यायः ।
२. 'ममायायं' इति कुं पाठः ।
३. कुं. १४७ अध्यायः ।
४. 'इन्द्रोतः' इति कुं पाठः ।
५. $G_2$; BORI पृ. ८०१; 'पारि' इति कुं पाठः ।

## ।। अथ द्विपञ्चाशदधिकशततमोऽध्यायः ।।

[१]तप एव हि कार्पण्यं [२]समर्थमसमीहितुम्
तच्चेत् समीक्षयैव स्याद् भवेत्तस्मिंस्तपो गुणः ।। ६ ।।

**समर्थमसमीहितुम्** इत्यत्र कार्पण्यम् **असमीहितुम्** अकर्तुं तप एव समर्थम् ।।

यो मर्त्यः प्रतिपद्येत आयुर्जीवेन वा पुनः ।
यज्ञमेकं ततः कृत्वा तत्सन्न्यस्य [३]पुनश्चरेत् ।। १० ।।

**तत्सन्न्यस्य पुनश्चरेत्** इत्यत्र **सन्न्यस्य** हरिचरणे समर्प्य **पुनश्चरेत्** तीर्थयात्रां कुर्यात् ।

यथा कुमारः [४]सद्यो वै नैव पुण्यो न पापकृत् ।
[५]यो ह्यस्ति सर्वभूतेषु दुःखमस्मिन् कुतः सुखम् ।। १५ ।।

**यथा कुमारः सद्यो वै** इत्यत्र **कुमारः** कौमारे वयसि स्थितः । सर्वभूतेषु **दुःखं,** दुःखं यथा भवति तथा यो ह्यस्ति तस्मिन् सुखं कुतः ?

एवं प्रकृतिभूतानां सर्वसंसर्गयायिनाम् ।
त्यजतां जीवितं प्रायो निवृत्ते पुण्यपापके ।। १६ ।।

---

१. कुं. १५१ अध्यायः ।; २. 'समग्रमसमीक्षितम्' इति कुं पाठः ।
३. $G_1$; BORI पृ. ८०१; 'तप' इति कुं पाठः ।
४. $B_{0.5}$,$D_a$; BORI पृ. ८०८; 'सत्यो' इति कुं पाठः ।
५. 'न' इति कुं पाठः ।

**एवं प्रकृतिभूतानाम्** इत्यत्र एवं सर्वदुःखकरत्वेन प्रकृतिः स्वभावो येषां तेषां **भूतानां** प्राणिनाम् ।

**यत्त्वेव [1]राजन् स्थायिष्ठं कार्याणां तद्ब्रवीमि ते ॥ १७ ॥**

**यत्त्वेव राजन् स्थायिष्ठम्** इत्यत्र कार्याणां मध्ये **स्थायिष्ठम्** अतिशयेन स्थायि कार्यम् ।

**आत्मनो दर्शनं विद्वान्नाहर्तास्मीति मा क्रुधः ।**
**घटमानः स्वकार्येषु कुरु निःश्रेयसं परम् ॥ २० ॥**

**आत्मनो दर्शनम्** इत्यत्र **दर्शनं** सिद्धान्तम् । **आहर्ता** आ समन्ताच्छत्रूणां हर्ता ।

**[2]हिमाग्निगोपसदृशो राजा भवति कश्चन**
**लाङ्गलाशनिकल्पो वा भवेदन्यः परन्तप ॥ २१ ॥**

**हिमाग्निगोपसदृशा** इत्यत्र हिमवच्छान्तः, अग्निवत् क्रूरः, **गोपवत्** गोपालवत् सर्वोपकर्ता । **लाङ्गलाशनिकल्पः** लाङ्गलवत् पराकर्षणशीलः, **अशनिवत्** अकस्माच्छत्रुषु पतमानः ।

**न विशेषेण गन्तव्यं अचिकित्सेन वा पुनः**
**न जातु नाहमस्मीति प्रसक्तव्यमसाधुषु ॥ २२ ॥**

**न विशेषेण गन्तव्यम्** इत्यत्र **विशेषेण** स्वशक्तेर्विशेषेण, स्वशक्तिमुल्लङ्घ्येत्यर्थः, न गन्तव्यम् । **अचिकित्सेन, चिकित्सा**

---

१. **'राज्ञो ज्यायिष्ठं'** इति कुं पाठः ।
२. **'हिमाग्निघोर-'** इति कुं पाठः ।

विचारः तद्रहितेन च । अहं **नास्मि** न जीवयिष्यामीति मत्वा असाधुषु न प्रसक्तव्यम् ।

**विकर्मणा तप्यमानः पापात् पापः प्रमुच्यते ।**
**नैतत्कुर्यां पुनरिति द्वितीयात् परिमुच्यते ॥ २३ ॥**
**चरिष्ये धर्ममेवेति तृतीयात् परिमुच्यते ।**
**शुचिस्तीर्थान्यनुचरन् बहुत्वात् परिमुच्यते ॥ २४ ॥**

**नैतत्कुर्यां पुनरिति** इत्यत्र **एतत्** एतादृशं पापं पुनर्न कुर्यामिति मन्वानो द्वितीयात् पापात् परिमुच्यते । धर्ममेव चरिष्य इति मन्वानस्तु तृतीयात्पापात्परिमुच्यते, पुनः पापं न करोत्येव ।

**यावतः प्राणिनो हन्यात् तज्जातीयांस्तु तावतः ।**
**प्रणीयमानानुन्मुच्य**[१] **प्राणिहा विप्रमुच्यते ॥ २९ ॥**

**प्रणीयमानानुन्मुच्य** इत्यत्र **प्रणीयमानान्** हन्तुं प्रणीयमानान् तावतः उन्मुच्य ।

**क्षिप्रं प्रणुदते पापं सत्कारं लभते तथा ।**
**अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् ॥ ३१ ॥**

**भूतानि जडमूकवत्** इत्यत्र जडमूकवत् स्थितम् ।

[२]**नाहमस्मीति पुरुषः पापं कृत्वा हि मन्यते ।**
**चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥ ३५ ॥**

---

१. $\acute{S}_1, K_{2.4.5}$; BORI पृ. ८११; '**–नुन्मोच्य**' इति कुं पाठः ।
२. '**पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः**' इति कुं पाठः ।

**नाहमस्मीति पुरुष** इत्यत्र अहं **नास्मि** नष्टोऽस्मीति यः **मन्यते**, पश्चात्तापं कुर्यादिति भावः ।

**छिद्राणि वसनस्येव साधुना संवृणोति सः ।**
**यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ३६ ॥**

**छिद्राणि वसनस्येव** इत्यत्र **साधुना** कुशलेन सौचिकेन वसनस्य छिद्राणीव **स** पुण्यकृत् पापानि **संवृणोति** आच्छादयति ।

**एवमुक्त्वा तु राजानं [१]ऐन्द्रतो जनमेजयम् ।**
**याजयामास विधिवद्वाजिमेधेन शौनकः ॥ ३८ ॥**

**ऐन्द्रतो जनमेजयम्** इत्यत्र **ऐन्द्रतः** ऐन्द्रे यज्ञे ।

॥ इति त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

**[२]शृणु पार्थ यथावृत्तमितिहासं पुरातनम् ।**
**गृध्रजम्बुकसंवादं यो वृत्तो [३]वैदशे [४]पुरा ॥ २ ॥**

**यो वृत्तो वैदशे पुरा** इत्यत्र **वैदशे** वैदशाख्ये देशे ।

**तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ।**
**[५]एकात्मकमिदं लोके त्यक्त्वा गच्छत माचिरम् ॥ ७ ॥**

---

१. **'इन्द्रोतो'** इति कुं पाठः । ; २. कुं. १५२ अध्यायः ।
३. **'वैदिशे'** इति कुं पाठः ।; ४. BORI पृ. ८१३; **'पुरे'** इति कुं पाठः ।
५. $V_1$,B,$D_a$; BORI पृ. ८१४; **'प्रेतात्मकमिमं काले'** इति कुं पाठः ।

**एकात्मकमिदं लोक** इत्यत्र लोके **इदं** जगत् जननमरणादिना **एकात्मकम्** एकस्वभावम् । अतः **त्यक्त्वा** मृतमिमं बालकं त्यक्त्वा गच्छत ।

**इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह ।**
**समानीतानि कालेन [1] किं यूयं यात बान्धवाः ॥ ८ ॥**

**समानीतानि कालेन** इत्यत्र **किं** किमर्थं समानीतानि । ते यूयं यात ।

**गृहीत्वा [2] येऽनुगृह्णन्ति अनुयान्ति च ये गुणात् ।**
**तेऽप्यायुषः प्रमाणेन तेन गच्छन्ति जन्तवः ॥ १० ॥**

**अनुयान्ति च ये गुणात्** इत्यत्र **गुणात्** स्नेहाख्यगुणात् । **गृहीत्वा** बालकं गृहीत्वा । **अनुगृह्णन्ति** कृपां कुर्वन्ति । **तेन** पूर्वपूर्वगतेन मार्गेण ।

**अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।**
**[3] कृकालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ११ ॥**

**कृकालबहुले घोर** इत्यत्र कृकं शिरश्चूडामालक्षयतीति **कृकालः** कृकलासः ।

**सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता ।**
**कृतान्तविहिते मार्गे मृतं को जीवयिष्यति ॥ १२ ॥**

---

१. '**हित्वा वै यान्ति बान्धवाः**' इति कुं पाठः ।
२. '**ये च गच्छन्ति येऽनुयान्ति च तान्मृतान्**' इति कुं पाठः ।
३. '**कङ्कालबहुले**' इति कुं पाठः ।

**नाहमस्मीति पुरुष** इत्यत्र अहं **नास्मि** नष्टोऽस्मीति यः **मन्यते**, पश्चात्तापं कुर्यादिति भावः।

**छिद्राणि वसनस्येव साधुना संवृणोति सः।**
**यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ३६ ॥**

**छिद्राणि वसनस्येव** इत्यत्र **साधुना** कुशलेन सौचिकेन वसनस्य छिद्राणीव **स** पुण्यकृत् पापानि **संवृणोति** आच्छादयति।

**एवमुक्त्वा तु राजानं [१]ऐन्द्रतो जनमेजयम्।**
**याजयामास विधिवद्वाजिमेधेन शौनकः ॥ ३८ ॥**

**ऐन्द्रतो जनमेजयम्** इत्यत्र **ऐन्द्रतः** ऐन्द्रे यज्ञे।

॥ इति त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

**[२]शृणु पार्थ यथावृत्तमितिहासं पुरातनम्।**
**गृध्रजम्बुकसंवादं यो वृत्तो [३]वैदशे [४]पुरा ॥ २ ॥**

**यो वृत्तो वैदशे पुरा** इत्यत्र **वैदशे** वैदशाख्ये देशे।

**तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत्।**
**[५]एकात्मकमिदं लोके त्यक्त्वा गच्छत माचिरम् ॥ ७ ॥**

---

१. 'इन्द्रोतो' इति कुं पाठः।; २. कुं. १५२ अध्यायः।
३. 'वैदिशे' इति कुं पाठः।; ४. BORI पृ. ८१३; 'पुरे' इति कुं पाठः।
५. $V_1$,B,$D_a$; BORI पृ. ८१४; 'प्रेतात्मकमिमं काले' इति कुं पाठः।

**एकात्मकमिदं लोक** इत्यत्र लोके **इदं** जगत् जननमरणादिना **एकात्मकम्** एकस्वभावम् । अतः **त्यक्त्वा** मृतमिमं बालकं त्यक्त्वा गच्छत ।

**इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह ।**
**समानीतानि कालेन [1]किं यूयं यात बान्धवाः ॥ ८ ॥**

**समानीतानि कालेन** इत्यत्र **किं** किमर्थं समानीतानि । ते यूयं यात ।

**गृहीत्वा [2]येऽनुगृह्णन्ति अनुयान्ति च ये गुणात् ।**
**तेऽप्यायुषः प्रमाणेन तेन गच्छन्ति जन्तवः ॥ १० ॥**

**अनुयान्ति च ये गुणात्** इत्यत्र **गुणात्** स्नेहाख्यगुणात् । **गृहीत्वा** बालकं गृहीत्वा । **अनुगृह्णन्ति** कृपां कुर्वन्ति । **तेन** पूर्वपूर्वगतेन मार्गेण ।

**अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।**
**[3]कृकालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ११ ॥**

**कृकालबहुले घोर** इत्यत्र कृकं शिरश्चूडामालक्षयतीति **कृकालः** कृकलासः ।

**सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता ।**
**कृतान्तविहिते मार्गे मृतं को जीवयिष्यति ॥ १३ ॥**

---

१. '**हित्वा वै यान्ति बान्धवाः**' इति कुं पाठः ।
२. '**ये च गच्छन्ति येऽनुयान्ति च तान्मृतान्**' इति कुं पाठः ।
३. '**कङ्कालबहुले**' इति कुं पाठः ।

**कृतान्तविहिते मार्गे** इत्यत्र **कृतान्तः** दैवम् । 'कृतान्तो यम-सिद्धान्तदैवाकुशलकर्मसु'[१] इत्यमरः।

[२]**दिशान्तोपरते काले चास्तं गच्छति भास्करः ।**
**गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ १४ ॥**

**दिशान्तोपरते काले** इत्यत्र **दिशानां** दिशामन्त **उपरतो** निर्व्यापारो यस्मिन् ।

[३]**ध्वाङ्क्षरूक्षे विवर्णस्तु बिलान्निःसृत्य जम्बुकः ।**
**गच्छमानान् स्म तानाह निर्घृणाः खलु मानुषाः ॥ १८ ॥**

**ध्वाङ्क्षरूक्षे विवर्णस्तु** इत्यत्र **ध्वाङ्क्षः** तत्स्वरेण **रूक्षे** वने **विवर्णः** विविधवर्णः ।

**न वोऽस्त्यस्मिन् सुते स्नेहो बाले मधुरभाषिणि ।**
**यस्य [४]रावितमात्रेण प्रसादमधिगच्छत ॥ २१ ॥**

**यस्य रावितमात्रेण** इत्यत्र **रावितं** रोदनध्वनिः ।

**चतुष्पात् पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम् ।**
**परलोकगतिस्थानां [५]मुनेर्यज्ञक्रियावत् ॥२३ ॥**
**तेषां पुत्राभिरामाणामिह लोके परत्र च ।**
**न गुणो दृश्यते कश्चित् प्रजाः [६]सन्तारयन्ति च ॥ २४ ॥**

---

१. अ.को. ३-३-६४; २. 'दिशान्तोपचितो यावत्' इति कुं पाठः ।
३. 'ध्वांक्षपक्षसवर्णस्तु' इति कुं पाठः ।; ४. 'भाषितमात्रेण' इति कुं पाठः ।
५. 'मुनियज्ञाक्रियामिव' इति कुं पाठः ।; ६. 'सन्धारयन्ति' इति कुं पाठः ।

**चतुष्पात्पक्षिकीटानाम्** इत्यत्र पुत्राभिरामाणां **तेषां** पशुपक्ष्यादीनाम् इह लोके परत्र च **गुणः** ज्ञानादिगुणः कश्चिदपि न दृश्यते । तान् पशुपक्ष्यादीन् मुनेर्यज्ञक्रियावत् प्रजा एव सन्तारयन्ति ।

**[१]चिरभूतश्च बालश्च चिरं स्नेहेन पश्यत ।**
**एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः ॥ २७ ॥**

**चिरभूतश्च बालश्च** इत्यत्र **चिरभूतं** बहुकालाज्जातम् ।

**[२]स्वनिष्टानि च भोज्यानि जानीत स्वं स्वमात्मना ।**
**येन गच्छति बालोऽयं दत्वा शोकमनन्तकम् ॥ ३५ ॥**

**स्वनिष्टानि च भोज्यानि** इत्यत्र स्वनिष्टानि **भोज्यानि** अन्नानि **स्वं** स्वसम्बन्धि **स्वं** द्रव्यञ्च **आत्मना** स्वेनैव भवन्तीति जानीत ।

**[३]धेनुं गां च सुवर्णञ्च मणिरत्नमथापि च ।**
**अपत्यञ्च [४]तयोर्मूलं तपोयोगाच्च लभ्यते ॥ ३६ ॥**

**धेनुं गां च सुवर्णञ्च** इत्यत्र **गां** विद्याम् । **तयोः** सुखदुःखयोः **मूलं** शरीरञ्च तपोयोगात् लभ्यते । चशब्देन दुःखमूलं पापञ्च गृह्यते ।

**यथा [५]कृत्वा च भूतेषु प्राप्यते सुखदुःखिता ।**
**गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ॥ ३७ ॥**

---

१. **'चिरं मुञ्चत बाष्पं च'** इति कुं पाठः ।
२. $D_7, T_1$; BORI पृ. ८१८; **'अनिष्टानि च भाग्यानि'** इति कुं पाठः ।
३. **'धनं गावः'** इति कुं पाठः ।; ४. **'तपो मूलं'** इति कुं पाठः ।
५. **'कृता'** इति कुं पाठः ।

**यथा कृत्वा च भूतेषु** इत्यत्र यथा सुखं दुःखञ्च भवति तथा ।

**न स्नेहस्य च विच्छेदो विलापरुदितस्य च ।**
**मृतस्यास्य परित्यागात् [१]तपो वो[२] भविता ध्रुवम् ॥ ६६ ॥**

**तपो वो भविता ध्रुवम्** इत्यत्र तपः सन्तापः ।

**तथा श्वैत्यस्य राजर्षेः बालो दिष्टान्तमागतः ।**
**मुनिना धर्मनिष्ठेन मृतः सञ्जीवितः पुनः ॥ ६८ ॥**

**बालो दिष्टान्तमागत** इत्यत्र **दिष्टान्तम्** अत्ययम् । 'दिष्टान्तः प्रलयोऽत्यये'[३] इत्यमरः ।

**तथा कश्चिद्भवेत् सिद्धो मुनिर्वा देवतापि वा ।**
**कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥ ६९ ॥**

**कृपणानामनुक्रोशम्** इत्यत्र **अनुक्रोशः** दया । 'कृपा दयानुकम्पा स्याःनुक्रोशः'[४] इत्यमरः ।

**अलं निर्बन्धमागत्य शोकस्य परिवारणम् ।**
**[५]सम्प्रत्ययकृतोऽप्यस्य पुनरद्येह जीवितम् ॥ ७४ ॥**

**सम्प्रत्ययकृतोऽप्यस्य** इत्यत्र **अस्य** जम्बुकस्य **सम्प्रत्ययेन** विश्वासवचनेन **कृतः** उत्पादितः ।

---

१. $K_1$; **'तापो'** इति कुं पाठः ।
२. BORI पृ. ८२२; **'वै'** इति कुं पाठः ।
३. अ.को. २-८-११६; ४. अ.को. १-७-१८
५. **'अप्रत्ययं कुतो ह्यस्य'** इति कुं पाठः ।

नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम् ।
[१] भूतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥ ७५ ॥

भूतस्योत्सृष्टदेहस्य इत्यत्र उत्सृष्टदेहस्य मृतस्य ।

विनाशेनास्य न हि वै सुखं प्राप्स्यथ मानुषाः ।
पुत्रशोकाभितप्तानां मृतमप्यद्य [२] न क्षमम् ॥ ९२ ॥

मृतमप्यद्य न क्षमम् इत्यत्र मृतम् मरणम् ।

तथा धर्मविरोधेन प्रियमिथ्याभिधायिजीनाम् ।
श्मशानवासिना नित्यं [३] रतिं मृगयता [४] सदा ॥ ९४ ॥

रतिं मृगयता सदा इत्यत्र रतिं जनस्नेहम् ।

गृध्रोऽनास्तमितेऽभ्येति तिष्ठेन्नक्तं च जम्बुकः ।
[५] मृतं सुतं प्रति जनान् ऊचतुस्तौ [६] क्षुधार्दितौ ॥ १०८ ॥
[७] स्वकार्यदक्षौ तौ राजन् [८] गृध्रो जम्बुक एव च ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ १०९ ॥

मृतं सुतं प्रति जनान् इत्यत्र मृतं सुतमुद्दिश्य जनान् प्रति क्षुधार्दितावूचतुः । 'क्षुधार्दितौ' इति वचनात् दिवा चेत् गृध्राणां शवलाभः,

---

१. $K_5$; BORI पृ. ८२२; **'मृतस्य'** इति कुं पाठः ।
२. **'वः'** इति कुं पाठः ।; ३. **'रात्रिं'** इति कुं पाठः ।
४. **'नृप'** इति कुं पाठः । ; ४. **'मृतस्य तं परिजनं'** इति कुं पाठः ।
६. **'क्षुधान्वितौ'** इति कुं पाठः ।
७. $V_1$,$B_{1.2}$; BORI पृ. ८२३; **'स्वकार्यबद्धकक्षौ तौ'** इति कुं पाठः ।
८. BORI पृ. ८२८; **'राजन् गृध्रोऽथ जम्बुकः'** इति कुं पाठः ।

रात्रौ चेत् जम्बुकानां शवलाभः। अतः शीघ्रं गच्छतेति श्येनो वक्ति, न गच्छतेति जम्बुको वक्तीति भावः । अत एव स्वकार्यदक्षाविति वक्ष्यति।

॥ इति चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

**[1]वेतसैर्धन्वनैश्चापि ये चान्ये बलवत्तराः।**
**तैश्चापि नैव दुर्बुद्धे क्षिप्तो [2]वायुर्दुरात्मभिः** ॥ १६ ॥

**तैश्चापि नैव दुर्बुद्धे** इत्यत्र तैश्चापि वायुर्न क्षिप्तः, किन्तु दुरात्मभिरेव क्षिप्त इत्यावृत्त्या योजना।

॥ इति सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

## ॥ अथ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

**[3]तस्य विश्रमणादेष प्रसादो [4]गच्छतस्तव।**
**अभूत्तस्य प्रसादात्त्वां न भज्यामि द्रुमाधम** ॥ ८ ॥

**तस्य विश्रमणादेष प्रसादो गच्छतस्तव** इत्यत्र **विश्रमणात्** विश्रमणं प्राप्य, ल्यब्लोपनिमित्ता पञ्चमी, गच्छतस्तस्य एष प्रसादस्तवाभूदिति योजना।

---

१. कुं. १५४ अध्यायः।
२. $G_1$; BORI पृ. ८३५; '**वायुः कृतात्मभिः**' इति कुं पाठः।
३. कुं. १५५ अध्यायः। ; ४. '**मत्कृतस्तव**' इति कुं पाठः।

**मारुतो बलवान्नित्यं [1] त्वयेदं नारदोऽब्रवीत् ।**
**अहं तु दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ १६ ॥**

**त्वयेदं नारदोऽब्रवीत्** इत्यत्र त्वयेति तृतीया पञ्चम्यर्थे ।

**अक्षौहिण्यो दशैका च [2] सममेव महाद्युते ।**
**बलेन न समा राजन्नर्जुनस्य महात्मनः ॥ ३३ ॥**

**सममेव महाद्युत** इत्यत्र **समं** सहैव स्थिता अपि ।

**॥ इति अष्टपञ्चाशदधिकशततमोऽध्यायः ॥**

## ॥ अथ एकोनषष्ट्यधिकशततमोऽध्यायः ॥

**[3] ततः पापादधर्मश्च तथा दुःखमनुत्तमम् ।**
**[4] निकृन्त्यात् मूलमेतद्धै येन पापकृतो जनाः ॥ ३ ॥**

**ततः पापादधर्मश्च** इत्यत्र **पापात्** पापकर्मणः । **येन** लोभेन जनाः पापकृतो भवन्ति एतत् **मूलं** लोभाख्यं पापमूलं निकृन्त्यादिति योजना ।

**[5] आत्मस्था नृपशार्दूल** इत्यत्र आत्मस्थाः दोषाः ।

**द्वेषक्रोधप्रसक्ताश्च शिष्टाचरबहिष्कृताः ।**
**अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ॥ १७ ॥**

---

१. **'यथा वै'** इति कुं पाठः ।; २. **'सप्त चैव'** इति कुं. पाठः ।
३. कुं. १५६ **अध्यायः । 'अतः पापमधर्मश्च'** इति कुं पाठः ।
४. **'निकृत्या मूलमेतद्धि'** इति कुं पाठः ।
५. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ।**
**कुर्वते च बहून् मार्गांस्तान् हेतुबलमाश्रिताः ।**
**सर्वमार्गान् विलुम्पन्ति लोभज्ञानेष्ववस्थिताः ॥ १८ ॥**

**मुष्णन्ति ध्वजिनो जगत्** इत्यत्र **ध्वजिनः** धर्मध्वजिनः ।

**धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।**
**या या विक्रियते संस्था ततः सापि प्रपद्यते ॥ १९ ॥**

**तथा सापि प्रपद्यते** इत्यत्र **सा** परलोकयातना ।

**एतानशिष्टान् बुध्यस्व नित्यं लोभसमन्वितान् ।**
**शिष्टांस्तु परिपृच्छेथा यान् वक्ष्यामि शुचिव्रतान् ॥ २१ ॥**
**येष्वावृत्तिभयं नास्ति परलोकभयं न च ।**
**नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च ॥ २२ ॥**

**येष्वावृत्तिभयं नास्ति** इत्यत्र **आवृत्तिः** उदरम्भरणार्थमितस्तत आवर्तनम्, **परलोकभयम्** पुण्यशीलत्वात् परलोके यमदूतैः क्रियमाणं भयं नास्ति ।

**शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ।**
**सुखं दुःखं समं येषां [1] श्रुतं येषां परायणम् ॥ २३ ॥**

**श्रुतं येषां परायणम्** इत्यत्र **श्रुतं** स्वशास्त्रश्रवणम् ।

**सर्वोपकारिणो वीराः सर्वधर्मानुपालकाः ।**
**सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ॥ २५ ॥**

१. 'सत्यं' ' इति कुं पाठः ।

**सर्वदेयाश्च भारत** इत्यत्र सर्वं देयं येषां ते तथोक्ताः।

**न वागर्थं यशोर्थं वा धर्मस्तेषां युधिष्ठिर।**
**[१]न रक्ष्यं कायमित्येव शरीरस्य [२]क्रिया यथा ॥ २९ ॥**

**न रक्ष्यं कायमित्येव** इत्यत्र कायं रक्ष्यमित्येव न नाश्नन्ति, किन्तु शरीरस्य **क्रिया** सञ्चारादिक्रिया यथा तथा अश्नन्तीति योग्य-पदाध्याहारेण योजना।

**॥ इति एकोनषष्ठ्यधिकशततमोऽध्यायः ॥**

## ॥ अथ षष्ठ्यधिकशततमोऽध्यायः ॥

**[३]अमन्वतामधिष्ठानं उक्तो लोभः पितामह।**
**अज्ञानमपि कौरव्य श्रोतुमिच्छामि तत्वतः ॥ १ ॥**

**अमन्वतामधिष्ठानम्** इत्यत्र **अमन्वताम्** अज्ञानिनाम्।

**॥ इति षष्ठ्यधिकशततमोऽध्यायः ॥**

## ॥ अथ एकषष्ठ्यधिकशततमोऽध्यायः ॥

**[४]अनिन्दिते ह्यकामात्मा [५]स्वल्पे क्रेधाप्यलोलुपः।**
**समुद्रकल्पः [६]पुरुषो न [७]कदाचिन्न पूर्यते ॥ १९ ॥**

---

१. **'अवश्यं कार्य इत्येव'** इति कुं. पाठः।
२. $K_3$,$D_{4.7}$; BORI पृ. ७४४; **'क्रियास्तथा'** इति कुं. पाठः।
३. कुं. १५७ अध्यायः। **'अनर्थानामधिष्ठानं'** इति कुं पाठः।
४. कुं. १५८ अध्यायः।; ५. **'नाल्पेष्वर्थ्यनसूयकः'** इति कुं पाठः।
६. **'स नरो'** इति कुं पाठः।
७. $D_7$,$TG_{2.5}$,M; BORI पृ. ८५०; **'कथञ्चन'** इति कुं पाठः।

**अनिन्दिते ह्यकामात्मा** इत्यत्र **अनिन्दिते** स्वल्पे विषये । **द्वेधापि** प्राप्तावप्राप्तौ च । अकामात्मा अलोलुपः पुरुषः । न पूर्यत इति न ।

**ज्ञानारामस्य बुद्धस्य सर्वभूतानुरोधिनः ।**
**नावृत्तिभयमस्तीह परलोकभयं कुतः** ॥ ३३ ॥

**ज्ञानारामस्य बुद्धस्य** इत्यत्र **बुद्धस्य** प्रबुद्धस्य ।

॥ इति एकषष्ठ्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिषष्ठ्यधिकशततमोऽध्यायः ॥

[1]**प्राप्यते च यथा सत्यं तच्च वेत्तुमिहार्हसि ।**
**सत्यं त्रयोदशविधं सर्वलोकेषु भारत** ॥ ७ ॥

**सत्यं च समता चैव दमश्चैव न संशयः ।**
**अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता** ॥ ८ ॥

**त्यागो ध्यानमथार्यत्वं धृतिश्च सततं दया ।**
**अहिंसा चैव** [2]**सत्यं च ससत्कारास्त्रयोदश** ॥ ९ ॥

**ससत्कारास्त्रयोदश** इत्यत्र **सत्कारः** समीचीनकर्मकरणं, सर्वेषां सत्कारो वा । समता च सत्यं, दमश्च सत्यमित्यादिना सर्वसत्य-पदसम्बन्धसूचनाय द्विवारं सत्यपदप्रयोगः ।

**ध्यानं च शाठ्यमित्युक्तं मौनेनैतदवाप्यते ।**

---

१. कुं. १६० अध्यायः ।
२. 'राजेन्द्र सत्याकाराः' इति कुं पाठः ।

**आर्यता नाम भूतानां यः करोति प्रयत्नतः ।**
**[1]शुभकर्मानिराकारो वीतरागस्तथैव च ॥ १८ ॥**

**शुभकर्मानिराकार** इत्यत्र शुभकर्मणाम् **अनिराकारो** निराकरण-रहितः ।

॥ इति त्रिषष्ट्युधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःषष्ट्यधिकशततमोऽध्यायः ॥

**त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः ।**
**उपासते महाराज समन्तात्पुरुषानिह ॥ ३ ॥**

**त्रयोदशैतेऽतिबलाः** इत्यत्र **एते** जन्मस्थितिनाशैः सह वक्ष्यमाणाः कामाद्याः ।

**विरुद्धानीह शास्त्राणि ये पश्यन्ति कुरूद्वह ।**
**[2]विवित्सा जायते [3]यस्य [4]तस्यैव विनिवर्तते ॥ ११ ॥**

**विवित्सा जायते यस्य** इत्यत्र वेत्तुमिच्छा **विवित्सा**, विचार इत्यर्थः । **विनिवर्तते** शास्त्रेषु विपरीतदर्शनम् ।

**[5]पराभूते क्रोधलोभः अभ्यासाच्च [6]प्रवर्धते ।**

---

१. $B_{0.-3.5}$,$D_a$; BORI पृ. ८५७; '**शुभं कर्म निराकारो**' इति कुं पाठः ।
२. BORI पृ. ८६०; '**विधित्सा**' इति कुं पाठः ।
३. '**तेषां**' इति कुं पाठः ।
४. '**तत्वज्ञानान्नि-**' इति कुं. पाठः ।
५. '**परासुता क्रोधलोभात्**' इति कुं पाठः ।
६. '**प्रवर्तते**' इति कुं. पाठः ।

**दयया सर्वभूतानां निर्वेदात् स[१] निवर्तते ।**
**अवद्यदर्शनादेति तत्त्वज्ञानाच्च नश्यति ॥ १३ ॥**

**पराभूते क्रोधलोभ** इत्यत्र पराभूते पुरुषे क्रोधेन सहितो लोभः क्रोधलोभः प्रवर्धते । **निर्वेदात् स निवर्तते** इत्यत्र **स** पुरुषः **निवर्तते** क्रोधलोभान्निवर्तते ।

**कुलाज्ज्ञानात् तथैश्वर्यान् मदो भवति देहिनाम् ।**
**एभिरेव[२] यथा ज्ञातैः मदः सद्यः प्रणश्यति ॥ १५ ॥**

**एभिरेव यथा ज्ञातैः** इत्यत्र यथा ईश्वरेच्छया यथा भवन्ति तथा **ज्ञातैः** कुलादिभिः ।

**ईर्ष्या कामात् प्रभवति सहर्षाच्चैव भारत ।**
**इतरेषान्तु[३] मर्त्यानां प्रज्ञया सा प्रणश्यति ॥ १६ ॥**

**इतरेषान्तु मर्त्यानां** इत्यत्र **इतरेषाम्** ईर्ष्यारहितानाम् ।

**विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसम्मतैः ।**
**कुत्सा सञ्जायते राजन्[४] निषेवाभिः प्रशाम्यति ॥ १७ ॥**

**निषेवाभिः प्रशाम्यति** इत्यत्र **निषेवाभिः** नितरां सतां सेवाभिः ।

**प्रतिकर्तुं न शक्ता ये बलस्थायापकारिणे ।**
**असूया जायते तीव्रा कारुण्याद्विनिवर्तते ॥ १८ ॥**

---

१. **'निर्वेदात् सा'** इति कुं पाठः ।; २. **'तु वि-'** इति कुं पाठः ।
३. BORI पृ. ८६१; **'सत्वानां'** इति कुं पाठः ।
४. **'लोकान्प्रेक्ष्याभि-'** इति कुं पाठः ।

**कारुण्याद्विनिवर्तत** इत्यत्र **कारुण्यात्** बलीयसा क्रियमाण-कारुण्यात् ।

**एतान्येव जितान्याहुः [1]प्रशमेच्च त्रयोदश ।**
**एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश ।**
**त्वया सत्यार्थिना नित्यं विजिता जेष्यता च ते ॥ २१ ॥**

**प्रशमेच्च त्रयोदश** इत्यत्र **प्रशमेत्** प्रकर्षेण शमयेत् ।

॥ इति चतुःषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

**[2]तथोपकारिणं चैव मन्यते वञ्चितं परम् ।**
**दत्त्वापि च [3]नयं काले सन्तरत्युपकारिणे ॥ १० ॥**

**दत्त्वापि च नयं काले** इत्यत्र उपकारिणे **नयं** विनयवचनमात्रं दत्त्वापि **सन्तरति** कालक्रमणं करोतीस्यर्थः ।

॥ इति पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ षट्षष्ट्यधिकशततमोऽध्यायः ॥

**[4]अन्यत्र दक्षिणादानं देयं भरतसत्तम ।**
**अन्येभ्योऽपि बहिर्वेदि [5]प्राकृतान्तं विधीयते ॥ ३ ॥**

---

१. '**प्रशान्तेन**' इति कुं पाठः ।; २. कुं. १६२ **अध्यायः** ।
३. '**धनं काले सन्तपत्यु-**' इति कुं पाठः ।; ४. कुं. १६३ **अध्यायः** ।
५. '**न कृतान्नं**' इति कुं पाठः ।

**अन्येभ्योऽपि बर्हिर्वेदि** इत्यत्र यज्ञवेद्या बहिः **बर्हिर्वेदि । प्राकृतान्तं** प्राकृतपुरुषान्तम् । **अन्येभ्योऽपि** ब्राह्मणादन्येभ्योऽपि । विधीयते दानं **विधीयते** ।

**[१]यथैव सप्तमे भक्ते भक्तानि [२]षडनिःस्वता ।**
**अश्वस्तनवि[३]धानेन हर्तव्यं हीनकर्मणः ॥ ११ ॥**

**यथैव सप्तमे भक्ते भक्तानि षडनिःस्वता अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः** इत्यत्र **हीनकर्मण** पुरुषात् अल्पे हीनकर्मणि कृते सति **सप्तमे भक्ते** सप्तमदिवसेऽन्ने यथा **अनिःस्वता** अदरिद्रता भवति तथा **हर्तव्यम्** द्रव्यमाहर्तव्यम्, सप्तमदिवसभोजनपर्यन्तं यावदपेक्षितं तावत् दत्त्वा अन्यदाहर्तव्यमित्यर्थः । मध्यमे हीनकर्मणि सति षट् भक्तानि भोक्तुं अनिःस्वता यथा भवति तथा हर्तव्यम् । अतिहीनकर्मणि कृते सति **अश्वस्तनविधानेन** श्वो भोक्तुं यथा न भवति तेन विधानेन हर्तव्यम् ॥

**स्थलात् क्षेत्रात्तथागारात् [४]यो हृतो वोपपद्यते ।**
**[५]आख्या नास्य च तत्रैतत्पृच्छतोऽपृच्छतोऽपि वा ।**
**न तस्मै धारयेद्दण्डं राजा धर्मेण धर्मवित् ॥ १२ ॥**

**स्थलात् क्षेत्रात्तथागारात् यो** इत्यत्र **स्थलात्** ग्रामात्, **क्षेत्रात्** तत्कृषियोग्यक्षेत्रात्, **अगारात्** मन्दिरात् यो **हृतो**ऽपहृतो निष्कासितो

---

१. **'तथैव'** इति कुं पाठः ।; २. **'पडनश्नतः'** इति कुं पाठः ।
३. BORI पृ. ८६६; **'-भागेन'** इति कुं पाठः ।
४. **'यतो वाऽप्युपपद्यते'** इति कुं. पाठः ।
५. **'आख्यातव्यं नृपस्यैतत्'** इति कुं. पाठः ।

**वोपपद्यते** भवति । वाशब्द एवार्थः । तत्र एतत्कार्यं पृच्छतोऽपृच्छतः पुरुषान् प्रति **अस्य** पुरुषस्य **आख्या** प्रकथनं यदि न तस्मै दण्डं न धारयेदिति सम्बन्धः ।

**[१]इष्टं वैश्वानरे नित्यं दत्तं वेद न विपर्यये ।**
**[२]अविकल्पाः पुरा धर्मा धर्मवादैस्तु केवलः ॥ १६ ॥**

**इष्टं वैश्वानरे नित्यम्** इत्यत्र ब्राह्मणे यद्दत्तं तत् वश्वानरे इष्टमिति वेद, विपर्यये ब्राह्मणे न दत्तं चेत्, वैश्वानरे **इष्टं** यागः **न** न कृत इति वेद । **अविकल्पाः पुरा धर्मा** इत्यत्र **अविकल्पाः** इमं धर्मं कुरु, इमं धर्मं न कुर्विति विकल्परहिताः ।

**प्रभुः प्रथमकल्पे[३] च योऽनुकल्पेन वर्तते ।**
**स नाप्नोति फलं तस्य प्रेत्य चेह च दुर्मतिः ॥ १७ ॥**

**प्रभुः प्रथमकल्पे च** इत्यत्र **प्रथमकल्पे** मुख्यप्रायश्चित्तादिकरणे **प्रभुः** समर्थो **यः** पुरुषः **अनुकल्पलेन** अधमपक्षेण । 'मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः'[४] इत्यमरः ।

**न ब्राह्मणान्[५] वेदयीत [६]कश्चित् राजा न धर्मवित् ।**
**अविद्यावेदनाद्धियात्स्ववीर्यं वीर्यवत्तरम् ।**
**तस्माद्राज्ञः सदा तेजो दुःसहं सर्ववादिनाम् ॥ १८ ॥**

---

१. '**इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये**' इति कुं पाठः ।
२. '**अविकल्पः पुरा धर्मो**' इति कुं पाठः ।; ३. '**-कल्पस्य**' इति कुं पाठः ।
४. अ.को. २-७-४०; ५. BORI पृ. ८६७; '**-णो**' इति कुं पाठः ।
६. '**किञ्चिद्राजनि**' इति कुं पाठः ।

**न ब्राह्मणान् वेदयीत** इत्यत्र **कश्चिद्राजा** यदि ब्राह्मणान् न वेदयीत तर्हि धर्मविन्न । **अविद्यावेदनाद्विद्यात्** इत्यत्र इयमविद्येति वेदनात् इत्यर्थः ।

**गन्ता[1] शास्ता विधाता च ब्राह्मणो देव उच्यते ।**
**तस्मिन्नाकुशलं ब्रूयान्न शुष्कमीरयेद्गिरम्** ॥ १९ ॥

**गन्ता शास्ता** इत्यत्र **गन्ता** अवगन्ता ।

**क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।**
**धनेनावैश्यशूद्रेण[2] मन्त्रैर्होमैश्च वै द्विजः** ॥ २० ॥

**धनेनावैश्यशूद्रेण** इत्यत्र **अवैश्यशूद्रेण** वैश्यशूद्रासम्बन्धिना ।

**नैव कन्या न युवतिर्नामन्त्रज्ञो न बालिशः ।**
**परिवेष्टाग्निहोत्रस्य [3]तत्त्वेनासंस्कृतस्तथा** ॥ २१ ॥

**परिवेष्टाग्निहोत्रस्य** इत्यत्र **परिवेष्टा** परिचारकः । **तत्त्वेन** परिवेष्टृत्वेन ।

**यदेकरात्रेण करोति पापं [4]कष्टं वर्णं ब्राह्मणः सेवमानः ।**
**स्थानासनाभ्यां विहरन् व्रती स त्रिभिर्वर्षैः शमयेदात्मपापम्** २९

**कष्टं वर्णं ब्राह्मणः सेवमानः** इत्यत्र **कष्टं** निकृष्टम् अधमम् ।

---

१. **'मन्ता'** इति कुं पाठः ।
२. **'धनैर्वैश्यश्च शूद्रश्च'** इति कुं पाठः ।
३. **'भवेन्ना-'** इति कुं पाठः ।
४. **'कृष्णं'** इति कुं पाठः ।

**स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत् ।**
**अदूष्या हि स्त्रियो रत्नमाप इत्येव धर्मतः ॥ ३२ ॥**

**विषादप्यमृतं पिबेत्** इत्यत्र **विषात्** तिक्तौषधादेः **अमृतं** जीवनहेतुत्वादमृतप्रायं रसम् ।

**पतितैः सम्प्रयोगश्च ब्राह्मणीयोनितस्तथा ।**
**[1]स्वनिर्देश्यानि मन्यन्ते [2]प्राणा इति हि धारणा ॥ ३६ ॥**

**स्वनिर्देश्यानि मन्यन्त** इत्यत्र **स्वनिर्देश्यानि** स्वीयतया निर्देष्टुं योग्यानि धनानि प्राणा इति मन्यन्ते इति **धारणा** अवधारणा निश्चय इत्यर्थः ।

**सुवर्णहरणं स्तैन्यं [3]विप्रा सङ्गाच्च पातकम् ।**
**विहारो मद्यपानं च अगम्यागमनं तथा ॥ ३५ ॥**

**सुरापो ब्रह्महा चैव गुरुतल्पगतस्तथा ।**
**[4]आचारेण महाराज पतितो वै भवत्युत ॥ ३४ ॥**

**विप्रा सङ्गाच्च पातकम्** इत्यत्र **विप्रा** विप्रत्वजातिमती स्त्री । **आचारेण** पूर्वोक्तदुष्कर्मणामाचरणेन ।

**संवत्सरेण पतति पतितेन सहाचरन् ।**
**याजनाध्यापना[5]नाश्च चतुर्थानां समीहनात् ॥ ३७ ॥**

---

१. '**अ-**' इति कुं पाठः ।; २. '**प्राणान्तानीति**' इति कुं पाठः ।
३. '**विप्रस्वं चेति**' इति कुं पाठः ।; ४. '**अचिरेण**' इति कुं पाठः ।
५. '**द्दानान् नतु यानासनाशनात्**' इति कुं पाठः ।

**एतानि [1]ददतोऽन्यानि निर्देश्यानीति धारणा**
**[2]निर्देश्यानीति निधनकाले च व्यसनी भवेत्** ॥ ३८ ॥

**याजनाध्यापनानाञ्च** इत्यत्र याजनाध्यापनप्रतिग्रहाख्यानां त्रयाणां कर्मणां **चतुर्थानां** शूद्राणामर्थे करणात् **एतानि** त्रीणि सत्यानि यजनाध्ययनदानाख्यानि च त्रीणि **ददतः** द्रव्यं दिशतः शूद्रस्यैव **निर्देश्यानि** निर्देष्टुं योग्यानीति **धारणा** निश्चयः । **निर्देश्यानीति निधनकाले च व्यसनी भवेत्** इत्यत्र **एतानि** षट् कर्माणि वाङ्मात्रेण निर्देष्टुं शक्यानि न तु फलदानीति कृत्वा **निधनकाले** मरणकाले(ऽ)-व्यसनी भवेदिति योजना ।

**अनुत्तीर्य न होतव्यं प्रेतकर्मण्युपाश्रिते ।**
**त्रिषु त्वेतेषु पूर्वेषु न कुर्वीत विचार[3]णाम्** ॥ ३९ ॥

**त्रिषु त्वेतेषु पूर्वेषु** इत्यत्र पूर्वेषु **त्रिषु** अध्ययनादिषु **विचारणां** विचारं न **कुर्वीत,** सूतकनिवृत्त्यभावे अध्ययनादिकं न कुर्यादिति भावः ।

**[4]व्रतस्थव्रतविघ्ने च तावत्प्राप्नोति किल्बिषम् ।**

**तावत्प्राप्नोति किल्बिषम्** इत्यत्र **तावत्** प्रायश्चित्तकरणपर्यन्तम् ।

**अस्तेनं स्तेन इत्युक्तवा द्विगुणं पापमाप्नुयात् ।**

---

१. **'हित्वातो-'** इति कुं. पाठः ।
२. **'निर्देश्यकेन विधिना कालेनाव्यसनी भवेत्'** इति कुं. पाठः ।
३. BORI पृ. ८७१; **'-णम्'** इति कुं पाठः ।
४. BORI पृ. ८७१; **'ब्रुवन्स्तेन इति स्तेनं'** इति कुं पाठः ।

**त्रिभागं ब्रह्महत्यायाः [१] कन्याप्राप्तौ च किल्बिषम् ।**
**यस्तु दूषयिता तस्याः शेषं प्राप्नोति किल्बिषम् ॥ ४२ ॥**

**कन्याप्राप्तौ च किल्बिषम्** इत्यत्र (कन्याप्राप्तौ) उभयोरपि किल्बिषमित्यर्थः । तस्या दूषयिता यः स **शेषं** शेषो विशेषो यथा भवति तथा किल्बिषं प्राप्नोति ।

**ब्राह्मणा[२]यावगुर्युर्ये स्पृष्ट्वा गुरुतरं भवेत् ।**
**वर्षाणां हि शतं पापः प्रतिष्ठां नाधिगच्छति ॥ ४३ ॥**

इत्यत्र **ब्राह्मणायावगुर्युः** निन्दां कुर्युः तेऽपि किल्बिषं प्राप्नुयुः । **स्पृष्टे** हस्तवेत्रादिना ताडिते सति **गुरुतरं** निन्दनादपि गुरुतरं किल्बिषं भवेत् ।

**एवं वा तपसा युक्तो ब्रह्महा सवनी भवेत् ।**
**एवं गर्भसमविज्ञातमात्रेयीं वा [३] विधातयेत् ॥ ५४ ॥**

**मात्रेयीं वा विधातयेत्** इत्यत्र **मात्रेयी** स्वमातृसम्बन्धिनी सहोदरी, ताम् ।

**[४] कल्पे चान्नस्य चौर्ये च पृथक् संवत्सरं चरेत् ।**
**त्रीणि श्रोत्रियभार्यात् यां परदारे च द्वे स्मृते ॥ ६० ॥**

**कल्पे चान्नस्य चौर्ये च** इत्यत्र **कल्पे** अविद्यमानदोषकल्पने । **अन्नस्य** वर्षान्नस्य ।

---

१. **'कन्यां प्राप्नोति दुष्यति'** इति कुं पाठः ।; २. **'ब्राह्मण्यावगुर्येत'** कुं पाठः ।
३. **'निपातयेत्'** इति कुं पाठः । ; ४. **'तल्पेवान्यस्य'** इति कुं पाठः ।

**द्वे तस्य त्रीणि वर्षाणि चत्वारि[१] सह सेवनात् ॥ ६९ ॥**
**[२]कौमारं पञ्च वर्षाणि चरेद्भैक्षं मुनिव्रतः ॥ ७० ॥**

इत्यत्र **सह सेवनात्** परस्त्रिया सह सेवनात् **तस्य** पुरुषस्य । अल्पकालसेवने द्वे, मध्यमकालसेवने त्रीणि, बहुकालसेवने चत्वारि वर्षाणि वक्ष्यमाणव्रतं चरेदित्यर्थः । **कौमारं पञ्च वर्षाणि** इत्यत्र **कौमारं** ब्रह्मचारिणो विद्यमानम् ।

**परिवित्तिः परिवेत्ता [३]यथा च परिविद्यते ।**
**[४]पाणिग्रहमधर्मेण सर्वे ते पतिताः स्मृताः ॥ ७० ॥**

**परिवित्तिः परिवेत्ता** इत्यत्र 'परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्जाया'[५] इत्यभिधानात् **परिवेत्ता** ज्येष्ठविवाहात् पूर्वं विवाहकर्ता अनुजः, (**परिवित्तिः**) तत्पत्नी च **यथा** येन प्रकारेण, येषां सहायेनेति यावत्, अधर्मेण पाणिग्रहं **परिविद्यते** परिवेदनरूपतया प्राप्नोति ते सर्वे पतिता इति योजना ।

**परिवेत्ता प्रयच्छेत तां स्नुषां परिवित्तये ।**
**ज्येष्ठेन त्वभ्यनुज्ञातो यवीयानप्यनन्तरम् ।**
**[६]एनसा मोक्षमाप्नोति तौ च [७]वाच्यौ च धर्मतः ॥ ७२ ॥**

**परिवेत्ता प्रयच्छेत** इत्यत्र तदनन्तरः **यवीयान्** कनिष्ठः परिवेत्ता **तां**

---

१. **'सह सेविनः'** इति कुं पाठः ।; २. **'कुमारः'** इति कुं पाठः ।
३. $Ś_1, K_{2.4}, B_{1.2}, D_{1.4.9}$; BORI पृ.८७६; **'या चैव'** इति कुं पाठः ।
४. **'पाणिग्राहस्त्वधर्मेण'** इति कुं पाठः । ; ५. अ.को. २-८-५५
६. **'एनसो'** इति कुं पाठः । ; ७. **'सा चैव'** इति कुं पाठः ।

**परिवित्तिं** स्वभार्यां ज्येष्ठेन त्वभ्यनुज्ञातः **स्नुषां प्रयच्छेत** तव स्नुषेयमिति प्रयच्छेत । सापि श्वशुरवत् तं सेवेत । तदा सा च स च **एनसा** मोक्षमाप्नोतीति योजना । **तौ** परिवित्तिपरिवेत्तारौ च धर्मतो वाच्यौ ।

**[१] स मानुषेषु गोवर्जं [२] दोषेण न च दूष्यते ।**
**अधिष्ठातारमत्तारं पशूनां पुरुषं विदुः ॥ ७३ ॥**

**स मानुषेषु गोवर्जम्** इत्यत्र **गोवर्जं** पापप्रायश्चित्ताय गोदानवर्जितो यथा भवति तथा गोवर्जं स्थितोऽपि दोषेण न दूष्यते इति योजना । **अधिष्ठातारमत्तारम्** इत्यत्र पशून् **अधिष्ठातारम्** आरुह्य गच्छन्तम् **अत्तारं** तस्य बहुतरदुःखदानात् अत्तारं भक्षकं विदुः ।

**परिदायोर्ध्व[३]बहुलं पात्रमादाय मृन्मयम् ।**
**चरेत्सप्तगृहान्भैक्षं स्वकर्म परिकीर्तयन् ॥ ७४ ॥**

**परिदायोर्ध्वबहुलम्** इत्यत्र **ऊर्ध्वबहुलम्** ऊर्ध्वम् उच्चतया विद्यमानं बहुलं द्रव्यं **परिदाय** दत्त्वा ।

**तथैव [४] मलभोजी स्याद् द्वादशाहात्म शुद्ध्यति ।**
**चरेत्संवत्सरं चापि तद्व्रतं येन कृन्तति ॥ ७५ ॥**

**तथैव मलभोजी स्याद्** इत्यत्र **मलभोजी** गोमयभक्षकः स्यात् ।

**[५] मानुषेषु च भवेत् प्रायश्चित्तमनुत्तमम् ।**
**धनं दानं वा दानशक्तेषु [६] एतत्सर्वं प्रकल्पयेत् ॥ ७६ ॥**

---

१. '**अमानुपीपु**' इति कुं पाठः ।; २. '**अनादिष्टं न दुष्यति**' इति कुं पाठः ।
३. '**-वालं तु**' इति कुं पाठः । ४. '**लब्धभोजी**' इति कुं पाठः ।
५. '**भवेतु मानुपेष्वेवं**' इति कुं पाठः । ६. '**सर्वमेतत्**' इति कुं पाठः ।

**मानुषेषु च भवेत्** इत्यत्र स उक्तप्रायश्चित्तकारी मानुषेषु च भवेत्, दानशक्तेषु मानुषेषु कृतपापेषु सत्सु एतत्सर्वं धनं अनुत्तमं दानं प्रकल्पयेत् ।

**।। इति सप्तषष्ट्यधिकशततमोऽध्यायः ।।**

## ।। अथ अष्टषष्ट्यधिकशततमोऽध्यायः ।।

**[१]ऋषयो वालखिल्याश्च प्रभासाः सिकतास्तथा ।। २४ ।।**

**प्रभासाः सिकतास्तथा** इत्यत्र **प्रभासाः** प्रभासनामकाः, **सिकताः** सिकतनामका ऋषयः ।

**घृता[२]श्च सौम्या वायव्या वैश्वानरमरीचिपाः ।। २४ ।।**

**घृताश्च सौम्या** इत्यत्र **घृताः** घृतनामकाः ।

**ततो वर्षसहस्रान्ते वितानमकरोत् क्रतुम्[३] ।**
**विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ।। ३४ ।।**

**वितानमकरोत् क्रतुम्** इत्यत्र विशेषेण **तानो** विस्तारो यस्य तं क्रतुम् ।

**त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम् ।**
**चचार विविधान् मार्गान् दानवान्तचिकीर्षया ।। ५१ ।।**

---

१. कुं. १६४ अध्यायः ।

२. $D_7$,$T_1$,$G_5$; BORI पृ. ८८१; '**-च्या सोम**' इति कुं पाठः ।

३. '**-रोत् प्रभुः**' इति कुं पाठः ।

**त्रिकूटं चर्म चोद्यम्य** इत्यत्र **त्रिकूटं** त्रीणि **कूटानि** वेत्रदण्ड-कृतकूटानि यस्मिन् तत्। 'घूण्टम्' इत्यपभ्रंशभाषा।

**तस्य [१]हासाद्विनाद्योभौ [२]प्रचचार चमूं च हा।**
**बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥ ५२ ॥**

**तस्य हासाद्विनाद्योभौ प्रचचार चमूं च हा** इत्यत्र **हासात्** अट्ट-हासात् **उभौ** द्यावापृथिव्यौ विनाद्य महाहासं मुञ्चतस्तस्येति योजना। **प्रचचार चमूं च हा** इत्यत्र **हा** संहर्ता।

**दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा।**
**व्यङ्गता च शरीरस्य वधो नाल्पस्य कारणात् ॥ ७१ ॥**

**दुर्वाचा निग्रहो दण्डो** इत्यत्र **दुर्वाचा** दुःखकरभर्त्सनवाचा।

**कृत्तिकास्तस्य नक्षत्रमसेरग्निश्च दैवतम्।**
**[३]रौहिण्यामुद्भ्रमोऽस्याथ रुद्रश्च गुरुरुत्तमः ॥ ८२ ॥**

**रौहिण्यामुदभ्रमोऽस्याथ** इत्यत्र **उद्भ्रमः** दैत्यवधाय उत्कर्षेण परितो भ्रमणम्।

**[४]सर्वोदन्तमिह श्रुत्वा खड्गस्यागममुत्तमम्।**
**लभते पुरुषः कीर्तिं प्रेत्य चानन्त्यमश्नुते ॥ ८९ ॥**

---

१. '**नादं विनदतो**' इति कुं पाठः।
२. '**महाहासश्च मुञ्चतः**' इति कुं पाठः।
३. '**रोहिण्यो गोत्रमस्याथ रुद्राश्च गुरुसत्तमाः**' इति कुं पाठः।
४. '**सर्वथा तमिह**' इति कुं पाठः।

**सर्वोदन्तमिह श्रुत्वा** इत्यत्र **उदन्तं** वृत्तान्तम्। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्'[१] इत्यमरः।

॥ इति अष्टषष्ट्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकोनसप्तत्यधिकशततमोऽध्यायः ॥

धर्ममेव श्रेष्ठं मन्वानो विदुरस्तस्यैव स्वरूपं प्रपञ्चयति–

**[२]बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा।**
**भावशुद्धिर्दया सत्यं संयमश्चात्मसम्पदः।**
**एतदेवाभिपद्यस्व मा ते भूत् चलितं मनः ॥ ५ ॥**

**बाहुश्रुत्यं तपस्त्याग** इत्यादिना। बहु **श्रुतं** शास्त्रश्रवणं यस्य तस्य भावः **बाहुश्रुत्यम्**।

**जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः।**
**मुण्डा [३]वितन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥ १६ ॥**

**मुण्डा वितन्तवश्चापि** इत्यत्र **वितन्तवः** विशेषेण **तन्तुः** यज्ञो येषां ते तथोक्ताः।

**अश्रान्तवचने तस्मिन् भीमकर्मा धनञ्जयः।**

**अश्रान्तवचने तस्मिन्** इत्यत्र धर्मराजेन पुनः पुनः प्रश्नकरणे **अश्रान्तं** श्रमरहितं वचनं यस्य तस्मिन् सति पुनरपि वदेति प्रश्नं कुर्वति सतीत्यर्थः।

---

१. अ.को. १-६-७
२. कुं. १६५ अध्यायः। BORI पृ. ८९०; **'बहुश्रुतं'** इति कुं पाठः।
३. **'निस्तन्तवः'** इति कुं पाठः।

**योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।**
**[१] मध्यमेवामृतं सृष्टं तस्मादेतौ [२] गताविह ॥ २४ ॥**

**मध्यमेवामृतं सृष्टम्** इत्यत्र **मध्यं** धर्मकामयोर्मध्ये वर्तमानम् अर्थाख्यममृतं सृष्टम् । **तस्मात्** कारणात् **एतौ** धर्मकामौ इह अर्थे गतौ ।

**अनर्थस्य न कामोऽस्ति तथाऽर्थो धर्मिणः [३] कृतः ।**
**तस्मादुद्विजते लोको धर्मार्थाभ्यां बहिष्कृतात् ॥ २५ ॥**

**तथार्थो धर्मिणः कृत** इत्यत्र **तथा** कामवदेव अर्थः धर्मिणोऽपि **कृतः** अपेक्षितः कृतः । **तस्मादुद्विजते** इत्यत्र **तस्मात्** कारणात् धर्मबहिष्कृतात् तस्मात् **अर्थात्** लोकः उद्विजते ।

**तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना ।**
**विश्वस्तेषु हि भूतेषु [४] कल्प्यते सर्व एव सः ॥ २६ ॥**

**कल्प्यते सर्व एव सः** इत्यत्र **सर्वः** सम्पूर्णः सोऽर्थः कल्प्यते ।

**[५] सर्वं समाचरेत् पूर्वं तथो[६]र्ध्वं धर्मसंयुतम् ।**
**ततः कामं चरेत् पश्चात् सिद्धार्थस्य हि तत्फलम् ॥ २७ ॥**

**सर्वं समाचरेत् पूर्वम्** इत्यत्र **पूर्वं** धर्मकरणात् पूर्वं सर्वम् अर्थार्जुनोपायं समाचरेत् । ऊर्ध्वं धर्मकरणादूर्ध्वमपि धर्मसहितम्

---

१. **'मध्विवामृतसंसृष्टं'** इति कुं पाठः ।; २. **'मताविह'** इति कुं पाठः ।
३. $D_5$; BORI पृ. ८९३; **'कुतः'** इति कुं पाठः ।
४. $V_1 M_{1.8}$; BORI पृ. ८९३; **'कल्पते सर्वमेव हि'** इति कुं पाठः ।
५. **'धर्मं'** इति कुं पाठः ।; ६. **'अर्थं'** इति कुं पाठः ।

अर्थमेव समाचरेत् । **ततः पश्चात्** धर्मार्थयोः सिद्धेः पश्चात् कामं चरेत् । **तत्** धर्मकामाख्यमुभयं सिद्धार्थस्य फलम् ।

**नाकामः काययत्यर्थं नाकामो धर्ममिच्छति ।**
**नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते ॥ २९ ॥**

**नाकामः कामयानोऽस्ति** इत्यत्र **कामयानः** काम्यते इति कामो मोक्षः, तस्य **यानं** प्रयाणं यस्य सोऽपि अकामो नास्ति, मोक्षकामनावानेव तदर्थं प्रयतत इति भावः ।

**कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।**
**पलाशाः शाकमूलाशा वायुभक्षाः सुसंयताः ॥ ३० ॥**

**वायुभक्षाः सुसंयुताः** इत्यत्र **वायुभक्षा** ऋषयः **सुसंयताः** वायुभक्षणाशायां सुसंयताः युक्ताः ।

**वेदोपदेष्वपरे युक्ताः स्वाध्यायपारगाः ।**
**श्राद्धे यज्ञाक्रियायां च तथा दानप्रतिग्रहे ॥ ३१ ॥**

**युक्ताः स्वाध्यायपारगा** इत्यत्र कामेनेति वक्ष्यमाणं पदमत्राप्यनुकर्षणीयम् ।

**समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः ।**
**कामो हि विविधाकारः सर्वं कामेन सन्ततम् ॥ ३२ ॥**

**समुद्रं वा विशन्त्यन्य** इत्यत्र समुद्रं मौक्तिकाद्याहरणार्थं विशन्तीति (भावः) ।

**बुद्धिर्ममैषा परिखास्थितस्य मा भूद्विचारस्तव धर्मपुत्र ।**
**शान्तं[1] हि तत् सद्भिरफल्गुसारमसस्तवाक्यं परमानृशंसम्** ३९

**शान्तं हि तत्** इत्यत्र **शान्तं** दुर्विषयेषु यः कामस्तस्य शमेन संयुक्तं **तत्** कामाख्यं वस्तु सद्भिः अफल्गुसारमित्युक्तम् ।

**धर्मार्थकामाः सममेव सेव्या यो ह्येकभक्तः स नरो जघन्यः ।**
**द्वयोस्तु [2] साह्यं प्रवदन्ति मध्यमं स उत्तमो योऽभिरतस्त्रिवर्गे** ४०

**यो ह्येकभक्तः** इत्यत्र **एकभक्तः एकस्य** एकैकस्य केवलार्थस्य केवलधर्मस्य च भक्तः । **द्वयोः** धर्मार्थयोः **साह्यं** सहाययुक्तत्वम् ।

**प्राज्ञः सुहृच्चन्दनसारलिप्तो विचित्रमाल्याभरणैरुपेतः ।**
**ततो वचः सङ्ग्रहविग्रहेण[3] प्रोक्त्वाऽथवीरान् विरराम भीमः** ४१

**ततो वचः सङ्ग्रहविग्रहेण** इत्यत्र विशेषेण ग्रहो **विग्रहो** विस्तारः । 'विस्तारो विग्रहो व्यासः'[4] इत्यमरः ।

**ततो मुहूर्तादथ धर्मराजो वाक्यानि तेषामनुचिन्त्य सम्यक् ।**
**उवाच वाचाऽवितथं स्मयन्वै [5]बहुश्रुतां धर्मभृतां वरिष्ठः** ॥४२॥

**बहुश्रुतां धर्मभृतां वरिष्ठः** इत्यत्र बहु शृण्वन्तीति **बहुश्रुतः**, तेषां मध्ये ।

---

१. **'स्यात् संहितं'** इति कुं पाठः ।; २. **'सक्तं '** इति कुं पाठः ।
३. BORI पृ. ८९६; **'-विस्तरेण'** इति कुं पाठः ।
४. अ.को. ३-२-२२
५. **'श्रुतो'** इति कुं पाठः ।

निःसंशयं निश्चितसर्वशास्त्राः
सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्य-
मुक्तं यद्वो नैष्ठिकं तच्छ्रुतं मे ।
इहानुवंशं गदतो ममापि
वाक्यं निबोधध्वमनन्यभावाः ॥ ४३ ॥

इहानुवंशम् इत्यत्र अनुवंशं वंशानुसारेण ।

यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समफल्गुसारः
विमुच्यते [१] सुखदुःखात्स सिद्धः ॥ ४४ ॥

**समफल्गुसारः** इत्यत्र **फल्गु** तुच्छं लोष्टं सारं सुवर्णश्च समं यस्य स तथोक्तः । 'समलोष्टाश्मकाञ्चनः' [२] इति हि गीता । स सिद्धः **सुख-दुःखात्** संसारात् **विमुच्यते** मोक्षं प्राप्नोति । तस्मान्मोक्ष एव श्रेष्ठ इति भावः ।

स्नेहेन बद्धस्य [३] हि सन्ति तानि
चैवं स्वयम्भूर्भगवानुवाच
बोधाय निर्वाणपरा भवन्ति
तस्मान्न कुर्यात् प्रियमप्रियं च ॥ ४६ ॥

---

१. 'दुःखसुखात्स' इति कुं पाठः ।; २. गीता ६-८
३. BORI पृ. ८९७; 'न' इति कुं पाठः ।

**स्नेहेन बद्धस्य हि सन्ति तानि** इत्यत्र **तानि** मरणादीनि ।

**[१]यत्कर्मणाप्नोति न चाप्यनर्थं**
**यद्भावि तद्वै भवतीति विद्मः ।**
**त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं**
**तस्माददो लोकहिताय गुह्यम्** ॥ ४८ ॥

**यत्कर्मणाप्नोति न चाप्यनर्थम्** इत्यत्र कर्मणा **आप्नोति,** अर्थमाप्नोति, अनर्थं नाप्नोतीति च यत् तदपि विधेरिति वेत्थ ।

**सुचारुवर्णाक्षरशब्दभूषितां**
**मनोनुगां निर्गतवाक्यकण्टकाम् ।**
**निशम्य तां पार्थिवभाषितां गिरं**
**पार्थस्य सर्वे प्रणता बभूवुः** ॥ ५० ॥

**पार्थस्य सर्वे प्रणता बभूवुः** इत्यत्र **पार्थस्य** युधिष्ठिरस्य ।

॥ इति एकोनसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ सप्तत्यधिकशततमोऽध्यायः ॥

**[२]नहि तत्र धनं स्फीतं न च सम्बन्धिबान्धवाः ।**
**तिष्ठन्ति यत्र सुहृदः तिष्ठन्तीति मतिर्मम** ॥ ३ ॥

**तिष्ठन्ति यत्र सुहृद** इत्यत्र **सुहृदः** शोभनहृदययुक्ता ज्ञानिनो **यत्र** कार्ये तिष्ठन्ति तत्र धनादिकं **न** न तिष्ठतीति भावः ।

---

१. **'न कर्मणाप्नोत्यनवाप्यमर्थं'** इति कुं पाठः । ; २. कुं. १६६ **अध्यायः ।**

**[१] सन्देहाः पुरुषा राजन् [२] असन्देहाश्च तत्त्वतः ।**
**वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥ ५ ॥**

**सन्देहाः पुरुषा राजन्** इत्यत्र सन्दिहन्तीति **सन्देहा** अधर्मकरणे शङ्कमाना इत्यर्थः । असन्देहाश्च ये पुरुषाः तान्निबोध ।

**अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।**
**सुहृदश्चैव कल्याणान् [३] अनु त्यजति किल्बिषी ॥ १२ ॥**

**सुहृदश्चैव कल्याणान्** कल्याणाननु इति सम्बन्धः ।

**व्यायामशीलाः सततं भृत्यपुत्राः [४] कुलोद्भवाः ।**
**दोषैः प्रमुक्ताः प्रथितास्ते ग्राह्याः पार्थिवैर्नराः ॥ १९ ॥**

**भृत्यपुत्राः कुलोद्भवा** इत्यत्र **भृत्याः** पुत्रवत् येषां ते **भृत्यपुत्राः** ।

**यथाशक्ति समाचाराः सम्प्रतुष्यन्ति हि प्रभो ।**
**नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥ २० ॥**

**न चाकस्माद्विरागिणः** इत्यत्र **अकस्मात्** उन्मादादियत्किञ्चित्कारणात् विरागिणो न ।

[५] **अर्थकोविदाः** पुरुषार्थकुशलाः ।

---

१. **'सन्धेयान् पुरुषान्'** इति कुं पाठः ।
२. **'असन्धेयाश्च'** इति कुं पाठः ।
३. **'आशु'** इति कुं पाठः ।
४. $B_{02.4.5}$,$D_5$; BORI पृ. ९००; **'कुलोद्वहाः'** इति कुं पाठः ।
५. एतत्प्रतीकघटितश्लोकः मुद्रितकोशेषु नोपलभ्यते ।

**विरक्ताश्च न दुष्यन्ति मनसाप्यर्थकोविदाः ।**
**आत्मान पीडयित्वाऽपि सुहृत्कार्यपरायणाः ।**
**[१] न विरज्यन्ति मित्रेभ्यो वासो रक्तमिवाविकम्** ॥ २१ ॥

**न विरज्यन्ति मित्रेभ्यो** इत्यत्र **न विरज्यन्ति** विशेषेण रागं न प्राप्नुवन्ति ।

॥ इति सप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ एकसप्तत्यधिकशततमोऽध्यायः ॥

**[२] तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।**
**प्रतिश्रयश्च वासार्थं [३] भिक्षा चैवास्य वार्षिकी** ॥ ५ ॥

**भिक्षा चैवास्य वार्षिकी** इत्यत्र **वार्षिकी** वर्षपर्यन्तं भोजनयोग्या । 'तामयाचत' इति पूर्वेणान्वयः ।

**प्रादात् तस्मै स विप्राय वस्त्रं च सदशं नवम् ।**
**[४] नार्यश्चापि यथोपेता भर्त्रा विरहितास्तदा** ॥ ६ ॥

**भर्त्रा विरहितास्तदा** इत्यत्र **भर्त्रा विरहिता** विधवा **नार्यः** शबरस्त्रियः तं ब्राह्मणं **यथा** यथावत् **उपेताः** प्राप्ताः ।

**ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो [५] वित्तवर्जितः ।**
**ग्रामं दस्युगणाकीर्णं प्राविशद्धनतृष्णया** ॥ ३ ॥

---

१. BORI पृ. ९०२; **'विरज्यन्ति न'** इति कुं पाठः ।
२. **कुं. १६७ अध्यायः** ।; ३. **'भिक्षां चैवाथ वार्षिकीम्'** इति कुं पाठः ।
४. **'नारीं चापि वयोपेतां भर्त्रा विरहितां तथा'** इति कुं पाठः ।
५. **'ब्रह्मवर्जितः'** इति कुं पाठः ।

**कृष्णाङ्गो वित्तवर्जित** इत्यत्र **कृष्णाङ्गः** कृष्णवर्णत्वात् कृष्णाङ्ग-नामकः ।

**विनीतो वेदशास्त्रेषु वेदान्तानां च पारगः ।**
**अदृश्यत ततस्तत्र सखा तस्यैव तु द्विजः ।**
**तं [१]दस्यवोऽवसन् ग्रामं पुमांसो गौतमोऽभवत्** ॥ १३ ॥

**तं दस्यवोऽवसन् ग्रामं पुमांसो गौतमोऽभवत्** इत्यत्र दस्यवः पुमांस एव तं ग्राममवसन् । गौतमोऽप्यभवत् ।

**तं दृष्ट्वा पुरुषादाभम् अपध्वस्तं क्षयागतम् ।**
**अभिज्ञाय द्विजो व्रीडन्निदं वाक्यमथाब्रवीत्** ॥ १७ ॥

**अपध्वस्तं क्षयागतम्** इत्यत्र **अपध्वस्तं** सद्भिर्निराकृतम् । **क्षयागतं** ब्राह्मण्यक्षयं प्राप्तम् । अभिज्ञायेति सम्बन्धः ।

**किमिदं कुरुषे [२]मौढ्यात् विप्र सद्भिः कुलोद्गतः ।**
**मध्यदेशे[३] परिज्ञातो दस्युभावं गतः कथम्** ॥ १८ ॥

**विप्र सद्भिः कुलोद्गत** इत्यत्र हे विप्र, सद्भिः मध्यदेशे **कुलोद्गतः** सत्कुलप्रसूतः सन् परिज्ञातस्त्वं दस्युभावं कथं गत इति सम्बन्धः ।

**[४]स ददर्श हि विप्रर्षे तत्सर्वं वेद्म्यहं द्विज ।**
**अध्वानं सह यस्यावः श्वो वसस्वाद्य शर्वरीम्** ॥ २३ ॥

---

१. **'दस्युग्राममगमद्यत्रासौ'** इति कुं पाठः ।
२. $D_4,T_2$; BORI पृ. ९०५; **'मोहाद्विप्रस्त्वं हि कुलोद्भवः'** इति कुं पाठः ।
३. $B_4,T_2;G_{1.2}$,M; BORI पृ. ९०५; **'–देश'** इति कुं पाठः ।
४. **'त्वद्दर्शनात्तु विप्रेन्द्र कृतार्थोऽस्म्यद्य वै द्विज'** इति कुं पाठः ।

**स ददर्श हि विप्रर्षे** इत्यत्र **स** भवान् यद् ददर्श तत्सर्वं वेद्मीति योजना ।

॥ इति एकसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ द्विसप्तत्यधिकशततमो ऽध्यायः ॥

**स कथञ्चिद्भयात्तस्माद्विमुक्तो ब्रह्मणस्तदा ।**
**[1]कादिग्भ्रान्तो जीवितार्थी प्रदुद्रावोत्तरां दिशम्** ॥ ४ ॥

**कादिग्भ्रान्तो जीवितार्थी** इत्यत्र का दिक् प्राप्येति भ्रान्तः **कादिग्भ्रान्तः** ।

**स पन्थानमथासाद्य समुद्राभिसरं तदा ।**
**आससाद वनं रम्यं महत्पुष्पितपादपम्** ॥ ६ ॥

**समुद्राभिसरं तदा** इत्यत्र समुद्राभिमुख्येन स्थिते वने चरन् **समुद्राभिचरन्** ।

**सालतालधवाश्वत्थ [2]चिञ्चागरुवनैस्तथा ।**
**चन्दनस्य च मुख्यस्य पादपैरुपशोभितम्** ॥ ८ ॥

**चिञ्चगरुवनैस्तथा** इत्यत्र **चिञ्चा** तिन्त्रिणी ।

**समन्ततो द्विजश्रेष्ठा वल्गु कूजन्ति तत्र वै ।**
**मनुष्यवदनाश्चान्ये भारुण्डा इति विश्रुताः** ॥ ९ ॥

**समन्ततो द्विजश्रेष्ठा** इत्यत्र **द्विजश्रेष्ठाः** पक्षिणः ।

---

१. **'कांदिग्भूतो'** इति कुं पाठः ।
२. **'प्लक्षागुरु'** इति कुं पाठः ।

[1] मध्येपुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम् ।
तमासाद्य मुदा युक्तस्तस्याधस्तादुपाविशत् ॥ १४ ॥

**मध्येपुरगृहप्रख्यम्** इत्यत्र पुरस्य मध्ये विद्यमानं गृहं **मध्येपुरगृहम्**, तस्य **प्रख्यं** सदृशम् ।

॥ इति द्विसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्रिसप्तत्यधिकशततमोऽध्यायः ॥

[2] तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा ।
शालपुष्पमयीं दिव्यां बृसीं समुपकल्पयत् ॥ ३ ॥

**बृसीं समुपकल्पयत्** इत्यत्र 'व्रतिनामासनं बृसी' [3] इत्यभिधानात् **बृसी** व्रतिनामासनम् ।

तं काश्यपोऽब्रवीत् प्रीत्या नोत्कण्ठां कर्तुमर्हसि ।
कृतकार्यो द्विजश्रेष्ठ [4] सदृशो यास्यसे [5] सुखात् ॥ ११ ॥

**सदृशो यास्यसे सुखात्** इत्यत्र **सदृशः** समानान् गृहान् यास्यसे ॥

॥ इति त्रिसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ चतुःसप्तत्यधिकशततमोऽध्यायः ॥

[6] मध्यदेशप्रसूतोऽहं वासो मे शबरालये ।
शूद्री पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥ ९ ॥

---

१. 'मेध्यं सुर' इति कुं पाठः ।; २. कुं. १६९ अध्यायः ।
३. अ.को. २-७-४३; ४. 'सद्रव्यो' इति कुं पाठः ।
५. 'गृहान्' इति कुं पाठः । ६. कुं. १७० अध्यायः ।

**शूद्री पुनर्भूर्भार्या मे** इत्यत्र **पुनर्भूः** द्विरूढा । 'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः' इत्यमरः ।

**[1]नीव्यस्तेषां तु सन्यस्ता राक्षसेन्द्रस्य शासनात् ।**
**भूमौ वरकुशाः स्तीर्णाः प्रेष्यैर्भरतसत्तम ॥ १३ ॥**

**नीव्यस्तेषाम्** इत्यत्र **नीव्यो** राजवधूनां नीवीयोग्यसूक्ष्मवस्त्राणि ।

**ततो जाम्बूनदीः पात्रीर्वज्राङ्का विमलाः शुभाः ।**
**वरान्नपूर्णं विप्रेभ्यः प्रादात् मधुघृताप्लुताः ॥ १६ ॥**

**वरान्नपूर्णम्** इत्यत्र **वरान्नं** सूपम् ।

**गौतमश्चिन्तयामास रात्रौ तस्य समीपतः ।**
**हाटकस्य [2]सुवर्णस्य भारोऽयं सुमहान्मया ॥ ३१ ॥**

**हाटकस्य सुवर्णस्य** इत्यत्र शोभनो वर्णो यस्य तत् **सुवर्णम्** तस्य हाटकस्येति सम्बन्धः ।

॥ इति चतुःसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥

**[3]स तं विपक्षरोमाणं [4]कृत्वा जीवपरस्तदा ।**
**तं गृहीत्वा सुवर्णञ्च ययौ द्रुततरं द्विजः ॥ ४ ॥**

---

१. **'बृस्यस्तेषां'** इति कुं पाठः ।; २. **'अभिरूपस्य'** इति कुं पाठः ।
३. कुं. १७१ अध्यायः ।
४. **'कृत्वाऽग्रावपचत्तदा'** इति कुं पाठः ।

**कृत्वा जीवपरस्तदा** इत्यत्र **जीवपरः** स्वजीवने तात्पर्यवान् ।

**गृहीतो गौतमः पापो रक्षोभिः क्रौधमूर्छितैः ।**
**राजधर्मशरीरस्य [१] कङ्कालं चाप्यधो धृतम् ॥ १४ ॥**

**कङ्कालं चाप्यधो धृतम्** इत्यत्र **कङ्कालं** शरीरास्थि । 'शरीरास्थि तु कङ्कालम्' [२] इत्यमरः ।

**पार्थिवस्याग्रतोऽधुस्ते [३] कङ्कालं राजधर्मणः ।**
**तं दृष्ट्वा विमना राजा सामात्यः सगणोऽभवत् ॥ १६ ॥**

**पार्थिवस्याग्रतोऽधुस्त** इत्यत्रः **अधुः** निक्षिप्तवन्तः ।

॥ इति पञ्चसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ अथ षट्सप्तत्यधिकशततमोऽध्यायः ॥

**[४] ततस्ते रुषिता दासाः शूलपट्टसपाणयः ।**
**खण्डशो विकृतं हत्वा क्रव्याद्भ्यो ह्यददुस्तदा ॥ २४ ॥**

**खण्डशो विकृतं हत्वा** इत्यत्र **खण्डशः** खण्डा यथा भवन्ति तथा **विकृतं** विकारवन्तं **हत्वा** ताडयित्वा ।

**[५] दग्धो राक्षसराजेन स्वराजः प्रतापवान् ।**
**चितायाः पार्श्वतो दोग्ध्री सुरभिः प्रीणयच्च तम् ॥**

---

१. $D_7$,$T_1$,$G_5$; BORI पृ. ९२१; 'कङ्काललश्चाप्यथो धृतः ।' इति कुं पाठः।
२. अ.को. २-६-६९; ३. '-न्यस्तः कङ्कालो' इति कुं पाठः ।
४. कुं. १७२ अध्यायः ।; ५. BORI पृ. ९२५

सुरभिः प्रीणयच्च तान् इत्यत्र सुरभिः सौरभम् ।

[1]तस्याच्च्युतः फेनो दुग्धमात्रं तदानघ ।
समीरणाद्गतो यातः कृतान्ते राजधर्मणि ॥

**कृतान्ते राजधर्मणि** इत्यत्र कृतान्ते कृतः **अन्तो** नाशो यस्येति व्युत्पत्त्या नष्टे सतीत्यर्थः ।

[2]कौशिकस्त्वब्रवीत् सर्वं प्रीयमाणं पुनः पुनः ।
ब्रह्मणा व्याहृतो रोषाद्राजधर्मा कदाचन ॥ ११ ॥

[3]यस्मात् तु नागतो द्रष्टुं मम नित्यमिमां सभाम्
तस्माद्बको भवान् भावी धर्मशीलः परात्मवित् ॥ १२ ॥

आगमिष्यति ते वासं कदाचित् पापकर्मकृत् ।
शबरावासगो विप्रः कृतघ्नो वृषलीपतिः ॥ १३ ॥

यदा निहन्ता मोक्षस्ते तदा भावीत्युवाच तम् ।
तस्मादेष गतो लोकं ब्रह्मणः परमेष्ठिनः ॥ १४ ॥

**कौशिकस्त्वब्रवीत्** इत्यत्र **कौशिकः** इन्द्रः । 'महेन्द्रगुग्गुलूलकव्यालग्राहिषु कौशिकः'[4] इत्यमरः । 'यस्मात् तु नागतो द्रष्टुम्' इत्यारभ्य 'मोक्षस्ते तदा भावीत्युवाच तम्' इत्यन्तम् इन्द्रेण ब्रह्मवाक्य-

---

१. BORI पृ. ९२५

२. $D_7$,S; BORI पृ. ९२१; **'विरूपाक्षमुवाचेदमीश्वरः पाकशासनः'** इति कुं पाठः ।

३. **'यस्मात्त्वं'** इति कुं पाठः ।

४. अ.को. ३-३-१०

स्यानुवादः कृतः । कदाचिदनागमनेऽपि नित्यं नागमनमिति वक्तुं शक्यते । तस्माद्भको ग्रहं यात्वित्र **ग्रहं** निग्रहम् । **यातु** भवान् यातु । 'यस्माद्भको भवान् भावी' इत्यत्र भावी समुद्रतीरस्थवने न्यग्रोधमूले **भावी** ।

**॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मे कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरण-विरचितलक्षालङ्काराख्यटीकायां षट्सप्तत्यधिकशततमोऽध्यायः ॥**

**॥ इति राजधर्मः समाप्तः ॥**

**॥ श्रीवादिराजगुर्वन्तर्गतमध्वेशार्पणमस्तु ॥**

# श्लोकानुक्रमणिका

।। श्रीकृष्णार्पणमस्तु ।।

The Mahābhārata, the National Epic of India, contains in its vast reach diverse subjects that a human mind can comprehend. The Epic has struck deep roots not only in the Indian subcontinent but has influenced its neighbours. No records exist of any commentaries before the time of Śankara, Abhinava Gupta and others (8th cent CE). Śankara and Rāmanuja have written commentaries on parts such as Bhagavadgīta and Viśnusahasranāma while Madhva wrote an independent work on the Mahābhārata. The Mahābhārata Lakśālankāra is the magnum opus of Śrī Vādirāja tīrtha, a celebrated saint poet of 16th century from the south India. Śrī Vādirāja tīrtha derived an utmost epitomized and authentic commentary considering various aspects of grammar, etymology, with exhaustive references to give a very comprehensive outlook to the entire epic. He proclaims in the work that he was ordered by Lord to write the commentary looking at the entirety of the sadāgamas (holy scriptures). This great work has been named 'Lakśālankāra' (100,000 ornaments) and is a tribute to Lord Vedavyāsa, the author of the Mahābhārata. Traditionally apart from Śrī Vādirāja tīrtha, Nīlakañt'ha, Vidyāsāgara, Arjuna Miśra etc., have written commentaries on the epic
This volume contains commentary from Udyogaparvan to Śāntiparvan



ISBN 81-903860-1

